

# निरुक्तम्

(निघण्टुः)।

महर्षिश्रीदेवराजयज्वकृत'निर्वचन'नामटीकासहितम्।



बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृत प्रकाशितञ्च।

---

प्रथमो भागः।

---

कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितम्।

ई' १८८१।

# अध्यायानां खण्डानाञ्च सूची ।



## अथ प्रथमाध्यायः ।



## अथ द्वितीयाध्यायः ।



## अथ तृतीयाध्यायः ।

## अथ चतुर्थाध्याय ।



## अथ पञ्चमाध्याय ।



## अथ

## निरुक्त(निघण्टु)-पठितपदानामकारादिक्रमेण सूची ।



| पदम् | अर्थः | पृष्ठायाम् |
|---|---|---|
| ,, | अदीना | २१७ |
| ,, | मध्यस्थानदेवता | १९५ |
| अदिती | द्यावापृथिव्यौ | २०६ |
| अद्यातयः | मेधाविनः | २८१ |
| अद्भुतम् | महान्तम् | २५० |
| अद्मसत् | अद्मसत् | २२२ |
| अद्रिः | मेघः | ४८ |
| अध्रिगुः | अधृतगमनः | २३८ |
| अध्वरः | यज्ञः | १८४ |
| अध्वरम् | अन्तरिक्षम् | २५ |
| अध्वा | ,, | २३ |
| अनभिम्लाताः | प्रशस्ताः | १६५ |
| अनर्वा | अनन्याश्रितः | २६७ |
| अनर्शरातिम् | अनश्लीलदानम् | २६७ |
| अनवः | मनुष्याः | १५२ |
| अनवद्यः | प्रशस्यः | १६५ |
| अनवब्रवः | अप्रतिहतशासनः | १७० |
| अनवायम् | अनवयवम् | २५६ |
| अनिति | गच्छति | २१० |
| अनुमतिः | मध्यस्थानदेवता | २९६ |
| अनुष्टुप् | वाक् | ७७ |
| अनेद्यः | प्रशस्यः | २६५ |
| अनेमा | ,, | २६२ |
| अन्तमानाम् | अन्तिकतमानाम् | २१९ |
| अन्तरिक्षम् | अन्तरीक्षम् | २१ |
| अन्धः | अन्नम् | १७० |
| ,, | अन्नः | २२१ |
| अन्नम् | उदकम् | १०० |

| पदम् | अर्थः | पृष्ठायाम् |
|---|---|---|
| अपः | उदकानि | १०३ |
| ,, | कर्म | १२६ |
| अपत्यम् | अपत्यम् | १४६ |
| अपांनपात् | मध्यस्थानदेवता | २८९ |
| अपारे | द्यावापृथिव्यौ | ३०७ |
| अपीच्यम् | निर्गतमन्तर्हितं वा | १९९ |
| अप्रवाना | वाक् | १५८ |
| अप्नः | कर्म | १२६ |
| ,, | अपत्यम् | १४५ |
| ,, | रूपम् | १६२ |
| अप्रतिष्कुतः | अप्रतिगतः | २६१ |
| अप्रायुव | अप्रमादिनः | २२३ |
| अभ्वा | व्याधिर्भयं वा | २५७ |
| अभ्वः | रूपम् | २६२ |
| अभिख्या | महा | २६७ |
| अभिधेतन | अभिधावत | २६८ |
| अभीके | संग्रामे | २१२ |
| ,, | आसन्ने | २०२ ; २११ |
| अभीशवः | रश्मयः | ९७ |
| ,, | अङ्गुलयः | १९९ |
| ,, | भूस्थानदेवताः | २८१ |
| अभीशु | बाहू | १५८ |
| अभ्यर्धयज्वा | रक्षाहरणपूर्वकवर्धयिता | २५२ |
| अभ्यर्धः | अध्येषणम् | १९१ |
| अमस् | निघः | ५८ |
| अम्बः | महान् | १९८ |
| अम्भम् | उदकम् | १०६ |

| पदम् | अर्थ | पृष्ठायाम् |
|---|---|---|
| द्रवति | गच्छति | २११ |
| द्रविणम् | बलम् | १८४ |
| ,, | धनम् | १९० |
| द्रविणोदा | भूस्थानदेवता | ३७५ |
| द्राति | गच्छति | २०९ |
| द्रुघण | भूस्थानदेवता | ३८२ |
| द्रुपदे | काष्ठपादुकासु | २२१ |
| द्रुह्व | मनुष्याः | १५२ |
| द्रूणाति | हन्ति | २३४ |
| द्रूषति | गच्छति | २०९ |
| द्वारः | भूस्थानदेवता | ३०६ |
| द्विता | द्विधा | २२२ |
| द्विबर्हाः | इन्द्रः | २९२ |
| धनु | भूस्थानदेवता | ३८१ |
| धन्व | अन्तरिक्षम् | ११ |
| ,, | ,, | २१४ |
| धन्वति | गच्छति | २०६ |
| धमति | गच्छति | २०२ |
| ,, | हन्ति | २२५ |
| ,, | अर्चति | २०२ |
| धमनि | वाक् | ६७ |
| धरुणम् | उदकम् | ८९ |
| धर्णसि | बलम् | १८४ |
| धवा | मनुष्याः | १४८ |
| धाता | मध्यस्थानदेवता | २९४ |
| धारा | वाक् | ६२ |
| धासि | अन्नम् | १७४ |

| पदम् | अर्थ | पृष्ठायाम् |
|---|---|---|
| धिषणा | वाक् | ७५ |
| धिषणे | द्यावापृथिव्यौ | ३०४ |
| धी | कर्म | १४१ |
| ,, | प्रज्ञा | १६७ |
| धीतय | अङ्गुलयः | १६२ |
| धीर | मेधावी | २०० |
| धुनय | नद्यः | १११ |
| धुरः | अङ्गुलयः | १६५ |
| धूर्वति | हन्ति | २२१ |
| धेना | वाक् | ७३ |
| धेनु | , | ७८ |
| ध्रजति | गच्छति | २०१ |
| ध्रति | , | २०८ |
| ध्रयति | , | २०८ |
| ध्राति | ,, | २०८ |
| ध्वसति | ,, | १९९ |
| ध्वरति | हन्ति | [२२२ |
| ध्वस्मन्वत् | उदकम् | ९० |
| न | उपमा | १७०।२१० |
| नंसन्ते | नमन्ति | २२१ |
| नकि | सर्वपदसमाम्नानाय | २७० |
| नकीम् | ,, | २७० |
| नक्ता | रात्रि | ३७ |
| नक्षति | गच्छति | २०१ |
| ,, | व्याप्नोति | २१९ |
| नघहाभम् | ममुह्मारम् | २५० |
| नपा | वाक् | ७१ |

| पदम् | अर्थं | पृष्ठायाम् |
|---|---|---|
| सुगम् | सुखम् | २६६ |
| सुखम् | सुखम् | १५८ |
| सुखावरी | उषा | ४२ |
| सुविते | सुगमने | २१२ |
| सुविदत्र | सुप्राणं | २५८ |
| सुशिप्र | सुहनु सुनसो वा | २६२ |
| सुहस्त्या | बहुजय | १६६ |
| सूद | कूप | २९४ |
| सूनरी | उषा | ४० |
| सूनु | अपत्यम् | १४६ |
| सूनृता | उषा | ४२ |
| ,, | अन्नम् | १०६ |
| सूनृतावती | उषा | ४२ |
| सूनृतावरी | ,, | ४२ |
| सूरि | स्तोता | २८१ |
| सूर्मे | सुसमीरिते | १५९ |
| सूर्य | द्युस्थानदेवता | ४०० |
| सृण्या | वाक | ९८ |
| सृक | वज्र | २२० |
| सृणि | दात्रम् | २५५ |
| सृप्र | सुप्र | २६१ |
| सेधति | गच्छति | २१० |
| सोम | मध्यमस्थानदेवता | २९२ |
| सोमानम् | अभियोतारम् | २१६ |
| स्तामु | स्तोता | १८२ |
| स्तिपा | अदि | २६२ |
| स्तियानाम् | हिमभावन संघातानामपां | ३६२ |

| पदम् | अर्थं | पृष्ठायाम् |
|---|---|---|
| स्तुप् | स्तोता | १८१ |
| स्तृणाति | हन्ति | २११ |
| स्तूभि | अर्चते | २०२,२१२ |
| स्तोभति | अर्चति | २७१ |
| स्तौति | ,, | २७४ |
| स्तेयति | ,, | २११ |
| स्पृध | सङ्ग्रामा | २२३ |
| स्फुरति | हन्ति | २११ |
| स्फुलति | ,, | २११ |
| स्यन्दते | गच्छति | १९९ |
| स्यन्द्रास | बलानि | १८४ |
| स्यमति | गच्छति | १९९ |
| स्यूमकम् | सुखम् | २१९ |
| स्योनम् | ,, | २६० |
| स्रमते | गच्छति | १९९ |
| स्रवति | ,, | १९९ |
| स्रवन्त्य | नद्य | ११० |
| स्रोत | उदकम् | ९१ |
| स्रोत्या | नद्य | १११ |
| स्व | उदकम् | १०४ |
| स्व | द्यौरादित्यश्च | २५,२०८ |
| स्वसा | सुगमनं | २२६ |
| स्वधा | उदकम् | १०७ |
| ,, | अन्नम् | १०५ |
| स्वधिति | वज्र | १२८ |
| स्वधे | द्यावापृथिव्यौ | २०४ |
| स्वन | वाक् | ७१ |
| स्वपिति | स्वपिति | २९१ |

॥ इति ॥

# निरुक्तम्

## ( निघण्टुः )

---

### टीकाभूमिका ।

मन्दस्वव्यमस्तकान्तारसञ्चारिकरिणं मुखे ।
महालदैत्यमातङ्गभङ्गे केसरिणं भजे ॥ १ ॥

नमस्त्रिधाम्ने शिपिविष्टनाम्ने
निरुक्तविद्यानिगमप्रतिष्ठाम् ।
अवाप यास्को विविधेषु यागे-
ष्वनेन चाम्नायमभिष्टुवानः ॥ २ ॥

प्रणमामि यास्कभास्कर यो हृततमसः प्रकाशितपदार्थं ।
यस्य भुवनत्रयीमिव गावः प्रकटां त्रयीं वितन्वन्ति ॥ ३ ॥
वागीश्वर वचोभिर्वसिष्ठमुख्यान्मुनींस्तपोभिश्च ।
अनुकृतवन्तं वन्दे पितामहं देवराजयज्वानम् ॥ ४ ॥
आचार्यं शाब्दिकानामृचि यजुषि च यद्दृष्टतुल्यप्रभावम्,
वन्दे नैरुक्तवृत्तिक्रमसुपनिषदक्षरीणासुपन्नम् ।
आभत्तार क्रतूनामवनिसुखकरप्रक्रियानुक्रियायै,
तात यज्ञेश्वराख्य प्रतिहततमसं ज्ञानभास्वन्मयूखे. ॥ ५ ॥
यज्वा रङ्गेशपुरी—पर्यन्तग्रामवास्तव्य ।
विरचयति देवराजो नैघण्टुककाण्डनिर्वचनम् ॥ ६ ॥
भगवता यास्केन समाम्नाय नैघण्टुक-नैगम-देवताकाण्ड-

रूपेण त्रिविध गवादि देवपत्न्यन्त निरुक्तवता नैगम देवताकाण्डपठितानि पदानि प्रत्येकमुपादाय निरुक्तानि दर्शितनिगमानि च, नैघण्टुककाण्डपरिपठितानान्तु गवाद्यपारेपर्यन्तानामेकचत्वारिंशदुत्तरत्रयोधिकसहस्र सामान्येन 'एतावन्त्यस्य सत्त्वस्य नामधेयानि'—इति व्याख्याय तत्र प्रदर्श्य कतिपयान्येव निरुक्तानि, तथा कानिचिदेव दर्शितनिगमानि; अन्यानि तु ग्रन्थविस्तरभीत्या सामान्येन निर्वचनलक्षणस्योक्तत्वात् बुद्धिमद्भिर्निर्वक्तु सुशक्यानि इत्यभिप्रायेण च उपेक्षितानि। स्कन्दस्वामी च तत एव निरुक्तमनुजगाम।

अत्र तु 'दिवश्चादित्यस्य च साधारणनामानि स्वरादीनि षट्'—'इदमादीनि, च उपमाभेदात् भेदनामानि द्वादश'-'अपित्वे अभीके इत्यादीनि च षड्विंशतिश्च' भाष्यकारेण बहुवक्तव्यत्वात् प्रकरणश एव निरुक्तानि, स्कन्दस्वामिना च व्याख्यातानि। अतोऽन्येषां यथाक्रमेणानिरुक्तनिगमाप्रदर्शनाच्च स्वरूपमात्रमपि अध्ययनादेवावगन्तव्यम्। तच्चाध्ययन कलियुगे प्रायेण विच्छिन्नसम्प्रदायमासीत्। ततश्च कोश एव शरणमासीत्। तेषु च, केषुचिदर्थेषु लेखकप्रमादादिभि कानिचित्पदान्यधिकानि आसन्, अन्येषु च कानिचिन्न्यूनानि, अपरेषु च कानिचिदपहाय कानिचित् विभ्रष्टानि अक्षराणि च विपर्यस्तानि। एव व्याकीर्णेषु कोशेषु नियमैकभूतस्य प्रतिपदनिर्वचन निगमप्रदर्शनपरस्य कस्यचिद् व्याख्यानस्य अभावात् नैघण्टुक काण्डमुत्सन्नप्रायमासीत।

ततश्च पाठसंशोधनार्थं बालानां सुगमत्वाय च तत्रत्यानां पदानां क्रमेण प्रतिपदनिर्वचननिगमौ प्रदर्शयितु,—स्वरादीनीति पूर्वमुक्तस्य प्रकरणत्रयस्य, नैगम देवताकाण्डगतानाञ्च पदानां भाष्यकारेण निरुक्तानां स्कन्दस्वामिना च तद्व्याख्या

तानां प्रक्रिययोन्मीलयितव्यम्, बहुशस्तु नैघण्टुककाण्डनिर्वचनानन्तरं तदुन्मीलयितुञ्चायमस्मत्परिश्रमः।

इदञ्च स्वमनीषिकया न क्रियते किन्तु नैघण्टुगतेष्वेव पदेष्वध्यर्द्धशतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि, स्कन्दस्वामिना च निगमव्याख्यानेषु अन्यानि च पदानि शतद्वयमात्राण्युपात्तानि। तेन च समाम्नायपठितानां पदानामर्थेभ्यो व्याहृत्त्वर्थं किञ्चिच्चिन्नं कृतम्, अतस्तेषां पाठश्चविस्तत्वेव शुद्धा। अन्येषाञ्च पदानामस्मत्कृते समाम्नायाध्ययनस्याविच्छेदात्,—श्रीवेङ्कटाचार्यतनयस्य माधवस्य भाष्यकृतो नामानुक्रमण्याः आख्यातानुक्रमण्याः—स्वरानुक्रमण्याः—निपातानुक्रमण्याः—निर्वचनानुक्रमण्या—तदीयस्य भाष्यस्य च बहुशः पर्यालोचनात्,—बहुदेशसमानीतात् बहुकोशनिरीक्षणाच्च पाठः संशोधितः। निर्वचनञ्च—निरुक्तं,(१) स्कन्दस्वामिकृतां निरुक्तटीकां,(२) स्कन्दस्वामि(क)-भवस्वामि(ख)-राहदेव(ग)-श्रीनिवास(घ)-माधवदेव (ङ)-उवटभट्ट-(च)-भास्करमिश्र(छ)-भरतस्वाम्यादि(७) विरचितानि वेदभाष्याणि, (३) पाणिनीय व्याकरणं,(४) विशेषत उणादि(क) तद्वृत्तिं, (ख) क्षीरस्वाम्यनन्ताचार्यादिकृतां निघण्टुव्याख्यां, (५) भोजराजीय व्याकरणं, (६) कमलनयनीय-निखिलपदसंस्कारांश्च (७) निरीक्ष्य क्रियते। तत्र च पञ्चदशाख्येयानां तत्र दृष्टानां पदानां तत्तत्कृतञ्च निर्वचनमुपादाय तदेवास्मत्प्रकरणानुरूपञ्चेदुल्लिख्यते; अननुरूपन्तु किञ्चिद् विपरिणमय्य, अन्येषाञ्च कतिपयानां निरुक्तकारोक्तनिर्वचनसामान्यलक्षणमनुसृत्य, निरुक्तिः क्रियते।

निगमश्च द्विविधाध्ययनिनां तैरधीतेषु वेदेषु परिदृश्य-

मानवस्तद्भाष्याणि निरीक्ष्य तत्र तत्र प्रदर्शितैः, बहुभिर्निग-मानाञ्च पदानां निगमा अन्वेष्याः ।

अतोऽस्माभिर्यथामति प्रदर्शितौ प्रतिपदनिर्वचननिगमौ विद्वांसो बुद्ध्या निरूप्य शुकभाषितवन्मनसि कुर्वन्तु ॥

---

## अथ प्रथमाध्यायः ।

—:०:—

"अथातोऽनुक्रमिष्यामः"—इत्यादि ( २,५ ) निरुक्ते तस्य टीकायाञ्च यदैघण्टुककाण्डविषयमुक्तं तत् सर्वं तत्रैव द्रष्टव्यम् ॥

आदित एकविंशतिः पृथिवीनामधेयानि—

ॐ गौः (१) । ग्मा (२) । ज्मा (३) । क्ष्मा (४) । क्षा (५) । क्षमा (६) । क्षोणिः (७) । क्षितिः (८) । अवनिः (९) । उर्वी (१०) । पृथ्वी (११) । मही (१२) । रिपः (१३) । अदितिः (१४) । इला (१५) । निर्ऋतिः (१६) । भूः (१७) । भूमिः (१८) । पूषा (१९) । गातुः (२०) गोत्रा (२१) इत्येकविंशतिः पृथिवीनामधेयानि॥१॥

( १ ) गौः । 'गम्लृ गतौ (भू०प०)' धातोः 'गमेर्डोस् (उ० २, ६७)'—इति कर्त्तरि कारके अधिकरणे वा डोः प्रत्ययः । गातेर्वा स्तुत्यर्थात् (अदा० प०) बाहुलकोक्तेः (३,३,११३) कर्मण्यधिकरणे वा । 'गोतो णित् (७,१,९०)'—इति च णिद्भावात् वृद्धिः । अत्र भाष्यम्—'गौरिति पृथिव्याः नामधेयं

यद्दूरं गता भवति यत्रास्या भूतानि गच्छन्ति गातेर्वौकारो नामकरण (निरु० २, ५)'—इति। अस्य स्कन्दस्वामी—'दूरं गता भवति नैरन्तर्येणात्माकाशादिवत् दूरेऽप्युपलम्भे गति-क्रियाव्यवहार'। अन्वयान्यव चोपलम्भेर्दूरोपदेश । प्रत्ययो-पात्तकर्त्र्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्यापलब्धिदूरविशिष्टं गमनमुपादत्ते, 'तथा' 'परिव्राजकः' इति यथा। यत्रास्या भूतानि प्राणिनो गच्छन्ति। घो वार्थे। गातेर्वा स्तुत्यर्थस्य। (अदा० प०) गीयते स्तूयतेऽसाविति, गायन्ति वास्या स्थिता इति गो। उदाहरणम्—'गोषदसि'—इति। गार्हपत्यो-पस्थाने विनियोगात्, गार्हपत्यस्य च गवि पृथिव्या सद नात् गो शब्दस्य पृथिव्यभिधानत्वनिश्चितमिति। एवमन्येष्व-प्युदाहरणेषु तत्र तत्र मन्त्रवाक्यार्थसमवायेन अभिधेय प्रदर्श-नीय निश्चित्य तत्तदर्थाभिधायित्वम्। "व्रुज गच्छ गोष्ठानम् (य०वा०स० १, २५-२६)"—"गौर्जगार यद्धं पृच्छान् (ऋ०स० १०,३१,१०)"—"अभवत् पूर्व्या भूमना गोः (ऋ० स० १०,३१. ६)"—इति निगमा॥

(२) ग्मा। गमे पूर्वस्मिन्नेव कारकद्वये 'कनिन्युवृषि-तक्षि (उ० १,१५४)'—इत्यादिना विहित कनिन्प्रत्ययो बाहुलकात् भवति। 'गम हन-जन खन घसा लोप क्ङिड त्यनङि (६,४,९८)'—इत्युपधालोप, औणादिकेन 'मनिन् (उ०४,१४०)'—इति सूत्रेण वा मनिनि बाहुलकात् (३,३,१) टिलोप, 'डाबुभाभ्यामन्यतरस्याम् (४,१,१३)। अर्थं पूर्व वदेव। 'ग्मा गच्छतिः, गच्छन्तीह्यीयम्'—इति माधव। "त्रिरस्य ग्मयापार्श्वे जुत्वं. (ऋ०स०१०,४९,२)"—"त्रिरस्य ग्मस्य मर्त्यम (ऋ०स०१०,१२,६)"—इति च निगमौ। ग्म इत्यत्र छान्दसत्वादृपसिद्धि ।

(३) ज्मा। जमतिर्गतिकर्मा (निघ०२,१४) 'जमु अदने (भ्वा०प०)'-'जनी प्रादुर्भावे '(दि०आ०)'-'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु (रु०प०)' म्रक्षणं सेचनमिति तद्वृत्तिः। एतेभ्यः 'श्वन्नुक्षन् पूषन् प्लीहन्' (उ०१,१५५)'—इत्यादिना परिज्मन्निति कनिन्नन्तं सोपसर्गं निपातितम्, बाहुलकात् (३,३,१) निरुपसर्गमपि भवति। निपातनादेव कारकविशेषसिद्धिः। 'डाबुभाभ्यामन्यतरस्याम् (४; १, १३)'। गतौ पूर्ववदर्थः। अदन्ति वास्यां भूतानि, जातानि वा तत्कारणात्, जायन्ते वास्या ओषधयः। तथाचोपनिषत्—'अद्भ्यः पृथिवी, पृथिव्या ओषधयः (तै०उ०२,१)'—इति। अथवा व्यक्ता सर्वथा प्रत्यक्षा न' ह्याकाशादिवदव्यक्ता पृथिवी; 'तिस्रो मह्रीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका (ऋ०म०२,५६,२)'—इति च स्तुतिः। म्रक्षा सिक्ता भवति वर्षेण; 'तस्मादमावीमां हव्यान्युनत्त्यभिजिघ्रति (ऐ०ब्रा०१,२,१)'—इति ब्राह्मणम्। "ये के च ज्मा महिनो अहिमायाः (ऋ०सं०६,५२,१५)"—"अभिक्रन्दन्निन्द्रभूरधुज्मन् (ऋ०सं०७,२१,६)"—"उभया अत्र सर्वो रन्त देवाः (ऋ०सं०७, ३८,३)"—"अधज्मो अधवा दिवः (ऋ०सं०८,१,१८)"—इति च निगमाः॥

(४) क्ष्मा। 'क्षि क्षये' भ्वादिः (प०), 'क्षि निवासगत्योः' तुदादि (प०), 'क्षि 'हिंसायाम्' क्र्यादिः (प०), क्षै, जै, सै, क्षये (भ्वा०प०), 'क्षमूष् सहने (दि०प०)', 'क्ष्मायी विधूनने (भ्वा०आ०)',—एतेभ्यः औणादिके मनिनि (उ०४, १४०) बाहुलकाद्रूपसिद्धिः। डापि गतार्थं सर्वम्। क्षियन्ति निवसन्त्यस्यां प्राणिनः, क्षायन्ति क्षययन्ति गच्छन्त्यस्यां पदार्था इति वा, क्षिण्वन्त्यस्यां पापकृत इति वा, क्षमते वा प्राणिजातकृतं भारं विधूनयति वा प्राणिनः स्वकीयकार्ये।

"पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः (ऋ०सं०१०,६१,७)"—"क्ष्मया चरन्ति परि सा वृणक्तु नः (ऋ०सं०७,४६ ३)"—इति च निगमौ ॥

(५) चा । निरूपिता एव धातवः । 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति सोपपदात् जनेर्विधीयमानो डः प्रत्ययः, 'अपिशब्दः सर्वोपाधि-व्यभिचारार्थः'—इत्युक्तेर्निरुपपदेभ्योऽपि भवति । च्छायस्तु छान्दसत्वान्मकारलोपः । अर्थः पूर्वोक्त एव । "ज्ञातस्य च जायमानस्य च चाम् (ऋ०सं०१,८६,७)"—इति निगमः ॥

(६) चमा । निरूपिता एव धातुभावाः । औणादिके मनिनि (उ०४,१४०) बाहुलकाद्रूपसिद्धिः । अर्थः पूर्वोक्त एव । 'चमूष् सहने (दि०प०)'—इत्यस्माद्वा पूर्ववत् डाप्प्रत्ययः । "यः पार्थिवस्य चम्यस्य राजा (ऋ०सं०२,१४,११)"—इति निगमः ॥

(७) चोणिः । 'टुक्षु रुक्षु शब्दे' अदादिः (प०) 'वीज्याज्वरिभ्यो निः (उ०४,४८)'—इति विहितो नि प्रत्ययो बाहुलकाद् भवति, गुणः णत्वम् । क्षूयते शब्द्यते स्तूयते स्तोतृभिः, क्षुवन्त्यस्यां भूतानीति वा । चोणीति ईकारान्तं केचित् पठन्ति । तदा 'कृदिकारादक्तिनो वा ङीप् वक्तव्यः (४,१,४५ वा०)'—इति ङीप् । "नवन्त क्षोणयो यथा (ऋ०सं०१०,२२,६"—"यं क्षोणीरनुचक्रदे (ऋ०सं०८,३,१०)"—इति निगमौ ॥

(८) क्षितिः । 'क्षि निवासगत्योः (तु० प०),' 'क्षि क्षये (भू० प०)' 'क्षि हिंसायां (स्वा० क्र्या० प०)'—एतेभ्योऽपि 'वसेस्तिः (उ० ४,१७५)'—इति विहितस्ति-प्रत्ययो बाहुलकाद् (३,३,१) भवति, गुणाभावश्च । अथवा 'स्त्रियां

क्विन् ( ३,३,९४)' कर्मण्यधिकरणे ( ३,३,९३ ) वा भवति । अर्थस्तु स्पष्टमेव । "क्षेति क्षितौ सुभगो नाम पुष्यन् ( ऋ० सं० ५, ३७,४ )"—"श्रोष्टि सुक्षिति सुक्षिति द्विव ( ऋ० सं० ६, २, ११ )"—इति निगमौ ॥

(९) अवनिः । 'अव रक्षण गति कान्ति प्रीति तृप्त्यवगम प्रवेश श्रवण स्वाम्यर्थ याचन क्रियेच्छा दीप्त्यवाप्त्यालिङ्गन हिंसा दान भाग वृद्धिषु (भू०प०)'—अस्मात् 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ( उ० २, ८५ )'—इत्यनिः प्रत्ययः । अवति प्रजाः अव्यन्ते वा भूपैः । एतावत्स्वर्थेषु यो योग्यः स बोद्धव्यः । "आ वो रक्षोऽवनिर्न प्रवत्वान् ( ऋ० सं० १, १८१, ३)"—"यह्वी मुहीमवनि भाभि मर्मृशत् (ऋ० सं० १, १४०, ५)"—इति च निगमौ ॥

(१०) उर्वी । 'ऊर्णुञ् आच्छादने (अदा० उ०)'—अस्मात् 'महति ह्रस्वश्च ( उ० १, ३० )'—इति उप्रत्ययो णलोपो ह्रस्वश्च, उरु । 'वोतोगुणवचनात् ( ४, १, ४४ )'—इति ङीष् । ऊर्णोति आच्छादयति उर्वी । महत्त्वादाच्छादयित्री भूमिः स्वस्मिन् स्थितानां वा पदार्थानाम् । वृणोतेर्वा ( स्वा० उ०) पृषोदरादित्वात् ( ६, ३, १०९ ) रूपसिद्धिः । 'छादनार्थे विशिष्टम्'—इति स्कन्दस्वामी । वृणोतेराच्छादनार्थोऽनुवादश्च । "मा मी'मवध्य मा भोगुर्वी काष्ठा ( ऋ० सं० ८,८०,८)"—इति निगमः ॥

(११) पृथ्वी । 'प्रथ प्रख्याने ( भू० आ० )'—'प्रथि म्रदि-भ्रस्जां सम्प्रसारणं सलोपश्च ( उ० १, २७)'—इति कु प्रत्ययः सम्प्रसारणञ्च । प्रथतेऽसाविति पृथु । पूर्ववत् ( ४,१,४४ ) ङीष् । पृथ्वी विस्तीर्णत्वात् । पञ्चाशत्कोटियोजनविस्तीर्णेति, पृथिवी । यद्वा, अन्तर्भावितण्यर्थात् प्रथतेः 'उणादयो बहु

त्वम् (३,३,१)', 'भूतेऽपि दृश्यन्ते (३, ३, २)'—इति वचनात् भूते कु प्रत्ययः । ब्रह्मणा पूर्वमेव विस्तारितेत्यर्थः । 'तत्पुष्करपर्णेऽप्रथयत् यदप्रथयत् पृथिव्यै पृथिवीत्वम् (य०ब्रा० ११, १८,-१३, २ )'—इति हि ब्राह्मणम् । 'पृथुना राज्ञा प्रवतारिता पृथ्वी'—इति क्षीरस्वामी । "स्त्रेगो न क्षामत्ये॑ति पृथ्वीम् ( ऋ० सं० १०, ३१, ९ )"—इति, निगमः । 'यत्रैकार्थानां पदानां सन्निपातः, तत्रैकं तस्य वाचकं भवति ; अन्येषां निरुक्त्या योजनं कर्त्तव्यम्'—इति मर्यादा ; अतोऽत्र क्षामित्यस्य निरुक्त्या योजनम् ॥

(१२) मही । 'मह पूजायाम्' भ्वादिः ( प० ) । 'इन् सर्वधातुभ्यः ( उ० ४, ११८ )'—इतीन्प्रत्ययः । 'कृदिकारात् ( ४,१,४५ वा० )'—इति ङीष् । मह्यते प्रजाभिः, महति वा देवताः स्वभारावतरणाय । अथवा मानेन स्वगुणेन परिमाणेन स्वस्मादूनं परिमाणं पातालं जहाति अतिक्रामति, मानशब्दाज्जहातेश्च मही । पृषोदरादित्वात् ( ६,३,१०९ ) निर्वाहः । "आ नो॑ मुहीमुरमतिं सुजोषाः ( ऋ० सं० ५, ४३, ६ )"—इति निगमः ॥

(१३) रिपः । 'रेपृ गतौ (भ्वा० आ०)', 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणाम् (३,२,१७८ वा०)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशात् दृष्टसिद्धिः'—इति वचनात् क्रस्वे रिपः । गौरित्यनेन समानार्थः । यद्वा, 'रिफ कत्थन-युद्ध-निन्दा-हिंसादानेषु' तुदादिः परस्मैपदी । क्विपि, फकारस्य पकारो व्यत्ययेन (३, १, ८५) । कत्थन युद्धादीनस्यां कुर्वन्ति तत्कारिणः । यद्वा, 'लिप उपदेहे (तु० उ०)', लिप् । गोमयादिना आलिप्यते इति लिप् । रलयोरभेदः । तथाच माधवीयनिर्वचनानुक्रमण्यां 'लेपनाद्रेपणादपि'—इति । यद्वा ;

क्विप् (३, २, ८४ वा०)। भवत्यस्यां सर्वमिति भूः। "मूर्धा भुवो भवति नक्तमग्निः (ऋ० मं० १०, ८८, ६)'—इति निगमः। रेफान्तं त्वव्ययम्, यथा—"भूर्भुवः स्वः (य० वा० सं० ३६, ३)"—इति॥

(१८) भूमिः। 'भुवः कित् (उ० ४, ४५)'—इति भवतेः मिप्रत्ययः। अर्थः पूर्ववत्। अथवा 'भूतेऽपि दृश्यन्ते (३, ३, २)'—इति वचनात् भूते मि-प्रत्ययः। 'अभूतभूमिस्तथा अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः। "व्यंहङ्कुणानामन्वेति भूमिम् (ऋ० सं० १०, २७, १२)"—"भूमिर्भूमिमगात्"—इति च निगमौ॥

(१९) पूषा। 'पुष पुष्टौ (भ्वा० दि० क्र्या० प०)'। 'श्वन्नुक्षन्पूषन् (उ० १, १५५)'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधाया दीर्घः। पुष्यति धान्यादिभिः समृद्धो भवति पोषयति वा एनं प्रजाः। 'सर्वार्थपोषणात् पूषा' इति भट्टभास्करमिश्रः। तथा 'पृथिवी व्यवर्त्तयत् सौषधीभिर्वनस्पतिभिरपुष्यत्' इति श्रुतिः। यद्वा 'पुष धारणे (चु० प०)'—इति धातुः। धारयति सर्वाणि भूतानि पोषयत्याभरणानीति यथा। "या पूषच्छितवर्हिषम् (ऋ० सं० १, २१, १३)"—इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रत्यक्षं रूपम्'। "पूषा त्वेतो नयतु हस्तगृह्य (ऋ० सं० १०, ८५, २६)"—इति, "सरस्वत्यै पूष्णोऽग्नये स्वाहा (य० वा० सं० ४, ७)"—इति निगमः॥

(२०) गातुः। 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः (भ्वा० प०), 'गाङ् गतौ (भ्वा० आ०)', 'कै गै शब्दे' भ्वादिः (प०)। 'कमि-मनि-जनि-गा-भा-या-हिभ्यश्च (उ० १, ७३)'—इति तु-प्रत्ययः। गीयते स्तूयतेऽसौ, स्तुवन्ति यस्यां स्थिता इन्द्रा-

श्रीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति वास्यां स्थिता गायना इति। यद्वा, गम्यतेऽनेनेति गातुर्मार्गः, 'लुगकारेकाररेफाश्चेति वक्तव्यम् (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक्। गातु. मार्गवती हि भूमिः। "इन्द्राय गातुरुश्तीवं येमे (ऋ० सं० ५, ३३, १०)"—"अद्वेषि गातु र्वे वरीयसी (ऋ० सं० १, १३६, २)"—इति निगमौ॥

(२१) गोत्रा। 'गुङ् अव्यक्ते शब्दे (भू० आ०)'। 'गुष्ट-वी-पचि वचि-यमि-[मनि-तनि] सदि-चदिभ्यस्त. (उ० ४, १६२)'—इति त्रप्रत्यय.। गुणः। मृगपक्ष्यादयोऽस्यामव्यक्तशब्दं कुर्वन्तीति गोत्रा। यद्वा; गोत्राः शैलाः सन्त्यस्याम् अर्शआदित्वात् (५, २, १२७) अच्। यद्वा; गोशब्दे कर्मण्युपपदे 'त्रैङ् पालने (भू० आ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)'। टाप् (४, १, ४)। गास्त्रायते रक्षति यवसोदकादत्तया। यद्वा, गौभिरादित्यकिरणैर्वृष्टिप्रदानेन त्रायते रक्षते इति, 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, गोशब्दात् 'तस्य समूहः (४, २, ३७)'—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४, २, ५०)'—इत्यनुवृत्तौ 'इति-त्र-कट्यचश्च (४, २, ५१)'—इति त्र-प्रत्ययः। गोत्रा, गवां समूहो मत्वर्थीयोऽकारः। गोसमूहोऽस्यामस्तीति गोत्रा। निगमोऽन्वेषणीयः॥

इत्येकविंशति. पृथिवी-नामधेयानि॥ "उवाच मे वरुणो मेधिराय (ऋ०सं०७, ८७, ४)"—इत्यत्र माधव—'उवाच मह्य वरुणो मेधाविने'-इति स तत्रैकविंशतिनामानि काचिद्, गौर्बिभर्त्तीति पृथिवीमाह तस्या हि यास्कपठितानि एकविंशतिर्नामानीति॥ १॥

क्विप् ( ३, ३, ८४ वा० )। भवत्यस्यां सर्वमिति भूः। "मूर्धा भुवो भवति नक्तमग्निः (ऋ० सं० १०, ८८, ६)"—इति निगमः। रेफान्तं व्यत्ययम्, यथा—"भूर्भुवः स्वः ( य० वा० स० १६, ३ )"—इति॥

( १८ ) भूमिः। 'भुवः कित् ( उ० ४, ४५ )'—इति भवतेः मिप्रत्ययः। अर्थः पूर्ववत्। अथवा 'भूतेऽपि दृश्यन्ते ( ३, ३, २ )'—इति वचनात् भूते मि-प्रत्ययः। 'अभूतभूमिस्तया अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः। "न्यङ्क्रुन्तानामन्वेति भूमिम् ( ऋ० सं० १०, २७, १३ )"—"भूमिर्भूमिमगात्"—इति च निगमौ॥

(१९) पूषा। 'पुष पुष्टौ ( भ्वा० दि० क्र्या० प० )। 'श्वन्नुक्षन्पूषन् ( उ० १, १५५ )'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधाया दीर्घः। पुष्यति धान्यादिभिः समृद्धा भवति पोषयति वान्नैः प्रजाः। 'सर्वार्थपोषणात् पूषा' इति भट्टभास्करमिश्रः। तथा 'पृथिवी न्यवर्त्तयत् सौषधीभिर्वनस्पतिभिरपुष्यत्' इति श्रुतिः। यद्वा; 'पुष धारणे ( चु० प० )'—इति धातुः। धारयति सर्वाणि भूतानि पोषयत्याभरणानीति यथा। "आ पूषञ्चित्रबर्हिषम् (ऋ० सं० १, २३, १३ )"—इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रत्यक्षं रूपम्'। "पूषा त्वेतो नयतु हस्तगृह्य (ऋ० सं० १०,८५, २६)"—इति, "सरस्वत्यै पूष्णेऽग्नये स्वाहा ( य० वा० सं० ४, ७)"—इति निगमः॥

( २० ) गातुः। 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः ( भ्वा० प० ), 'गाङ् गतौ (भ्वा० आ०)', 'कै गै शब्दे' भ्वादिः (प०)। 'कमि-मनि-जनि गा भा-या-हिभ्यश्च ( उ० १, ७० )'—इति तु-प्रत्ययः। गीयते स्तूयतेऽसौ, स्तुवन्ति वाग्भिः स्थिता इन्द्रा-

हीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति यस्यां स्थिता गायना इति। यद्वा ; गम्यतेऽनेनेति गातुर्मार्गः, 'कुगवारे-कारेभ्यश्चेति वक्तव्यम् (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य तुक्। गातुः मार्गवती हि भूमिः। "इन्द्राय गातुरुशतीव येमे (ऋ० मं० ५, ३३, १०)"—"अदर्शि गातुरुरवे वरीयसी (ऋ० मं० १, १३६, २)"—इति निगमौ।

(२१) गोत्रा। 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'। 'गु-ध्रु-वी-पचि-वचि-यमि-[मनि-तनि]-सदि-क्षदिभ्यस्त्रः (उ० ४, १६७)'—इति त्रप्रत्ययः। गुत्रः। कृषकचक्रादयोऽत्रानवद्य-शब्दं कुर्वन्तीति गोत्रा। यद्वा ; गोत्राः शैलाः सन्त्यस्याम् अर्शआदित्वात् (५, २, १२७) अच्। यद्वा ; गोशब्दे कर्मण्यु-पपदे 'त्रैङ् पालने (भ्वा० आ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)'। टाप् (४, १, ४)। गास्त्रायते रक्षति सस्यो-दकवत्तया। यद्वा, गोभिरादित्यकिरणैरुदकदानेन त्रायते रक्षते इति, 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, गोशब्दात् 'तस्य समूहः (४, २, ३७)'—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४, २, ५०)'—इत्यनुवृत्तौ 'इनि-त्र-कट्यचश्च (४, २, ५१)'—इति त्र-प्रत्ययः। गोत्रा, गवां समूहो मत्वर्थीयोऽकारः। गोसमूहोऽस्यामस्तीति गोत्रा। निगमोऽन्वेषणीयः ॥

इत्येकविंशतिः पृथिवी-नामधेयानि ॥ "उवाच मे वरुणो मेधिराय (ऋ०मं०७, ८७, ४)"—इत्यत्र सायणः—'उवाच मह्यं वरुणो मेधाविने'-इति च तत्रैकविंशतिनामानि अघ्न्यादितिः, गौर्बिभर्तीति पृथिवीमाह तत्रा हि यास्कपठितानि एकविं-शतिर्नामानीति ॥ १ ॥

हेम (१)। चन्द्रम् (२)। रुक्मम् (३)। अयः (४)। हिरण्यम् (५)। पेशः (६)। कृशनम् (७)। लोहम् (८)। कनकम् (९)। काञ्चनम् (१०)। भर्म (११)। अमृतम् (१२)। मरुत् (१३)। दत्रम् (१४)। जातरूपम् (१५)।

इति पञ्चदश हिरण्यनामानि ॥ २ ॥

(१) हेम। 'हि गतौ वृद्धौ च (स्वा० प०)'। अस्माद्धातो 'नामन् सीमन्-व्योमन्-हेमन्-रोमन्-लोमन्-व्योमन्-विधर्मन्-पापन् (उ०४, १५०)'—इति मनिमन्तं निपात्यते। हिनोति गच्छति अनेन सुखं पुरुषः, गम्यते वा तदर्थिभिः, गच्छति वा स्वर्णकटकादिरूपां विकृतिम्, हिनोति वाणिज्यादिना प्रतिदिनं वर्द्धते, 'ताम्रादयुपरि लेपनाद् वर्द्धते' —इति सुबोधिनी। अथवा हितमापादि निहितं वा भूम्यादौ दधातेर्हिरादेशो निपातनात्। हेम। "अस्य प्रेषा हेमना पूयमानः" (ऋ०मं०९, ९७ १)"—"अश्वो न स्वे दम आ हेम्यावान् (ऋ० म०४, २, ८)" —इति च निगमौ। हेम्यावान्—हिरण्मयकक्ष्यया युक्तः।

(२) चन्द्रम। 'चदि आह्लादने दीप्तौ च (भू० प०) अस्मात् 'स्फायि-तञ्चि वञ्चि शकि-क्षिपि-क्षुदि (उ० २, १२)'—इत्यादिना रक्। चन्दयति, आह्लादयति तद्वत् दीप्यते वा स्वयं तैजसत्वात्। यद्वा, णिजन्ताच्चदेर्बाहुलकात् णिलोपः, दीपयति धारयितॄन्—दीप्यतेऽनेन धारयितेति वा। कान्तकर्मा वा चदि, 'चन्द्र चन्दते कान्तिकर्मणः (निरु० ११, ५)'—इत्युक्तं। कास्यते सर्वं, इति चन्द्रम्। "ये पृथ्वञ्चन्द्र

(ऋ० मं० १०, ८५, ३१)"—"दक्षिणा चन्द्रमुत यद्धिरण्यम्, (ऋ० म० १०, १०७, ७)"—इति च निगमौ ॥

(३) रुक्मम्। 'रुच दीप्तौ (भू० आ०)' 'युजि-रुचि-तिजां कुश्च (उ० १, १४३)'—इति मक्प्रत्ययः कुत्वं च। रोचते तद-तिशयेन दीप्यते तेन तदिति च रुक्मम्। "आ रुक्मैरायुधा नरः"—(ऋ० मं० ५, ५२, ६)"—"उप रुक्मिभिरीयते (ऋ० म० ८, १५, ५)"—इति च निगमौ ॥

(४) अयः। 'इण् गतौ (अदा०प०)'। असुन् (उ० ४, १८४)। एति गच्छति अहुलीयकादिरूपेण शरीरम्, क्रय-क्रय-संविभागादिना वा, पुरुषात् पुरुषान्तरं गच्छत्यनेन धर्मदानादिनेति वा। "अयः शीर्षा मदेरघुः (ऋ०म० ८, १०१, ३)"—इति निगमः ॥

(५) हिरण्यम्। 'हृञ् हरणे (भू० उ०)' अस्मात् 'हर्यतेः कन्यन् हिर् च (उ० ५, ४५)'—इति विधीयमान कन्यन्-प्रत्ययो हिरादेशश्च बाहुलकाद् भवतः। तथाच अन्यत्रिल-खितत्य 'हृञ इच'—इति भोजसूत्रम्। क्रियते जनाज्जन-मिति वा सव्यवहारार्थम्, द्रव्यस्वभावत्वात् नैकत्रावस्थायित्वं तस्य। अथवा द्विधातुजं रूपम्,—हिनोतेः रमतेश्च धातु-द्वयात् समुदितात् कन्यन्प्रत्ययो बाहुलकाद्रूपसिद्धिश्च, हितश्च तत् आपदि दुर्भिक्षादौ, रमयति च सर्वदा सर्वमिति। अथवा हर्यतेः प्रेप्साकर्मणः (निरु०२, १०) ;—हर्यतेः कन्यन् हिरश्च क्रियतेयथाप्राप्तं रूपम्। सर्वैर्हि तत् सर्वदा प्राप्तुमिष्यते। 'हर्यति स्वप्रभया दीप्यते'—इति सुबोधिनीकारः। "हिरण्य-रूपः स हिरण्यसन्दृग् (ऋ०म०२, ३५, १०)"—इति निगमः ॥

(६) पेशः। 'पिश गतौ (तु० प०)'। असुन्। अय इत्य-नेन समानार्थम्। "त्रिरश्विना त्रिवृता सुपेशसा (ऋ०मं० १,

४७, २)"—इति निगमः। "हिरण्ययेन रथेन (ऋ० सं० ८, ५, ३५)"—"हिरण्ययी वां रभिः (ऋ० सं० ८, ५, २८)"—इत्यादौ अश्विनोरथस्य हिरण्मयत्वोक्तेः पेशोऽत्र हिरण्यम्। बृहदारण्यके—'तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरं रूपं तनुते (४, ४, ४)'—इति। यथा। वाजसनेयके "सरस्वती मनसा पेशलम् (१९, ८३)"—इत्यत्र 'पेश इति हिरण्यनाम रूपनाम वा'—इत्युवटेन व्याख्यातम्॥

(७) कृशनम्। 'कृश तनूकरणे (दि० प०)'। 'कृ-पृ-वृजि-मन्दि-नि-धाञ्भ्यः क्युः (उ० २, ७९)'—इति विधीयमानः क्युर्बाहुलकाद् भवति। कृश्यति तनूकरोति यम्। अत्र माधवस्तु—'कशिर्दीप्त्यर्थः। कशति स्वप्रभया दीप्यते, अपि वा कर्षयति संस्पृष्टं, कृशमेव वा भवति संस्थानतो रजतात्'—इति। "स्मद्दिष्टयः कृशनिनो निरेके (ऋ० सं० ७, १८, २३)"—"अभि श्यावं न कृशनेभिरश्वम् (ऋ० सं० १०, ६८, ११)"—"अभिवृतं कृशनैर्विश्वरूपम् (ऋ० सं० १, ३५, ४)"—इति निगमाः॥

(८) लोहम्। 'लुह कात्स्न्यादौ (भू० प०)'। घञ् (३, ३, २१)। कल्यते श्लाघ्यतेऽनेनात्मा,—त्रिवर्गसाधनत्वात् पुरुषैः अभ्यर्थ्यते वा। 'लूञो हः'—इति तु श्रीभोजदेवः। लुनाति छिनत्ति पापवस्त्वर्थं पापं दीयमानम्। निगमोऽन्वेषणीयः॥

(९) कनकम्। 'कनी दीप्तिकान्तिगतिषु (भू० प०)'। 'कृञादिभ्यः संज्ञायाम् (उ० २, ३६)'—इति वुन्-प्रत्ययो धात्वर्थेऽपि। कनादिवदर्थोऽनुसन्धेयः। निगमोऽन्वेषणीयः॥

(१०) काञ्चनम्। अत्र सुबोधिनी—'कचि दीप्तिबन्ध-

नयोः (भू० आ०)। कध्यते वर्णेन दीप्यते बध्यते कुण्डलादि-रूपेणेति। 'युच् बहुलम् (३, ३, १३०)'—इति युच्प्रत्ययः। दीर्घोऽत्र बाहुलकात्। निगमोऽन्वेषणीयः ॥

(११) भर्म। 'डु भृञ् धारणपोषणयो (जु० उ०)'। मनिन् (३, २, ७५)। भ्रियते धार्य्यते, अङ्गुल्यादिभिर्धार्य्यते आपदर्थ-मिति वा, पोषयत्यनेन कुटुम्बमिति वा। हरतेर्वा (भू० उ०) मनिनि 'हृग्रहोर्भश्छन्दसि (सि० कौ० वे० ३अ०)'—इति भकारः। हिरण्येन हरति—धातुजेन समानार्थम्। "सुवी राभिश्चिरते वाजभर्मभि (ऋ० स० ८, १९, ३०)"—"अरिष्ट-भर्मन्नागहि (ऋ० स० ८, १८, ४)"—इति च निगमौ। 'वाज-भर्मभि', 'अरिष्टभर्मन्'—इत्यत्र माधवस्तु—'भर्त्तव्य भर्म'—इति व्याख्यत्, तदा निगमोऽन्वेषणीय ॥

(१२) अमृतम्। नञ्पूर्वात् म्रियते (तु० आ०) 'तनि-मृङ्भ्यां किच्च (उ० ३, ८५)'—तन्प्रत्यये रूपम्। न म्रिय न्तेऽनेन दुर्भिक्षादौ, नास्ति मृत मरणमस्येति वा,—न हि हिरण्यस्य यस्यां कस्याञ्चिदवस्थायामात्मनाशो विद्यते। 'अग्नेः प्रजातं परि यद्धिरण्यममृतं दध्रे अधि मर्त्येषु (अथ० स० १९, २६, १)'—इति खैलिको मन्त्रः। न म्रियते पात्रे प्रतिपादि-तेन ध्रियमाणेन वा आयुष्करत्वात्। 'आयुर्वै हिरण्यम्'—इति श्रुतिः। तथाच खैलिको मन्त्रः—'यो बिभर्त्ति दाक्षायणं हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घ-मायुः (य० वा० स० ३४, ५१)'—इति। "मूत्रा चक्राणो अमृ-तानि विश्वा (ऋ० स० १, ७२, १)"—"शुक्र त्वा शुक्रेण क्रीणामि चन्द्र चन्द्रेणामृतममृतेन (य० वा० स० ४, २६)"—इति निगमौ ॥

(१३) मरुत्। मितममितं वा रोचते, मितममितं वा

रोचयति, भातेः पूर्वाङ्गं, रौतेर्वोत्तराङ्गम्, पृषोदरादित्वात् (६, ३, १०८) साधुः। हिरण्यं हि धन्यादि-तैजसि-पदार्थेभ्यो मितं भोगादिभ्योऽमितं रोचते, पर्थिभ्यो दीयमानं लोकद्वयेऽपि कीर्त्तिं कारयति। तथाच सुभाषितश्लोक —'शृणु पात्रे ! त्वयि न्यस्तं कियत्काणादि कल्पषम्। इदमेवार्थिहस्ताग्रं रावयति च रोचते'। यद्वा, मृङो क्तिः,—म्रियतेर्धातो (तु॰ आ॰) क्तिप्रत्यये रूपम्। म्रियन्तेऽनेन पुरुषा इति मरुत्,—एतदर्थं हि चौरादिभिः पुरुषाः हन्यन्ते। निगमोऽन्वेषणीयः॥

(१४) दत्तम्। 'डु दाञ् दाने (जु॰ उ॰)'। 'अमि-चिमि-मिदि-शसिभ्यः क्तः (उ॰ ४, १५८)'—इति विधीयमानः क्तो बाहुलकात् (३, ३, १) भवति। 'दो दद् घोः (७, ४, ४६)'—इति दद्भावः। दीयते पात्रे दत्तम्। "इन्द्र ! यत्ते माहिनं दत्रमस्त्य॰ (ऋ॰ स॰ ३, ३६, ८)"—इति निगमः॥

(१५) जातरूपम्। 'जनी प्रादुर्भावे (दि॰ आ॰)'। निष्ठातकारः। 'जनसनखनाम् (६, ४, ४२)'—इत्यात्वम्। जातः। 'रुच दीप्तौ (भू॰ आ॰)। 'खष्प-शिल्प-शष्प-बाष्प-रूप-पर्प-तल्पाः (उ॰ ३, २८)'—इति पप्रत्ययान्तो निपातितः, निपातनादुकारस्य दीर्घश्चकारलोपश्च। रोचते रूपम्। अनाहार्यतया जातं रूपमस्य जातरूपम्। तथाच श्रीरामायणे स्कन्दोत्पत्तौ—'इह हैमवते भागे गर्भोऽयं सन्निवेश्यताम्'—इत्यतः 'परिनिक्षिप्यमाने गर्भे तु तेजोभिरभिरञ्जितम्। सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम्। जातरूपमिति ख्यातं तदा प्रभृति राघव। सुवर्णं पुरुषव्याघ्र। हुताशनसमप्रभम्'—इति (बा॰ का॰)। जातं रूपं सौन्दर्यमनेन धारयितॄणामिति वा

रूपम्। "जातरूपमयेन च पवित्रेणान्तर्धायाभ्युपिञ्चति (ऐ० ब्रा० ८, १८)"—इति निगमः॥

इति पञ्चदश हिरण्यनामानि॥

**अम्बरम् (१)। वियत् (२)। व्योम (३)। बर्हिः (४)। धन्व (५)। अन्तरिक्षम् (६)। आकाशम् (७)। आपः (८)। पृथिवी (९)। भूः (१०)। स्वयम्भूः (११)। अध्वा (१२)। पुष्करम् (१३)। सगरः (१४)। समुद्रः (१५)। अध्वरम् (१)। इति षोडशान्तरिक्षनामानि॥३॥**

(१) अम्बरम्। 'अबिड् शब्दे (भू० आ०)'। 'क्षटरादयश्च (उ० ५, ४२)'—इति अरच्प्रत्ययान्तो निपात्यते। "अम्बन्ते शब्दायन्तेऽस्मिन् मेघाः, अम्बते शब्दायते वा स्वय वायुमेघादिसंसर्गात्.—आकाशगुणो हि शब्द। अथवा अर्त्तेर्धातो 'अर्जिदृशिकम्यमिपमिबाधामृजिपशितुक्धुकदीर्घहकाराश्च (उ० १, २६)'—इति अमतेर्विधीयमान उप्रत्ययो बुगागमश्च बाहुलकात् (३,.३, १) भवति, तस्मिन्, गुणे, र परत्वे च रेफस्य मकारश्च, अम्बु। अमतेरेव वा तेनेव सूत्रेण उप्रत्ययो बुगागमश्च। उभयत्रापि गच्छति देशाद्देशान्तरं गम्यते वा प्राणिभिरित्यम्बु जलम्। तद्राति ददातीत्यम्बरो मेघः। 'आतोऽनुपसर्गे कः' (३, २, ३)', पृषोदरादित्वात् (६, ३, १०९) उकारस्याकारः। तद्दाकाशमप्यम्बरम्। 'लुगकारेकाररेफाश्च वक्तव्या (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक्। तदेव वा वर्षासु प्राणिभ्य उदकं ददातीति अम्बरम्। अथवा अम्बुशब्दे उपपदे राजतेर्धातो, 'अन्येष्वपि दृश्यते (३, २, १०१)'—

इति इगिग्रहणात् ङ, अपिग्रहणस्य सर्वोपाधिव्यभिचारार्थ-त्वादयंसिद्धि । अथवा अम्बुवद्राजते सम्यग्दीप्तिमत्तयाम्बु-वदवभासते। कल्पितोपमानञ्चैतत्, तद्यथा—'पुष्पोत्तंसमिव ध्वान्त मेघो भाति मतङ्गज । सर सरप्रसन्नाभो नभःस्व-मिवोज्झितम् ॥' परमार्थत स्वरूपमवकाश । अथवा अम्बु-मत् भवति रो मत्वर्थीय, पूर्ववदुकारस्याकार, अन्तरिक्ष वि-वर्षादिकेन तद्वत्। "यत्रासत्या परावति यद्वास्थो अध्यम्बरे (ऋ० सं० ८, ८, १४)"—इति निगम ।

(२) वियत्। 'यमु उपरमे (भू० प०)'—इत्यस्मात् औणा-दिके क्विपि, 'गम क्वौ (६, ४, ४०)'—'गमादीनामिति वक्त-व्यम् (६, ४, ४० वा०)'—इत्युक्तेरनुनासिकलोप । 'ह्रस्वस्य पिति कृति तुक् (६, १, ७१)'। विगत यमनमुपरमण-मस्मादिति वियत्,—अन्तरिक्ष हि सर्वत्र व्याप्तत्वात् न कुत्र-चित् उपरतम। 'वियच्छति न विरमति'—इति क्षीरस्वामी। यद्वा, विपूर्वात् 'यती प्रयत्ने (भू० आ०)—इत्यस्मात् क्विप्। विविध यतन्तेऽस्मिन् प्राणिन,—आकाशे हि सर्वे व्याप्रि-यन्ते । निगमोऽन्वेषणीय ॥

(३) व्योम। विपूर्वादवतेर्व्याप्त्यर्थत्वात (भू० प०) औणा-दिके 'सर्वधातुभ्यो मनिन् (उ० ४, १४४)'—इति सूत्रेण मनिन्प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६, ४, २०)—इत्यूठि गुण । व्यवति व्याप्नोति सर्वं जगत्। यद्वा, अवति गत्यर्थ (भू० प०) भावे मनिन् (उ० १, १३९),—ओम, अवन गमन विविधमस्मिन् विद्यते। यद्वा, रक्षणार्थ (भू० आ०)—विशेषेणावति प्राणिनोऽवकाशप्रदानेन। उणादौ तु 'नामन्-सीमन् व्योमन् (उ० ४, १५०)'—इत्यादिना 'व्येञ् संवरणे (भ्वा० उ०)'—इत्यस्मान्मनिनि रूप निपात्यते। दीयते

व्योम । तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः परिवीतो वायुना (११, ४०)'—इति । इदं निर्वचनमेतत्पदकारयोः शाकल्यार्ययोरनभिमतं वीत्यमिन्द्रवग्रहीतत्वात् । "सहस्राक्षरा परमे व्योमन् (ऋ० सं० १, १६४, ४१)"—"सुत्यामाग्निरं पूर्व्यं व्योमनि (ऋ० सं० ८, ७०, १)"—इति च निगमौ ॥

(४) 'बृर्हिः । बृहि वृद्धौ (भू० प०)' 'बृंहेर्नलोपश्च (उ० २, १०२)'—इति इसि-प्रत्ययः । 'बृंहति वर्द्धतेऽनेन प्राणिजातम्,—सर्वे हि प्राणिन आकाशे वर्द्धन्ते, परिवृढं वा स्वयं विभुत्वात् । "यस्य त्रिधात्ववृतं बृर्हिः (ऋ० सं० ८, १०२, १४ )"—इति निगमः ॥

(५) धन्व । 'धवि रिवि धवि गत्यर्थाः (भू० प०)' । इदित्वान्नुम् (७, १, ५८) । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः (उ० १, १५४),—इति कनिन् । धन्वन्ति गच्छन्ति अस्मादापः । यद्वा, 'धनधान्ये (दि आ०)', अनेकार्थत्वादर्थनार्थः । कनिप् । धन्यते अर्ध्यतेऽवकाशप्रदनाय, देवतात्वात् स्वमभीष्टं वा । "य परस्याः परावतस्तिरोधन्वातिरोचते (ऋ० सं० १०, १८७, २)—इति निगमः ॥

(६) अन्तरिक्षम् । 'अन्तरिक्षं कस्मात् ? (निरु० २, १०)'—इत्यादि भाष्यस्य स्कन्दस्वामिग्रन्थो यथादृष्टं लिख्यते—'अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं निःक्रियं वा शान्तमव्यूहं विष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदसी क्षियतीति वा । अन्तरेमे क्षौण्याविति वा । एवमनेकविकल्पमुत्तरपदम् । पूर्वशरीरेष्वन्तरक्षयमिति वा, अन्तः-शब्दात् पूर्वपदप्रत्ययशब्दादुत्तरपदं विनाशिष्वपि अविनाशीत्यर्थः'—इति । सर्वत्र पृषोदरादित्वात् (६, ३, १०९) साधु । "न यस्य द्यावा-

पृथिवी न धन्व नान्तरिक्षम् (ऋ॰ सं॰ १०, ८८, ६)"—इति निगम ॥

(७) आकाशम्। आङ्पूर्वात् 'काशृ दीप्तौ (दि॰ आ॰)'—इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण (३, ३, ११८)'—इति घप्रत्ययः। आ समन्तात् काशन्ते दीप्यन्ते सूर्यादयोऽत्र। यद्वा, नञ्-पूर्वात् काशे. पचाद्यच् (३, १, १३४), नञश्छान्दस. (६, ३, १३६) दीर्घः। न काशते, पृथिव्यादिवत् अप्रत्यक्षत्वात्। तथाच श्रुतिः—'तिस्रो भूमीर्धारयन्त्रीरुतद्यून् गुहा द्वे निहिते दर्शेका (ऋ॰ सं॰ २, ५६, २)'—इति। 'तस्मात् आन्तरिक्ष पश्यति'—इति च। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः (तै॰ उ॰ २, १,)"—इति निगमः ॥

(८) आप.। 'आप्लृ व्याप्तौ (भू॰ प॰)'। 'आप्नोतेर्ह्रस्वश्च (उ॰ २, ५५)'—इति क्विप्प्रत्ययः उपधाह्रस्वश्च। जसि 'अप्तृन्तृचस्व (६, ४, ११)'—इत्यादिना दीर्घः। व्याप्नोति ह्यन्तरिक्ष सर्वं जगत्, आप्यते वा प्राणिभिः। अप्शब्दस्य नित्यं बहुवचनान्तत्वात् बहुवचनान्तस्य पाठ'। * * *। "तुग्रोर्यमप्सु तुमणा अर्जसम् (ऋ॰ सं॰ १०, ४५)"—इति निगमः॥

(९) पृथिवी। 'प्रथ प्रख्याने (भू॰ आ॰)'। 'प्रथेः षिवन् सम्प्रसारणं च (उ॰ १, पा॰)'। 'षिद्गौरादिभ्यश्च (४, १, ४१)'—इति ङीष्। प्रथते पृथिवी। "यः पार्थिवस्य क्षम्यस्य राजा (ऋ॰ सं॰ २, १४, ११)"—"स दाधार पृथिवीं द्यामुतेमाम् (ऋ॰ सं॰ १०, १२१, १)—इति च निगमौ॥

(१०) भूः। भवते.(भू॰ प॰) क्विप्। भवत्यस्मात् द्रव्यादिः। निगमोऽन्वेषणीयः॥

(११) स्वयम्भू। स्वयं भवति न केनचित् सृज्यते, क्विब्वादिना पक्षे नित्यं ह्याकाशम्।

केषु चित्। तदा 'मृगय्वादित्वात् (उ० १, ३६)' कु । निगमस्या-
दर्शनात्-उभयमपि लिखितम्, निगमदर्शनान्निर्णय. कार्य्य ॥

(१२) अध्वा। 'अद भक्षणे (अदा० प०)'। 'अदेर्ध च (उ० ४, ११२)'—इति वनिप् धकारश्चान्तादेशः। अदनं स्वस्तिगच्छतां पथ्यादीनां विषमस्थानाभावात्। यद्वा, अधिर्गत्यर्थः कश्चिद्धातुः, बाहुलकात् पूर्वेण वनिप्, गच्छन्त्यस्मिन् देवादय इत्यध्वा। 'अधेर्गतिक्रियात्'—इति माधवः। यद्वा, अध्वा मार्गोऽस्मिन् विद्यते मत्वर्थीयस्य लुक्,—सन्ति द्याकाशे मेघपथादयः। 'अतेर्धंच'—इति भोजसूत्रम्। 'अत सातत्यगमने (भू० प०)'। सततं गच्छन्त्यत्र सूर्यादय इत्यध्वा। "भूर्मा रेजन्ते अध्वनि प्रविक्ते (ऋ० सं० ६, ५०, ५)"—"अश्मन्‌ अध्वनि वृजिने पथि (ऋ० स० ६, ४७, १३)"—इति निगमौ ॥

(१३) पुष्करम्। 'पुष पुष्टौ (स्वा० प०)'। 'पुष. कित् (उ० ४, ४)'—इति करन्प्रत्ययः। पुषिरन्तर्णीतण्यर्थः, पोषयति भूतानि अवकाशप्रदानेन उदकदानाद्युपकारेण च। 'पुष्कं वारि राति पुष्करम्'—इति क्षीरस्वामी। पुषेरन्तर्णीतण्यर्थात् 'सृम्भृशुषियुधिभ्यः कित्'—इति विहितः करन्प्रत्ययो बाहुलकाद् भवति। 'हृदृक्षसृपृवीचोपुषिमुषिमृड्मूभ्य. कित्'—इति करः श्रीभोजदेव.। पोषयति भूतानीति। पुष्कोपपदाद्राते: 'आतोऽनुपसर्गे क (३, २, ३)'। यद्वा, वपुरित्युदकनाम (निघ० १, ११), तत्कर्तृ शीलमस्येति 'कृञो हेतुताच्छील्यानुलोम्येषु (३, २, २०)'—इति ट, वपुष्कर सत् वकारलोपेन पुष्करम्, पृषोदरादि.। "विश्वे देवाः पुष्करे त्वाददन्त (ऋ० स० ७, ३३, ११)"—इति निगम. ॥

(१४) सगर। सहशब्दपूर्वात् 'गृ निगरणे (तु० प०)'—इत्यस्मात् 'ऋदोरप् (३, ३, ५७)', सहस्य सभाव. (६, ३, ७८)।

सह गिरन्त्यस्मिन् स्थिता आदित्यरश्मयो भौमरसमिति सगरः । सह उद्गिरन्त्यस्मिन् स्थिता मेघा वर्षोदकमिति वा । यद्वा, गीर्य्यते अभ्यवह्रियते पिबते इति गरः उदकम्, तेन सह वर्त्तते इति सगरः । तथाच—'रश्मयश्च देवा गरगिरः'—इत्यत्र स्क(रा)-न्ददेवः 'गरमुदकं गिरन्ति गरगिरः'—इति भाष्यं कृतवान् । यद्वा, 'गॄ शब्दे (क्र्या० पु० प०)'—इत्यादि । गीर्य्यते इति गरः शब्दः, पूर्ववत्, गरेण शब्देन सह वर्त्तते इति सगरः,—आकाशो हि स्वगुणेन शब्देन सहैव सर्वदा वर्त्तते । "अपः प्रेरयं सगरस्य बुध्नात् (ऋ० सं० १०, ८८, ४)"—इति निगमः ॥

(१५) समुद्रः । समुद्द्रवन्ति सङ्गता ऊर्द्ध्वं द्रवन्ति गच्छन्त्य-स्मादापो रश्मिभिराकृष्यमाणा आदित्यमण्डलम् । समुत्-पूर्वात् द्रवतेर्गत्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति अपादाने डप्रत्यये टिलोपे च रूपम् । यद्वा, संहता अभि-द्रवन्त्येनमापो भौमरसलक्षणा वायुना प्रेर्य्यमाणाः आदित्य-मण्डलाद्वा वर्षाकाले रश्मिभिः प्रवर्त्तमानाः । अत्र उदित्येष उपसर्गोऽभीत्यर्थे वर्त्तते, कर्मणि डप्रत्यय इति विशेषः । समो-दन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा । सम्पूर्वात् 'मुद हर्षे (भू० आ०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना अधिकरणे रक्प्रत्यये, समो मलोपे च रूपम् । यद्वा, 'सम्'—इत्येकीभावे, उदकात् उपपदे, रो मत्वर्थीयः । एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति शब्दस्योद्भावश्छान्दसः । यद्वा, सम्पूर्वात् 'उन्दी क्लेदने । प०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ० २, १२)' कर्त्तरि रक्प्रत्यये कित्त्वान्नलोपे च समुद्रः । समुनत्ति भुवनं समुद्रः । "एकः सुपर्णः स समुद्रमा विवेश (ऋ० सं० १०, ११४, ४)"—इति निगमः ॥

(१६) अध्वरम्। अध्वा व्याख्यातः (२३ पृ०)। अध्वानं मार्गं राति ददाति (अदा० प०) स्वस्मिन् गच्छतां पश्वादीनाम्। यद्वा, अध्वा मार्गो विद्यतेऽस्मिन् मेघादीनाम्। रो मत्वर्थीयः। यद्वा, ध्वरतिर्हिंसाकर्मा (निघ० २, १९), तत्प्रतिषेधः। अध्वर्त्तव्यं न हिंस्यमित्यर्थः। नञ्पूर्वात् ध्वरतेः 'पुंसि संज्ञायां घः प्रायेण (२, ३, ११८)'—इति घः। "प्रिया क्रीडन्तौ परि यातो अध्वरम् (ऋ० सं० ८, ३, २३, ३)"—इति निगमः। 'अध्वरं यज्ञम्'—इति स्कन्दस्वामी व्याख्याति, तदा निगमोऽन्वेषणीयः॥

इति षोडशान्तरिक्षनामानि ॥ ३॥

स्वः (१)। पृश्निः (२)। नाकः (३)। गौः (४)। विष्टप् (५)। नभः (६)। इति षट् साधारणानि ॥ ४॥

स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना च कृतव्याख्यानानीति नास्माभिरत्रोच्यन्ते ॥ ४॥

खेदयः (१)। किरणाः (२)। गावः (३)। रश्मयः (४)। अभीशवः (५)। दीधितयः (६)। गभस्तयः (७)। वनम् (८)। उस्राः (९)। वसवः (१०)। मरीचिपाः (११)। मयूखाः (१२)। सप्तऋषयः (१३)। साध्याः (१४)। सुपर्णाः (१५)। इति पञ्चदश रश्मिनामानि ॥५॥

(१) खेदय । 'तेषामादित्य साधारणानि पञ्चाशद-श्मिभिः (नि २, १५)'—इत्युक्तं पूर्वमादित्यरश्मिनामानन्तरमधुना रश्मीनाञ्च निर्वचन प्रदर्श्यते । 'खिद दैन्ये' दिवादिः रुधादिश्च आत्मनेपदी, 'खिद परिघाते' तुदादिर्मुचादि पर-स्मैपदी। 'अकर्त्तरि च कारके संज्ञायाम् (३, ३, १९)'—इति घञ । खिद्यते खिन्ने वाऽनया, लोको घर्मकाले, अश्वो बन्धनकाले । यद्वा,—परिहन्यन्ते सर्वतो हिंस्यन्ते चानया लोक आदित्येन, अश्वो बन्धनकाले । यद्वा, अनेकार्थत्वात् धातूना खिदि छेदने वर्त्तते। तथाच 'खेदन छेदनम्'—इति माधव । अस्मात् पचाद्यचि (३, १, १३, ४) खेदति छिनत्ति नाशयति तमः । तथाहि 'दीपरश्मिकृत:'—इत्यादौ छेदिनीशने दृष्ट, यद्वा छिद्यतेऽश्वोऽनयेति खेदा अश्व-रश्मि । तृतीयैकवचनान्तस्य पाठो यथादृष्टः। "खेदया त्रिवृता दिव (ऋ०स० ६, ५, १५, ३)"—इत्यश्वरश्मेर्निगमः, आदित्यरश्मेरन्वेषणीय ॥

(२) किरणा । 'कॄ विक्षेपे' तुदादि (प०), 'कॄञ् हिंसायाम्' क्र्यादिः (प०)। 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्यु (उ० २, ७६)'—इति क्यु-प्रत्यय । किरन्ति तापम्, एकदेशेनोपचारेण, इतरत्र बन्धनेन। कीर्यन्ते वा, आदित्येन दिक्षु खेषु, अश्वा ग्रीवादिषु । यद्वा, कृणन्ति हिंसन्ति तम, किरणा अश्वरश्मिकिरणा । "भिया इन्द्राय किरणा नैजन् (ऋ० सं० १, ८,४,१)"—इति निगम आदित्यरश्मे । 'हेम दंष्ट्रि किरणं ददृश्वान् (ऋ० सं० ३, ७, १२, १)"—इत्यश्वरश्मे ॥

(३) गाव । व्याख्यात पृथिवीनामसु (१, १)। सर्वमस्तमा विहन्तु, सोम रस वा हन्तु, गोयन्ते स्तोभिस्तसाधनाद् यजमानैरश्वपालैश्च। "यत्र गावो

अज्रा अयासः (ऋ० मं० २,२,२४,६)"—"को अद्य युङ्क्ते धुरि गा ऋतस्य (१, ६, ८, १)"—इति आदित्यरश्मेर्निगमौ। अश्वरश्मेरन्वेषणीयः ॥

(४) रश्मयः। 'रशिर्यमनार्थो धातुः (सौ०)'। 'नियोमिः (उ० ४, ४३)'—इति विधीयमानो मिप्रत्ययो बाहुलकाद् भवति। रशना रश्मिरिति कतिपयप्रयोगविषय एवायं रशिः, भरत्यादिवत्, न सर्वत्र, बन्धनप्रतीतेः। बध्नन्त्युदकमथवा बध्यते तैरुदकमश्वो वा। यद्वा, 'अशू व्याप्तौ (स्वा० आ०)'। 'अशेरश्च (उ० ४, ४६)'—इति मि-प्रत्ययो रशादेशश्च। अश्नुवते सर्वं जगत् अश्वयोर्वादि वा रश्मयः। "सूर्यस्येव रश्मयो द्रावयित्नवो (ऋ० सं० ७, २, २२, १)"—"वि रश्मयो जना एव अनु (ऋ० सं० १, ४, ७, ३"—इति आदित्यरश्मेर्निगमौ। "मनः पश्चादनु यच्छन्ति रश्मयः (ऋ० सं० ५, १, २०, १)"—"ते रश्मिभिस्तस्करभिः सुशादयः (ऋ० सं० १, ६, १३, ६)"—इति चाश्वरश्मेः ॥

(५) अभीशव.। अभिपूर्वात् 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १, ७)'—इति उप्रत्ययो बाहुलकाद् भवति धात्ववयवस्याकारस्यकारश्च। जस्। अभि व्याप्नुवन्ति जगदश्वयोर्वा वा। यद्वा, अभिपूर्वात् 'ईश ऐश्वर्ये (अदा० आ०)'—इत्यस्मात् पूर्ववत् प्रत्ययः। ईष्टे सूर्यः तमोऽपहन्तुमेभिः, अश्वयालोऽश्वं बद्धुम्। "अभीशूनां महिमानं पनायत (ऋ० सं० ५, १, २०, १)"—इत्यश्वरश्मेर्निगमः। आदित्यरश्मेरन्वेषणीय.॥

(६) दीधितय। एतदादीन्यादित्यरश्मिनामान्येव। 'दीधिङ् दीप्तिदेवनयो. (अदा० आ०)' "क्तिच्क्तौ च संज्ञायाम् (३, ३, १७४)'—इति क्तिचि पृषोदरादित्वादेव (६, ३,

१०८) यथाकथञ्चिद्रूपसिद्धिरन्वेषा। धीयन्ते निधीयन्ते प्रेषन्ते रसाहरणादिकर्मसादित्येन, धार्यन्ते वा वर्षार्थमुदकमेभिरादित्येन तथा। 'अथास्य कर्म रसादानं रश्मिभिश्च रसधारणम् (७, १०)'—इति निरुक्तम्। 'न वा स दृतं गर्भं भास्वरस्य गर्भस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्)'—इति श्रीरामायणम्। "सुचीर्दयुम्नदीधितिमुक्थ्यायासु (ऋ० सं० ३, ४, १८, १)"—इति निगमः। 'दीधिति रश्मिभिस्त्वर्थः'—इति (१८,३८) वाजसनेयभाष्यकृदुवटोऽभाषयत्।

(७) गभस्तयः। गो-शब्दपूर्वादन्तर्णीतण्यर्थात् 'भस भर्त्सनदीप्त्योः (जु० प०)'—इत्यस्मात् पूर्ववत् क्तिचीड्भावे च पृषोदरादित्वात् गो-शब्दस्याकारान्तादेशः। गां भूमिञ्च भासयन्ति दीपयन्ति। यद्वा, गवि संसर्गे दीप्यते। यद्वा, बभस्तिरत्तिकर्मा (निघ० २, ८०)। गामुदकं भौमरसलक्षणं बभस्ति भक्षयन्ति। यद्वा, 'भसेर्गट् च'—इति भोज-सूत्रेण तिप्रत्ययः धातोर्गडागमश्च, बभस्ति दीप्यन्ते इति गभस्तयः। 'ग्रहेर्गभस्ति'—इति माधवः, तदा पूर्वसूत्रेण तिप्रत्यये धातोरनुगागमः, 'ग्रहोर्भश्छन्दसि (सि० कौ० वै० ३पा०)'—इति निर्वाहः, गृह्णन्ति भौमं रसम्। "गर्भस्तिपूतो नृभिरद्रिभिः सुतो (ऋ० सं० ७, ३, १८, ४)"—"हस्ताभ्यां गर्भस्तिपूतः (य० वा० ऋ० ७, १)"—इति च निगमौ॥

(८) वनम्। 'वन षण सम्भक्तौ' भ्वादिः परस्मैपदी। 'पुंसि संज्ञायां घः (३, ३, ११८)'। वन्यते सेव्यते शीतादिनिवारणाय। अथवा वनतिर्हिंसार्थः (भू० प०)। वन्यते हिंस्यतेऽनेन तमः। यद्वा, 'वनु याचने' तनादिरात्मनेभाषा। वन्यते याच्यते हविःप्रदानाय। यद्वा, 'वन शब्दे' परस्मैपदी। वन्यते शब्द्यते स्तूयते स्तोतृभिः।

राजा वरुणो वनस्य (ऋ० स० १, २, १४; २)"—इति निगम'। 'वननीयस्य तेजस.'—इति माधव.॥

(९) वस्राः। 'वस निवासे (भू० प०)'। 'स्फायितञ्चि वञ्चि (उ० २, १२)'—इत्यादिना रक्, यदादित्वात् सम्प्रसारण बाहुलकात्, 'शासिवसिघसीनाञ्च (८, ३, ६०)'—इति षत्वाभावः। वसत्येषु परतेजः वसन्त्येषु रसा. इति वा। यद्वा, उत्पूर्वात् 'सृ गतौ (भू० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो डप्रत्ययो बाहुलकाद् भवति, इदोऽन्तलोपश्च। उत्स्रवन्ति एभ्यो रसा.। "उस्रा देव वसूनि (ऋ० सं० १, १, ६, २)"—इति निगम॥

(१०) वसव। 'वस निवासे (भू० प०)', 'वस आच्छादने (अदा० आ०)'। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ० १, १०)"—इति उ प्रत्यय। वसन्ति लोकेषु, वसन्त्यत्र रसा, वसत्यत्र पर तेज, आच्छादयति वा लोकान् वृष्ट्या, विवासयति वा तम.। 'बहुलमन्यत्रापि मन्त्रच्छन्दसो. (६, ४, ५१ वा०)'—इति णिलुक्। वासयितारो वा लोकाना वृष्ट्यादिप्रदानेन। "त्वया ह वसवो रन्ता देवाः (ऋ० स० ५, ४, ६, ३)"—"सुगावो देवा. सदना अकर्म य आजग्म सवनमिद जुषाणा । जक्षिवासः पपिवासश्च विश्वेऽस्मे धत्त वसवो वसूनि (य० वा० स० ८, १८)"—"छिद्रुवती वंसुपत्नी वसूनाम (ऋ० स० २, ३, १९, २)"—इति च निगमाः॥

(११) मरीचिपा। 'मृङ् प्राणत्यागे (तु० आ०)'। 'मृकणिभ्यामीचि' (उ० ४, ७०)'—इति ईचि. प्रत्ययः। म्रियन्ते तमोऽस्मिन्निति मरीचि. रश्मि। ...अत्र मरीचिशब्देन ...चिमान् सूर्य उच्यते, मत्वर्थीयस्य लुक् ...

मरीचिभिरूर्ध्वमर्कं पान्ति मरीचिपाः, 'आतोऽनुपसर्गे कः (३, २, ३)'। "देवेभ्यस्त्वा मरीचिपेभ्यः (य० वा० सं० ७, ३)"—इति निगमः॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा० उ०)'। अस्मात् 'मुहेः खो मयूट् च (उ० ४, २२)'—इति विधीयमानः ख-प्रत्ययो बाहुलकाद् भवति, डयूडागमश्च प्रत्ययस्य बाहुलकादेव। मिन्वन्ति तमः मयूखाः। खप्रत्ययाधिकारे 'मये-रूट् च'—इति श्रीभोजदेवः। मयतिर्गत्यर्थः (भू० आ०)। गच्छन्ति सर्वलोकेषु मयूखाः। "द्राघयं पृथिवी मभितो मयूखैः (ऋ० सं० ५, ६, २४, ३)"—"इमे मयूखा उपसेदुरू सदः (ऋ० सं० ८, ७, १८, २)"—इति च निगमौ॥

(१३) सप्तऋषयः। 'सप्त सृप्ता सङ्ख्या (निरु० ४, २६)'—इत्युक्तेः सर्पेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति सर्पेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च। षड्भ्यः सकाशात् सृप्ता सङ्ख्या सप्त। 'ऋष गतौ (तु० प०)' अनेकार्थत्वाद्धातूना दर्शनार्थः। 'इगुपधात् (उ० ४, ११६)'—इति इन् प्रत्ययः। ऋषयः द्रष्टारः। सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः। 'ऋत्यकः (६, १, १२८)'—इति प्रकृतिभावः। "सप्त युञ्जन्ति रथमेकचक्रम् (ऋ० सं० २, ३, १४, २)"—इत्यत्र 'सप्त आदित्यरश्मयः (४, २६)'—इति वदन्ति नैरुक्ताः। यद्वा, 'षप समवाये (भू० प०)', 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति कनिन् प्रत्ययस्तुडागमश्च। समवेताः सप्त, ऋषिरपि गत्यर्थ एव प्रत्ययः। समवेता गच्छन्ति दिशः सर्वा रश्मयः। "यत्रा सप्त ऋषीन् पर एकमाहुः (ऋ० सं० ८, ३, १७, २)"—"सप्त ऋषयः प्रतिहिताः शरीरे (य० वा० सं०

१४, ४५)"—"मर्त्तासत् ऋषयः मम माकम् (अथ० सं० १०, २६, ८)"—इति निगमाः ॥

(१४) साध्याः। 'राध साध संसिद्धौ (स्वा० दि० प०)'। 'ऋहलोर्ण्यत् (३, १, १२४)'—इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि भवति। 'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्याः'—इति क्षीरस्वामी, अत्र यथाप्राप्तो ण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ० सं० २, ३, २२, ४)"—इति निगमः ॥

(१५) सुपर्णाः। सुपसृष्टात् 'पॄ पालनपूरणयोः (जु० क्र्या० प्रा० प०)'—इत्यस्मात् 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टादशाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् नप्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्, अथवा पूरयन्ति वा वृष्ट्या, शोभनं पतनं गमनमेषामिति वा, सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णाः। यद्वा, सुमत्वर्थे, भावे च न प्रत्ययः। पतनादिमन्तः सुपर्णाः। तथाच—'बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ६, ६, ६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु० १, ७)'। अष्टादशाध्याये च 'सुपर्ण विप्राः (ऋ० म० ८, ६, १६, ५)'—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुमत्वर्थे बहुशो दृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २, ३, १८, १)"—"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ० सं० ८, ३, ४, ६)"—इति च निगमौ॥ रश्मिनां प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामाभि-

मरीचिमत्सूर्यमण्डले प्राप्तिं मरीचिपाः, 'आतोऽनुपसर्गे कः (३, २, ३)'। "ट्वैर्ग्मंस्त्वा मरीचिपेभ्यः (य० वा० सं० ७, ३)"—इति निगमः ॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा० उ०)'। अस्मात् 'मुहेः खो मयूट् च (उ० ४, २२)'—इति विधीयमानः ख-प्रत्ययो बाहुलकाद् भवति, मयूडागमश्च प्रत्ययस्य बाहुलकादेव। मिन्वन्ति तमः मयूखाः। खप्रत्ययाधिकारे 'मचेरूट् च'—इति श्रीभोजदेवः। मयतिर्गत्यर्थः (भू० आ०)। गच्छन्ति सर्वलोकेषु मयूखाः। "द्राधय पृथिवीं मभितो मयूखैः (ऋ० सं० ५, ६, २४, ३)"—"इमे मयूखा उपसेदुरू सदः (ऋ० सं० ८, ७, १८, २)"—इति च निगमौ ॥

(१३) सप्तऋषयः। 'सप्त सृप्ता सङ्ख्या (निरु० ४, २६)'—इत्युक्तेः सर्पेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति सर्पेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च। यद्वा, सकाशात् सृप्ता सङ्ख्या सप्त। 'ऋष गतौ (तु० प०)' अनेकार्थत्वाद्धातूना दर्शनार्थः। 'इगुपधात् (उ० ४, ११६)'—इति इन् प्रत्ययः। ऋषयः द्रष्टारः। सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः। 'ऋत्यक (६, १, १२८)'—इति प्रकृतिभावः। "सप्त युञ्जन्ति रथमेकचक्रम् (ऋ० सं० २, ३, १४, २)"—इत्यत्र 'सप्त आदित्यरश्मयः (४, २६)'—इति वदन्ति नैरुक्ताः। यद्वा, 'षप समवाये (भू० प०)', 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति कनिन् प्रत्ययस्तुडागमश्च। समवेताः सप्त, कर्तरि गत्यर्थ एव प्रत्ययः। समवेता गच्छन्ति दिग्भ्यः आदित्यरश्मयः। "अर्धा सप्त ऋषीन् प्रर एवं माहुः (ऋ० सं० ८, ८, १७, २)"—"सप्त ऋषयः प्रतिहिताः शरीरे (य० वा० सं०

१४, ५५)"—"भर्त्तासत ऋतवः सप्त साकम् (अथ० सं० १०, २६, ८)"—इति निगमाः ॥

(१४) साध्याः। 'राध साध संसिद्धौ (स्वा० दि० प०)'। 'ऋहलोर्ण्यत् (३, १, १२४)'—इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि भवति। 'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्याः'—इति क्षीरस्वामी, अत्र यथाप्राप्तो ण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ० सं० २, ३, २३, ४)"—इति निगमः ॥

(१५) सुपर्णाः। सूपसृष्टात् 'पॄ पालनपूरणयोः (जु० क्र्या० प्रा० प०)'—इत्यस्मात् 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टादशाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् नप्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्, अथवा पूरयन्ति वा हव्या, शोभनं पतनं गमनमेषामिति वा, सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णाः। यद्वा, सुमत्वर्थ., भावे च न प्रत्यय.। पतनादिमन्तः सुपर्णाः। तथाच—'बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ६, ६, ६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु० १, ७)'। अष्टादशाध्याये च 'सुपर्णं विप्राः (ऋ० म० ८, ६, १६, ५)'—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुमत्वर्थे बहुशो दृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २. ३, १८, १)"—"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ० सं० ८, ३, ४, ६)"—इति च निगमौ॥ रश्मिनां प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामामि-

प्रायेण बहुवचनान्तानि पठितानि। एवं दिङ्नामस्वपि द्रष्टव्यम्॥

इति पञ्चदश रश्मिनामानि॥५॥

आताः(१)। आशाः(२)। उपराः(३)। आष्ठाः(४)। काष्ठाः(५)। व्योम(६)। ककुभः(७)। हरितः(८)। इत्यष्टौ दिङ्नामानि॥६॥

(१) आताः। आङ्पूर्वादततेर्गतिकर्मणः (भ्वा० प०) 'अकर्त्तरि च कारके (३, ३, १९)'—इति घञ्। आभिमुख्येन गम्यन्ते प्राणिभिरेता न कार्य्यं प्रति। यद्वा, आङ्पूर्वात् तनोतेः 'उपसर्गे च सञ्ज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो डप्रत्ययो बहुलवचनाद् भवति। आततः आताः। "कृष्णन्त्याता सुमनाष्टाम (ऋ० म० १, ३, ७ ६)"—"उदातैर्जिहते बृहदाराः (ऋ० म० ६, ७, २४, ५)"—इति निगमौ॥

(२) आशाः। आङ्पूर्वात् 'शदॢ शातने (भ्वा० प०)'—इत्यधमत्र गत्यर्थः, अनेकार्थत्वाद्धातूनाम्। पूर्ववड्ड,। तं तमर्थं प्रत्यागमनात्। यद्वा, आ इत्येषोऽभीप्सार्थे वर्त्तते। 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् घञि रूपम्। आशा उपदिशा भवन्त्यभ्यशनात् परस्परादिभिः संव्याप्तौ। 'आ अश्नुवते आशाः'—इति क्षीरस्वामी। अत्र पचाद्यच् (३, १, १३४)। "इन्द्र आशाभ्यस्परि (ऋ० म० २, ८, ८, २)"—इति निगमः॥

(३) उपराः। उपरमन्ते आसत्यापि प्राणिनो वा स्वस्वव्यापारेभ्यः। पूर्ववत् ड। "उपप्रक्षे मधुमति क्षियन्तः (ऋ० सं० १, ५, २, १)"—इति निगमः। "तमस्य पृक्षमुप

राय धीमहि (ऋ० सं० २, १, १२, ५)"—इत्यत्र दिग्वाची न वेति चिन्त्यम् ॥

(४) आष्ठाः। आङ्पूर्वात् तिष्ठतेः (भू० प०) धातोर्वर्थे कविधानम्। 'स्थास्नागापाव्यधिहनियुध्यर्थम् (३, ३, १८म० भा०)'—इति कप्रत्ययः। सुषामादित्वात् (८, ३, ९८) षत्वम्। आ समन्तात् स्थीयते आभिः। निगमोऽन्वेषणीयः॥

(५) काष्ठाः। 'काष्ठा दिशो भवन्ति (निरु० २, १५)'—इत्यत्र स्कन्दस्वामी—'क्रान्त्वा सर्वमतीत्य स्थिताः आकाशवद् व्यतिरेकपक्षे। अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति। उपदिशोऽप्येवमेव। व्यतिरेकेऽपि इतरेतरापेक्षया परत्वापरत्ववत् सर्वत्र व्यवहारोऽस्तित्वमिति'। क्रान्त्वाशब्दात् पूर्वार्द्धं स्थिताशब्दादुत्तरार्द्धमित्यर्थः। पृषोदरादिः। वैयाकरणपक्षे तु 'काशृ दीप्तौ (भू० आ०)'। 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २, २)'—इति क्थन् प्रत्ययः। 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' ... 'तितुत्रतथसिसुसरकसेषु च (७, २, ९)'—इति इड़भावः। काशन्ते दीप्यन्ते काष्ठाः "नरस्त्वां काष्ठास्वर्वतः (ऋ० सं० ४, ७, २७, १)"—इति निगमः॥

(६) व्योम। व्याख्यातमन्तरिक्षनामसु(३)। स एवार्थोऽत्रापि। परिवीता वायुना। 'पवमानो हरित आ विवेश (ऋ० सं० ६, ७, ८, ४),—इति श्रुतिः। यद्वा, विविधसोमसवमस्मिन् विधत इति व्योम। 'धीमानमापो मातुरीरसंक्रम् (ऋ० सं० ४, ८, ९, २)'—इत्यत्र 'पक्षेर्वा धोमन्'—इति माधवः। निगमोऽन्वेषणीयः॥

(७) ककुभः। 'ककुभाति विस्तारयतीति ककुप्'—इति क्षीरस्वामी। 'ककुप् कुभेरुच्छ्रयार्थात् उच्छ्रिता इव हि दिशो दृश्याग्रेषूपलभ्यमानाः'—इति माधवः। केन प्रजाप-

तेर्वलोपश्च (उ० १, २८ )'—इति मिप्रत्ययः—इति केचित्। 'अर्त्तेरूच (उ० ४, ४४)'—इति मि-प्रत्ययः—इति कमलनयनः। ऊर्मिः तमःसङ्घातः, आच्छादकत्वात् लोकस्य। तमर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत् प्रत्ययः। "इन्द्राय नक्तमूर्म्याः सुवाचः (ऋ० सं० ५, ६, ३२, १)"—इति निगमः॥

(६) राम्या। 'रमु क्रीड़ायाम् (भ्वा० आ०)'। अन्तर्णीतण्यर्थात् सोपार्थविशिष्टादस्मात् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'पोरदुपधात् (३, १, ९८)'—इति यतं बाधित्वा 'ऋहलोर्ण्यत् (३, १, १२४)' भवति, 'अचो-ञ्णिति (७, २, ११५)'—इति वृद्धिः। परमयति भूतानि नक्तञ्चराणि, उपरमयति दिवाचराणि स्वव्यापारेभ्यः। माधवस्तु सर्वभूतानि रमयति। तथाच कौषीतकिः—'ये वै के चानन्दा अन्ने पाने मिथुने रात्रा एव ते सन्तता अवच्छिन्नाः क्रियन्ते, तेषां रात्रिः कारीतरः'—इति। 'अघोरामः सावित्रः (य० वा० सं० २९, ५८)'—इत्यत्र 'श्वेतः कृष्णोदरः'—इति भाष्यम्। 'रामयारो सितेऽसिते'—इति वैजयन्ती। तस्माद्रामशब्द कृष्णपर्य्यायः। स्वाश्रये रमते रामः 'ज्वलिति कसन्तेभ्यो णः (३, १, १४०)'। 'तदर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत्। 'अर्हंच कृष्णमहरर्जुनं च (ऋ० सं० ४, ५, ११, १)' १)'—इति श्रुतिः। यद्वा, रमणं रामः। भावे घञ् (३, ३, १८)। स्त्रीभिः सह क्रीड़ा रामः। 'तत्र साधुः (४, ४, ९८)'—इति यत्। "सद्ध्यान उषसो राम्या अनु (ऋ० सं० २, ५, २१, ३)"—इति, "आविर्वक्षो कृणोतु राम्यायाम् (ऋ० सं० ३, २, १५, ३)"—इति च निगमौ॥

(७) यम्या । 'यम उपरमे (भू०प०)' । 'अघ्न्यादयश्च (उ०४, १०८)'—इति यक्प्रत्ययान्तो निपात्यते । उपरमयति प्राणिनां चेष्टाः । अथवा 'गदमदचरयमश्चानुपसर्गे (३, १, १००)'—इति यत् कर्त्तरि बाहुलकेन। यद्वा, यमनीया उपरमयितव्या आदित्यचारेणेति यथाप्राप्तो यत् निगमोऽन्वेषणीयः ॥

(८) नम्या । (९) दोषा । (१०) नक्ता । (११) तमः । (१२) रजः । (१३) असिक्नी ॥

(१४) पयस्वती । पयोऽस्या अस्तीति । 'अस्मायामेधास्रजो विनि. (५, २, १२१)' । 'बहुलं छन्दसि (५, २, १२२)'—इत्युक्ते मतुपि वक्ते च 'उगितश्च (४, १, ६)'—इति ङीप् । 'तसौ मत्वर्थे (१, ४, १९)'—इति भसञ्ज्ञाविधानात् रुत्वं न भवति । निगमोऽन्वेषणीयः ॥

(१५) तमस्वती । ताम्यन्त्यनेनेति (दि० प०) तमोऽन्धकारं तेन तद्वती । पूर्ववत् प्रक्रिया । निगमोऽन्वेषणीय. ॥

(१६) घृताची । 'घृ क्षरणदीप्त्योः (चु० प०)' 'घृ सेचने (भू०प०)' । 'अग्निघृपिभ्य क्तः (उ० ३, ८९)' । सेचयत्यनेन भूमिं पर्जन्य, क्षरति मेघात् दीप्तं वा स्वेन तेजसा देवतात्वादिति घृतमत्रावश्यायलक्षण जलम्, तदञ्चति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च (३, २, ५९)'—इति अञ्चतेर्गत्यर्थात् (भू०प०) क्विनि 'अनिदिताम् (६, ४, २४)'—इति नलोपे, 'अच. (६, ४, १३८)'—इत्यकारलोपे, चौ (६, ३, १३८)'—इति दीर्घे, 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६वा०)'—इति ङीप्, घृताचीति । निगमोऽन्वेषणीयः ॥

(१७) गिरिणा । गोङः (अदा० आ०) अन्तर्णीतण्यर्थात् 'बहुलमन्यत्रापि (उ० २, ४६)'—इति इनच्प्रत्यये रुडागमो धातोर्ह्रस्वश्च । गाययति प्राणिनः गिरिणा । गायचेत्रियेति

माधव'। "घिर्विषाया चिट्तुतृनामहोभिः" (ऋ० सं० १, ६, २, ३)"—इति निगमः॥

(१८) मोकी। 'मुचॢ मोचणे (तु० उ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इनि बाहुलकात् कुलम्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीप्। मुच्यत्यामवश्यायं मध्यमः, मुच्यन्ति प्राणिनः स्वस्वव्यापारात् मोक्। तदस्यामस्तीति 'छन्दसीवनिपौ च (५, २, १२२ वा०)—इति मत्वर्थीय ईकारप्रत्यय, व्यत्ययेन (३, १, ८५) हलङ्यादिलोपः (६, १, ६८)। "यन्तुवत संवितुर्मोक्यागात् ऋ० सं० २, ८, २, ३)"—इति निगमः॥

(१९) शोकी। 'शुच् शोके (भू० प०)', ज्वलतिकर्मा (निघ० १, १७) वा। पूर्ववत् प्रक्रिया। शोचन्त्यस्यां विरहिणः, शोकस्तेजोऽस्या अस्तीति वा, 'अग्निना वै तेजसा रात्रिस्तेजस्वती'—इति ब्राह्मणम्। निगमोऽन्वेषणीयः॥

(२०) ऊधः। रात्रिनाम-निर्वचनार्थप्रसिद्ध तावदुच्यते। गोरूध उद्धततरं भवति प्रसवकाले अन्यान्तरेभ्य उच्छ्रिततरं भवति। यद्वा, उपोन्नद्धमुपरि स्पष्टमूर्द्धमिव केनचित्। तत्‌ संज्ञं रसानुप्रदानसामान्याद् रात्रिरप्यूध उच्यते। यद्वा, 'उन्दी क्लेदने (रु० प०)'। असुनि (उ० ४, १८४), बाहुलकाच्चलोपे दकारस्य धत्वं दीर्घं च रूपम्। उनत्त्यवश्यायेन भूतानि। 'उनत्त्यूधः'—इति क्षीरस्वामी। "यो अस्मै घ्रंस उत वा य ऊधनि (ऋ० सं० ४, २, ३, ३)"—"ऊधर्न नग्ना जरन्ते (ऋ० सं० ५, ७, १८, १२)"—इति च निगमौ। ऊधनीत्यत्र छान्दसत्वादनङ् (५, ४, १३१,—१४२)॥

(२१) पयः। व्याख्यातं पयस्वतीत्यत्र, मत्वर्थीयस्य निगमोऽन्वेषणीय.॥

(२२) हिमा । 'हन्तेर्हि च (उ० १, १४४)'—इति मक्-प्रत्ययो हिरादेशश्च । हन्ति (श्रदा० प०) पद्मानीति हिमम्, अर्शश्रादित्वादच् (५, २, १२७)। "शं भानुना शं हिमा शं घृणेन (ऋ० सं० ७, ८, १३, ४)"—इति निगमः ॥

(२३) वस्वी । 'वस आच्छादने (श्रदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उ-प्रत्ययः। • वस्ते आच्छादयते लोकमिति अवश्यायस्तमो वा, तद्वती वस्वः। 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—इति ईकारः, 'ह्रपादेर्नाश्च (६, १, १०२)'—इत्याद्युदात्तत्वम् । यद्वा, प्रशस्यवचनाद् वसुशब्दात् 'वोतोगुणवचनात् (४, १, ४४)'—इति ङीप्, सर्वभूतरमणत्वाद्रात्र्याः प्राशस्त्यम् । निगमोऽन्वेषणीय. ॥

इति त्रयोविंशतीरात्रिनामानि ॥ ७ ॥

वि॒भाव॑री॒(१)। सू॒नरी॒(२)। भा॒स्व॑ती (३)। ओ॒द॒ती(४)। चि॒त्राम॑घा(५)। अर्जु॑नी (६)। वा॒जिनी॒(७)। वा॒जिनी॑वती(८)। सु॒म्ना-वरी॒(९)। अ॒ह॒ना(१०)। द्यो॒त॒ना(११)। श्वे॒त्या (१२)। अ॒र॒पी(१३)। सू॒नृता॑(१४)। सू॒नृता॑वती (१५)। सू॒नृता॑वरी(१६)। इति षोडशोषोना-मानि ॥८॥

(१) विभावरी। 'भा दीप्तौ (श्रदा० प०)' विपूर्व । 'आतो मनिन्क्वनिब्वनिपश्च (३, २, ७४)'—इति वनिप्। 'वनो र च (४, १, ७)'—इति ङीब्रेफौ। विशेषेण भाति दीप्यते

आदित्यकिरणसम्बन्धात्। "आयुप्रयो विभावरि (ऋ॰ स॰ २, ८, ३, ६)"—इति निगम ॥

(२) सूनरी। शोभना नरा यस्या सन्ति, मत्वर्थीय ईकार, व्यत्ययेन हलन्त्यादिलोप। अथवा बहुव्रीहि, पिप्पल्यादेराकृतिगणत्वादीकार। नराणा प्रसन्नचित्तत्वेन धर्मादिविशिष्टतया तदानीं शोभनत्वम्। तथाच महाकवि—'पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना'—इति। यद्वा, सूनरी शोभन नयति कालम्। 'नृ नये (क्र्या॰ प॰)' सुपूर्वात् 'पच इ: (उ॰ ४, १३४),' 'कृदिकारादक्तिन (४, १, ४५ वा॰)'—इति ङीष्। सूनरी सुधना। यद्वा, 'नृभिर्देवैः समन्विता'—इति माधवः। 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घ। व्यत्ययेनावधारणात्रावगम्यते। "ज्योतिष्कृणोति सूनरी (ऋ॰ स॰ ५, ६, १, १)"—इति निगम ॥

(३) भास्वती। 'भास दीप्तौ (भू॰ आ॰),' क्विप्। भासत इति भास प्रकाश। भासा, तद्वती भास्वती 'तसौ मत्वर्थे (१, ४, १८)'—इति भ सञ्ज्ञया पदकार्ये रुत्वं न भवति भास्वती। "भास्वती नेत्री सूनृतानाम् (ऋ॰ स॰ १, ८, १, ४)"—इति निगम ॥

(४) ओदती। 'उन्दी क्लेदने (रु॰ प॰)'। उन्देर्लट शतरि 'छन्दस्युभयथा (३, ४, ११७)'—इति शतुरार्धधातुकत्वेन विकरणाभाव:, सार्वधातुकत्वात् 'सार्वधातुकमपित् (१, २, ४)'—इति ङिद्वद्भावात् 'अनिदिताम् (६, ४, २४)'—इति न लोप, व्यत्ययेन गुण, 'उगितश्च (४, १, ६)'—इति ङीप्। वर्णव्यत्ययेन ओदती। "प्र द न ऊर्ध्वा ओदती (१, ४, १)"—इति निगम ॥

(५) चित्रामघा। 'चिञ् चयने (स्वा० उ०)'। 'अमिचिमिमिदिशंसिभ्यः क्त्रः (उ० ४, १५८)'—इति क्त्र-प्रत्ययः, चित्रम्। मंहतिर्दानकर्मा (निघ० ३, २०), घजर्थे कविधानमित्यत्र परिगणनस्योपलक्षणार्थत्वात् क्रप्रत्यये 'अनिदिताम् (६, ४, २४)'—इति न-लोपः, पृषोदरादित्वात् (६, ३, १०८) घत्वम्। मह्यते दीयतेऽर्थिभ्यः इति मघं धनम् चित्रमाश्चर्यभूतं धनं यस्या इति चित्रामघा, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। "वाजिनीवती सूर्यस्य योषा चित्रामघा (ऋ० सं० ५, ५, २२, ५)"—इति निगमः॥

(६) अर्जुनी। 'अर्ज सर्ज अर्जने (चु० प०)'। अर्जेर्णिलुकि उनन्प्रत्ययः (उ० ३, ५५), अर्जयति। यद्वा, 'अर्ज गतिस्थानार्जनेषु (भू० प०)'। बाहुलकादुनन्। गम्यते तदर्थिभिः तिष्ठति स्वाश्रये। अर्जुनमिति रूपनाम (निघ० ३, ७), तत्रावादित्यरश्मिसम्बन्धात् श्वेतम्, अर्जुनी श्वेता, 'अन्यतो ङीष् (४, १, ४०), यद्वा, अर्जुन्यो गावः ता अस्याः सन्ति वाहनत्वेन मत्वर्थीय ईकारः, व्यत्ययेन हलुप्त्यादिलोपः। "या गोमतीरुषसः सर्ववीरा (ऋ० सं० १, ८, ४, ३)"—इति स्तुतिः। "द्विपच्चतुष्पदर्जुनि (ऋ० सं० १, ४, ६, ३)"—इति निगमः॥

(७) वाजिनी। वाज इत्यन्ननाम (निघ० २, ७), वाजो हविर्लक्षणमन्नमस्या अस्ति, 'अत इनिठनौ (५, २, ११५)'—'ऋन्नेभ्यो ङीप् (४, १, ५)'। यजमानेभ्यो यानि देयान्यन्नानि तैस्तद्वती वा। "वायुविन्द्रश्च चेतथः सुतानां वाजिनीवसू (ऋ० सं० १, १, ३, ५)"—इति निगमः॥

(८) वाजिनीवती। वाजो बलं वेगो वा तेन तद्वती वाजिनी, अश्वो उषसः स्वभूता तेन तद्वती वाजिनीवती।

यद्वा, वाजो हविर्लक्षणम् अन्नामस्या अस्तीति वाजिनी यजमानसन्ततिः, तद्वती वाजिनीवती । यद्वा, वाजमन्नं तद्वती वा वाजिनी, कासौ अवयवभूतेनान्नेन तद्वती अत्र संहतिः, तया अन्नसहत्या तद्वती वाजिनीवती । यद्वा, द्वावेतौ मत्वर्थीयौ तयोरेकार्थेयातिशयितरोमत्वर्थीयः अतिशयेनान्नवतीत्यर्थः 'वाजिनीवतीत्विषा हि सर्वेऽन्नं लभन्ते'—इति माधवः । 'संज्ञायाम् (८, २, ११)'—इति वा 'छन्दसीरः (८, २, १५)'—इति वा मतुपो वत्वम् । "अश्विभ्या सुभगे वाजिनीवति (ऋ० सं० ६, २, २२, ३)"—"यज्ञस्य वाजिनीवति (ऋ० सं० ३, ८, ७,४)"—इति निगमौ ॥

(९) सुम्नावरी । सपूर्वात् 'म्ना माने (अदा० प०)'—इत्यस्मात् 'उपसर्गे च संज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो डप्रत्ययो बाहुलकाद् भवति । सुष्ठु आम्नायते अभ्यस्यते इति सुम्नं सुखं, तद्धि सर्वे सर्वदा ममेदं भूयादित्यभ्यासेन प्रार्थ्यते । तथाच—'सुख सुम्नाते, प्रजा वै पशवः सुम्नम्,—इतिमाधवः । तदस्या अस्ति । 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—'वनो र च (४, १, ७)'—इति ङीब्रौ, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः । सुम्नावतीत्यर्थः । "सुम्नावरी सूनृता ईरयन्ती (ऋ० सं० १, ८, ३, २)"—इति निगमः ॥

(१०) अह्ना । 'अहि गतौ,' भ्वादिरात्मनेपदी, 'अह व्याप्तौ,' स्वादि. परस्मैपदी । 'युच् बहुलम् (उ० २, ७४)'—इति युच्प्रत्ययः, बहुलवचनात् पूर्वत्र नकारलोपः । अहरसौ गच्छत्याकाशे प्रतिदिनं स्वयं गच्छतीति वा । व्याप्नोति स्वभासा लोकं व्याप्यते वादित्यरश्मिभिः । "एह गृहमह्ना (ऋ० सं० १, १, ४, ४)"—इति निगमः ॥

(११) द्योतना। ण्यन्तात् 'द्युत दीप्तौ (भू० आ०)'—इत्यस्मात् 'ण्यासश्रन्थो युच् (३, ३, १०७)'—इति बाहुलकात् कर्त्तरि युच्, 'णेरनिटि (६, ४, ५१)'—इति णिलोपः। द्योतयति सर्वान् पदार्थान् प्रकाशकत्वात्। यद्वा, केवलात् 'अनुदात्तेतश्च हलादेः (३, २, १४९)'—इति युच्। द्योतते स्वयं द्योतना। "विधासन्तो द्योतना शश्वदागात् (ऋ० सं० २, १, ४, ४)"—इति निगमः॥

(१२) श्वेत्या। 'श्विता वर्णे (भू० आ०)'। अघ्न्यादित्वात् (उ० ४, १०८) यक् द्रष्टव्य। श्वेतते श्वेत्या। 'श्विता वर्णे' इति वर्णसामान्य सामर्थ्यात् शुक्लवर्णेऽपि शेषे पर्यवसित द्रष्टव्यम् उषसि तथा दर्शनात्। "रुशद्वत्सा रुशती श्वेत्यागात् (ऋ० सं० १, ८, १, २)"—इति निगमः॥

(१३) अरुषी। 'ऋ सृ गतौ' जुहोत्यादिः (प०), 'ऋ गतिप्रापणयोः' भूवादिः (प०)। 'ऋनहिभ्यामुषन् (उ० ४, ७४)', पिप्पल्यादेराकृतिगणत्वादीकारः। इयर्त्ति गच्छति वादित्योदयेनान्त प्रतिदिनम् प्रापयति वा स्तोतॄन् ऐश्वर्यादि। यद्वा, आङ्पूर्वात् 'रुच दीप्तौ (भू० आ०)'—इत्यस्मात् बाहुलकात् डुषच्, टिलोप', आङो ह्रस्वश्च, आरोचते अरुषी। यद्वा, अरुषमिति रूपनाम (निघ० ३, ७), सामर्थ्यादेव शुक्लविषयम्, शुक्लवर्णा अरुषी। 'अन्यतो ङीष् (४, १, ४०)'। "अश्वेव चित्रारुषी (ऋ० सं०, ३, ८, ३, २)"—इति च निगमः॥

(१४) सूनृता। (१५) सूनृतावती। (१६) सूनृतावरी। सुष्ठु जन्यते अप्रियैरिति सून्। सुपूर्वात् 'ऊन परिहाने (दि० आ०)'—इत्यस्मात् क्विप्। ऋतमिति सत्यनाम (निरु० ३, १९)। सूंच तदृतञ्च सूनृतम्, पृषोदरादित्वात् (६, ३,

(१०८) न लोपाभाव। प्रियस्य सत्यस्य। पूर्व मत्वर्थीयोः कार, उत्तरत्र मतुप्, अन्यत्र 'छन्दसीवनिपौ च (५, २, १२२वा०)'—इति वनिप्, मतौ वत्वरत्वौ, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घ। यद्वा, प्रियसत्यरूपा वाच सूनृता उच्यते। "सुनृतावरी' सूनृता ईरयन्ती (ऋ० म० १, ८, ३, २)"—"उदीरय प्रति मा सूनृता उष (ऋ० म० १, ४, ३, २)"—इत्यादिदर्शनात् तद्वत्य सूनृतादय। दीर्घो नापेक्षणीय। यद्वा, सूनृतेत्यन्ननामसु (निघ० २, ७) पाठा दन्नम्। सूनृता अन्ननाम माधवपदेय अन्नवत्यो धनवत्यो वा सूनृतादय। "रेवत्स्तोत्रे सूनृते जारयन्ती (ऋ० म० २, १, ८, ५)"—"रेवदुच्छ मघवद्भ्य सूनृतावति (ऋ० म० १, ६, २६, ४)"—"चिकित्वित् सूनृतावरि (ऋ० म० ३, ८, ३,४)"—इति च निगमा क्रमेण॥

इति षोडशोषोनामानि॥ ८॥

वस्तोः(१)। द्यौः(२)। भानुः(३)। वासरम्(४)। स्वसराणि(५)। घ्रंसः(६)। घर्मः(७)। घृणः(८)। दिनम्(९)। दिवा(१०)। दिवेदिवे(११)। द्यविद्यवि(१२)। इति द्वादशाहर्नामानि॥९॥

(१) वस्तोः। अत्र स्कन्दस्वामी—'वस्तोरित्येतदिहमेवेह नाम, न विभक्त्यन्तरम्, "दोषावस्तोर्हविष्मती घृताची' (ऋ० म० ५, १, २४, १)"—"दोषावस्तोर्वयं धिया वयम्' (ऋ० १, ७, १८, १)"—इति समस्तस्यापि दर्शनात्। वस्तेरिति वस्तो, द्योतत इति द्यौ। एवं सर्वत्र'—इति।

(अदा० आ०) आच्छादयतीति ज्योतिः। व्यत्ययेन कर्त्तरि तोसुन् (३, ४, १३)। "कुह स्विद्दोषा, कुह वस्तोरश्विना (ऋ० सं० ७, ८, १८, २)"—इति निगमः। कुहकेति सप्तमी-सामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः॥

(२) द्योः। 'द्युत दीप्तौ (भू० आ०)', बाहुलकात् डो-प्रत्ययः (उ० २, ६४)। द्योतते किरणसम्बन्धात्। यद्वा, 'द्यु अभिगमने (अदा० प०)', 'द्युगमिभ्यां डोः'—इति श्रीभोजदेवः। अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतप्रदेशं प्राणिनः। 'गोतोणित् (७, १, ९०)'—इति वृद्धिः। "मर्ध्य आरोधने दिवः (१, ७, २२, १)"—इति निगमः॥ केचित् द्युरिति पठन्ति। तदा 'डिच'—इत्यधिकारे 'द्युद्रुभ्यां च'—इति भोजसूत्रेण उप्रत्ययः। 'द्यु अभिगमने (अदा० प०)' द्युतेरेव वा 'अग्न्यादयश्च (उ० ५, ३०)'—इति डुन्-प्रत्ययान्तो निपातितो द्रष्टव्यः। उभयत्र पूर्वोक्त एवार्थः। "द्युभिरक्तुभिः परिपातमस्मान् ( ऋ० सं० १, ७, ३७, ५)"—"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः (ऋ० सं० २, ५, १७, १)"—इति निगमौ॥

(३) भानुः। 'भा दीप्तौ (अदा० प०)', 'भादाभ्यां नुः (उ० ३, ३१)। भात्यादित्य।धिकरणसम्बन्धादेव। "उद्वेव्या उषसो भानुरर्त्त (ऋ० सं० ३, ४, १५, २)"—इति निगमः। रश्मिर्भानुरिति माधवोक्तमदर्भवितुमर्हति॥

(४) वासरम्। 'वस निवासे (भू० प०)', णिजन्तः शब्दोऽपि विपूर्वस्तार्थे वर्त्तते। 'अर्त्तिकमिभ्रमिदिविचमिवासिभ्यचित् (उ० ३, १२८)'—इत्यरच् प्रत्ययः। विवासयति अपनयति शीतादिकम्। यद्वा, वसे स्वार्थे णिचि अधिकरणेऽरच्। वसत्यस्मिन् सुखेनेति वासरम्। यद्वा, 'वास्ट दीप्तौ

(दि० आ०)' पूर्वस्मादेव सूत्रादच् दीर्घ्यते वासरम्। यद्वा, विपूर्वात् सर्त्तेर्गत्यर्थात् पचाद्यचि वीत्यस्येकारस्याकारः पृषोदरादित्वात्, विविधं सराणि सृतानि विस्तीर्णानीत्यर्थः। 'वासराणि वेसराणि (निरु० ४, ७)'—इति भाष्ये स्कन्दस्वामी—'वेसरशब्दस्यायमेकारस्याकारः। माहात्म्येन चात्र वर्त्तते। यथा वेसरी निष्पादकमताभ्यां विरुद्धाभ्यां जातिभ्यामश्वखजात्या गर्दभजात्या सम्पन्नः। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तन्मताभ्या विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चौष्णेन सम्बन्धाद् वेसरसदृशत्वाद् वासरम्'—इति। "अद्यानीव सूर्य्या' वासुराणि (ऋ० सं० ६, ४, १२, २)"। अह्नानीत्यनेन पौनरुक्त्यादन्योऽपि निगमोऽन्वेषणीयः॥

(५) स्वसराणि। स्वशब्दे उपपदे सर्त्तेर्गत्यर्थात् (भू० प०) पचाद्यच् (३, १, १३४)। स्वेन आत्मनैव गच्छन्ति। अपि च, स्वरित्यादित्यनाम (निरु० २, १४)। सर्त्तेः 'पुंसि सञ्ज्ञायां घ प्रायेण (३, ३, ११८)'। अन्तर्णीतण्यर्थाद्वा सर्त्तेः। स्वरित्येतस्य रेफलोपः पृषोदरादित्वात् (६, ३, १०९)। आदित्येन सार्य्यते। स हि स्वोदयास्तमयाभ्यां तानि गमयति। यद्वा, सुपूर्वात् 'असु क्षेपणे (दि० प०)'—इत्यस्मात् अटरादित्वादरच् (उ० ५, ४२) द्रष्टव्यः। सुष्ठु अस्यन्ते क्षिप्यन्ते सूर्य्येण स्वोदयास्तमयाभ्याम्, तथाच 'स्वसर इत्युपस्रष्टात्'—इति माधव "उस्रा इव स्वसराणि (ऋ० सं० १, १, ६, २)"—इति निगमः॥

(६) घ्रंसः। 'ग्रह उपादाने (क्रा० उ०)' अस्मात् वर्णि पृषोदरादित्वात् (६, ३, १०९) गकारस्य घकारो नुगागमः हकारस्य सकारः। ग्रस्यन्तेऽस्मिन् रसा अवश्याया आदित्येन

"यो धर्मो प्र॑स उत वा य जर्धनि (ऋ०सं० ४, २, ३, ३)"—इति निगमः॥

(७) घर्मः। 'घृ क्षरणदीप्त्योः (जु० प०),' 'घर्मः (उ० १, १४६)'—इति मप्रत्ययान्तो निपातः। जिघर्त्ति दीप्यते रश्मिसम्बन्धात्। निगमोऽन्वे पर्णीयः॥

(८) घृणः। जिघर्त्तः (जु० प०) 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इतीणादिभ्यो विधीयमानो नक्प्रत्ययो बाहुलकाद् भवति। पूर्ववदर्थः। "घृणा वयो॑ऽकूपाम्: परि॑ ग्मन् (ऋ० सं० ३, ७, १८, ६)"—इति निगमः।

(९) दिनम्। 'दो अवखण्डने (दि० प०)', पूर्ववदौणादिके,नक्प्रत्यये बाहुलकात् (उ० २, ४६), 'द्यतिस्यतिमास्थाम् (७, ४, ४०)'—इतीत्वम्। द्यतितमः दिनम्। "अधा सरिभ्यः सुदिना व्युच्छान् (ऋ० सं० ५, २, २८, १)"—इति निगमः॥

(१०) दिवा। द्योतनात्। अव्ययमिदम्। "दिवा भिपित्वेऽवसागमिष्ठा (ऋ० सं० ४, ४, १७, २)"—"दिवा नक्तं मवंसा मन्तमेन (ऋ० सं० ४, ४, १७, ३)"—इति निगमौ॥

(११) दिवेदिवे। 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (दि० प०)'। 'दिवेर्डिविः'—इत्यधिकरणे डिविप्रत्ययः। दिव्यन्त्यस्मिन्निति द्यौः। दिव्शब्दात् परस्य सप्तम्या एकवचनस्य 'सुपां सुलुक् (७, १, ३८)'—इत्यादिना शे आदेशः, प्रगृह्यत्वं (१, १, १३) तु व्यत्ययेनात्र न भवति। चतुर्थी वा व्यत्ययेन। ततो वीप्सादिः (८, १, ४), दिवसे दिवसे इत्यर्थः। यथादृष्ट पठितमिदं नाम। "उप॑त्वाग्ने दिवेदिवे (१, १, २, २)"—"दिवेदिवे वाममस्मभ्यं सावीः (ऋ० सं० ५, १, १५, ६)"—इति च निगमौ॥

(१२) द्यविद्यवि। द्योशब्दो व्याख्यात (२)। सप्तम्येक;

वचनं, वीप्सादि पूर्ववत्, "मित्रीमसि त्वाविद्यथि (ऋ० सं० २, २, १६, १।"—इति निगमः॥

इति द्वादशाहर्नामानि॥ ९॥

अद्रिः(१)। ग्रावा(२)। गोत्रः(३)। वलः(४)। अश्नः(५)। पुरुभोजाः(६)। वलिशानः(७)। अश्मा(८)। पर्वतः(९)। गिरिः(१०)। व्रजः(११)। चरुः(१२)। वराहः(१३)। शम्बरः(१४)। रौहिणः(१५)। रैवतः(१६)। फलिगः(१७)। उपरः(१८)। उपलः(१९)। चमसः(२०)। अहिः(२१)। अभ्रम्(२२)। वलाहकः(२३)। मेघः(२४)। दृतिः(२५)। ओदनः(२६)। वृषन्धिः(२७)। वृत्रः(२८)। असुरः(२९)। कोशः(३०)। इति त्रिंशन्मेघनामानि॥१०॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः (निरु० २, २१)'—इत्युक्तेर्मेघनामत्वं पर्वतनामत्वं क्रमेण निरुच्य प्रदर्श्यते।

(१) अद्रि। 'अद भक्षणे (अदा०प०)'। 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४पा०)'—इति क्रिन्प्रत्ययः। अत्ति हि मेघो वर्षार्थमादित्यरश्मिभिराहृतान् भौमरसान्, अत्ति मेघैरभिहृष्ट जलम्, अद्यते वा प्राणिभिस्तत्प्रभवपदार्थभक्षणं तत्रोपचर्यते, अदन्त्यस्मिन् पदार्थान् मनुष्या इति वा। यद्वा, नञ्पूर्वात् 'दृ विदारणे (क्र्या०प०)'—इत्यस्मात् बाहुलकात् क्विप्रत्ययः टिलोपश्च। अदारणीय इत्यद्रिः पर्वतः।

सयधुः साम्बद्धैः (१, ८, १६, १)"—इति मेघस्य निगमः। "नात्मारिकं नाद्रय: सोमो मघाः (ऋ०सं० ८, ४, १५, २)" —इति पर्वतस्य ॥

(२) ग्रावा:। हन्तेः (अदा० प०) 'अन्येभ्योऽपि दृश्यते (३, २, ७५)'—इति क्वनिप्। पृषोदरादित्वात् (६, ३, १०९) धातोर्ग्रादेशः। हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १, २, ३६, १)'—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा, 'गॄ निगरणे (तु० प०)', 'गॄ शब्दे (क्र्या० प०)', गृणातिस्तुतिकर्मा (निघ० ३, ५), एभ्यः पूर्ववत् क्वनिपि अडागमः। इमिग्रहणात् (३, २, ७५) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरतिस्तत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्ण इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेदसमये, गिरति मेघैरभिवृष्टं जलमुद्गिरति निर्झरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादिशब्देन, शब्दकारी, स्तूयते च पदार्थबाहुल्यात् प्राणिभिस्तदाश्रयिभिरिति ग्रावा। "इन्द्र ग्रावाणो अदितिः सजोषाः (ऋ० सं० ४, १, २९, ५)"—इति मेघस्य निगमः। "ग्रावाणो अप दुच्छुनामप सेधत (ऋ० सं० ८, ८, ३३, २)"—"ग्रावाण उपरेष्वा महीयन्ते (ऋ० सं० ८, ८, ३३, ३)"—इति पर्वतस्य निगमौ ॥

(३) गोत्रः। 'गुङ् अव्यक्ते शब्दे (भ्व० आ०)'। 'गुधृवीपचिवचियमि[मनितनि]मदिचदिभ्यस्त्रः (उ० ४, १६२)'—इति त्रप्रत्ययः। मेघो गर्जितलक्षणमव्यक्ताक्षरं शब्दं करोति, गूयते शब्दाते वा,—'अहो! अयमतीवघर्मकाले वर्षार्थमागत'—इति। यद्वा, गामुदकं रश्मिभिराहृतं वर्षार्थमति-

यथुः साध्वद्रेः (१, ८, १६, १)"—इति मेघस्य निगमः। "नान्तरिक्षं नाद्रयः सोमो अचाः (ऋ० सं० ८, ४, १५, २)" —इति पर्वतस्य॥

(२) ग्रावा। हन्तेः (अदा० प०) 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति क्वनिप्। पृषोदरादित्वात् (६, ३, १०९) धातोरादेशः। हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १, २, ३६, १)'—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा, 'गॄ निगरणे (तु० प०)', 'गॄ शब्दे (क्र्या० प०)', गृणातिस्तुतिकर्मा (निरु० ३, ५), एभ्यः पूर्ववत् क्वनिपि श्रडागमः। इत्यिग्रहणात् (३, २, ७५) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरतिस्तत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्णं इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघ। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेदसमये, गिरति मेघैरभिहृष्टं जलमुद्गिरति निर्झरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादिशब्देन, शब्दकारी, स्तूयते च पदार्थबाहुल्यात् प्राणिभिस्तदाश्रयिभिरिति ग्रावा। "इन्द्र ग्रावाणो अदितिः सजोषाः (ऋ० सं० ४, १, २९, ५)"—इति मेघस्य निगमः। "ग्रावाणो अप दुच्छुनामप सेधत (ऋ० सं० ८, ८, ३३, २)"—"ग्रावाण उपरेष्वा महीयन्ते (ऋ० सं० ८, ८, ३३, ३)"—इति पर्वतस्य निगमौ॥

(१, ३, १) वनिपि ईकारस्याकारः स च पकारात् परः प्रीण यति स्वाश्रयमिति। पर्वाण्यवयवाः सन्त्यस्य 'पर्वमरुद्भ्यां तप् वक्तव्यः (५, २, १२१ वा०)'—इति मत्वर्थीयस्तप्प्रत्ययः। मेघस्य पर्वतस्य च देवतात्मकत्वस्य च विद्यमानत्वात् अवयविनि वक्तुं शक्यम्। यद्वा, परिदृश्यमानाकारेणापि मेघस्य धूमादिसङ्घातत्वात्, पर्वतस्य च शिलादिमत्त्वादवयवित्वम्। यद्वा, 'पर्व पूरणे (भ्वा० प०)', अस्मात् 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यर्थिभ्योऽतच् (उ० ३, १०७)'—इत्यतच्प्रत्ययः। पर्वति पूरयति वर्षेण भूमिं स्वशरीरेणाकाशं वा पर्वतोऽपि निर्झरनदीप्रवाहादिना भूमिं स्वोच्छ्रयाकाशञ्च पूरयति। "नि पर्वता अद्मसदो न सेदुः (ऋ० सं० ४, ७, २, ३)"—"बलिह्या पर्वतानाम् (ऋ० सं० ४, ४, २८, १)"—इति मेघस्य निगमौ। "यद्द्वयः पर्वताः साकमाशवः (ऋ० सं० ८, ४, २८, १)"—"प्र पर्वतानामुशती उपस्थात् (ऋ० सं० ३, २, १२, १)"—इति च पर्वतस्य॥

(१०) गिरिः। 'गॄ निगरणे (तु० प०)', अथवा 'गॄ शब्दे (क्र्या० प०)', गृणाति स्तुतिकर्मा (निरु० ३, ५)। किदिति वर्त्तमाने (उ० ४, १३७), 'कॄगॄशॄपृकुटिभिदिछिदिभ्यश्च इः (उ० ४, १३८)'—इति इप्रत्ययः, 'ऋत इद्धातोः (७, १, १००)'—इतीत्वम्, गिरिः। पर्वतेनेन समानार्थः। "निराविध्यद् गिरेर्भृष्टिर्न भ्राजते तुजा शवः (ऋ० सं० १, ४, २१, ३)"—इति पर्वतस्य। "मृगो न भीमः कुचरो गिरिष्ठाः (ऋ० सं० २, ३, २४, २)"—इत्युभयस्य।

(११) व्रजः। 'व्रज गतौ (भ्वा० प०)'। 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च (३, ३, ११८)'—इति [illegible] घः, करणाधिकरणयोरुक्तादतिरिक्ते कारकेऽपि घो भवति

व्रजत्यन्तरिक्षे व्रजत्यनेनेन्द्र इति वा व्रजो मेघः, मेघवाहनो हीन्द्रः पर्वतोऽपि पक्षच्छेदात् पूर्वमन्तरिक्षे व्रजति। अथवा स्वशरीरेण भूमिमन्तरिक्षञ्च व्रजति। व्रजन्ति तत्र प्राणिन इति वा। "अपं व्रजमूर्णुथः सुप्तायम् (ऋ० सं० ७, ८, १८; ३)"—इति मेघस्य निगमः। "व्रजं गोमन्तमुशिजो विवव्रुः (ऋ० स० ३, ४, १४, १)"—इति पर्वतस्य ॥

(१२) चरुः। 'चर गतिभक्षणयोः (भू० प०)'। 'भृमृशीतृचरित्सरितनिधनिमिमसजिभ्य उ. (उ० १, ७)'—इति उप्रत्यय। चरन्ति गच्छन्त्यस्माद्दापो मेघाद्वर्षाकाले, पर्वतानां निर्झरलक्षणाः चरयन्ति जलं वर्षितव्यमिति चरुर्मेघः, चरन्ति तत्र प्राणिनः, चर्यते भक्ष्यते स्वप्रभवपदार्थरूपेणेति चरुः पर्वतः। "स नो वृषन्नमुं चरुम् (ऋ० म० १, १, १४, १)"—इति मेघस्य निगमः। पर्वतस्यान्वेषणीयः ॥

(१३) वराहः। 'हृञ् हरणे: (स्वा० प०)'। 'अहृहृष्टनिश्चिगमश्च (३, ३, ५८)'—इत्यकारः (अप्), वरशब्दे कर्मण्युपपदे आङ्पूर्वाद्धरते. 'कर्मण्यण् (३, २, १)'। वरमुदकमाहरतीति वराहः। वर उदकलक्षणः आहारोऽस्येति वा वराह (निरु० ५, ४) आङ्पूर्वाद्धरतेर्वञ। 'वरमाहारमाहार्षी'—इति च ब्राह्मणम्। पृषोदरादित्वात् आहारशब्दस्याकाररेफयोर्लोपः। यद्वा, वरशब्दे उपपदे हरतेराङ्पूर्वात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति बाहुलकात् डप्रत्यय। वराहाकारो वा कृष्णो मेघो वराहसादृश्येन वर्त्तते। वरमुत्कृष्टमुदकं वृहति उद्यच्छति वर्षितुम 'वृह उद्यमने (तु० प०)'। अन्ते पूर्ववत् डः। यद्वा, वरशब्द उपपदे जुहोतेर्दानार्थात् डः। वरमुदकं ददाति आदत्ते वा वर्षितुमिति वराहो मेघः, पर्वतोऽपि वरमुत्कृष्टं पदार्थमाहारयति प्राणिभिः,

पदार्थानां सर्वत्र सौलभ्यादाहरयतीत्युच्यते। वर आहारोऽस्येति वा। वराहवत् कृष्णवर्ण इति वा। वर मूलं वृहत्यु दच्छत्यस्मादिति वा (निरु० ५, ४)। वरं वरमित्यत्रैकस्य वरशब्दस्य निवृत्तिः। वरशब्दाद् वृहेश्च वराह इत्यर्थः। वरमुदकमाददाति आदीयते च तस्मात् पुरुषैर्वरः पदार्थ उदकमेव वा। "विध्यद्वराहं तिरो अद्रिमस्ता (ऋ० सं० १, ४, १८, २)"—"वराहमिन्द्र एमुषम् (ऋ० सं० ६, ५, ३०, ५)"—इति च मेघस्य निगमौ। पर्वतस्त्वान्वेषणीयः।

(१४) शम्बरः। 'शमु उपशमे (दि० प०)'। अन्तर्णीतण्यर्थः। 'शमेर्वन् (उ० ४, ८१)'—इति वन्प्रत्ययः। शमयति नाशयति असुरानिति शम्बो वज्रः। यद्वा, शातयते र्बाहुलकात् वन्प्रत्यये पृषोदरादित्वात् शमादेशः। शम्बोऽस्य प्रहर्तृत्वेनास्ति। रो मत्वर्थीयः। प्रहरति हि वज्रः इन्द्रप्रेरितो मेघान् पर्वतांश्च पक्षच्छेदसमये। यद्वा, सम्पूर्वाद् वृणोतेः (स्वा० प०) 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यपि सम्बरः सन् वर्णव्यत्ययेन शम्बरः। स व्रियते मेघेनाकाशं, भूमिः पर्वतेन। यद्वा, शम्बरमित्युदकनाम (निघ० १, १२), मत्वर्थीयस्य लुक्, उदकमस्यास्तीति वा, उभयत्रापि तुल्यम्। "उतादर्दमन्युना शम्बराणि वि (ऋ० सं० २, ७, १, २)"—"अधूनोत् काष्ठा अव शम्बरं भेत् (ऋ० सं० १, ४, २५, ६)"—इति मेघस्य निगमौ। पर्वतस्त्वान्वेषणीयः।

(१५) रौहिणम्। 'रुह बीजजन्मनि (भू० प०)', भावे घञ् (३, ३, १८) रोहः आरोहणम् आदित्यचन्द्रादीनामस्मिन्नस्तीति। 'अत इनिठनौ (५, २, ११५)', रोहि अन्तरिक्षम्। 'तत्र भवः (४, ३, ५३)'—इत्यण्, 'इनण्यनपत्ये (६, ४, १६—इति प्रकृतिभावः रौहिणः। अन्तरिक्षेण हि

मेघ, पक्षच्छेदात् पूर्वं पर्वतश्चेति तत्र भव इति वक्तुं शक्यते। यद्वा, बहुलमन्यत्रापि (उ० २, ४६)'—इति इनच्प्रत्यये रोहिण इन्द्र.। 'तस्येदम् (४, ३, १२०)'—इत्यण् रौहिणः। आरोहति मेघमिन्द्रः स्ववाहनत्वात्, 'तुराषाण्मेघवाहनः (अम० को० १, ४७)'—इति तत्पर्य्यायेषु पठ्यते। अप्सरोभिः सह रिरंसया पर्वतेष्विन्द्रस्य गमनात् तदीयता। यद्वा, उभयत्रापि छेद्यछेदकभावेन सम्बन्ध.। तथाच चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते 'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन्, ते यत्र यत्र कामयन्ते तत्परा तमामत, इय ह्रि शिथिलासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमा दृंहदिति'। "अहन्नहिमभिनद्रौहिणम् (ऋ० सं० १, ७, १६, २)"—"यो रौहिणमस्फुरद्वज्रबाहुः (ऋ० सं० २, ६, ८, २)" —इति निगमौ क्रमेण॥

(१६) रैवत। रेवत्यो गावः 'पशवो वै रेवतीः'—इति श्रुते.। 'तस्येदम् (४ ३, १२०)'—इत्यण्। मेघो हि सर्वत्र वर्षति यवसं पानीय च जनयित्वा तदीयो भवति, पर्वतस्तद्वत्तया। यद्वा, रयिरस्यास्तीति मतुपि 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—इति सम्प्रसारणम्. 'संज्ञायाम् (८, २, ११)'—इति वत्वम्, सर्वस्य धनस्येशितृत्वात् रेवान् इन्द्रः, मघवेति हि तस्य नाम, तदीयो रैवतः। पूर्ववत् तदीयत्व द्रष्टव्यम्। निगमावन्वेषणीयौ॥

(१७) फलिगः। प्रतिफलति तत् फलम्। तदस्यास्तीति फलि स्वच्छमुदकं तद्गच्छत्याधारत्वेन मेघो वर्षिष्यमाणं पर्वतो हि दृष्टमिति विशेषः। डप्रकरणे 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति गमेर्डप्रत्यय', स्वच्छोदकपूर्ण इत्यर्थ। यद्वा, फलवत्स्नानपानादिप्रयोजनवत् उदकं फलि,

तद्गच्छतीति पूर्ववत्। माधवस्तु—फलिर्भेदनकर्मापि भिन्दन् गच्छति फलसयुक्तो गच्छतीति वा'—इति निरवोचत्। तस्या यमभिप्राय प्रायेण मेघो हि वर्षासु ग्रीष्मजन्य ताप भिन्दन् गच्छति, पर्वतोऽपि स्वभारेण भूमि भिन्दन्नधोगच्छति, अन्तकाले वा शतधा स्वयमेव भिद्यमानो गच्छति नाशम्। कृषिफलस्य मेघायत्तत्वात् फलसयुक्तो गच्छति इत्युच्यते। तथाच कालिदास—'त्वय्यायत्त कृषिफलमिति भ्रूविकारा नभिज्ञे.'—इति मेघकाव्यम्। पर्वतोऽपि शस्यादिरुदङ्गचा दिफलसयुक्तो गच्छति च। फलवत्त्वदशायाम। फलेर्गमि गम्यादित्वादिन्, गमे: पूर्ववत् ड (३, २, १०१) इति च। "वल रुरोज फलिग रवेण (ऋ० म० ३, ७, २६, ५)"—इति निगम ॥

(१८), (१९) उपर, उपल। 'आ उपर उपल इत्येताभ्या साधारणानि पर्वतनामभि (निरु० २, २१)'—इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थ—'आ उपर उपल इति, आङ अभिविधौ मर्यादायामित्यन्ये, विना उपर उपल इत्येताभ्या साधारणा-नीत्यर्थ। आ उपरादिति वक्तव्ये उभयोरुपादान रलयोर-विशेषत्वप्रदर्शनार्थम्। तयोरेकनिर्वचनत्वप्रदर्शनार्थमेकयो-गपठत्व चाङ्गीकृत्याह—'उपर उपलो मेघो भवति (निरु० २, २१)'—इति। वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पाषाणे प्रसिद्धत्वात् 'तेषामुपर स्वविष्ठो मध्यम:—इति तत्-सङ्घातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहण कृतम्। मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति उत्त-राणि मेघस्यैवेति। यदा पर्वतस्तदा उपेत्य रमन्ते ह्यस्मिन् पत्नाणीति, मेघपक्षे ग्राप इति। अभिविधिपक्षे 'नेद निर्वचनम्—इति। जनैर्विधीयमानो डप्रत्यय (३, २, ८७)

बाहुलकादमेर्भवति (३, ३, १), क्रदुत्तरपदप्रकृतिस्वरं (६, २, १३८) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (६, २, २)। 'उपरो जलवापनात्'—इति माधवः। वपेः क्रदरादित्वात् (उ० ५, ४२) भरन् द्रष्टव्यः, सम्प्रसारणं च बाहुलकात्। 'उपरमिव हि नभस्यभ्रं भूमौ पर्वतश्च'—इति माधवः। अत्र श्रीभोजः—'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' इत्यत्र उपलप्रत्ययः। व्युत्पत्त्यनवधारणात्वावगच्छते। मेघनामत्वे तत्र— "एषामुपरा उदायन् (ऋ० म० ७, ७, १८, २)"—इति निगमः। पर्वतानां चाम्बेषणीयः। "चिरंश्चानिर्णिगुपरा न ऋष्टिः (ऋ० म० २, ४, ४, ३)"—इति। अत्र 'उपरा अश्मच्छिला दीर्घा.'—इति माधवः॥

(२०) चमसः। 'चमु अदने (भू० प०),' 'अत्यविचमि (उ० ३, ११३)'—इत्यादिना असच्॥

(२१) अद्रिः। 'इण् गतौ (अदा० प०),' 'इन् सार्वधातुभ्य (उ० ४, ११४)'—इतीन्प्रत्ययः, गुणायादेशौ, यकारस्य इकारो व्यत्ययेन। पत्यन्तरिचे। अयतेरेव गत्यर्थादिन्प्रत्यये पूर्ववद् व्यत्ययः। यद्वा, 'अद्वि गतौ' भौवादिकः (आ०), इन्प्रत्ययः, बाहुलकान्नलोपः, आगमानित्यत्वाद्वा नुम् न क्रियते। इप्रत्ययाधिकारे श्रीभोजदेवः—'आद्रिकुण्डलिकं पात्रलोपश्च'—इति। यद्वा, 'अड्ड्याप्तौ' स्वादिः (प०), इन्, अड्नोति व्याप्नोति आकाशं दिगन्तराणि वा। यद्वा, आङ्पूर्वाद्दृणातेः हिंसार्थाद् गत्यर्थाद्वा 'आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४, १३३)'—इति इप्रत्ययो डित्, आ समन्तात् दृणाति भिनत्ति वज्रमाभिमुख्येन, दृणाति गच्छत्यन्तरिक्षम्। यद्वा, केवलादेव दृणातेर्बाहुलकादिप्रत्ययो डिच्च, दृः हन्ता, न हन्ता अहन्ता, अद्रिः अहिंसक इत्यर्थः, सर्वदा लोकस्य सर्वप्रद-

त्वात्। माधवेन तु—'त्वमु॒पामा॑प्प॒धाना॑ वृणो॒रप (ऋ॰ सं॰ १, ४, ८, ४)'—इत्यत्र, वाजसनेये तु 'सोऽग्निषोमावभिसम्बभूव सर्वा विद्या सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत् समभवत् तस्मादहिः'—इति प्रदर्शितम्। तेन चैतद्युक्तम्। अहिशब्दोऽसुरवाचक आद्युदात्तः। "यदि॒न्द्राह॑न् प्रथम॒जामही॑ना॒म् (ऋ॰ सं॰ १, २, ३६, ४)"—इति। नदीवचनोऽन्तोदात्तः। 'इन्द्रोदग्धं परि जानाद्ही॑ना॒म् (ऋ॰ सं॰ ८, ७, २७, ६)"—इति। अत्राहिशब्दस्य घनामत्वेनाभाषयत् स्कन्दस्वामी। "दा॒सप॑त्नी॒रहि॑गोपा अतिष्ठन् (ऋ॰ सं॰ १, २, ३८, १)"—इति निगमः॥

(२२) अभ्रम्। 'अभ्र गतौ (भू॰ प॰),' पचाद्यच् (३, १, १३४), अभ्रत्यन्तरिक्षे। आपो राती ति वा अप्शब्दे कर्मण्युपपदे रातेर्दानार्थात् 'आतोऽनुपसर्गे कः (३, २, ३),' पकारस्य भकारो व्यत्ययेन (३, ४, ८८)। न भ्रंशत्यस्मादापो वर्षासमयादन्यत्रेति वा। यदुक्तं—'न भ्रंशति यतस्तेभ्यो जलान्यभ्राणि नान्यतः'—इति। नञ्पूर्वात् 'भ्रंसभ्रंस अधःपतने (भू॰ आ॰)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्ययः। न भ्राजते वा वर्षासु मलिनवर्णत्वात् भ्राजतेः पूर्ववत् डः (३, २, १०१)। "प्राणः पिन्व विद्युदभ्रं व रोदसी (ऋ॰ सं॰ ७, ३, १, ३)"—"उदभ्राणी॑व स्तनयन्निय॒र्त्ति (ऋ॰ सं॰ ४, ७, १८, २)"—इति च निगमौ॥

(२३) बलाहकः। बलाकाभिर्हीयते गम्यते इति बलाहकः, वारिवाहको वा, पृषोदरादित्वात् (६, ३, १०९) वर्णागमादिना साधुः। वराहशब्दाद्वा 'संज्ञायां कन् (५, ३, ७५)', रेफस्य लकारः। उक्तार्थो वराहशब्दः (१३), विकृतस्याभाधारस्यार्थत्वप्रदर्शनाय पुनः पाठः। निगमोऽन्वेषणीयः॥

(२४) मेघः। 'मिह सेचने (भू० प०)', पचाद्यच् (३, १, १३४), न्यङ्क्वादित्वात् कुत्वम्। मेहति सिञ्चति वर्षणभूमिं मेघः। "वृषा वां मेघो वृषणा पीपाय (ऋ० सं० २, ४, २६, ३)"—"अस्मिन् मेघे विद्युत्"—इति च निगमौ॥

(२५) दृतिः। 'दृ विदारणे (क्र्या० प०)'। 'दृणातेर्ह्रस्वश्च (उ० ४, १७८)'—इति तिप्रत्ययः, ह्रस्वविधानसामर्थ्याद् गुणो न भवति। दीर्यते इन्द्रेण, दृतिवत् स्यन्दमानाधारत्वाद्वा। "दृतिं सुकर्षं विषितं न्यञ्चम् (ऋ० सं० ४, ४, २८, २)"—"ईशानो विसृजद् दृतिम्'—इति च निगमौ॥

(२६) ओदन.। उदकशब्दे उपपदे ददातेः 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि ल्युट्। ओदनः उदकदातेत्यर्थ.। यद्वा, 'उन्दी क्लेदने (रु० प०', 'उन्देर्नलोपश्च (उ० २, ७२)—इति युच्प्रत्यय', गुणः, उनत्ति वनभूमिम् ओदन। "धारयत् पृक्षमोदनम् (ऋ०,सं० ६, ५, २०, १)"—इति निगमः॥

(२७) वृषन्धिः। 'वृष सेचने (भू० प०)', 'कनिन्युवृषीत्यादिना (उ० १, १५४) कनिन्, वृषा। शत्रुजयादिसाधनत्वात् कामानां वर्षिता यज्ञ, सन्निधीयतेऽस्मिन्निन्द्रेण प्रहारकाले 'कर्मण्यधिकरणे च (३,३, ९३)'—इति किप्रत्यय. नलोपाभावश्छान्दसः। "विषन्धिः"—इति केषुचित् कोशेषु दृष्टम्। तदा विष जलं धीयतेऽस्मिन्निति निर्वाह, सुगागमश्छान्दसः। निगमदर्शनान्निर्णय.। "इन्द्रः वृषन्धिर्वर्तुरस्मिमर्दन् (ऋ० सं० २, ६, ७, २)"—इति मेघनाम न वेति सन्दिग्धम्॥

(२८) वृत्रः। वृणोतेराच्छादनार्थात् (स्वा० प०) 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्—अमिर्विमिमिदिदिर्शिमिभ्यः क्सन् (उ० ४, १५९)'—इति क्सन्प्रत्ययो बाहुलकाद् भवति, आच्छादयति क्रमो कृत्स्न नभः।

वर्त्ततेर्वा गतिकर्मणः (निघ० २, १४) 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना रक्प्रत्ययः, गच्छत्यसौ ऋतुं नभः। वर्द्धतेर्वा वृद्धार्थात् (भू० प०) बाहुलकात् वन्, धकारस्य तकारो व्यत्ययेन, वर्द्धते हि वर्षासु मेघः। ब्राह्मणोक्ता पवामो मयोऽप्यर्थः—'यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्, स इषुमात्रमिषुमात्रं विष्वङ् अवर्द्धत'—इति। "वृत्राय वज्र मीशानः कियेधाः (ऋ० सं० १, ४, २८, २)"—"अहन्नहं वृत्रमहं विवेरपः (ऋ० सं ८, ८, ५, १)"—इति च निगमौ॥

(२८) असुरः। 'असु क्षेपणे (दि० प०)', 'असिमसोरुरन् (उ० १, ४२,—४३)'—इति उरन्प्रत्ययः, अस्यति क्षिपति भूमौ जलम्। यद्वा, अस्यते क्षिप्यते स्थाने इन्द्रेण वर्षार्थम्। यद्वा, अस्ति (भू० प०) तिष्ठति 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इत्यादिना उप्रत्ययः असुः। शरीरे वसतीत्यसुः प्राणः। 'प्राणा वा आपः'—'पानीयं प्राणिनां प्राणाः'—इत्यादिदर्शनात् असुशब्देनाव जलमुच्यते। तद्राति, 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, जलवान् प्राणवान् वा। रो मत्वर्थीयः। यद्वा, 'अस गतिदीप्त्यादानेषु' भौवादिकः स्वरितेत्, पूर्ववदेव सुवादुरन्। असति गच्छत्यन्तरिक्षे, दीप्यते स्वयम्, आदत्ते वा जलं वर्षितुम्। यद्वा, 'सुर ऐश्वर्य्ये (तुदा० प०)', इगुपधलक्षणः कः (३, १, १३५), सुरतीति सुर ईश्वरः, स नञ् इत्यर्थः, असुर अनीश्वरः, इन्द्रादिपरतन्त्र इत्यर्थः। "त्रिः सप्तैतासु असुरस्य नीनर्था (ऋ० सं० ८, ४, २४, १)"—"दीर्घाधियो रक्षमाणा असुर्यम् (ऋ० सं० २, ७, ६, ४)"—इति च निगमौ॥

(३०) कोशः। कोशते शब्दकर्मणः (भू० प०) पचाद्यच् (३, १, १३४) पृषोदरादित्वात् (६, ३, १०९) रेफलोपः कोशः।

मेघो हि गर्जितलक्षणं शब्दं करोति। कुष्यतेर्वा हरणार्थात् (दि० प०), अस्मिन्नेवार्थे पकारस्य शकारः, इषुमात्रमवर्त्ततेत्यु-क्तम्। कोशतिश्छादनार्थ इति माधवः, पूर्ववदत्राच्छादयत्यसौ कृत्स्नं नभः। जलस्य कोशस्थानीयत्वात् कोश इत्यन्ये। यद्वा, 'कु शब्दे (तु० आ०)', 'कुदाघाभ्यः शः'— इति श्रीभोजदेवः, कौति (अदा० प०) गर्जितशब्दं करोति कोशः। "दिव्या न कोशासो अभ्रवर्षाः (ऋ० सं० ७, ३, २४, ६)"—"महान्तं कोशमुदचा नि षिञ्च (ऋ० सं ४, ४, २८, ३)"—इति च निगमौ॥

इति त्रिंशन्मेघनामानि॥ १०॥

श्लोकः(१)। धारा(२)। इळा(३)। गौः(४)। गौरी(५)। गान्धर्वी(६)। गभीरा(७)। गम्भीरा (८)। मन्द्रा(९)। मन्द्राजनी (१०)। वाशी (११)। वाणी(१२)। वाणीची (१३)। वाणः (१४)। पविः (१५)। भारती (१६)। धमनिः (१७)। नालीः (१८)। मेना (१९)। मेळिः (२०)। सूर्या (२१)। सरस्वती (२२)। निवित्(२३)। स्वाहा(२४)। वग्नुः(२५)। उपब्दिः(२६)। मायुः(२७)। काकुत्(२८)। जिह्वा (२९)। घोषः(३०)। स्वरः(३१)। शब्दः(३२)। स्वनः(३३)। ऋक्(३४)। होत्रा(३५)। गीः (३६)। गाथा(३७)। गणः(३८)। धेना(३९)।

ग्नाः(४०)। विपा(४१)। नुम्ना(४२)। कशा (४३)। धिषणा(४३)। नौः(४५)। अक्षरम् (४६)। मही(४७)। अदितिः(४८)। शची (४९)। वाक्(५०)। अनुष्टुप्(५१)। धेनुः(५२)। वल्गुः(५३)। गल्दा(५४)। सरः(५५)। सुपर्णी (५६)। बेकुरा (५७)। इति सप्तपञ्चाशद्वाङ्नामानि ॥ ११ ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः। वाङ्नामान्युत्तराणि (निरु० २, २१—२३)'—इति भाष्ये स्कन्दस्वामी—'उत्तराणि सप्तपञ्चाशत् श्लोकप्रत्यादीनि वाङ्नामानि। उच्यते इति वाक् इन्द्रियम्, तत्कार्यः शब्दोऽप्युच्यते इति वाक्, उच्यतेऽनया अर्थः इति वाक्, स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक्, तदधिष्ठात्र्यपि देवता वागिष्यते। सर्वतयास्या मेघहेतुत्वात् मेघनामभ्य उत्तराणीति। स च वाक्शब्दः 'वचि परिभाषणे (अदा० प०)'—इत्यस्मात् धातोः 'क्विप् वचि (उ० २, ५४) (३, २, १७८वा०)' —इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः ॥

(१) श्लोकः। 'श्रु श्रवणे (भू० प०)' 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३, ४१)'—इति कन्प्रत्ययो बाहुलकाड्वति, गुणः, कपिलकादित्वात् लत्वम्, श्रूयते इति श्लोकः। यद्वा, श्लोक सङ्घाते (भू० आ०)' 'पुंसि सञ्ज्ञायां घः (३, ३, ११८), श्लोक्यते पद्यते रूपेण संहन्यते कविभिः श्लोकः 'पद्ये यशसि च श्लोकः (३, ३, २)'—इत्यमरसिंहः। "ऋतस्य श्लोको बधिरा ततर्द (ऋ० सं० ३, ६, १०, ३)"—"श्लोको न

यातामग्निं वाजो अस्ति (ऋ० सं० ७, ६, ११, ५)"—इति निगमौ॥

(२) धारा। 'धृञ् धारणे (भू० उ०)' 'हेतुमति च (३, १, २६)'—इति णिचि 'एरजण्यन्तानाम् (३, ३, ५६ भा०)'—इत्यस्याप्रापकत्वादेव 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्त्तरि भवति। यद्वा, धारिः पचाद्यच् (३, १, १३४), लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनमष्टे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते (ऋ० सं० ७, ५,२४, १)"—"यः मसाट् धारासुतस्य (ऋ० सं० १, ५, ११, ४)"—इति च निगमौ।

(३) इला। 'इल क्षेपणे( तु० प०)' इगुपधेभ्यः (३,१,१३५) कर्त्तरि विधीयमानः कः प्रत्ययो बाहुलकात् (३, ३, १) भवति। क्षिप्यते प्रेर्य्यते उच्चारणकाले गायेन, इला। वक्ष्यमाणानां सत्वमुक्तं पूर्वमेव। यद्वा, 'ईड स्तुतौ (अदा० आ०)'—'ञि इन्धी दीप्तौ (रु० आ०)' आभ्यां पूर्ववत् कः (३, ३, १), पृषोदरादिः (६, ३, १०८), ईड्ति स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति प्रयोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा, इलेत्यन्ननाम (निघ० २, ७), अकारो मत्वर्थीयः यजमानानां देयेनान्नेन हविर्लक्षणेन वा तद्वती इला। "अभि नु इला यूथस्य माता (ऋ० स० ४, २, १६, ४)"—इति निगमः॥

(४) गौः। व्याख्याता पृथिवीनामसु (१)। गच्छति यत्रेण्याहता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौरभीवृता (ऋ० सं० २, ३, १८, ४)"—इति निगमः॥

(५) गौरी। रोचतेर्ज्वलतिकर्मणः (निघ० १, १६)। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २८)'—इत्यादिसूत्रेण रन्-

प्रत्ययान्तो गौरशब्दो निपातितः, तस्माद्गुणेऽधातोर्गावादेशः, 'षिद्गौरादिभ्यश्च (४, १, ४१)'—इति ङीष्। तया दीप्तया ज्वलति वाग्देवतात्वात्। यद्वा, 'गूरी उद्यमने (तु० आ०)' अस्मात् इनि पूर्ववन्निपातनादुकारस्यौकारः, 'रोरि (८, ३, १४)'—इति रेफलोपः, ङीष्, गुरते उद्यच्छति स्वमभिधेयम्, उद्यमनं चात्र प्रकाशनम्। यद्वा, 'गुङ् अव्यक्ते शब्दे (भ्वा०)'—इत्यस्मान्निपातनादिनि वृद्धिः, गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा, शुक्लवर्णत्वात् गौरी, 'शाश्वतकपर्दां शशिकलामिन्दुकुन्दावदाताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)"—"सोमो गौरी अधिश्रितः (ऋ० स० ६, ७, ३८, ३)"—इति च निगमौ॥

(६) गान्धर्वी। गविगन्धश्चन्द्रो वः। 'धृञ् धारणे (भ्वा० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा वप्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः, गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति वप्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातुश्चुरादिरात्मनेपदी। 'तस्येदम् (४, ३, १२०)'—इत्यण्, ङीप् (४, १, १५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वागुवैन्द्री (ऐ० ब्रा० २, ४, २)'—इति। यद्वा, गन्धर्वा देवानां गायकाः, तेषामियम्। तथाचैतरेयब्राह्मणे—'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १, ५, १)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्। 'सा गन्धर्वीऽवदीत् गर्भे अन्तः'—इति श्रुतिः। "पृश्निर्गान्धर्वी पृथ्वा मृतस्य (ऋ० सं० ८, ३, १५, ६)"—इति निगमः॥

(७) गभीरा, (८) गम्भीरा। भीयन्ति (दि॰ प॰) रातीति (अदा॰ प॰) भीराः। 'आतोऽनुपसर्गे कः (३, २, ३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६, ३, १०८) गोशब्दस्य गभावो गम्भावश्च। स्तनयित्नु-लक्षणा हि माध्यमिका वाक् श्रूयमाणैव सर्वप्राणिनां भियमादधाति। यद्वा, उणादौ गभीरादिसूत्रेण गमेर्धातोरीरन्प्रत्यये नुमागमो मकारस्य विकल्पेन लोपो निपात्यते (उ॰ ४, ३४)। गच्छति यस्रो, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा, 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ॰), धस्य भत्वं, भयान्तादेशः, धा च नुम् निपात्यते। प्रतिष्ठिता अस्मिन् स्थाने, लिप्सन्ते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

(९) मन्द्रा। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भ्वा॰ आ॰)'। गच्छति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः। "स मन्द्रया च जिह्वया (ऋ॰ सं॰ ५, २, २२, ३)" —इति निगमः॥

(१०) मन्द्राजनी। मन्द्रशब्दो व्याख्यातः। 'अज गतिक्षेपणयोः (भ्वा॰ प॰)' ल्युट्। मन्द्रमजनं गमनं क्षेपणं प्रेरणमुच्चारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम्। (४, १, ४१ ग॰) "मन्द्राजनी चोदती भुरणसनि (ऋ॰ सं॰ ७, २, २१, २)"—इति निगमः॥

(११) वाशी। 'वाशृ शब्दे' दैवादिकः (आ॰)'। 'वसिवपियजिराजिव्रजिध्वजिसदिहनिकमिवाशिवादिवारिभ्य इञ् (उ॰ ४, १२१) कर्मणि कारके वा दृश्यते, वाशिः। 'कृदिकारादक्तिनः (४, १, ४५ वा॰)'—इति ङीष्, वाशी। "ते वाशीमन्त इष्मिणो अभीरवो (१, ६, ११, ६"—"वाशीभि-

स्तर्यताम्र्मयो भि: (ऋ० सं० ८, ५, १८, ४)"—इति च निगमौ ॥

(१२) वाणी । "वणि शब्दे (भू० प०)' । बाहुलकादिञ् (उ० ४, १२१) (इ, ३, १), ङीप् (४, १, ४५ वा०) । "वाणीः पुरुहूतं धर्मन्ती. (ऋ० सं० ३, २, २, १०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७, ५, ६, ३)"—इति निगमौ ॥

(१३) वाणीची । वाणीं स्तुतिरूपां वाचमञ्चति गच्छतीति विग्रहः 'ऋत्विगित्यादिना (३, २, ५८) क्विनि, नलोपे, 'अचः (६, ४, १३८)'—इत्यकारलोपे 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा०)'—इति ङीप् । "रथे वाणीच्याहिता (ऋ० सं० ४, ४, १५, ४)"—इति निगम. ॥

(१४) वाणः । वण्यते शब्द्यते वाणः । 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ् । यद्वा, वणनं शब्दन वाण', भावे घञ् (३, ३, १८), अर्शआदित्वादच् (५, २, १२७) । स्तुतिमती हि वाक् । "दौग्ग दृष्टा वि दुहन्ति प्र वाणम् (ऋ० सं० ३, ६, १२, ४)"—इति निगम ॥

(१५) पविः । 'पूञ् पवने (क्र्या० उ०)' 'अच इः (उ० ४, १३४)'—इति इप्रत्ययः । पुनाति हि वाक् । 'पावका नः सरस्वती (ऋ० स० १, १, ६, ३)'—इति मन्त्रः । पूयते वा सङ्कीर्त्तनादिना, 'वाच यौरिकयालापयतङ्के पुनीमहे' इत्युक्तेः । पूयतेऽनयेति वा शुद्धिकरण हि वाक् । 'पवित्र' हि वाग् विदुषाम्'—इति माधवः । "वाणस्य चोदया पविम् (ऋ० स० ७, १, ७, १)"—इति निगमः ॥

(१६) भारती । 'डु भृञ् धारणपोषणयोः (भू० उ०)' 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३, १०३)' । भरतशब्दात् 'प्रज्ञादिभ्यश्च (५,४,३८)'—इति स्वार्थि-

कीरण्, ङीष् (४, १, १५)। विभर्त्ति जगद्दर्पप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन। अथवा 'अग्निर्भरतः, प्राणो भूत्वा ह्वीषि विभर्त्ति'—इति वाजसनेयकम्, तदीया भारती। तथाच 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ० उ० १, ८)। अथवा 'भरतः' (निघ० ३, १८)'—इति ऋत्विङ्नाम, तदीया, स्तुतिसाधनत्वात् भारती। "आ भारती भारतीभिः सजोषा (ऋ० सं० २, ८, २३, ३)"—इति निगमः॥

(१७) धमनिः। धमतिर्गतिकर्मा (निघ० २, १४), 'अर्त्तिसृधृधम्यस्यश्ववितरिभ्योऽनिः (उ० २, ८५)'—इत्यनिप्रत्ययः। गत्यर्था बुद्ध्यर्थाः। मम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्वसाधुविभागेन। यद्वा, 'धमति'—इति बधकर्मस्वपि पठ्यते (निघ० २, १९)। हन्त्यनया शापाक्रोशादिरूपयेति। तथाच 'वज्र एव वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २, ३, ३)। 'वाक्सायका वदनान्निःसरन्ति येराहताः'—इति च महाभारतम्। "इन्द्रं वितां धमनिं पप्रथन्नि (ऋ० सं० २, ६, ४, ३)"—इति निगमः॥

(१८) नाली:। 'नल गन्धे (भू० प०)' 'वसिवपियजिराजिव्रजि (उ० ४, १२१)'—इत्यादिना विहितः इञ्प्रत्ययो बाहुलकात् भवति, 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीष्, व्यत्ययेन सोविसर्जनीयः। 'गन्ध अर्दने (चु० आ०)' 'अर्द हिंसायाम् (भू० प०)'—इति पठ्यते। गन्धनं हिंसात्मकं सूचनम्, सूचयति परमर्माणि। "ब्रुमस्य धम्यते नालीः (ऋ० सं० ८, ७, २२, ७)"—इति निगमः॥

(१९) मेना। 'मान पूजायाम् (चु० आ०)'—इत्यस्मात् 'बहुलमन्यत्रापि' इनच् भवति (उ० २, ४६)'—इति वचना

दिनत्, बहुलग्रहणाल्लोपः। पूज्यतेऽनया गुर्वादिरूपदेश-वाक्येन, पूज्या वा देवतात्वात्। "मान्दमानां कृश्नवर्चतो भुवुद्रोः (ऋ० सं० ८, ६, १०२)"—इति निगमः। 'मेना गर्जितशब्दम्'—इति माधवः॥

(२०) मेलिः। सम्पर्कार्थो धातुः (चु० आ०)। पूर्ववत् बाहुलकादिन्। सम्पृक्ता ह्यर्थेन वाक्। तथाच—'वागर्था-विव सम्पृक्तौ'—इति (रघौ १, १) कालिदासः। 'मेलि मदन्त पित्रोरुपस्थे (ऋ० सं० ३, १, २०, ४)"—इति निगमः। मत्वर्थीयस्य लुकि वाग्मिनमित्यर्थः। "मेलिः स्यात् तत्प्र-योजनात्"—इति माधवः॥

(२१) सूर्या। सर्त्तेर्गत्यर्थात् (भू० प०), सुवतेर्वा प्रेरणा-र्थात् (तु० प०) 'राजसूयसूर्य (३, १, ११४)'—इत्यादिना निपातनात् क्यपि सर्त्तेरुत्वं सुवतेर्वा रुडागमः। सरति गच्छति श्रोतॄन् प्रति, कर्णशष्कुलिं वा सुवति प्रेरयति चोद-नारूपा पुरुषादीनिद कुर्विति। यद्वा, सुपूर्वादीरतेः 'कृत्य-ल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि क्यपि निपात-नाद्रूपसिद्धिः। सुष्ठु ईर्य्यते उच्चार्यते इति सूर्या। यद्वा, 'षु प्रेरणे (स्वा० उ०)' 'सुसूधीगृधिभ्यः क्रन् (उ० २,२३)'—इति क्रन्प्रत्ययः। प्रेर्य्यते उच्चारणकाले प्राणेन सूरा 'छन्दसि स्वार्थे,—इति यत्प्रत्यय', सूर्या। यद्वा, सूरयो मेधाविनः, तानर्हति 'छन्दसि च (५, १, ६७)'—इति यत्प्रत्ययः। यद्वा सूरिषु साधुः 'तत्र साधुः (४, ४, ९८)'—इति यत्। निगमो-ऽन्वेषणीयः॥

(२२) सरस्वती। सर्त्तेरसुन् (उ० ४, १८४) सरः। गद्य-पद्यादिरूपेण प्रसरणमस्यास्तीति 'मध्वायामेधास्रजो विनिः (५, २, १२१), 'बहुलं छन्दसि (५, २, १२२)'—इत्यत्र मतुपि

त्तीय। यद्वा, सर इत्युदकनाम (निघ० १, १२)। सर्तस्व-
इतो ह्यधिदेवतात्वादुदकवती हि माध्यमिका वाक्। सैव
चासौ नदी सरस्वती। तदुक्तं भाष्यकारेण—'तत्र सरस्वती-
त्येतस्य नदीवत् देवतावच्च निगमा भवन्ति (निरु० २, २३)'
—इत्यादिना। "पावका नः सरस्वती (ऋ० सं० १, १, ६, २)"
इति निगमः देवतायाः। "इयं शुष्मेभिः (ऋ० सं० ४, ८,
१०, २)"—इत्येषा नद्याः॥

(२३) निवित्। 'विद ज्ञाने (अदा० प०)', निपूर्वः।
'सत्सू द्विषद्रुहदुह '३, २, ६१,'—इत्यादिना क्विपि [ अन्त-
र्भावितण्यर्थयात्र विदि ] नितरां वेदयति ज्ञापयति स्वमभिधे-
यम्। "तान् पूर्वया निविदा हूमहे वयम् (ऋ० सं० १, ६,
१५, ३)"—इति निगमः॥

(२४) स्वाहा। यस्य नाम्नो यादृङ्निर्वचनं दृष्टं तत्सर्वं
तद्रूपेणैव लिख्यते। अत्र निरुक्तम्—'स्वाहेत्येतत् सु आहेति
वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति
वा (निरु० ८, २०)'—इति। अस्य स्कन्दस्वामी—स्वाहे-
त्येतत् स्वाहाकृतिशब्दस्य पूर्वपदं स्वाहाकारान्तो होमम-
न्त्राणां कर्त्तव्य', 'न ह वै आहुतयो देवान् गच्छन्ति य अव-
षट्कृता वा अस्वाहाकृता वा भवन्ति (शत० ब्रा० ८, ३, ६-
,१४)'—इतिश्रुतिः। स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽ
वश्यभावित्वात्। अयमर्थः यस्यान्ते श्रूयते स होममन्त्रः
शोभनमर्थमाह। अथवा प्रजापतिः स्वा आत्मीया वागाहेति
स्वाहाकाररूपा वाक् प्रजापतिसृष्टेत्यर्थः। अथवा स्वं प्राहेति
यजमानस्य, स्वं हविः देवतायै दत्तं तदुद्देशेन त्यागात्, तस्य
यजमानो मीवं प्राहेति स्वाहा, सम्प्रदानत्वं स्वाहाकारस्य
अष्टमनेन प्रकारेण दर्शितं स्वाहुतमित्यादिना। अथवा यद-

नेन स्वाहाकारेण जुहोति तदेव सुष्ठुमर्यादया जुहोतीति, एवञ्च सति पूर्वकाणि निर्वचनानि ब्रूमः। इदन्तु जुहोतेरिति। अत्र भास्करमिश्रः—'स्वयं सरस्वती भाह ब्रूते'। 'स्वैव ते वागित्यब्रवीत्'—इति ब्राह्मणम्। स्वयमेवाहेत्यस्यार्थस्य द्योतकोऽयं निपातः प्रदेशान्तरेऽपि विभक्त्यन्तसमुदायात्मनिपातः स्वाहेति। संस्कारविशेषानवधारणान्नावगृह्यते। अत्र क्षीरस्वामी—'सुष्ठु आह्वयति स्वाहा'। अत्र स्वाहाशब्दो नाव्ययम् अप्यग्निजायावाचित्वमित्यर्थः। भाष्ये तु स्वाहाशब्दस्य वाङ्नामत्वेनाभिव्यक्तेऽष्टानि निर्वचनानि लिखितानि, तेषु यथोचितं तद् गृह्णन्तु विद्वांसः। तस्याः वाचः स्रष्टौ पृथिवी चाग्निश्चेति वाचोऽग्नेश्च कारणकार्यभावः श्रूयते। 'अग्निर्वाक् भूत्वा मुखं प्राविशत् (ऐ॰ उ॰ १, ८)' —इति। तस्मादग्नेर्वाचश्च सम्बन्धात् अग्नायी स्वाहा वागित्युच्यते। वाति वातात्मत्वेन वागुच्यते इति सन्देहः। निगमः सुलभः स्वाहाकारपक्षे, अन्यत्रान्वेषणीयः॥

(२५) वग्नुः। 'वच भाषणे (अदा॰ प॰)', 'वचेर्गश्च (उ॰ ३, ३२)' इति नुप्रत्ययः, चकारस्य गकारश्च। वग्नुः वाचा समानोऽर्थः। "वग्नुं सिषक्ति यं विदे (ऋ॰ सं ६, ८, ४, १)" —"इन्द्रस्येव वग्नुरा शृण्व आजौ (ऋ॰ सं॰ ७, ४, १२, ३)" —इति च निगमौ॥

(२६) उपब्दिः। उपपूर्वात् पदेर्गत्यर्थात् (दि॰ आ॰) 'इन् सर्वधातुभ्यः (उ॰ ४, ११४)'—इतीन्प्रत्ययो बाहुलकादुपधालोपः, 'न पदान्तद्विर्वचन (१, १, ५८)'—इत्यनेन जश्विधिं प्रति स्थानिवद्भावनिषेधात् 'झलां जश् झशि (८, ४, ५३)'—इति पकारस्य बकारः। उप समीपे भक्तानां गच्छति, उप आचार्यसमीपे गम्यते इति वा। यद्वा, उपपूर्वात् ददातेः

(जु० उ०), द्यतेः (दि० प०), दयतेः (भू० आ०) वा 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'उपसर्गे घोः किः (३, ३, ९२)'—इति किमत्ययः कर्त्तरि भवति यकारश्चोपजनः। उपेत्य ददातीत्यभिलषितम्, प्रयोक्तॄणां, खण्डयत्यन्नं तर्कादिसमये प्रतिवादिनां वा, रचति भक्तानिति वा उपब्दिः। "ग्रावोपर्यन्ता: पृथिवीमुपब्दिभिः (ऋ० सं० ८, ४, २९, ४)"—"उपब्दिरिर्यर्त्ति सोमः (ऋ० सं ७, २, २४, ५)" —"शृण्व आयुता सुपब्दिः (ऋ० सं० २, ४, ८, २)"—इति निगमाः।

(२७) मायुः। 'डु मिञ् प्रक्षेपणे (क्रया० उ०)'। क्वापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)', 'मीनातिमिनोतिदीङां ल्यपि च (६, १, ५०)'—इत्यात्वम्, 'आतो युक् चिण्कृतोः (७, ३, ३३)'—इति युक्। चिप्यते प्रेर्य्यते उच्चार्य्यते इति मायुः, प्रक्षिपति हृष्यदकं भूमाविति वा। "मिमाति मायुं धुसनावधिश्रिता (ऋ० सं० २, ३, १९, ४)"—इति निगमः॥

(२८) काकुत्। 'कैगैरै शब्दे (भू० प०)'। सम्पदादित्वात् (३, ३, ९४ वा०) क्विप्। कानं शब्दनं करोतीति का, मृगय्वादित्वात् कुः (उ० १, ३६) बाहुलकात् तकार उपजनः। यद्वा, 'कक वक लौल्ये (भू० आ०)', 'स्योरतिन् (उ० १, ९१)'—इत्येव बाहुलकात् (३, ३, १) प्रत्याद् भवति णिच काकुत्। ककते चञ्चला भवति एकस्मिन्नर्थे न प्रतितिष्ठतीत्यर्थः, तथाहि शब्दा अनेकार्था बहवः, एकार्थोऽपि काकादिनाभिधीयमाना अनेकार्था भवन्ति। ककुदुवस्यास्त्यस्यास्तीति काकुत्। मत्वर्थीयस्य लुक्, छान्दसो दीर्घः, सर्वथा पृषोदरादिरयं शब्दः। "या ते काकुत् सुकृता या वरिष्ठा

(ऋ॰ म॰ ४, ७, १३, २)"—इति निगमः ।

(२८) जिह्वा । 'शेवयवृह्वजिह्वाग्रीवाप्वामीवा'—इति निपातः । 'लिह आस्वादने (अदा॰ उ॰)', वप्रत्यये, अस्या देर्जकारो निपात्यते । लेह्यास्वादयत्यनया अन्यविषयावसानात् । यद्वा आह्वयते (भू॰ उ॰) जुहोते (जु॰ प॰) वाय यङन्तस्य क, सम्प्रसारणम 'अभ्यस्तस्य च (६, १, ३३)'—इति, सम्प्रसारणे च 'न धातुलोप आर्द्धधातुके (१, १, ४)'—इति गुणनिषेधादुवङादेशे रूपम् । जोहुवाति पुनः पुन राह्वयति शब्द करोति स्थान वादत्ते जुहोत्यस्यामनि, वीहुवा सति ओकारस्येकारादेशे उकारलोपे च जिह्वा । "पुरो विप्रा दधिरे मन्द्रजिह्वम (ऋ॰ क॰ ३, ७, २६, १)"—"अनर्वाणं वृषभं मन्द्रजिह्वम (ऋ॰ म॰ २, ५, १२, १)"—इति च निगमौ ।

(३०) घोषः । 'घुष शब्दार्थे (भू॰ प॰)', 'हलश्च (३, ३, १२१)'—इति घञ् । घुष्यते शब्द्यते घोषः । "उतो पितृभ्यां प्रविदानु घोषम् (ऋ॰ सं॰ ३, १, २, १)"—"दस्रे घोषा अस्व-क्षत (ऋ॰ म॰ ६, ४, ४३, १)"—इति च निगमौ ।

(३१) स्वरः । 'स्वृ शब्दोपतापयोः (भू॰ प॰)', पुंसि सञ्ज्ञायां घ (३, ३, ११८) । स्वर्यते शब्द्यतेऽनेन देवता, उपतप्यतेऽनया मर्मस्पृकप्रयुक्तयेति वा । स्वरतिरर्चतिकर्मा वा (निघ॰ ३, १) । स्वर्यते स्तूयते देवतात्वात् । 'गोचरसञ्चर (३, ३, ११९)'—इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् घ । यद्वा, स्वरति देवतासिन्द्रादिम्, पचाद्यच् (३, १, १३४) । "स्वरश्च मे श्लोकश्च मे (य॰ वा॰ म॰ १८, १)—इति निगमः ।

(३२) शब्दः । शपत्याक्रोशे शापयित्वा दाती । अस्य हारिस्वन्य —'शपते अनेनेति शब्दः सस्कृता वाक् । अन्ना

तृतीये इति योगविभागात् भवतुर्थ्येऽपि तृतीयं भवति'—इति। 'शब्दनं शब्दः'—इति क्षीरस्वामी। खेऽन्तरिक्षे शब्दं करोतीति वा। "शब्दो रोगिणो मीमांसा च"—इति निगमः॥

(३३) स्वनः। 'स्वन शब्दे (भू० प०)' 'स्वनहसोर्वा (३, ३, ६२)'—इत्यप्। स्वन्यत इति स्वनः। "सिन्धोरूर्मेरिव स्वनः (ऋ० सं० ७, १, ७, २)"—इति निगमः॥

(३४) ऋक्। ऋच्यते (तु० प०) स्तूयतेऽनया। यद्वा, स्तूयते स्वयं दैवतात्वात्। 'ऋच स्तुतौ (तु० प०)'—इत्यस्मात् सम्पदादित्वात् (३, ३, ८४ वा०) क्विप्। "ऋचा वने मानूचः (ऋ० सं० ८, ५, २७, ३)"—इति निगमः॥

(३५) होत्रा। 'हु दानादानयोः (जु० प०)' 'हुयामाश्रुभसिभ्यस्त्रन् (उ० ४, १६८)'। हूयतेऽनया मन्त्ररूपया हविः, हूयतेऽस्यां प्राणः, हूयते वा प्राणः। तथाच—'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्'—इत्युपनिषत् (ऐ०)। यद्वा, होत्रेति यज्ञनाम (निघ० ३, १७), हूयतेऽस्मिन् हविरिति यज्ञस्य वागिन्द्युच्यते तत्साध्यत्वात्। वाच यच्छति वाग्वै यज्ञः'—इति ब्राह्मणम् (ऐ० ब्रा० ५,४,५,४,५)। ऋतुयाजप्रैषेषु दशमे प्रैषे—"वनेम तद्धोत्रया चितन्त्या (ऋ० सं० २, १, १०, २)"—इति निगमः, "प्रीतिहोत्रं त्वा कवे (ऋ० सं० ४, १, १८, ७)"—इति च निगमः॥

(३६) गीः। स्तयातिरर्चतिकर्मा (निघ० ३, १४), भौणादिकः क्विप्, 'ऋत इद्धातोः (७, १, १००)' 'य्वोरुपधाया दीर्घ इकः (८, २, ७६)'—इति दीर्घः, हल्ङ्यादिलोपः (६, १, ६८), रेफस्य विसर्जनीयः। स्तूयात्यनया गीः। "समिद्धेयन्तु नो गिरः (ऋ० सं० ६, १, १०, २)"—इति निगमः॥

(३७) गाथा। 'गै शब्दे (भू० प०)' अर्चतिकर्मा च (निघ० ३, १४), 'उषिकुषिगार्तिभ्यस्थन् (उ० २, ४)'। गायन्तीत्यनो देवताः, गायन्ति तामिति वा गाथा। "तं गाथया पुराण्या (ऋ० सं० ७, ४, २५, ४)"—"युञ्जन्ति हरी इषिरस्य गाथया (ऋ० सं० ६, ९, २, ३)"– इति निगमौ॥

(३८) गणः। गण 'गणने' चुरादिरदन्तः (प०)। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १८)'—इति घञ्। 'अतो लोपः (६, ४, ४८)'। गण्यते या गणः, अतो लोपस्य स्थानिवद्भावात् वृद्धिर्न भवति। गणेति केचित् पठन्ति। निगमोऽन्वेषणीयः।

(३९) धेना। दधातेर्लटः शानचि व्यत्ययेन एत्वाभ्यासलोपौ दधाना स्वमभिधेयं वर्णप्रदानेन लौकिकाय वा। यद्वा, 'धेट् पाने (भू० प०)' 'धेट इच्च (उ० ३, १०)'—इति नप्रत्ययः इकारश्चान्तादेशः, गुणः, धयन्ति तामिति धेना। पानमत्र स्वीकारः। यद्वा, आस्वादः। धीयते पीयते आस्वाद्यते वानेन, धयन्ति प्राणमिति वा धेना। तथाच—'तं माता रेळ्हि स उ रेळ्हि मातरम्'—इति श्रुतिः (ऋ० सं० ८, ६, १६, ४)। यद्वा, 'धिवि: प्रीणनार्थः (भू० प०)' बाहुलकात् नप्रत्ययो नकारवकारयोर्लोपश्च, गुणः, धेना। प्रीणयति हि वाक् सुष्ठु प्रयुक्ता। 'धेना वाक् प्रीणनाद्धि वा'—इति माधवः। "धेना जिगाति दाशुषे (ऋ० सं० १, १, ३, ३)"—"जनानां धेना अवचाकशद्वृषा (ऋ० सं० ७, ८, २५, १))"—इति च निगमौ॥

(४०) ग्नाः। गमेर्धातोः (भू० प०) 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति बाहुलकात् नप्रत्ययो भवति टिलोपश्च। टाप् (४, १, ४)। गत्यर्था बुद्ध्यर्थाः। जानन्ति काममिति ग्नाः। यद्वा, गच्छति यज्ञेष्वभूत्। 'अभि युज्ञ गृणीहि नो ग्नावः (१, १, २८, ३)' इत्यत्र 'छन्दांसि वै ग्नाः'—इति

ब्राह्मणम्'—इति माधवः । तस्मात् छन्दसां गायत्र्यादीनां वाग्रूपत्वात् ग्नाव्यपदेशः । निगमोऽन्वेषणीयः ॥

(४१) विपा । 'विप् प्रेरणे (चु० प०)' । सम्पदादित्वात् (३, ३, ८४ वा०) क्विप् । तृतीयैकवचनम् । प्रेर्य्यते मनसा विपा । 'मनसा वा इषिता वाग्वदति (ऐ० ब्रा० २, १५)'—इति ब्राह्मणम् । "वरुणाय विपा गिरा (ऋ० सं० ४, ४, ६, १)"—इति निगमः । गिरेति पदं निरुक्त्या योजनीयम् ॥

(४२) नना । न गच्छति पितृकुलात् बाल्यात्, अनावरणापि न गच्छति लज्जामिति वा । 'नग्निकाऽनागताऽर्त्तवा'—इत्यमरः (२, ६, ८) । नग्ना कन्या । ग्नाशब्दः पूर्वमेव निरुक्तः, इह नपूर्वः । नायं नञ्, किन्तु प्रतिषेधार्थोऽयं निपातः, अतः 'न लोपो नञः (६, ३, ७३)'—इति न भवति । "नना"—इति केचित् । नमतेर्नप्रत्ययो बाहुलकात्मकारलोपश्च । नमयत्वनयेति नना । निगमोऽन्वेषणीयः ॥

(४३) कशा । 'काशृ दीप्तौ (भू० आ०)' । अन्तर्णीतण्यर्थः । पचाद्यच् (३, १, १३४) । आकारस्य ह्रस्वत्वं छान्दसम् । प्रकाशयत्यर्थान् । यद्वा, शोभया सती वर्णव्यत्ययादिना कशा, वाग्वि मुखात् काशते ततउपलब्धेः । यद्वा, 'कश शब्दे (भू० प)' । अच शब्दायते कशा । यद्वा, 'कश गतौ (भू० प०)' अच् (३, १, १३४) । गच्छति गन्तव्यम् । "या वां कशा मधुमती (ऋ० सं० १, २, ४, ३)"—इति निगमः ॥

(४४) धिषणा । धारयत्यर्थमिति धीः बुद्धिः । धारयति कर्त्तारं फलप्रदानेनेति धीः कर्मबुद्धिः कर्म वा । सनोति सम्भजते इति सनोतिः (षणु स० उ०) पचाद्यचि (३, १, १३४), पृषोदरादित्वात् (६, ३, १०९) पूर्वपदह्रस्वत्वे च धिषणा । यद्वा, 'ञि धृषा प्रागल्भ्ये (स्वा० प०)' । 'धृषेर्धिष् च सञ्ज्ञा-

(२४) विवस्वन्तः । 'वस निवासे (भू० प०)' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच्, दृशिग्रहणात् भावे भवति। विविधं वसनं विवः, तद्वन्तो विवस्वन्तः। सर्वस्यापि मनुष्यस्य यत् किञ्चित् विवसनमस्ति। 'विवस्वच्छब्द आदित्यवाच्याद्युदात्तः, अन्यत्र मनुष्यविशेषे यजमाने द्वितीयाचरमुदात्तम्'—इति माधवः। "आविर्भव सुक्रतुया विवस्वते (ऋ० सं० १, २, ३२, ३)"—"शिवो दूतो विवस्वतः (ऋ० सं० ६, ३, २२, ३)"—इति च निगमौ। अत्र विवस्वान् यजमानः'—इति माधवभाष्यम्। 'मृद्दो जाया विवस्वतोऽत्र नाम (ऋ० सं० ७, ६, २३, १)'—इत्यादिकमवचनस्योदाहरणम्॥

(२५) पृतनाः। 'पृङ् व्यायामे (तु० आ०)'। "त्वयाध्यक्षेण पृतना जयेम (ऋ० सं० ८, ७, (५, १)"—इति निगमः॥

मनुष्याणां बहुत्वं, ततो बहुवचनान्तत्वम्, तथा निघण्टुष्वपि। 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा विशः॥ (अम० को० २, ६, १)'—इत्यादिषु च बहुवचनान्तता दृश्यते॥

इति पञ्चविंशतिर्मनुष्यनामानि॥२५॥

आयती (१)। च्यवाना (२)। अभीशू (३)। अप्नवाना (४)। विनङ्गृसौ (५)। गभस्ती (६)। करस्नौ (७)। बाहू (८)। भुरिजौ (९)। क्षिपस्ती (१०)। शक्वरी (११)। भरित्रे (१२)। इति द्वादश बाहुनामानि॥४॥

.. (१) आयती। 'यती प्रयत्ने (भू०, आ०)' गतिकर्मा वा (निघ० २, १४)—'इन् सर्वधातुभ्यः (४, ११४ उ०)'—इतीन् प्रत्ययः। आभिमुख्येन यतते कार्य्येषु, गच्छन्तौ वा साधनत्वम्। बाह्वोर्द्वित्वात् सर्वत्र द्विवचनान्तता। निगमोऽन्वेषणीयः॥

(२) च्यवाना। 'च्युङ् गतौ (भू० आ०)'। 'सम्यानच् स्तुव (उ० २, ८३)'—इत्यत्र प्राकप्रत्ययनिर्देशोऽधिकविध्यर्थ इत्युक्तेरानच्प्रत्ययः। 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना द्विवचनस्याकारः। गच्छतः कर्मणामन्तः। निगमोऽन्वेषणीयः॥

(३) अभीशू। व्याख्यातौ रश्मिनामसु। (२७१पृ०) अभ्यश्नुवाते कर्माणि अभिनयन्तौ वा कर्माख्यतः अभीशाते कर्माणि कर्त्तुमिति वा। निगमोऽन्वेषणीयः॥

(४) अप्नवाना। 'आपॢ व्याप्तौ (स्वा० प०)' 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)' अस्य सार्वधातुकत्वात् श्नुः, 'चन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुण, धातोर्ह्रस्वत्व पृषोदरादित्वात् (६, ३, १०९)। आप्नुत कर्माणि। यद्वा, अप्न इति कर्मनामसु व्याख्यातम्, (१२६ पृ०) तदस्यास्ति 'छन्दसीवनिपौ (५,२, १२२ वा०)'—इति वनिपि विभक्तेराकारः पूर्ववत्, सकारलोपश्छान्दसः। कर्मवन्तौ हि बाहू। नकारान्तौ वेति सन्देहः। निगमदर्शनान्निर्णयः॥

(५) विनङ्गृसौ। बाहुनाम। विनम्य ग्रसतोऽन्नादिकमिति माधवः। पृषोदरादित्वात् (६, ३, १०९) पूर्वपदे म्यलोपोनुक्, 'ग्रस अदने (भू० आ०)'—इत्यस्मात् पचाद्यच् (३, १, १३४), सम्प्रसारणञ्च। "अन्तर्मू लोमशमभरद्विनङ्गृसः (ऋ० सं० ९, २, २६३)"—इति निगमः॥

(६) गभस्ती । व्याख्यातौ रश्मिनामसु । (२८ पृ०)पुरुषाः प्रदत्ताभ्यामवादीन् । 'प्रहेर्गभस्ती बाहू, गृह्णाति पदार्थानाभ्यां पुरुषः'—इति माधवः । "धर्त्यांश्मिनं भरमाणो गभस्त्योः (ऋ० सं० ७, ५, २२, ५)"—इति निगमः ॥

(७) करस्नौ । करांसीति कर्मनामसु करमब्दो व्याख्यातः । तस्मिन् कर्मस्वुपपदे 'ष्णै वेष्टने (भू० प०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)' 'आतो लोप इटि च (६, ४, ६४)' । 'कर्मणां प्रस्नातारौ (निरु० ६, १७)' वेष्टयितारौ कर्मकारावित्यर्थः । "सुप्रकरस्नमवसे (ऋ० सं० ६, ३, २, ४)"—इति निगमः ॥

(८) बाहू । 'बाधृ लोडने (भू० आ०)' । 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकारश्च (उ० १, २६)'—इत्युप्रत्ययो हकारोऽन्तादेशश्च । गमयत्याभ्यां कर्माणि, बाधते परानाभ्यामिति वा । "ऋष्वाते इन्द्र स्थविरस्य बाहू (ऋ० सं० ४, ७, ३१, २)"—इति निगमः ॥

(९) भुरिजौ । 'हृञ् हरणे (भू० उ०)' 'डु भृञ् धारणपोषणयोः (जु० उ०)' 'भृञ उच्च (उ० २, ७१)'—इति इजिप्रत्ययः । हरतो बिभृतो वा पदार्थान् कर्मकरणसामर्थ्यं वा । "तमीमृण्वन् भुरिजोर्धिया (ऋ० सं० ६, ८, १६, ४)"—इति निगमः ॥

(१०) क्षिपस्ती । 'क्षिप प्रेरणे' तुदादिः (प०), 'वसिवितक्षिभ्यस्तिः'—इति बाहुलकात् तिप्रत्ययः धातोरसुगागमो गुणाभावश्च । प्रेर्यन्ते कर्मसु पुरुषैः ॥ 'क्षिपती'—इति पाठान्तरम् । तदा शतरि ङीपि 'आच्छीनद्योर्नुम् (७, १, ८०)' 'वा छन्दसि (६, १, १०६)'—इति द्विवचनस्य पूर्वसवर्णः । क्षिपतः पदार्थान् इतस्ततश्च कर्मसु । यथा, क्षिपेः 'इदि-

नन्दिग्रीविप्राशिभ्यः शिटाशिवि (उ० ३, १२३)'—इति बाहुल-कात् भावप्रत्यय. भोऽन्तादेशः। क्षिपतः पदार्थात्। निगमदर्शनाद्विर्णयः॥

(११) शक्करी। 'शक्लृ शक्तौ (स्वा० प०)' 'स्नामदिपद्यर्त्ति-पूशकिभ्यो वनिप् (उ० ४, १०८)'—इति वनिप्प्रत्यय, 'वनो र च (४, १, ७)'—इति ङीब्रौ च पूर्ववत् पूर्वसवर्णादेशः। शक्नुतः कर्माणि कर्त्तुम्। "अङ्गुल्यः शक्वर्यो दिशश्च मे युज्ञेन कल्पन्ताम् (य० वा० सं० १८, २२)"—इति निगमः॥

(१२) भरित्रे। विभर्त्ति रश्मीनादित्य इव। 'अशित्रा-दिभ्य इत्रोत्रौ (उ० ४, १६८)'—इति इत्रप्रत्ययः। भृत्विदर्थः। "ग्रंशं दुहन्ति हस्तिनो भरित्रैः (ऋ० सं० ३, २, २०, २)"—इति निगमः॥

इति द्वादश बाहुनामानि॥ ४॥

अ॒ग्रुवः॑(१)। अ॒ण्वः॑(२)। वि॒शः॑(३)। क्षि॒पः॑(४)। शर्याः॑(५)। र॒शनाः॑(६)। धी॒तयः॑(७)। अ॒थर्यः॑(८)। विपः॑(९)। क॒क्ष्याः॑(१०)। अ॒वनयः॑(११)। ह॒रितः॑(१२)। स्वसा॑रः(१३)। जा॒मयः॑(१४)। सना॑भयः(१५)। योक्त्रा॑णि(१६)। योज॑नानि(१७)। धुरः॑(१८)। शाखाः॑(१९)। अ॒भी॒शवः॑(२०)। दीधि॑तयः(२१)। गभ॑स्तयः(२२)। इति द्वाविंशतिरङ्गुलिनामानि॥ ५॥

(१) अग्रुवः। 'अग्र्वादयश्च (उ० ४, १००)'—इति रुप्रत्ययान्तेषु निपातेषु द्रष्टव्यः। 'अगि गतौ (भू० प०)'—इति धातु, निपातनान्नलोप, तन्वादित्वादुवङ्। गच्छति कर्माणि प्रति।

यद्वा, अग्रशब्दे उपपदे गमेः पूर्ववन्निपातनात् डप्रत्यये पूर्वपद-मलोपः गमेष्टिलोपश्च। अग्रे गच्छन्ति ताः। "तमीं हिन्वन्त्य-ग्रुवः (ऋ० सं० ६, ७, १०, ३)"—इति निगमः। अङ्गुलीनां बहुत्वात् सर्वत्र बहुवचनान्तता॥

(२) अध्वरः। अध्वतिः शब्दार्थः (भू० प०), 'अष्वच (उ० १, ८)'—इति उप्रत्ययः। 'ओतो गुणवचनात् (४, १, ४४)'—इति ङीप्। अण्वन्ति स्फोटनादि शब्दं कुर्वन्ति, तालादि शब्दं कुर्वन्त्याभिरिति वा। यद्वा, अण्वः हस्तपरिमाणापे-क्षयाल्पपरिमाणाः। तमीमण्वीः समर्य आ (ऋ० सं० ५, ७, १७, २)"—इति निगमः॥

(३) विशः। 'विश प्रवेशने (तु० प०)'। 'क्विप् वचि (३, २, १७८ वा०)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशाद्दिष्टसिद्धिः'—इत्युक्तेः क्विपि रेफ उपजनः विशन्ति साधनभावं कार्येषु। 'तमीं हिन्वन्ति धीतयो दश विशः (ऋ० सं० २, २, १३, ५)" —इति निगमः। 'कर्मसु धीयमाना दशाङ्गुलयः'—इति माधवभाष्यम्॥

(४) क्षिपः। 'क्षिप प्रेरणे (दि० प०)' औणादिकः क्विप्। क्षिप्यन्ते प्रेर्यन्ते पुरुषेण कर्मसु निक्षिपन्त्यास्वङ्गुलीयकादीन् इति वा। "मृजन्ति त्वा दश क्षिपः (ऋ० सं० ६, ७, ३०, ४)"—इति निगमः॥

(५) शर्याः। 'शॄ हिंसायाम् (क्र्या० पु० प०)'। 'अघ्न्या-देराकृतिगणत्वात् यत् (उ० ४, १०८)। शृणाति पापात्। "आ यः शर्याभिस्तुविनृम्णो अस्य (ऋ० सं० ८, १, २६, ३)" —इति निगमः॥

(६) रशनाः। रशिबन्धनार्थो धातुरित्युक्तं रश्मिनिर्वचने। (२७पृ०) 'युच् बहुलम् (उ० २, ७४)'—इति युच्। बध्नन्ति

वन्धनीयं, बध्यते चाभिरिति वा। युद्धप्रकरणे 'अमीरव च', —इति श्रीभोजदेव.। अश्नुवते कर्माणि। "रंशनाभिर्द्ग्रभिरभ्यधीताम् ऋ॰ स॰ ७, ५, ३२, ६)"- "अच्छा वर्हीरशनाभिर्नयन्ति (ऋ॰ स॰ ७, ३, २२, १)"—इति च निगमौ ॥

(७) धीतयः। 'धो (दि॰ आ॰)' धातो 'क्तिच्क्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिच् व्यत्ययेन दधातेरपि भवति, 'घुमास्थागापाजहातिसां (६, ४, ६६)'—इतीत्वम्। धीयन्ते विधीयन्ते पुरुषे. कर्मसु, धारयन्ति कर्मसाधनानि वा। अत्रान्तर्णीतण्यर्थो दधातिः। "स मृतधीतिभिर्हित (ऋ॰ स॰ ६, ७, ३२, ४)"—इति निगमः॥

(८) अथर्य। 'अत सातत्यगमने (भ्॰ प॰)' 'इन् सर्वधातुभ्य (उ॰ ४, ११४)'—इतीन्प्रत्ययो बाहुलकात्, धातो रथरादेश, 'कृदिकारादक्तिन (४, १, ४५ वा॰)'—इति ङीप्, जस्। 'उपर्वुर्धमथर्यो ३ न दन्तम् (ऋ॰ सं॰ ३, ५, ५, ३)'—इत्यत्र 'अथर्यो न स्त्रिय इव'—इति माधव। अथर्य इति तेनाप्यपाठि अङ्गुलिनामसु॥

"अथर्यव"—इति पाठो बहुषु दृष्ट। तदङ्गुलिनामकं स्पष्टम्। निगमदर्शनाद्विर्णय.॥

(९) विप। 'विप प्रेरणे (चु॰ प॰)' क्विपि, प्रेर्यन्ते पुरुषे कार्य्येषु। "विप्रो न युक्ता नियुवे जनानाम् (ऋ॰ स॰ ६, ६, ३५, ३)"—इति निगमः॥

(१०) कक्ष्या। "दर्शावनिभ्यः (ऋ॰ स॰ ८, ४, ३०, २)" —इत्यत्र 'कक्ष्या प्रकाशयन्ति कर्माणि (निरु॰ ३, ९)'—इति भाष्यम्। कक्ष्या. प्रकाशयन्त्यनुष्ठानफलेन फलेन वा कर्माणि। 'ख्याते कक्ष्यशब्दनिर्वचनम्'—इति स्कन्दस्वामी। 'गाहते कक्ष इति नामकरण ख्यातेर्वा (निरु॰ २, २)'—कक्ष्यशब्द

निर्वचनपरे भाष्ये स्कन्दस्वामिग्रन्थ—'ख्या प्रकथने (श्रदा० प०)'—इत्यस्मात् सप्रत्यये निरर्थको निर्निमित्तकोऽसौ सः यकाराकारयोर्लोपोऽभ्यासविकारश्च द्रष्टव्य'—इति । अयम् अभिप्राय —प्रायेण 'इतृषदिभ्यनिकमिकषिभ्य स (उ० ३, ६८)'—इति ख्यातेर्बाहुलकात् सप्रत्यये बाहुलकादेव द्विर्वचने इला दिशेषे क्रत्वे 'कुहोश्चु (७, ४, ६२)' न भवति बाहुलकादेव, 'अभ्यासे चर्च (८, ४, ५४)' इति चर्त्वम्, उत्तरस्य ख्या इत्यस्य यकाराकारयोर्लोप, 'खरि च (८, ४, ५५)'—इति चर्त्वम् 'आदेशप्रत्यययो. (८, ३, ५८)—इति षत्वम् । प्रकथनेन प्रकाशन लक्ष्यते । असेन नित्य प्रच्छादनात प्रकाश्यते पुरु षेण । कक्षो बाहुमूलम । 'तत्र भव (४, ३, ५३)'—इत्यर्थे 'शरीरावयवाच्च (४, ३, ५५)'—इति यत्प्रत्यय । अङ्गुलयो ऽपि परम्परया कक्षे भवा इति वक्तु शक्यते, असेन नित्य प्रच्छादितत्वात्, प्रकाश्यो हि सर्वदा कक्ष्य, तत्र भवा अङ्गुल यस्त्वहन्त प्रकाश्या किन्तु प्रकाशयन्ति कर्माणि अनुष्ठानेन फलेन वा, यथाचाधारस्थिते अरणौ अग्निना प्रकाश्ये तत्र भवोऽग्नि प्रकाशको भवति तद्वत् । यद्वा, कक्ष्या रज्जु तद्ब न्धनसाधनत्वात् कक्ष्याशब्देनोच्यन्ते । "पार्श्वजक्षु दश कृण्वाभि (ऋ० स० ८, ५, १८, ४)"—"दशावनिभ्यो दश कक्ष्येभ्य (ऋ० स० ८, ४, ३०, २)"—इति च निगमौ ।

(११) अवनय । व्याख्यात पृथिवीनामसु । (८पृ०) अवन्ति कर्माणि, अवन्ति वा । "सनात सनीला अवनीरवाता (ऋ० स० १, ५, २, ५)"—"दशावनिभ्य (ऋ० स० ८, ४, ३०, २)"—इति च निगमौ ।

(१२) हरित । व्याख्यात नदीनामसु । (११३पृ०) हर न्त्याभि पदार्थान् "ए तं त्य हरितो दश (ऋ० स० ६,८,

'२८,३)"—इति निगमः॥

(१३) स्वसारः। स्वशब्दे उपपदे 'असु क्षेपणे (दि० प —इत्यस्मात् 'सावसे ऋन् (उ० २, ८८)'—इति सुष्ठु अस्यते क्षिप्यते पदार्थ आभि, कार्य्येषु क्षिपन्त्या वा यद्वा, स्वशब्दे उपपदे 'षद्लृ विशरणे (भू० प०)' बाहुलकादट् बाहुलकात् टिलोपश्च। स्वं स्वं व्यापारं प्राप्नुवन्ति, स्वस्मिन् स्वस्मिन् हस्ते सीदन्तीति वा। यद्वा, परस्परं भगिनीव दृश्यन्ते, एकहस्तप्रभवत्वात् स्वसार उच्यन्ते 'न षट्स्वस्रादिभ्यः (४, १, १०)'—इति स्त्रीप्रत्ययनिषेधः। "दुदुस्रन्ति स्वसारो अर्चयायम् (ऋ० सं० १, ५, २, ५)"—इति निगमः॥

(१४) जामयः, सनाभयः। अनयो———रर्थोऽनुसन्धेयः। जमतेर्गतिकर्मणः (निघ० २, १४) 'जनिघसिभ्यामिण् (उ० ४, १२६)'—इति बाहुलकादिण्प्रत्ययः। 'अलिशलिपलिघसिजम्यषिपणिभ्य इण्'—इति श्रीभोजदेवः। जमन्ति गच्छन्ति कर्माणि प्रति अदन्त्याभिरन्नादीनि वा। जनैरेव वा बाहुलकान्नकारस्य मकारः, जाताः स्वकारणात्। "त्वं मातृ वर्धि जामयः (ऋ० सं० ६, ८, १६, ५)"—इति निगमः॥

(१५) सनाभयः। 'णह बन्धने (दि० उ०)' 'नहो भश्च (उं० ४, १२२)'—इति इञ्प्रत्ययः भोऽन्तादेशः। नह्यतेऽनया गर्भ इति नाभिः, समाना नाभिरासामिति सनाभयः। ज्योतिर्जनपदेऽन्यस्मात् सहशब्दस्य सभावः। समाना हि मातुर्नाभिस्तासां, समा नाभिः मूलमासामिति वा। "सनाभयो वाजिनमूर्जयन्ति (ऋ०सं०७,३,२१,४)"—इति निगमः॥

(१६) योक्त्राणि। (१७) योजनानि। 'युजिर् योगे (रु० उ०)'। 'दाम्नीशसयुयुजस्तुतुदसि (३, २, १८२)'—इति

इन्प्रत्ययः पूर्ववत् । 'युच् बहुलम् (उ० २, ७४)'— इति युच् । युञ्जन्ति पदार्थानाभिरिति, युक्ता वा इस्तेन, संयम्यते आभिः क्लेशादय इति वा । शब्दस्वाभाव्यात् नपुंसकलिङ्गता । "दर्ययोक्ताभ्यो दर्ययोजनेभ्यः (ऋ० सं० ८, ४, ३०, २)"—इति निगमः ॥

(१८) धुरः । धूर्वतेर्वधकर्मणः (निघ० २, १९) कर्त्तरि क्विपि (३, २, १७७), राल्लोपः (६, ४, २१)' इतिवलोपे रेफस्य विसर्जनीये, जसि धुरः । धूर्वन्ति घ्नन्त्युपघ्नयन्ति कर्माणीत्यर्थः । हिंसन्ति परानाभिरिति वा । धारयतेर्वा औणादिके क्विपि बाहुलकात् आकारस्य उकारः । अङ्गुल्या हि धार्य्यं सुवर्णादि धारयति । "दश धुरो दश युक्ता वहद्भ्यः (ऋ० सं० ८, ४, ३०, २)"—इति निगमः ॥

(१९) शाखाः । 'शाखृ व्याप्तौ (स्वा० आ०)' अस्मात् खप्रत्यये विहिते 'अशोतेर्डित्'—इति श्रीभोजदेवेन खप्रत्यये शाखशब्दो व्युत्पादितः । व्याप्तं हि सर्वम् । खशब्दाधिकरणे उपपदे शेतेः 'अधिकरणे शेतेः (३, २, १५)'—इति अच्प्रत्ययः । अङ्गुल्यो हि हस्ताग्रभागत्वात् खे आकाशे शेरते व्यवतिष्ठन्ते, आकाशस्यावकाशरूपत्वात् उपपन्नं हि तत्र शयनम् । खशया, सत्याः पृषोदरादित्वात् (६, ३, १०९) यकारलोपेन शकाराकारयोः सवर्णदीर्घत्वे खशा इति भवति, ततोऽक्षरद्वयस्य स्थानविनिमये, टाप्, शाखा । शक्नोतेर्वा पचाद्यचि (३, १, १३४) उपधादीर्घः, ककारस्य खकारश्च । शक्नुवन्ति हि ता अङ्गुलयः पुस्तकादि धारयितुं कार्य्याणि कर्त्तुं वा । यद्वा, 'शाखृ व्याप्तौ (भू० प०)' पचाद्यच् (३, १, १३४) । शाखन्ति व्याप्नुवन्ति कर्माणि । यद्वा, 'शीङ् स्वप्ने (अदा० आ०), अस्मात् 'हृश्यावयवाश्च'—

इति खप्रत्ययो बाहुलकात् हस्तावयवेऽपि भवति । शेरतेऽव-तिष्ठन्ते श्रासु नखादयः इति शाखाः । 'शतेरिव वा'—इति श्रीभोजदेवः, खप्रत्ययोऽविकृतः, इकारादेशस्य विकल्पितत्वात् पक्षे शाखानिष्पत्त्या शाखास्थानीयत्वाद्वा शाखा इष्यन्ते । तथाचामरसिंहः—'अङ्गुल्यः करशाखाः स्युः (२, ६, ८२)'—इति । 'हस्ताभ्यां दशशाखाभ्याम् (ऋ० सं० ८, ८, २५, ७)"—इति निगमः ॥

(२०) अभीशवः । व्याख्याता रश्मिनामसु । (२०पृ०) अभ्य-श्नुवते कर्माणि, अभीशते वा कर्माणि कर्तुम् । दशाभी-शुभ्यो अर्चता जरेभ्यः (ऋ० सं० ८, ४, ३०, २)"—इति निगमः ॥

(२१) दीधितयः । व्याख्याता रश्मिनामसु । (२०पृ०) अङ्गु-रीयकादिधारणाद् दीप्यन्ते । दीव्यन्ति क्रीडन्त्याभिरिति वा दधातेर्व्युत्पन्नो दीधितिशब्दः । "अग्निं नरो दीधि-तिभिररण्योः (ऋ० सं० ५, १, २३, १)"—निगमः ॥

(२२) गभस्तयः । व्याख्याता रश्मिनामसु (२८पृ०) गच्छन्ति पदार्थानाभिः पुरुषाः इति गभस्तयः । "दोग्धते मधोरं-शुं गभस्तिभिः"—इति निगमः ।

"पुष्करयाः"—इति केचित् ।

एतस्य स्थाने "सस्रुतः"—इति च केचित् पठन्ति । तास्र व्याख्याता नदीनामसु । (११५ पृ०) संसरन्ति सह गच्छन्ति कर्माणि प्रति सङ्गता वा । स्पष्टनिगमदर्शनाद्विषयः ॥

इति द्वाविंशतिरङ्गुलिनामानि ॥ ५ ॥

वश्मि(१) । उश्मसि(२) । वेति(३) । वेनति (४) । वेनति(५) । वाञ्छति(६) । वष्टि(७) ।

वेनोति(८)। जुषते(९)। हर्यति(१०)। आचके (११)। उशिक्(१२)। मन्यते(१३)। छन्त्यत् (१४)। चाकनत्(१५)। चकमानः(१६)। कनति (१७)। कानिषत्(१८)। इत्यष्टादश कान्तिकर्माणः ॥ ६ ॥

'कान्तिकर्माणः (निरु० ३, ८)'—इच्छार्था धातवः—

(१) वश्मि। 'वश कान्तौ' अदादिः परस्मैपदी। लडुत्तमैकवचनम्। "तदृहं वश्मि पवमान सोम (ऋ० सं० ७, ४, ६, ४)"—इति निगमः॥

(२) उश्मसि। वशेर्लडुत्तमपुरुषबहुवचने मसि 'सार्वधातुकमपित्। (१, २, ४)'—इति ङिद्वद्भावात् 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम् 'इदन्तो मसिः (७, १, ४६)'—इति इकारः। "ता वां वास्तून्युश्मसि गमध्यै (ऋ० सं० २, २, २४, ६)"—इति निगमः॥

(३) वेति। 'वी गतिप्रजनकान्त्यशनखादनेषु' अदादिः परस्मैपदी। "वेषि होत्रमुत पोत्रं यजत्र (ऋ० सं० १, ५, २४, ४)"—इति निगमः॥

(४) वेनति। नैरुक्तो धातुः। "पुराणवद्वर्तु वेनति (ऋ० सं० ८, ७, २३, १)"—"नासत्याभ्यां वि वेनतम् (ऋ० सं० ४, ४, १६, २)"—इति च निगमौ॥

(५) वेसति। अयमपि नैरुक्तो धातुः। 'वेशति'—इति पाठान्तरम्। निगमदर्शनान्निर्णयः॥

(६) वाञ्छति। 'वाछि इच्छायां' भौवादिकः (प०)।

विश्वेस्त्वा सर्वा वाञ्छन्तु (ऋ० सं० ८, ८, ११, १)"—इति निगमः ॥

(७) वष्टि। वशेः परस्मैपदप्रथमपुरुषैकवचनम्। "अस्य वर्ष्मा व्रजति यस्य वष्टि (ऋ० स १, २, १, ३)"—इति निगमः॥

(८) वनोति। 'वनु याचने' तनादिः (प०), अनेकार्थत्वात् धातूनामत्र कान्त्यर्थः। एवमन्यत्रापि। "आहं यद्रेकर्ष परमं वनोमि तत् (ऋ० सं० १, २, २४, ४)"—इति निगमः॥

(९) जुषते। 'जुषी प्रीतिसेवनयोः' तुदादिरात्मनेपदी, अत्र कान्तिकर्मा। "स पुष्टिं याति जोषमा चिकित्वान् (ऋ० स० १, ५, २५, ५)"—इति निगमः। 'जुषते हर्यति इति पाठात् जोषः कामः'—इति स्कन्दस्वामिभाष्यम्॥

(१०) हर्यति। 'हर्य गतिकान्त्योः' भ्वादिः परस्मैपदी। "ता जुषाणो हर्यति जातवेदाः (ऋ० स० ३, ८, ११, ३)" इति निगम॥

(११) आचके। 'चक तृप्तौ' भ्वादिरात्मनेपदी, लडुत्तमपुरुषैकवचनम्। "अस्मयोज आचके (ऋ० स० ३, ४, ८, ५)"—इत्यत्र 'कर्मलिटि उत्तमे इटि सलोपश्छान्दसः'—इति भानुदत्तः। "त्वामवस्युराचके (ऋ० सं० १, २, १८, ४)"—इति निगमः। "यस्ते मनुत्वमाचके (ऋ० स० ६, ३,४२, ५)" —इति तु 'लोपस्त आत्मनेपदेषु (७,१,४१)'। यथादृष्टं पाठः॥

(१२) उशिक्। वष्टेः 'वशः कित् (उ० {२, ६८)'—इति चिक्प्रत्यय, कित्त्वात् सम्प्रसारणम्। "उशिक् पावको अरतिः सुमेधाः (ऋ० स० ७,८, २८, १)"—इति निगमः॥

(१३) मन्यते। 'मन ज्ञाने' दिवादिरात्मनेपदी। "आश्रित्य मन्यमानस्तुरश्चित् (ऋ० स० ५, ४, ८, २)"—"यदि मन्येतोपमुत्थमित्योदनः"—इति च निगमौ॥

(१४) छन्त्सत् । 'छदि संवरणे' चुरादिः । पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३, ४, ९४)', 'सिब्बहुलं लेटि (३, १, ३४)' 'इतश्च लोपः परस्मैपदेषु (३, ४, ९७)' । 'वृष्णा छन्दुर्भवति हर्यतः (ऋ० सं० १, ४, १८, ४)'—इत्यत्र 'मन्यते छन्त्सत् चाकनत् इति कान्तिकर्मसु पाठात्, 'तदिन्न्वे छन्त्सद् वपुषः (ऋ० सं० ७, ७, २८, ३)'—इति प्रयोगदर्शनाच्च छदिः कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम् । 'दरेचुताय छन्त्सत् (ऋ० सं० २, १, २१, ६)"—इति, "अच्छान्तुः पर्ष्वकृत्यः (ऋ० सं० ८, ६, २६, ६)"—इति च *निगमौ* ॥

(१५) चाकनत् । 'कनी दीप्तिकान्तिगतिषु (भू० प०)' यङ्लुगन्तः । 'नुगतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३, ४, ९४)' 'इतश्च लोपः परस्मैपदेषु (३, ४, ९७)' । "वृष्णेदिन्द्रस्य चाकनत् (ऋ० सं० ६, २, ३८, १)"—"ये निः प्रचिष्ठ चाकनत्"—इति च निगमौ ॥

(१६) चकमानः । 'चक तृप्तौ' भ्वादिरात्मनेपदी । 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)' । "चकमानः पिबतु दुग्धमंशुम् (ऋ० सं० ४, २, ७, १)"—इति निगमः ।

(१७) कनति । 'कनी दीप्तिकान्तिगतिषु (भू० प०)', भ्वादिः परस्मैपदी । "भानत् कनति नुदतम्"—"इन्दुः सोमस्य काणुका (ऋ० सं० ६, ४, २८, ४)"—इति च निगमौ ।

(१८) कानिषत् । कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधावृद्धिर्बाहुलकात् इकारलोपः पूर्ववत् । "अग्ने तृतीये सवने हि कानिषः (ऋ० सं० ३, १, ३१, ५)"—इति निगमः ॥

इत्यष्टादश कान्तिकर्माणो धातवः ॥ ६ ॥

अन्धः(१) । वाजः(२) । पयः(३) । प्रयः(४) । पृक्षः(५) । पितुः(६) । वयः(७) । सिनम्(८) । अवः(९) । क्षु(१०) । धासिः(११) । इरा(१२) । इळा (१३) । इषम् (१४) । ऊर्क् (१५) । रसः (१६) । स्वधा(१७) । अर्कः(१८) । क्षद्म (१९) । नेमः(२०) । ससम्(२१) । नमः(२२) । आयुः (२३) । सूनृता(२४) । ब्रह्म(२५) । वर्चः(२६) । कीलालम्(२७) । यशः(२८) । इत्यष्टाविंशतिरन्ननामानि ॥ ७ ॥

(१) अन्ध । 'अन्ध इत्यन्ननाम । आध्यानीय भवति (निरु० ५, १)'—इति भाष्यम् । 'आभिमुख्येन हि ध्यातव्य सर्वेषाम् प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी । आङ्पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोप', उपसर्गस्य ह्रस्वत्व नुडागमश्च धातो । यद्वा, 'अद भक्षणे (अदा० प०)'—इत्यस्मात् 'अदेर्नुम् धश्च (उ० ४, २००)'—इति कर्मणि कर्त्तरि वा कारके असुनि नुमागमो धकारश्चान्तादेश. । अद्यते प्राणिभि, तान् वा स्वयमत्ति । तथाच श्रुति —'अद्यतेऽत्ति च भूतानि (तै० उ० २, २)'—इति । 'अनित्यनेनान्ध'—इति क्षीरस्वामी । अनितेरसुनि बाहुलकात् धुगागम । अनित्यन्नं हि प्राणनम् । "आमेभि. सिञ्चता मद्यमन्धः (ऋ० स० २, ६, १२, १)"—"इन्द्रो हि मत्स्यन्धसः (ऋ० स० १, १, १७, १)"—इति च निगमौ ॥

(२) वाज. । 'वज गतौ (भू० प०)' । 'अकर्त्तरि च कारके

संज्ञायाम् (३, ३, १९)'—इति घञ्। 'अजिव्रज्योश्च (७, ३, ६०)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः। तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वादजेरपि कुत्व-प्रतिषेध सिद्धो भवति वाज.'—इति। निगम्यते अभिगम्यते हि तदर्थः। गच्छत्यनेनादत्तेन न सुखानि, भुक्तेन वृत्तिं वा गच्छत्यनेन शुद्धेन सत्वशुद्धिं भोक्ता। यदाहुः—'आहारशुद्धौ सत्वशुद्धिरिति। यद्वा, गत्यर्था बुद्धार्थाः, जानात्यनेन भुक्तेन धर्मम्। 'दश धर्मान् विजानन्ति धृतराष्ट्रनिबोधनात्। मत्तः प्रमत्त उन्मत्तः श्रान्त क्रुद्धो बुभुक्षितः॥'—इति श्रीमहाभारतम्। सर्वत्रान्ननामसु गत्यर्थाद् व्युत्पादितेष्वेवमर्थो बोद्धव्यः। "सुतानां वाजिनीवसू (ऋ० सं० १, १, ३, ५)"—अन्यत्र "वाजं इवनुष्यद् रथम् (ऋ० स० १, ४, १२, १)"—इति च निगमौ॥

(३) पयः। व्याख्यातं रात्रिनामसु पय इत्यत्र (निरु० २, ५)। यद्वा, 'अय पय गतौ (भू० आ०)'—इत्यस्मादसुन्। पीयते ह्यन्नं। तद्धि चतुर्विधम् पेयचोष्यलेह्यचर्व्यभेदेन। वर्द्धन्ते हि तेन भुक्तेन। 'जातान्यन्नेन वर्द्धन्ते (तै० उ० २ २)'—इति श्रुतिः। "पर्यस्वानग्न आगहि (ऋ० स० १,२, १२, २)"—"यदी सुतस्य पर्यसा पियानः (ऋ० स० १, ५, २७, ३)"—इति च निगमः॥

(४) प्रयः। व्याख्यातमुदकनामसु (पृ०८३)। "उपप्रयो भिरागतम् (ऋ० सं० १, १, ३, ४)"—"सुराय प्रयोन इन्द्र सोमं मादिनाय (ऋ० सं० १, ४, १७, १)"—"प्रर्यस्वन्तः प्रति हर्यामसि त्वा (ऋ० स० ८, ६, २१, ३)"—इति च निगमाः॥

(५) श्रवः। 'श्रु श्रवणे (भू० प०)'। कर्मण्यसुन्। श्रूयते ह्यन्नं वर्धमानं श्रवो यशः। तद्धर्मत्वाच्छन्दः वा। "सत्यश्चित्र

श्रवस्तमाः" "मर्त्तं दधामि श्रवंसे दिवे दिवे (ऋ० सं० १, २, २३, २)"—"अभिश्रव ऋज्यन्तः (ऋ० सं० ४, ७, ८, ३)"—इति च निगमा.। "उप प्रयोभिरागतम् (ऋ० सं० १, १, १, ४)"—इत्यादिषु निरुक्तटीकायां स्कन्दस्वामिना प्रय इत्यन्नना-मेत्युच्यते। तथाच 'अर्चिति श्रवः (ऋ० सं० १, ३, २०, ४)'—इत्यादिनिगमेषु वेदभाष्ये, 'श्रव इत्यन्ननाम'—इति स्पष्ट-मुच्यते। निरुक्तटीकायान्तूभयथा (निरु० १०, ३)। अतः 'प्रयः'श्रव'शब्दयोः उभयोरप्यन्ननामत्वं स्पष्टम्। तत्रैकतमस्य पाठो विद्वद्भिर्निर्णीयताम्॥

(५) पृचः। 'पृची सम्पर्के (रु० प०)'। औणादिके क्विपि धातो' कुगागम.। सम्पृक्तं हि तज्ज्वालाभिः। पृचतिर्दानार्थ इति वा (अदा० आ०)। "वायो तवं प्र पृञ्चती (ऋ० सं० १, १, ३, ३)"—इत्यादौ माधवेनोक्तम्। तत्र क्विपि बाहुलकान्न-लोपः। दीयते ह्यन्नमर्थिभ्यः। "त्रिः पृचो अस्मे अक्षरेव पिन्वतम् (ऋ० सं० १, ३, ४, ४)"—इत्यत्र स्कन्दस्वामिभा-ष्यम् 'पृक्षा अन्ननामैतत् पठन्ति। "पृचो भरन्त वाम् (ऋ० सं० ४, ४, १२, ३)"—इत्यादिषु बहुवचनान्तस्य सामाना-धिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'—इति। "अग्निं विश्वा अभि पृचः सचन्ते (ऋ० सं० १, ५, १६, २)"—"पृचो वहतमश्विना (ऋ० सं० १, ४, २, ६)"—इति च निगमौ। "त्वं शर्धो मारुतं पृक्ष ईशिषे (ऋ० सं० २, ५, १८, १)"—इत्यादौ तु पक्षे कवचनान्तमपि दृश्यते॥

(६) पितु। 'पा रक्षणे (अदा० प०)'। 'कमिमनिजनि-भायागापाहिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययो बाहुलका-दिकारः। रक्षितव्यं ह्यन्नम्। प्यायतेर्बाहुलकात् तुप्रत्यये धातो. पिभावश्च। "पितुं नु स्तोषम् (ऋ० सं० २, ५, ६, १)"—

प्रभृन्दिने । पितुमर्दवेता वचः (ऋ० सं० १, ७, १२, १)"—इति निगमो: ॥

(७) वयः । 'वी गतिप्रजनकान्त्यसनखादनेषु (अदा० प०)' । असुन् । गत्यादिष्वर्थोऽस्यार्थोऽस्यानुगुणः कारकभेदेन । 'वय गतौ (भू० आ०)'—इत्यस्मादसुन् वा । "वृहदंसो वय इन्द्रो दधाति (ऋ० सं० २, १, १०, २)"—"परि प्र स्मोमनं यां ययो गातव (ऋ० सं० ५, ५, १६, ४)"—इति च निगमो ॥

केचिदस्य स्थाने "सुतः" इति पठन्ति । तत्र 'पूङ् प्राणिप्रसवे (अदा० आ०)' । 'ताताशतशातसुत'—इत्यादिना क्तप्रत्ययः, पूञो ह्रस्वत्वञ्च निपात्यते । सूयते ह्यया । "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३, ७६) । यद्वा, 'सु पु गतौ (भू० प०)'—इत्येतद्विषय निपातनम् । निगमोऽन्वेषणीयः ॥

(८) सिनम् । 'षिञ् बन्धने (स्वा० क्र्या० उ०)' । 'इणसिञ्दीङ्ष्यविभ्यो नक् (उ० ३, २)' । 'सिनाति भूतानि'—इति भाष्यम् । 'सिनाति बध्नाति चुधा विनश्यन्ति भूतानि धारयति'—इति स्कन्दस्वामी । सीयते अनेनेति वा । अनेन हि प्रत्यादयो वध्यन्ते । "येन स्मासिनं भरथः सखिभ्यः (ऋ० सं० ३, ४, ८, १)"—इति निगमः ॥

(९) अवः । 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (भू० प०)' । असुन् । धात्वर्थेन योगः सर्वात्रीकर्त्तव्यः । "अवत् ब्रह्मवसागमत्"—"अग्निर्गिरोऽवसा वेतु धीतिम् (ऋ० सं० १, ५, २५, ४)"—इति निगमो ॥

(१०) क्षु । 'टु क्षु शब्दे (अदा० प०)'—'क्षि निवासगत्योः (तु० प०)' । 'खनिक्ष्यां डिच (उ० १, ३२)'—इति

विधीयमानो डित्कुप्रत्ययो बाहुलकादाभ्यामपि भवति। चूयते शब्द्यते स्तोतृभिः स्तूयते देवतात्वादत्र सूक्तादिभिः गुणवत्तया वा लोकैः, निवसत्यनेन वा। "त्वं वाजस्य क्षुमतो राय ईशिषे (ऋ० सं० २, ५, १८, ५)"—"आ तू न इन्द्र क्षुमन्तम् (ऋ० सं० ६, ५, ३७, १)"—इति च निगमौ॥

(११) धासि। 'भूधिशुषिकुपिभ्यः क्विः (उ० ३, १५१)'—इतिर्बाहुलकात् धाञोऽपि भवति, बाहुलकादेव ईत्वं न भवति। दीयतेऽर्थिभ्यो धारयति प्राणान् वा। "विद्मा सुतनयाय धासिम् (ऋ० सं० १, ५, १, ३)"—अत्र 'धासि रन्ननाम, इह तु पयस आसन्नकारणत्वात् गोषु प्रयुक्तः'—इति स्कन्दस्वामी॥

(१२) इरा। व्याख्यातं नदीनामसु (११७ पृ०)॥

(१३) इला। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, क्षिप्यते उदरे, स्वपित्यनेन भुक्तेन न हि बुभुक्षितस्य निद्रास्ति। "तस्मा इला सुवीरा मा यजामहे (ऋ० सं० १,३, २०, ४)"—इति निगमः॥

(१४) इषम्। 'इषु इच्छायाम् (तु० प०)'। औणादिकः क्विप्। इष्यत इति। यद्वा, 'इषु गतौ (दि० प०)' क्विप्। वेदे प्राचुर्येण दर्शनाद् द्वितीयैकवचनान्तम्। "इषं स्तोतृभ्य आभर (ऋ० सं० ३, ८, २२, १)"—"अग्निना रयिमश्नवत्पोषमेव दिवेदिवे. (ऋ० सं० १, १, ५, १)"—इति च निगमौ॥

(१५) ऊर्क्। 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः, पक्वं सुप्रवृक्णमिति वा (निरु० ३, ८)'—इति भाष्यम्। 'ऊर्जयति' प्रबलति प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। 'पक्वमिति वा' पक्वशब्दस्य पकारलोप कृत्वा कशब्दं व्यत्यस्य वकारस्योपरि कृते रगागमे चोर्गिति भवति। 'सुप्रवृक्णमिति वा' अत्र रशब्दलोपे कृते, सयोगादिलोपे कृते, वकारस्योपरि

बकि जखे च क्षते जगिति भवति। सुष्ठिदं हि तद्भवति मृदुत्वात्'—इति स्कन्दस्वामियत्र:। 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया'—इति भट्टभास्करमिश्र:। अत्र 'ऊर्जबलप्राणनयो: (चु० प०)' इत्यस्मादेव करणे क्विप्। "यंसि तनुमूर्जं न विश्वध चरध्यै (ऋ० सं० १, ५, ५, ३)"—इति निगम: ॥

(१६) रस:। व्याख्यातमुदकनामसु (८२पृ०)। "मह्ने यत् पित्र ईं रसं दिवे क: (ऋ० सं० १, ५, १६, ४)"—इति निगम: ॥

(१७) स्वधा। स्वशब्दे उपपदे दधाते: (जु० उ०) 'गेहे क: (३, १, १४४)'—इति कप्रत्ययो बाहुलकाद् भवति। स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा। "विश्वा हि माया अवसि स्वधा व: (ऋ० सं० ४, ८, २४, १)"—"आदह स्वधामनु (ऋ० स० १, १, ११, ४)"—इति च निगमौ ॥

(१८) अर्क:।

(१९) क्षद्म। व्याख्यातमुदकनामसु (८२पृ०)। सुखिवर्त्तनादिके स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन सुखेन भोक्तेति

२ २उ ३१२३१ २
वा, "अहमस्मि प्रथमजा (सा० सं० आ० १, ८)"—इति श्रुति:। माधवपक्षे खदिरशनार्थ: (भो०), अश्यते बुभुक्षित:। "स्वादु क्षद्मापो वसतो स्योनकृत्"—इति निगम: ॥

(२०) नेम:। 'णीञ् प्रापणे (भू० उ०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १, १३७)'। नमयति सुगतिं दातारं, नीयते देहयात्रा अनेनेति वा ॥

"नेमा"—इति नकारान्तं केचित् पठन्ति। तदा बाहुलकादभिधानलक्षणाद्वा नकारस्येत्त्वच्छाया अभाव:। एवमेवास्मिन् सूत्रे हस्तिकारेणोक्तम्। यद्वा, मनिनि रूपसिद्धि:। निगमदर्शनान्निर्णय: ॥

(२१) सखम्। 'सस स्वप्ने (अदा० प०)'। 'पुंसि सञ्ज्ञायां घ प्रायेण (उ० ४, ११८)। स्वपन्त्यनेन भुक्तेन, न हि क्षुधितस्यातिनिद्रास्ति। "सुसंनं चिदिमुदायाँवसो वसु (ऋ० सं० १, ४, ८, ३)"—इति निगम॥

(२२) नम। 'णमु प्रह्वत्वे (भू० प०)'। असुन्। उपनत जातमात्रेभ्यो भूतेभ्य पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात् नमन्त्यनेन हेतुना तदन्त प्रयोजनस्य च हेतुत्वेन विवक्षा। "प्र वो मुहे मह्नि नमो भरध्वम् (ऋ० सं० १, ५, १, २)"—"एना वो अग्निं नमसा (ऋ० सं० ५, २, २१, १)"—इति च निगमौ॥

(२३) धायु। अनन प्राणनमस्ति। "धाहि सदमिद् विश्वायु (ऋ सं० १, २, २२, ३)"—इति निगम॥

(२४) सूनृता। व्याख्यातमुपोनामसु (पृ०४३)। सुष्टु नयन्ति सुखयुक्तान् अय्यते वा तदर्थिभि। यद्वा, शोभना नर सुनर 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घ, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घ। वा टाप। "पुंरुणीथे जरते सूनृतावान् (ऋ० सं० १, ४, २५, ७)"—"अश्विना सूनृतावती (ऋ० सं० १, २, ४, ३)"—इति च निगमौ॥

(२५) ब्रह्म। 'वृहि वृहि वृद्धौ (भू० प०) 'ब हेर्नलोपश्च (उ० ४, १४१)'—इति मनिन्। परिवृढ भवति सर्वप्राणिभि। सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात्, स्वभावतो वा परिवृढ सर्वस्य जगतो भरणात्, वर्द्धन्तेऽनेन भूतानीति वा 'जातान्यन्नेन वर्द्धन्ते (तै० उ० २, २)'—इति श्रुति। "उप ब्रह्माणि वाघत (ऋ०सं० १, १, ५, ५)"—इति च निगम॥

(२६) वर्चः। 'वर्च दीप्तौ (भू०आ०)'। असुन्। दीप्तिकरं द्रव्यं शरीरादेः। "तमा संसृज वर्चसा (ऋ० सं० १, २, १२, ३)"—"सं माग्ने वर्चसा सृज (ऋ० सं० १, २, १२, ४)"—"आयुषा सुह वर्चसा (ऋ० सं० ८, ३, २७, ४)"—इति निगमाः॥

(२७) कीलालम्। 'कल गतौ (प०)' चौरादिकः, 'कील बन्धने (भू० प०)' 'कील खण्डने।' कील बन्धने इति व्युत्पत्तौ सिनवदर्थः। कील खण्डने इति तु सुच्छेदमित्यर्थः। अपिवा कीला जाठराग्नेर्ज्वाला, ता लाति 'कर्मण्यण् (३, २, १)'। "कीलालपे सोमपृष्ठाय वेधसे (ऋ० सं० ८, ४, २२, ४)"—इति निगमः॥

(२८) यशः। व्याख्यातमुदकनामसु (पृ० ८८)। यशो यशोर्दीप्त्यर्थात्। कीर्त्तिकरं वेति माधवः। तदा वर्चस्वदर्थः। "यशेन पृक्तं मधुगोष्वन्तरा (ऋ० सं० ८, ६, २, ५)"—"तुविद्युम्न यशस्वता (ऋ० सं० ३, १, १६, ६)"—इति निगमौ॥

इत्यष्टाविंशतिरन्ननामानि॥ ७॥

**आवयति(१)। भर्वति(२)। बभस्ति(३)। वेति(४)। वेवेष्टि(५)। अविष्यन्(६)। बप्सति(७)। भसथः(८)। बभ्धाम्(९)। ह्वरति(१०)। इति दृश्यात्तिकर्माणः॥ ८॥**

(१) आवयति। आङ्पूर्वात् वेतेः (अदा० प०) 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुगभावः। यद्वा, 'वेञ् तन्तुसन्ताने (उ०)' भूवादि, अनेकार्थत्वात् धातूनामत्तिकर्मत्वम्। एवमन्येष्वपि द्रष्टव्यम्। "आ तु नः स वयति गव्यमश्व्यम् (ऋ० सं० ६, २, २, १०)"—इति निगमः॥

(२) भर्वति। 'भर्व हिंसायाम्' भूवादिः परस्मैपदी। "पृथूर्न्युग्निं रंनु याति भर्वन (ऋ० सं० ४, ५, ८, २)"—तेन सूभर्वं युतर्वत् सहस्रम् (ऋ० सं० ८, ५, २०, ५)"—इति निगमौ॥

(३) बभस्ति। 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी। "हरी इवान्ध्रांसि बप्संता (ऋ० सं० १, २, २६, २)"—इति निगमः॥

(४) वेवेष्टि। 'विष्लृ व्याप्तौ (जु० उ०)'। 'जुहोत्यादिभ्यः श्लुः (२, ४, ७५)'। "स्वतैर्दयोयधातिथि ज्योतिष्कृत्वा परिवेवेष्टि"—"यदा त्वा अतिथयः परिवेष्टि"—"मरुतः परिवेष्टारः"—इति च निगमाः। प्रयोजकव्यापारे प्रयुक्तत्वात् निरूपणीयम्॥

(५) वेति। वी गत्यादौ अदादिः परस्मैपदी। "वीतं पातं पयस उस्रियायाः (ऋ० सं० २, २, २२, ४)"—इति निगमः॥

(६) भविष्यन्। भवतेर्वर्त्तमाने व्यत्ययेन ऌट्, ऌटः सद्वा। "तृष्वविष्यन्नतुतिपु तिष्ठति (ऋ० सं० १, ४, २३, २)"—इति निगमः। अत्र च 'भविष्यन्नत्तिकर्मा भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी। तस्मादविष्ठादिति पाठो न युक्तः॥

(७) बप्सति। भसेः प्रथमपुरुषे बहुवचने 'घसिभसोर्हलि च (६, ४, १००)'—इत्युपधालोपे रूपम्। "उद्भिर्वनानि बप्संति (ऋ० सं० ६, ३, २८, ३)"—इति निगमः॥

(८) भसथः। भसेर्लेटि थसि 'बहुलं छन्दसि (२, ४, ७६)'—इति शपः श्लुर्न भवति। "न देवा भसथेथुन (ऋ० सं० ४, ८, २५, ४)"—इति निगमः॥

(९) बब्धाम्। भसेर्लेटि तसस्तामि श्लौ द्विर्वचनान्तत्वानित्वत्वात् उपधालोपः माप्नोति छान्दसत्वात्, 'घसिभसोर्हलि

च (६, ४, १००)'—इत्युपधालोपः । 'घि च (८, २, २५)'—इत्यादिसूत्रेषु सिचो लोप इति पचे सकारलोपश्छान्दसः सकारमात्रलोप इति पचे 'झलोझलि (८, २, २६)'—इति सलोप, भस्त्वजश्त्वे । बब्धामिति पृथक्पाठे प्रयोजन मृग्यम् । "बब्धां ते हरीधाना"—इति निगमः ॥

(१०) ह्वरति । 'ह्वृ कौटिल्ये' भूवादि परस्मैपदी । "अपामतिष्ठद्धरुणह्वरन्तम्" (ऋ० सं० १, ४, १८, ५)"—"नूय ह्वरे यदुर्वरा अपिन्वन् (ऋ० स०१, ५, २, १)"—इति निगमो ॥

इति दशाक्तिकर्माणि. ॥ ८ ॥

ओजः (१) । वाजः (वा) पाजः (२) । शवः (३) । तरः (४) । त्वः(५) । त्वचः(६) । शर्द्धः (७) । वाधः (८) । नृम्णम्(९) । तविषी(१०) । शुष्मम्(११) । शुष्णम्(१२) । शूषम्(१३) । दचः (१४) । वीलु (१५) । च्यौत्नम्(१६) । सहः(१७) । यहः(१८) । वधः (१९) । वर्गः (२०) । वृजनम् (२१) । वृक् (२२) । मज्मना (२३) । पौंस्यानि (२४) । धर्णसिः(२५) । द्रविणम्(२६) । स्यन्द्रासः (२७) । शम्बरम्(२८) । इत्यष्टाविंशतिर्बलनामानि ॥९॥

(१) ओज. । व्याख्यातमुदकनामसु (पृ०८४) । उब्जत्यनेन, बलवत्सन्निधौ हि ऋजवो भवन्ति भीत्या, न्यग्भावयत्यनेन वा प्रभून् । वर्द्धतेऽनेन ऐश्वर्यादि, वर्द्धते व्यायामादिना । इमावर्थान्तरावपि द्रष्टव्यौ बोद्धव्यौ । 'सर्वधिकम्'—इति

माधवः। हिंस्यन्तेऽनेन शत्रवो वा। 'उषेर्जुट् च'—इति न्योभोजदेवः। वसूनि गुणः। श्रोपति दहति शत्रून्। "श्रोजसो जातमुतमन्य एनम् (ऋ० सं० ८, ३, ४, ३)"—"वसूनि जाते जनमान ओजसा (ऋ० सं० ६, ७, २, ३)"—इति निगमौ।

(२) वाजः। व्याख्यातमन्ननामसु (पृ०१७०)। गच्छत्यनेन शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु वोद्धव्यौ। 'वाजो बल, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। "परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ४)"—इति निगमः॥

पाजः। 'पा रक्षणे (अदा० प०)'। 'पातेर्जुट् च'—इत्यसुन्। बलेन हिंस्यते सर्वम्। "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३, ४, २३, १)"—इति निगमः। "समिद्धस्य रुशददर्शि पाजः (ऋ० सं० ३, ८, १२, २,)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ३)'—इत्यत्र बलनामैतदित्युक्तम्, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ० सं० १, ५, ७, १)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ० सं० १, ४, ११, १)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो वाजपाजशब्दयोरुभयोरपि बलनामत्वं स्पष्टम्, तत्रैकतमस्य पाठो विद्वद्भिरधीयताम्॥

(३) शवः। व्याख्यातमुदकनामसु। (८३ पृ०) "मा भेम शवसस्पते (ऋ० सं० १, १, २१, २)"—इति निगमः॥

(४) तरः। 'तृ प्लवनतरणयोः (भू० प०)' असुन्। तर-

त्वनेन आपदम् । "यावत्तरो मघवन् यावदोजः (ऋ॰ सं॰ ६, ३, ३, २,)"—इति निगमः ॥

(५) तवः । तवतिर्बलार्थः, असुन् । "अपादमिन्द्र तवसा जघन्थ (ऋ॰ सं॰ ३, २, २, ३)"—"योगे योगे तवस्तरम् (ऋ॰ सं॰ १, २, २६, २)"—इति च निगमौ ॥

(६) त्वचः । 'तनू तनूकरणे (भू॰ प॰)' असुन् । तनूक्रियन्ते तेन शत्रवः । "स प्र रिक्थो त्वचसा क्षो दिवश्च (ऋ॰ सं॰ १, ७, १०, ५)"—इति निगमः ॥

(७) शर्धः । 'शर्धतिरुत्साहार्थः'—इति स्कन्दस्वामी, असुन् । शत्रुजयादावनेन उत्साहितत्वात् । "अभ्र इव शिर्यर्द्धो महत्तोयद्दर्पसम् (ऋ॰ सं॰ ४, ३, १५, ६)"—इति निगमः ॥

(८) बाधः । 'बाधृ विलोडने (भू॰ आ॰)' 'अकर्त्तरि च कारके संज्ञायाम् (३, ३, १९)'—इति घञ् । बाध्यतेऽनेन शत्रवः । निगमोऽन्वेषणीयः ॥

(९) नृम्णम् । 'नृम्णं नॄन् नतम् (निरु॰ ११, ९)'—इति भाष्यम् । 'नॄन् शत्रुभूतान् प्रति नमति, स्वयं वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी । 'इन्द्रे नृम्णं हि ते शवः (ऋ॰ सं॰ १, ५, २९, ३)'—इत्यत्र ऋक्भाष्यम्—'यस्माच्छत्रुभूतानां मनुष्याणामपि नमनकारणं तव बलम्'—इति । स एव तत्र पृषोदरादित्वेन नृनमनशब्दस्य वर्णलोपादौ नृम्णमिति द्रष्टव्यम् । "स्वर्वो नृम्णं च रोदसी सपर्यतः (ऋ॰ सं॰ ८, १, ९, १)"—"महिष्यवस्तुविनृम्णम् (ऋ॰ सं॰ १, ३, २०, १)"—इति च निगमौ ॥

(१०) तविषी । तविः सौत्रो धातुर्बलार्थः । तवेष्टिषन्-प्रत्ययः । टित्त्वात् ङीप् । "कृष्णा रजांसि तविषीं दधानः

माधवः। हिंसन्त्यनेन शत्रवो वा। 'उब्जेर्जुट् च'—इति श्रीभोजदेवः। बलनि गुणः। ओषति दहति शत्रून्। "ओजसो जातमुतमन्य एनम् (ऋ० सं० ८, ३, ४, ३)"—"वधं जाते जनमान ओजसा (ऋ० सं० ६, ७, ३, ३)"—इति निगमौ।

(२) वाजः। व्याख्यातमन्ननामसु (पृ०१७०)। गच्छत्यनेन शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ। 'वाजो बलं, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। "परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ४)"—इति निगमः॥

पाजः। 'पा रक्षणे (अदा० प०)'। 'पातेर्जुट् च'—इत्यसुन्। बलेन हिंस्यते सर्वम्। "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३, ४, २३, १)"—इति निगमः। "समिद्धस्य रुशददर्शि पाजः (ऋ० सं० ३, ८, १२, २,)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ३)'—इत्यत्र बलनामैतदित्युक्तम्, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ० सं० १, ५, ७, १)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ० सं० १, ४, ११, १)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो

अनेन यावदम्। "यावत्तरो मघवन् यावदोजः (ऋ० सं० १, ३, ३, २,)"—इति निगमः।

(५) तवः। तवतिर्बधार्थः, असुन्। "अपादमिन्द्र तवसा जघन्थ (ऋ० सं० ३, २, २, ३)"—"योगे योगे तवस्तरम् (ऋ० सं० १, २, २८, २)"—इति च निगमौ।

(६) त्वचः। 'तनू तनूकरणे (भू० प०)' असुन्। तनूक्रियन्ते तेन प्रवयः। "स प्र रिक्तो त्वचसा क्षो दिवश्च (ऋ० सं० १, ७, १०, ५)"—इति निगमः।

(७) मर्दः। 'मर्दतिर्बलार्थः'—इति स्कन्दस्वामी, असुन्। मनुजयादावनेन उत्साहितत्वात्। "अभ्रं जिग्रर्त्यो मरुतोयदर्णसम् (ऋ० सं० ४, ३, १५, ६)"—इति निगमः॥

(८) बाधः। 'बाधृ विलोडने (भू० आ०)' 'अकर्त्तरि च कारके संज्ञायाम् (३, ३, १९)'—इति घञ्। बाध्यतेऽनेन प्रवयः। निगमोऽन्वेषणीयः॥

(९) नृमणम्। 'नृमणं नॄन् नतम् (निरु० ११, ९)'—इति भाष्यम्। 'नॄन् मनुभूतान् प्रति नमति, अर्थी वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी। 'इन्द्र नृमणं हि ते शवः (ऋ० सं० १, ५, २८, ३)'—इत्यत्र ऋग्भाष्यम्—'यस्मान्नतुभूतानां मनुष्याणामपि नमनकरणं तव बलम्—इति। स एव तत्र पृषोदरादित्वेन नृनमनशब्दस्य वर्णलोपादौ नृमणमिति द्रष्टव्यम्। "अवो नृमण नु रोदसी चपर्यतः (ऋ० सं० ८, १, ९, १)"—"मंहिष्ठवसुविन्नृमणम् (ऋ० सं० १, ३, २७, १)"—इति च निगमौ।

(१०) तविषी। तविः सौत्रं वृत्त्यर्थः। तवेष्टिषन्-प्रत्ययः। टित्त्वात् ङीप्।

[न—मृजो गवौ (तु० प०)'। भौवा-

दिभ्यो मनिन् '(उ० ४, १४०)। 'भवां जग् भवि (८, ५३)' सुत्वम्, तृतीयैकवचनम्। मज्जयति शत्रून्। "नाभा पृथिव्या भुवनस्य मज्मना (ऋ० सं० २, २, १२, ४)"—"स दुग्धहानि समिधानि मज्मना (ऋ० सं० १, ४, १८, ५)"—"वि रोदसी मज्मना बाधते शव (ऋ० सं० १, ४. १०, ५)"—इति निगमाः। निगमेषु तृतीयैकवचनान्तस्य प्रायशो दर्शनात् तदन्तः पठितः॥

(२४) पौंस्यानि। 'पुंसि अभिवर्द्धने (प०) चुरादिः। 'कृत्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः। "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ० सं० ४, ७, ८, ३)"—"यस्मिन् विश्वानि पौंस्या (ऋ० सं० १, १, १०, ४)"—"महत्तदस्य पौंस्यम् (ऋ० सं० १, ५, ३०, ५)"—इति निगमः॥

(२५) धर्णसि। 'धृञ् धारणे (भू० उ०)'। "सानसिवर्णसिपर्णसि (उ० ४, १०४)"—इत्यसिप्रत्ययोनु सागमोऽपि निपात्यते गुणः। ध्रियतेऽनेन राज्यादि। निगमोऽन्वेषणीयः॥

(२६) द्रविणम्। 'द्रु गतौ (भू० प०)'। 'द्रुदक्षिभ्यामिनन् (उ० २, ५२)'। "सनो ददातु द्रविणम्"—इति निगमः॥

(२७) स्यन्द्रास। 'स्यदि किञ्चिच्चलने (भू० आ०)' 'यज्ञ्यूरन्युसिलिन्धेधपुंड्रुतीन्द्रयीप्रगोरेन्द्राभद्रस्यन्द्रकुलीरादयः' इति रन्प्रत्ययान्तो निपात्यते। तस्मात् जसेरसुक् (७, १, ५०)। स्यन्दतेऽनेन शत्रून्। निगमोऽन्वेषणीयः॥

(२८) शम्बरम्। व्याख्यातमुदकनामसु (१०५ पृ०)। यतेऽनेन शत्रु, संवृणोति वा तत्तत आपदम्। शमनमुपद्रवाणामुत्कर्ष च युद्धादौ, शम्बेनेन्द्रेणादीयते वा।

देवताह्वेन्द्रः। 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु० ७, १०)'—इति भाष्यम्। निगमोऽन्वेषणीय॥

इत्यष्टाविंशतिर्बलनामानि॥९॥

मघम् (१)। रेक्णः (२)। रिक्थम् (३)। वेदः (४)। वरिवः (५)। श्वात्रम् (६)। रत्नम् (७)। रयिः (८)। क्षत्रम् (९)। भगः (१०)। मीळ्हुम् (११)। गयः (१२)। द्युम्नम् (१३)। इन्द्रियम् (१४)। वसु (१५)। रायः (१६)। राधः (१७)। भोजनम् (१८)। तना (१९)। नृम्णम् (२०)। बन्धुः (२१)। मेधा (२२)। यशः (२३)। ब्रह्म (२४)। द्रविणम् (२५)। श्रवः (२६)। वृत्रम् (२७)। ऋतम् (२८)। इत्यष्टाविंशतिरेव धननामानि॥१०॥

(१) मघम्। मंहतिर्दानकर्मा (प० ३, २०, १०)। 'घञर्थे कविधानम् (३, ३, ५८वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् कप्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च। दीयतेऽर्थिभ्य। "तेभिरिन्द्र चोदय दातवे मघम् (ऋ० सं० ७, २, ३३, ५)"—"यदिन्द्र दक्षिणा मघोनी (ऋ० सं० २, ६, ६, ६)"—इति निगमौ॥

(२) रेक्णः। 'रिचिर् विरेचने (रु० उ०)'। 'रिचेर्धने चिच्च (उ० ४, १९४)'—इत्यसुन्, नुडागमो गुणश्च, चित्त्वात् 'चजोः कुघिण्ण्यतोः (७, ३, ५२)'—इति कुत्वम्। 'रेक्ण इति धननाम, रिच्यते प्रयत (निरु० ३, २)'—इति भाष्यम्।

रिच्यते भवतिष्ठते म्रियत म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थ । 'रेक्णो धन रिचे प्रेरणार्थात्'—इति माधव । प्रेर्यतेऽनेन दत्तेन भृत्यादिः कर्मसु । "प्राई यद्रेक्णं परम वनोषि तत् (ऋ० स० १, २, ३४, ४)"—"पुरि मद्य आरणस्य रेक्णः (ऋ० सं० ५, २, ६, २)"—इति च निगमौ ॥

(३) रिक्थम् । रिचे (रु० उ०) 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २, ६)'—इति थक् । पूर्ववदर्थ । "न जामये तान्वो रिक्थमारैक् (ऋ० स० ३, २, ५, २)"—इति निगम ॥

(४) वेद । 'विद्लृ लाभे (भदा० प०)' । असुन् । विद त्येतत्, लभ्यते वाऽनेन धर्मादि । "होतार विश्ववेदसम् (ऋ० स० १, १, २२, १)"—इति निगम ॥

(५) वरिव । 'वृञ् वरणे (स्वा० उ०)' अस्मात् यङ्लुगन्तात् असुनि बाहुलकादिलोपः । भृश व्रियते, वरिवसो हेतुत्वाद्वा वरिव 'वित्त बन्धुर्वय कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् (२, १३६)'—इति मनु । "युधा देवेभ्यो वरिवश्चकर्थ (ऋ० स० १, ४, २५, ५)" —"अ यो रोहन् वरिव पूरवे क (ऋ० स० १, ५, ५, २)" —इति निगमौ ।

(६) म्नावम् । आप्नशब्द उपपदे 'अत सातत्यगमने (भ्वा० प०)'—इत्यस्मात् 'आदत्यचिदचि'—इति कप्रत्यय, पृषोदरादित्वेन आप्नशब्दस्य व्युत्पद्यते, यणादेशसवर्णदीर्घौ । आप्न अतति आप्न गच्छति, चञ्चल हि धनम् । निगमो ऽन्वेषणीय ॥

(७) रत्नम् । 'रमु क्रीडायाम् (भ्वा० आ०)' 'रमेस्त च (उ० ३, १२)'—इति नप्रत्ययस्तकारश्चान्तादेश । रमणीय हि

तत्। 'रमतेऽस्मिन्'—इति क्षीरस्वामी। 'वित्तं रमस्य बहु मन्यमानः'—इति श्रुतिः। "धा रत्नं मंहिं स्थूरं बृहन्तम् (ऋ० सं० ४, ६, ८, ५)"—होतारं रत्नधातमम् (ऋ० सं० १, १, १, १)"—इति निगमौ॥

(८) रयिः। व्याख्यातमुदकनामसु (१०१ पृ०)। गम्यते प्राप्यते पुरुषेण गच्छत्यनेन वृत्तिं भोगसाधनत्वात्, यद्वा दाऽऽदत्ते, रीयतेऽर्थिभ्य इति वा। "अग्निना रयिमश्नवत् (ऋ० सं० १, १, १. ३)"—इति निगमः॥

(९) क्षत्रम्। व्याख्यातमुदकनामसु (८५ पृ०)। पूर्वजन्मसुकृतवशेन तदति स्थिरं भवति, क्षद्यते उपभोगसाधनत्वात्, छिनत्ति दारिद्र्यम्। गतावपि शब्दवदर्थः। क्षतात् पापात् त्रायते। क्षत्रशब्दात् त्रायतेश्च पृषोदरादित्वात् क्षत्रम्। धनैरेव पापं नरा निस्तरन्तीत्युच्यते। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १, १)"—"सुक्षत्रासो रिशादसः (ऋ० सं० १, १, ३६, ५)"—इति च निगमौ॥

(१०) भगः। 'भज सेवायाम् (भू० उ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)' 'चजोः कु घिण्ण्यतोः (७, ३, ५२)'। भज्यते सेव्यते भोगार्थिभिः। यद्वा सेव्यतेऽनेन हेतुना तद्वान्। भगशब्दः पुंलिङ्गो धनवचनः। "मित्रस्तोष्ट्यौ मातिर्भुग्भगो नः (ऋ० सं० २, ६, ६, ६)"—यद्वित—स्त्रीभग." —इति निगमौ॥

(११) मीळ्हुम्। 'मिह सेचने भू० प०)'। ढत्वधत्वष्टुत्वढलोपदीर्घाः, ळ्हकारभावश्च। सिच्यतेऽर्थिभ्यो दातभिः। 'सहस्रमीळ्हुष्टमशिवानमः' इत्यत्र भट्टभास्करमिश्रभाष्येऽपि 'मीळ्हु इति धननाम'—इति दृश्यते। ततो निष्कृत्य उकारान्तनिगमदर्शनाभावात् अकारान्तनिगमदर्शनात् उकारा-

न्ताकारान्तद्वयोरपि स्वोकारोऽन्ताकम्। "इन्द्रम् ये मीढ्वःदुषः सन्ति पुत्राः (ऋ० सं० ५, १, ७, २)"—"तां आ रुद्रस्य मीढ्वहुषे (ऋ० सं० ४, ४, २८, ५)"—इत्यादौ निर्वाहकत्वात् "मीढ्वहुम्"—इति पठितव्यमिति केचिदाहुः। अन्ये तु "मीढ्वह."इति सकारान्तमपि। तेषां मीढ्व्हांसमिति निर्वाहः। उभयेषामपि "मृहस्व मीढ्वहे (ऋ० सं० १, ७, ३४, ५)"—इत्यकारान्तस्य पाठोऽपेक्षणीयः। बहुभ्यस्तु निर्णयः।

(१२) गय। व्याख्यातमपत्यनामसु (१४५ पृ०)। इहापि तदर्थं। गीयते स्तूयते ह्योऽभि। "अर्वद्वद्गाशुपेगयम् (ऋ० सं० १, ५, २१, २)"—इति निगमः॥

(१३) द्युम्नम्। 'सुम्नसुम्नानिम्न'—इत्यादिना 'द्युत दीप्तौ (भू० आ०)'—इत्यस्मात् नप्रत्ययो तकारस्यान्तादेशो निपात्यते। तेन तद्वान्। दीप्यते द्युम्नम्। 'द्यु अभिगमने (अदा० प०)'—इति चोरस्वामी। अत्र धातोर्मुगागमो निपात्यते। "द्युम्नं सदहसुमातमम् (ऋ० सं० १, १, १८, ३)"—"द्युम्ना वाजेभिरागतम्।"—इति च निगमौ॥

(१४) इन्द्रियम्। 'इन्द्रि[illegible] लिङ्ग[illegible] [illegible]ष्टमि [illegible]सृष्टमि[illegible]जुष्टमिन्द्रदत्तमिति वा (५, २, ९३)'—इति घप्रत्ययान्तमन्तोदात्त निपात्यते। इन्द्रः—'इदि परमैश्वर्ये (भू० प०)' परमैश्वर्ययुक्त उच्यते। इन्द्रस्य लिङ्गम्। धनेन हि ऐश्वर्ययुक्त इति व्यज्यते। अत्र षष्ठी, समर्थात्, लिङ्गार्थे घञ्। यद्वा, इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा, इन्द्र आत्मा, तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्रजुष्ट वा, आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्तेः। इन्द्रदत्तं वा, इन्द्रेण पूर्वकर्मणा वा अभ्युपदत्तम्। सृष्टजुष्टदत्तार्थेषु तृतीया समर्थात्। "दक्षिण पादमवनेनिजेऽस्मिन्राष्ट्रं इन्द्रियं दधामि (ऐ० ब्रा० ८, ५, ४)"—इति निगम.

(१५) वसु। रानाविमस्तु "वसौ"—इत्यत्र (२८५पृ०) व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। "युवं भूवं वसुनः पूर्व्यस्पतिः (ऋ० सं० ८, १, ५, १)"—इति निगमः॥

(१६) रायः। 'रा दाने (अदा० प०)'। 'रातेर्डैः (उ० २, ६२)'। जस्। दीयतेऽर्थिभ्यः, तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। "अनामृणः कुविदादस्य रायः (ऋ० सं० १, ३, १, १)"—इति निगमः॥

(१७) राधः। 'राध साध संसिद्धौ (स्वा० प०)'। असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। राधिर्हिंसार्थोऽपि। हिनस्ति दारिद्र्यम्। "राधं इन्द्र वरेण्यम् (ऋ० सं० १, १, १७, ५)"—"राधस्वन्तो विदद्वसो (ऋ० सं० ४, २, १०, १)"—इति निगमौ॥

(१८) भोजनम्। 'भुज पालनाभ्यवहारयोः (रु० प०)'। ल्युट् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति। यद्वा, अभिमतार्थं भवति भुज्यते तद्धिः, भुज्यन्तेऽनेन विषया इति वा, पाल्यतेऽनेन वा। "अच्युतामा मंग्र भोजनानि (ऋ० सं० ३, ८, १८, ५)"—"मा न प्रिया भोजनानि प्र मोषीः (ऋ० सं० १, ७, १८, ३)"—इति निगमौ॥

(१९) तना। 'तनु विस्तारे (त० प०)'। पचाद्यच् (३, १, १३४)। तनोति विस्तारयति त्रिवर्गसाधन हि धनम्। वतीयैकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्याकारः। "विद्वयन्ते तना गिरा (ऋ० सं० ६, ३, २५, १)"—"मा वो मृजू तनाय कम् (ऋ० सं० १, ३, १८, २)"—इति निगमौ।

(२०) नृम्णम्। व्याख्यातं बलनामसु (१८१ पृ०)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वसु। "इन्द्रे दधानो नृम्णा

विश्वानि (ऋ० सं० १, ५, ११, २)"—इति निगमः ॥

(२१) बन्धुः । 'बन्ध बन्धने (क्र्या० प०)' । "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च"—इति उप्रत्ययः । बध्नात्यनेन भृत्यादीन् । यद्वा, बन्धुरिव बन्धुः । "शक्रुभ्या मुत्रवसोपजग्मुर्ये. (ऋ० सं० १, ४, १६, ४)"—इति निगमः ॥

(२२) मेधा । 'मिधृ मेधृ सङ्गमे च (भू० उ०)' चकारात् हिंसामेधयोश्च । 'मिधिः सङ्गत्यर्थः'—इति माधवः । घञ् । सङ्गच्छतेऽनेन सर्वं तद्वता, हिंस्यते वा तद्वान् चौरादिभिः 'घ्नन्ति चैत्रार्थकारणात्'—इति महाभारतम् । यद्वा, मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धनं धार्यते । तत्र मतिशब्द उपपदे धातोः 'घञर्थे कविधानम् (३, ३, ५८वा०)'—इति कः, पृषोदरादित्वात् (६, ३, १०९) मतिशब्दस्य मेभावः । मेधाकारं विदथस्य प्रसाधनम् (ऋ० सं० ८, ४, २१, ३)"—इति निगमः ॥

(२३) यशः । व्याख्यातमन्ननामसु (१००पृ०) । "उत त्या मे यशसा श्वेतनायै (ऋ० सं० २, १, १, ४)"—इति निगमः ॥

(२४) ब्रह्म । व्याख्यातमन्ननामसु (१०६पृ०) । वर्द्धन्तेऽनेन धर्मादयः, बृंहकं वा भोगानाम् । "अस्माकं ब्रह्म पृतनासु सह्याः (ऋ० सं० २, २, २२, ०)"—इति निगमः ॥

(२५) द्रविणम् । व्याख्यातं बलनामसु (१८४पृ०) । रयिवदर्थः । "त च्या यजन्त द्रविणं समस्मै"—इति निगमः ॥

(२६) श्रवः । व्याख्यातमन्ननामसु (१०१पृ०) । "पृक्षो पृथुश्रवो बृहत् (ऋ० सं० १, १, १८, २)"—"बृहच्छ्रवा असुरो बर्हणाकृतः (ऋ० सं० १, ४, १०, ५)—इति निगमौ ।

(२७) वृत्रम् । व्याख्यातं मेघनामसु (१८९पृ०) । आच्छाद-

यति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थं
दयिवदर्थं। द्वत्री मन्मवदर्थः। "वृत्रं पुरुकुत्साय रन्धीः (ऋ०
सं० २, ४, १६, २)"—इति निगमः। अत्र स्कन्दस्वामिना
'वृत्र' धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमा-
नमपि "वित्तम्"—इति न पठनीयम्॥

(२८) व्रतम्। 'वृङ् सम्भक्तौ (क्या० प०)'। 'दुतनिभ्यां
दीर्घश्च वा (उ० ३, ८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात्
क्तप्रत्ययः। सम्भज्यते सर्वैः। "वृतञ्चयः सद्दुरिर्विद्धारितः
(ऋ० सं० २, ६, २७, ३)"—इति निगमः॥

इत्यष्टाविंशतिरेव धननामानि॥ १०॥

अघ्न्या (१)। उस्रा (२)। उस्रिया (३)।
अही (४)। मही (५)। अदितिः (६)। इला
(७)। जगती (८)। शक्करी (६)। इति नव
गोनामानि॥ ११॥

अघ्न्या। 'अहन्तव्या भवतीत्यघघ्नीति वा (निरु० ११,
४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अहन्तव्या।
अत्र शब्दे नञि वा उपपदे हन्तेः 'अघ्न्यादयश्च (उ० ४, १०८)'
—इति यत्प्रत्ययान्तं निपात्यते। "नहि मे अस्त्यघ्न्या (ऋ०
सं० ६, ७, १२, ४)"—"भुद्धि त्वर्णमघ्न्ये विश्वदानी (ऋ० सं०
२, ३, २१, ५)"—इति निगमौ॥

(२) उस्रा। व्याख्यात रश्मिनामसु (२८ पृ०)। वसति
चौरादि इविरस्याम्। 'उस्रियेति गोनामोत्स्राविणोऽस्या
भोगा उस्रेति च'—इति (निरु० ४, १९) भाष्यम्। 'उत्-
स्राविणोऽस्या भोगास्ते ऊर्द्ध सवन्ति गच्छन्ति चौरदधिनव-

भूमिमी अभिमातिषाहः (ऋ० सं० ८, १, १८, ४)"— इति निगमौ ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादिः। "पुनः प्रायच्छद्‌हृणीयमानः (ऋ० मं० ८, ६, ७, २)"— हृणीयमानो अप हि मदैयेः (ऋ० सं० ३, ८, १५, २)"— इति निगमौ ॥

(५) भ्रीणाति। 'भ्री भये' क्र्यादिः परस्मैपदी। अनेकार्थत्वात् क्रुध्यतिकर्मा। एवमुत्तरत्रापि। "एनः कृण्वन्तमसुर भ्रीणन्ति (ऋ० सं० २, ७, १०, २)"—इति निगमः ॥

(६) भ्रेषति। 'भ्रेषृ चलने' भ्वादिः स्वरितेत्। निगमोऽन्वेषणीयः ॥

(७) दोधति। नैरुक्तो धातुः। "इन्द्रो वृत्रस्य दोधतः (ऋ० सं० १, ५, २८, ५)"—इति निगमः ॥

(८) वनुष्यति। 'वनुष्यतिर्हन्तिकर्मा (निरु० ५, २)'— इत्यत्र स्कन्दस्वामी—'वनोतेः कण्ड्वादिप्रक्षेपात् यक्प्रत्ययः, तत्सन्नियोगेन च वनुभावो द्रष्टव्यः'—इति। निगमोऽन्वेषणीयः ॥

(९) कम्पते। 'कपि चलने' भ्वादिरात्मनेपदी। निगमोऽन्वेषणीयः ॥

(१०) भोजते। 'भुज कौटिल्ये' तुदादिः परस्मैपदी। 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुणः। व्यत्ययेनात्मनेपदम्। निगमोऽन्वेषणीयः ॥

इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः (१)। हरः (२)। घृणिः (३)। त्यजः (४)। भामः (५)। रहः (६)। ह्वरः (७)।

तपुषी (८)। जूर्णिः (९)। मन्युः (१०)। व्यथिः (११)। इत्येकादश क्रोधनामानि ॥ १३ ॥

(१) हेलः। हेलतेः भावे असुन्। "देवस्य हेळोऽव याभि सीष्ठाः (ऋ० सं० ३, ४, १२, ४)"—इति निगमः ॥

(२) हरः। 'हृञ् हरणे (भू० उ०)' असुन्। हरति कृत्याकृत्यविवेकं, ह्रियते वाऽनेन पुरुषः स्ववशम्, दुर्जयोऽन्तरः शत्रुः क्रोधः। निगमोऽन्वेषणीयः ॥

(३) घृणिः। ज्वलन्नामसु व्याख्यातम् (१३४पृ०)। चरत्वनेन खेदादिः, दीप्यतेऽनेन वा, क्रुद्धोऽग्निरिव ज्वलति हि प्रसिद्धः। "आघृणे संसचावहै (ऋ० सं० ४, ८, २१, १)"—इति निगमः। 'मा हृणानस्य (ऋ० सं० १, २, १६, २)"—इत्यत्र भाष्ये 'हृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते'—इति स्कन्दस्वामी, तत् कथमिति विचिन्त्यम् ॥

(४) त्यजः। 'त्यज हानौ (भू० प०)'। असुन्। त्यज्यते सत्पुरुषैः, त्यज्यन्तेऽनेन प्राणा इति वा, त्यज्यते वा स्वधर्मः। "क्रुद्धः पापं किन्न कुर्य्यात् क्रुद्धो हन्यात् गुरूनपि। क्रुद्धः परुषया वाचा नरः साधूनपि चिपेत्"—इति हि महाभारतम्। "महर्षिदासि त्यजसो वरूता (ऋ० सं० २, ४, ८, १)" —"किं देवेषु त्यज एनश्चकर्थ (ऋ० सं० ८, ३, १४, ६)" इति निगमौ ॥

(५) भामः। भामतेर्भावे घञ्। यद्वा 'भा दीप्तौ (अदा० प०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १, १३७)'—इति मन्। दीप्यते तेन तद्वान्। "देवजुष्टोच्यते भामिने गीः (ऋ० सं० १, ५, २५, १)"—"स्वयम्भूर्भामो अभिमातिषाहः (ऋ० सं० ८, ३, १८, ४)"—इति निगमौ ॥

(६) एहः। 'इन हिंसागत्योः (अदा० प०)' असुन् 'नञि हन एह च (उ० ४, २१८),—इति नञ्युपपदे। यमान एहादेशो बाहुलकात् नञ्विनापि भवति। "सते हरिवो शुभिष्टौ (ऋ० सं० ८, १, ३०, २)"—इति निगम॥

(७) ह्वरः। 'ह्वृ कौटिल्ये (भ्वा० प०)' अत्तिकर्मा च। असुन्। ह्वरति कुटिलो भवत्यनेन अत्ति वा।

(८) तपुषी।

(९) जूर्णिः। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा'—इति भाष्यम् (निरु० ६, ४। गच्छत्यनेन दुःखं, लोकगर्हा वा, हिनस्ति परान् वा। निगमोऽन्वेषणीयः॥

(१०) मन्युः। 'मन ज्ञाने (तना० आ०)'। 'यजिमनि शुन्धिदसिजनिभ्यो युच् (उ० ३, १८)'—इति युच्। बाहुलकादनादेशाभावः। मायते ज्ञायत्वेन। यद्वा, मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तद्वान्। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १४, १)"—"मा ष्टुताजर्नं मन्यवे. (ऋ० सं० १, २, १६, २)"—इति निगमौ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)' 'इन् सर्वधातुभ्य. (उ० ४, ११४)'—इति इन्। सञ्चनः, चलति वानेन स्वधर्मात्। "एतविर्भिरनमैर् (ऋ० सं० ५, ५, १६, ७)"—"मन्त् मार्किष्टे व्यथिरा दधर्षीत् (ऋ० सं० ३, ४, २३, ३)"—इति च निगमौ॥

इत्येकादश क्रोधनामानि॥ १२॥

**वर्तते (१)। अयते (२)। लोटते (३)। लोठते (४)। स्यन्दते (५)। कसति (६)।**

(७)। स्यमति (८)। स्वनति (९)। संसति (१०)। ध्वनति (११)। श्वोतति (१२)। ध्वंसति (१३)। वेनति (१४)। मार्ष्टि (१५)। भुड्क्ष्वति (१६)। शर्वति (१७)। कालयति (१८)। पुंलयति (१९)। कण्टति (२०)। मिस्यति (२१)। लिस्वति (२२)। भिस्यति (२३)। प्रवते (२४)। स्रवते (२५)। च्यवते (२६)। कवते (२७)। गवते (२८)। नवते (२९)। चोदति (३०)। नचति (३१)। सचति (३२)। म्यचति (३३)। सचति (३४)। ऋच्छति (३५)। तुड्योयति (३६)। चतति (३७)। अतति (३८)। गाति (३९)। दूयचति (४०)। सचति (४१)। त्सरति (४२)। रंहति (४३)। यतते (४४)। भनति (४५)। भजति (४६)। रजति (४७)। लजति (४८)। क्षियति (४९)। धमति (५०)। मिनाति (५१)। ऋच्छति (५२)। ऋणोति (५३)। खरति (५४)। सिसति (५५)। विपिष्टि (५६)। योपिष्टि (५७)। त्रिणाति (५८)। रोयते (५९)। रेजति (६०)। दर्घति (६१)। दुभ्नोति (६२)। युध्यति (६३)। धन्वति (६४)। अर्तयति (६५)। आर्घ्यति (६६)।

(६) एहः। 'हन हिंसागत्योः (अदा० प०)' धातुः 'नञि हन एह च (उ० ४, २१८),—इति नञुपपदे। यमान एहादेशो बाहुलकात् नञ्विनापि भवति। स्तेः हरिवो शुभिष्टौ (ऋ० सं० ८, १, २०, २)"— निगमः॥

(७) ह्वरः। 'ह्वृ कौटिल्ये (भ्वा० प०)' धातिकर्मा च। असुन्। ह्वरति कुटिलो भवत्यनेन यत्ति वा।

(८) तपुषी।

(९) जूर्णिः। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा'—इति भाष्यम् (निरु० ६, ४। गच्छत्यनेन दुःखं, लोकगर्हा वा. हिनस्ति परान् वा। निगमोऽन्वेषणीयः॥

(१०) मन्युः। 'मन ज्ञाने (तना० आ०)'। 'यजिमनि शुन्धिदसिजनिभ्यो युच् (उ० ३, २८)'—इति युच्। बाहुलकादनादेशाभावः। ज्ञायते स्वाभ्यत्वेन। यद्वा, मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तद्वान्। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १४, १)"—"मा कृणाम मन्यवे. (ऋ० सं० १, २, १६, २)"—इति निगमौ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)' 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इन्। सज्जनः, चलति यानेन स्वधर्मात्। "एतविभिरजमैः (ऋ० सं० ५, ५, १६, ७)"—"यस्य मार्किष्टे व्यथिरा दधीत् (ऋ० सं० ३, ४, २३, ३)"—इति च निगमौ॥

इत्येकादश क्रोधनामानि॥१३॥

वर्त्तते (१)। अयते (२)। लोटते (३)। लोठते (४)। स्यन्दते (५)। कसति (६)। सर्पति

(७)। स्मर्मति(८)। स्वर्वति (६)। स्वंसति (१०)। स्वर्वति (११)। स्रोतति (१२)। ध्वंसति (१३)। वेनति (१४)। माष्टि (१५)। भुट्टण्यति (१६)। शर्वति(१७)। कालयति (१८)। प्रेलयति(१६)। करडति (२०)। पिस्यति (२१)। बिस्यति (२२)। मिस्यति (२३)। मर्वते (२४)। सर्वते (२५)। च्यवते (२६)। कर्वते (२७)। गर्वते (२८)। नर्वते (२६)। चोदति (३०)। नर्चति (३१)। सर्चति (३२)। म्यर्चति (३३)। सर्चति (३४)। ऋचर्छति (३५)। तुट्टोयति (३६)। चतति (३७)। अतति (३८)। गाति (३६)। इर्यचति (४०)। सर्घति (४१)। त्सरति (४२)। रंहति (४३)। यतते (४४)। भ्रमति (४५)। भर्जति (४६)। रजति (४७)। लर्जति (४८)। च्चियति (४६)। धमति (५०)। म्रिनाति (५१)। ऋरखति (५२)।ऋणोति (५३)। स्वरति (५४)। सिसर्ति (५५)। विविष्टि (५६)। योषिष्टि (५७)। ट्रिणाति (५८)। रौयते (५६)। रेजति (६०)। दर्षति (६१)। ह्मोति (६२)। युध्यति (६३)। धन्वति (६४)। अरुषति (६५)। आर्य्यति (६६)

(७) । स्यमति (८) । सर्वति (९) । स्रंसति (१०) । स्रवति (११) । श्रोतति (१२) । ध्वंसति (१३) । वेनति (१४) । मार्ष्टि (१५) । मुद्रयति (१६) । शर्वति (१७) । क्षालयति (१८) । प्रेलयति (१९) । काण्टति (२०) । पिस्यति (२१) । विस्यति (२२) । मिस्यति (२३) । प्रवते (२४) । स्रवते (२५) । च्यवते (२६) । कवते (२७) । गवते (२८) । नवते (२९) । चोदति (३०) । नक्षति (३१) । सक्षति (३२) । व्यक्षति (३३) । सचति (३४) । ऋच्छति (३५) । तुङ्योयति (३६) । चतति (३७) । अतति (३८) । गाति (३९) । द्रूयक्षति (४०) । सश्चति (४१) । त्सरति (४२) । रंहति (४३) । यतते (४४) । भ्रमति (४५) । ध्रजति (४६) । रजति (४७) । लजति (४८) । चियति (४९) । धसति (५०) । मिनाति (५१) । ऋण्वति (५२) । ऋणोति (५३) । स्वरति (५४) । सिसर्ति (५५) । विविष्टि (५६) । योविष्टि (५७) । ट्रिणाति (५८) । दीयते (५९) । रेजति (६०) । दघ्रति (६१) । दुभ्रोति (६२) । युध्यति (६३) । धन्वति (६४) । अरंयति (६५) । आर्यति (६६) । वि

(६४) धन्वति। 'धिवि रवि धवि गत्यर्थाः (भ्वा० प०)'। "परि सोम प्र धन्वा स्वस्तये (ऋ० सं० ७, २, ३३, ५)"—"न यम्य द्यावापृथिवी न धन्व (ऋ० सं० ८, ४, १५, १)"—इति च निगमौ ॥

(६५) मरुयति। नैरुक्तधातुः। "वि मृगमस्य मरुध मिनेथ (ऋ० सं० १, ३, ८, ४)"—"स्वर्नर ग्राव्णो मरुयो मनुष्वत (ऋ० सं० १, ५, १५, १)"—"प्रतीची रश्मिरुरमोर-जायत् (ऋ० सं० १, ५, १८, १०)"—इत्यादिषु स्कन्दस्वामिभाष्यम—'मरुयतिर्गतिकर्मा'—इति दृष्टम। "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ० सं० १, १, ११, १)"—इत्यादौ द्वितयो प्रदेशयो 'मरुयतिर्गतिकर्मा'—इत्यपि। उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् मरुयतीति पाठो युक्तः।

(६६) आर्यति। "मामायन्ति कृतेन कर्त्वेन च (ऋ० सं० ८, १, ५, ३)"—"तमिन्द्रीत्र रार्यन्ति (ऋ० सं० ६, १, २१, ६)"—इति च निगमौ ॥

(६७) सीयते। 'षिञ बन्धने' स्वादि क्र्यादिश्च। व्यत्ययेन श्यन्। "डीयते"—इति पाठान्तरम्। तदा 'डीङ् विहायसा गतौ' दिवादि। निगमदर्शनाद्विर्णयः ॥

(६८) तकति। 'तक हसने (भ्वा० प०)'। "य ईं सुरत्सात परितक्म्ये धने (ऋ० सं० १, २, ३३, १)"—"यद्योजमास्तामप्रतक्म्"—इति निगमौ ॥

(६९) दीयति। ('दीङ् क्षये दिवादि। व्यत्ययेन परस्मैपदम्। "श्येनो न दीयन्नन्वेति पार्थ (ऋ० सं० ५, ५, ५, ५)"—इति निगमः।

(७०) ईषति। "ईष गतिहिंसादानेषु' आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "उत्तानो गा ईषते द्वार्भावत (ऋ०

ऋ० ४, ४, २७, २)"—इति निगम । बहुय 'ईषतीति गति-कर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(७१) फणति । 'फण गतौ' । "युयामङ्गास्य न्नायनी-फणत् (ऋ० स० ३, ७, १४, ४)"—इति निगमः ॥

(७२) हनति । 'हन हिंसागत्योः' अदादिः । 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुग् न भवति । "मं यह-नंन्त सुस्युभिर्जनास (ऋ० सं० ५, ४, २६, २)"—इति निगम. ॥

(७३) घर्दति । 'घर्द गतौ याचने च' ॥

(७४) मर्दति । 'मृद मर्दने' । व्यत्ययेन परस्मैपदम् ॥

(७५) मसर्ते । 'ऋ सृ गतौ' जुहोत्यादिः परस्मैपदी । व्यत्ययेनात्मनेपदम् । पृषोदरादित्वात् (६, ३, १०८) अभ्या-सस्य दुगागम. । "प्र ससर्ते दीर्घमायु'. प्रयत्ने (ऋ० स० ३, १, १, १)"—"जातेर्न जात मति स प्र संसर्ते (ऋ० स० २, ७, ४, १)"—इति निगमो ॥

(७६) नसते । 'नस कौटिल्ये' आत्मनेपदी । "सुचोस्यार् ते नासिकाभ्याम् (ऋ० स० ८, ८, २१, १)"—इति निगम ॥

(७७) ह्वयति । 'ह्वय गतिकान्त्योः' ॥

(७८) इयर्ति । 'ऋ सृ गतौ' जुहोत्यादि. । 'अर्ति-पिपर्त्योश्च (७, ४, ७७)' । "कृष्टीरियर्त्योजसा (ऋ० स० १, १, १४, ३)"—इति निगमः ॥

(७९) ईर्त्ते । 'ईर गतौ कम्पने च' अदादिरात्मनेपदी । "मरुतामेः प्रसुर्ध. साकमीरते (ऋ० सं० ७, २, २२, १)"—इति निगम ।

(८०) ईङ्खते । 'ईखि गतौ' (भू०) आत्मनेपदी । "य ईङ्खयन्ति पर्वतान् (ऋ० सं० १, १, ३७, ३)"—इति

निगमः। अत्र 'इङ्गतिर्गतिकर्मा'—इति स्कन्दस्वामिभाष्यम् ।

(८१) त्सयति। (८२) स्नावति। एतौ नैघण्टुकधातू ॥

(८३) गन्ति। 'गमॢ गतौ (भू॰ प॰)'। व्यत्ययेन शपो लुक्। "भक्तिरोभि यार्गन्ति युक्तिरेभिः (ऋ॰ सं॰ ७, ६, १४, ५)"—इति निगमः ॥

(८४) भागनीगन्ति। 'गमॢ गतौ (भू॰ प॰)'। दाधर्त्ति-दर्धर्त्ति (७, ४, ६५) इत्यादिना आङ्पूर्वस्य गमेर्लटि अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते। यङ्लुगन्ताद्वा लटि निपातनाद्रूपसिद्धिः। "वृक्षन्ती वेदा गनीगन्ति कर्णम् (ऋ॰ सं॰ ५, १, १८, ३)"—इति निगमः ॥

(८५) जङ्घन्ति। गमेर्यङ्लुकि 'नुगतोऽनुनासिकान्तस्य (७, ४, ८५)'—इति नुकि च रूपम्। "प्रातर्मक्षू धियावसुर्जगम्यात् (ऋ॰ सं॰ १, ४, २४, ४)"—इत्यत्र 'जङ्गन्ति गतिकर्मण एतद्रूपम्'—इति स्कन्दस्वामिभाष्यम् ।

(८६) जिन्वति। 'इवि जिवि धिवि प्रीणनार्थाः (भू॰ प॰)' ॥

(८७) वषति। 'जसु मोक्षणे' दिवादिः (प॰)। व्यत्ययेन शप् ।

(८८) गमति। 'गमॢ गतौ (भू॰ प॰)'। लेट्। लेटोऽडाटौ (३, ४, ९४)'। बाहुलकात् 'सिब्बहुलं लेटि (३, १, ३४)'—इति सिप् न भवति। यद्वा, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति छत्वाभावः। "त आ गमन्तु त इह श्रुवन्तु (ऋ॰ सं॰ ४, ८, ५, १)"—इति निगमः ॥

(८९) भ्रति। (९०) भ्राति। (९१) भ्रयति। नैघण्टुकाः ॥

(९२) वहते। 'वह प्रापणे' (भू॰ उ॰) स्वरितेत्। "वैश्वा-

भुवं मातरिश्वा परावर्तः (ऋ० सं० ४, ५, १०, ४)"—इत्यत्र 'परापूर्वस्य वर्ततेर्गतिकर्मणः परावच्छन्दः'—इति स्कन्दस्वामी ॥

(९३) रथर्यति । नैरुक्तधातुः । 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजन ईकाराभावश्च पृषोदरादित्वात् (६, ३, १०९)'—इति स्कन्दस्वामी । "एष देवो रथर्यति (ऋ० सं० ६, ७, २०, ५)"—इति निगमः । माधवभाष्य द्रष्टव्यम् ॥

(९०) जेहते । 'जेहृ जेह वाहृ प्रयत्ने' आत्मनेपदी । "ये तातृषुर्देवत्रा जेहमाना (ऋ० सं० ७, ६, १८, ४)"—इति निगमः । 'ओ हाङ् गताविल्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(९५) ध्वाकति । (९६) चुम्यति । (९७) पाति । (९८) याति । (९९) याति ॥

(१००) इषति । 'इष गतौ' दिवादिः (प०) । व्यत्ययेन शः । "तवाश्वमूर्मिर्यद्ध्र्यमं यतन् (ऋ० सं० ५, १, २१, १)" —इति निगमः ॥ 'इषुरिषतेर्गतिकर्मणः (९, १८)'—इति निरुक्तम् ॥

(१०१) द्राति । 'द्रा कुत्सितायां गतौ' अदादि (प०) । वंम् यवो मृतयो दधा दद्रुः (ऋ० सं० १, ५, ३, १)"—इति निगमः ॥

(१०२) द्रुलति । नैरुक्तधातुः ॥

(१०३) एजति । 'एजृ कम्पने (भू० प०)' । "पृथेर्वं पृथिवीरजति (ऋ० सं० १, १, १९, २)"—"यथा समुद्र एजति (ऋ० सं ४, ४, २०, ४)"—इति निगमौ ॥

(१०४) जमति । 'जमु अदने (भू० प०)' । "न जामये

तान्वो दिव्य मीरेक् (ऋ० सं० १, २, ५, २)"—इति निगमः। 'जामिर्जमतेर्गतिकर्मणः'—इति स्कन्दस्वामी॥

(१०५) जवति। 'जु गतौ'—इति क्षीरस्वामी। "न पातय इन्द्र जूजुवत् नः"—"विपाट् शुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"—इति निगमौ॥

(१०६) वञ्चति। 'वञ्चु गतौ (भू० प०)'। "नमो वञ्चते परिवञ्चते (य० वा० सं० १६, २१)"—इति निगमः॥

(१०७) धनिति। 'धस प्राणने, धन च (अदा० प०)'। "अत्र मातर्यांल्लनिति"—इति निगमः। 'धनितिर्गतिकर्मा'—इति माधवः॥

(१०८) पवते। 'पूङ् पवने' "नेन्द्राहते पवते धाम किंचन (ऋ० सं० ७, २, २२, १)"—"स्वक इंशाय पविमिन्द्र तिग्मम्"—इति निगमौ॥

(१०९) हन्ति। 'हन हिंसागत्योः' अदादिः (प०)। "नि येन मुष्टिहत्यया (ऋ० सं० १, १, १५, २)"—धाम्न वज्र मधिशानो जघान (ऋ० सं० १, २, ३०, २)"—इति निगमौ॥

(११०) सेधति। 'षिधु गत्याम् (भू० प०)'। "सेधत द्वेषो भवत सचा सुवा (ऋ० सं० १, ३, ५, ५)"—इति निगमः॥

(१११) अगन्। 'गमॢ गतौ (भू० प०)'। लुङि तिपि च्लेः 'मन्त्रे घस (२, ४, ८०)'—इति लुकि, 'इतश्च (३, ४, ९७)'—'संयोगान्तस्य लोपः (८, २, २३)' 'मो नो धातोः (८, २, ६४)'—इति मकारस्य नकारः। प्रदामागन् पथमुक्ता स्तुतस्य (ऋ० सं० २, ३, २१, २)"—इति निगमः॥

(११२) अजगन्। गमेर्लुङि 'बहुलं छन्दसि (२, ४,

७३ )'—इति प्रपः श्रुः। पूर्ववत्त्वम् ( ८, २, ६४ )। "यश्चा-तृरत्नंगश्लृपः ( ऋ० सं० ३, १, ५, २ )"—इति निगमः ॥

(११३) जिगाति। 'गा स्तुतौ ( अदा० प० )'। छन्दसि जुहोत्यादिः। 'अर्तिपिपर्त्योश्च ( ७, ४, ७७ ) 'बहुलं छन्दसि ( ७, ४, ७८ )'—इति अभ्यासस्येत्वम्। "धेना जिगाति दाशुषे ( ऋ० सं० १, १, ३, ३ )"—इति निगमः। 'जग-तीति पाठान्तरम्'—इति स्कन्दस्वामिभाष्यम् ॥

(११४) पतति। 'पत्लृ गतौ ( भू० प० )'। "गोभिः सम्रद्धा पतति प्रसूता ( ऋ० सं० ५, १, २१, १ )"—इति निगमः ॥

(११५) द्रन्वति। 'द्रवि गतौ ( भू० प० )'। "देवीर्द्वारो बृहतीर्विश्वमिन्वा (य० वा० सं० २८, ३०)"—इति निगम ॥

(११६) द्रमति। 'द्रम हम्म मीम्ह गतौ ( भू० प० )'। "प्र चन्द्रमास्तिरते दीर्घमायुः ( ऋ० सं० ८, ३, २३, ४ )'—इति निगमः। 'चन्द्रमाश्राय द्रमति'—इति भाष्यम् ( निरु० ११, ५ )। 'द्रमतिर्गतिकर्मा'—इति स्कन्दस्वामी ॥

(११७) द्रवति। द्रु द्रु गतौ ( भू० प० )'। "यत्रा नद्यः स च वि च द्रवन्ति ( ऋ० सं० ५, १, २१, १ )"—इति निगमः ॥

(११८) वेति। 'वी गतिप्रजननकान्त्यसनखादनेषु' अदादिः "अपामीवां बाधते वेति सूर्यम्"—"गृदं न स्तोऽदैवी (ऋ०, स० १, ४, ४, १ )"—इति निगमौ ॥

(११९) हम्तात्। हन्तेर्लोटि तातङि रूपम्। "हय-म्तात्"—इति केचित् पठन्ति। तत्र 'हय गतौ ( भू० प० )' —इत्यस्य तातङि तकार उपजनः ॥

(१२०) एति। 'इ गतौ' अदादिः ( प० )। "विद्यार्क

गभुन्दसा मर्कामेति (ऋ० म० १, २, १४, ५)"—इति निगम।

(१२१) जगायात्। 'गा स्तुतौ' जुहोत्यादिः (प०)। लिङि 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्धधातुकत्वे न 'ई हल्यघो (६, ४, ११३)'—इतीत्व न भवति। "स्तोमित् पुनरस्तं जगायात् (ऋ० म० ७, ७, २०, १)"—इति निगम।

(१२२) अयथु। 'ट्वितोऽथुच् (३, ३, ८९)'—इति बाहुलकादयतेरथुच् भवति॥

इति द्वाविंशशत गतिकर्माणः॥ १४॥

नु (१)। मक्षु (२)। द्रवत् (३)। ओषम् (४)। जीराः (५)। जूर्णिः (६)। शूर्ताः (७)। शूघनासः (८)। शीभम् (९)। तृपु (१०)। तूयम् (११)। तूर्णिः (१२)। अजिरम् (१३)। भुरण्युः (१४)। शु (१५)। आशु (१६)। प्राशुः (१७)। तूतुजिः (१८)। तूतुजानः (१९)। तुज्यमानासः (२०)। अज्राः (२१)। साचि-वित् (२२)। द्युगत् (२३)। ताजत् (२४)। तरणिः (२५)। वातरंहा (२६)। इति षड्-विंशतिः क्षिप्रनामानि॥ १५॥

'क्षिप्रनामान्युत्तराणि षड्विंशति (निरु० ३, ९)'—इत्यत्र भाष्ये 'गुणस्य चैतानीति क्षिप्रस्य तद्वतो वा नामधेयानि। तथाच वक्ष्यति 'भुरण्यु' 'शकुनि'—इति स्कन्दस्वामी। गुणव

चिरकालविशिष्टा स्वल्पकालविशिष्टा वा क्रिया। तत्कर्तरि कर्त्तुरल्पकालविशिष्टत्वञ्च तथाविधक्रियाकर्तृत्वाल्पक्रियाद्वारकम्। तत्र 'मचु' 'क्षणुहि' इत्यादिषु क्रियाविशेषेण वा क्रियारूपस्तद्वान्। निक्रष्टगुणनामधेयोदाहरणानि पुनरन्वेषणीयानि। केचित्तु यद्यपि गुणशब्दो व्यवच्छेदकमात्रवचनतया अत्र कर्त्तृविशेषणभूतक्रियालक्षणा व्यवच्छेदकविशेषे वर्त्तते निक्रष्टा गुणमात्रवाचिनि गम्यादौ लभ्या, तथापि सत्वशब्दस्य द्रव्यवचनत्वे स्वारस्यात् क्रियायाद्रव्यत्वात् क्रियाया इव द्रव्यस्यापि नामधेयानि'—इत्याहुः। इदानीं क्रियाविशेषणानि गुणनामधेयोदाहरणानि 'जीराः' 'अजिरम्' इत्यादीनि॥

(१) नु। निपातोऽयम्। "इन्द्रस्य नु वीर्याणि प्रवोचम् (ऋ० सं० १, २, ३६, १)"—इति निगमः॥

(२) मचु। 'टु मस्जो शुद्धौ (तु० प०)'। 'मस्जीषोघुक्' इति भोजसूत्रेण घुकप्रत्ययः। संयोगादिलोपः। अन्तर्णीतण्यर्थश्च मस्जी। क्रियायाः पापतो वा मज्जयति चिरकालमिति। "मचु क्षणु हि गोजितो नः"—इति निगमः॥

(३) द्रवत्। 'द्रु गतौ (भू० प०)'। 'संश्चतृप्पद्वेहत् (उ० २, ७८)'—इति बाहुलकात् अतिप्रत्ययान्तो निपात्यते। द्रवत्यनेन। "द्रवत्पाणी शुभस्पती (ऋ० सं १, १, ५, १)—इति निगमो॥

(४) ओषम्। निपातोऽयम्। "ओषमित् पृथिवीमहम् (ऋ० सं० ८, ६, २७, ४)"—"ओषुः पात्रं न शोचिषा (ऋ० सं० २, ४, १८, ३)"—इति निगमौ। 'अन्तोदात्तो निपातः आद्यस्थाने चाद्युदात्तता'—इति हि माधवः॥

(५) जीराः। जवतिर्गतिकर्मा। 'जोरी च (उ० २, २५)'—इति ईक्प्रत्यय ईकारस्याकारादेशः। जम्। "जीरा यज्ञिरयौ-चिष: (ऋ० सं० ७, २, ११, ५)"—"जीरं दूतममर्त्यम् (ऋ० सं० १, २, ३, ३०, ११)"—इति निगमौ॥

(६) जूर्णिः। व्याख्यातं क्रोधनामसु (१८६पृ०)। निगमोऽन्वेषणीयः॥

(७) शूर्ताः। 'तालशातस्तुत'—इत्यादि भोजसूत्रे चादि-शब्देन शृणातेर्धातोः क्तप्रत्ययान्तो निपात्यते। शृणाति फल-लाभम्। "त्वया शूर्ता वहमाना अपत्यम् (ऋ० सं० २, ४, १७, १)"—इति निगमः। 'शूर्ताः क्षिप्रास्त्वरमाणाः'—इति भट्ट-भास्करमिश्राः॥

(८) शूघनासः। शु शब्दे उपपदे हन्तेः 'युच् बहुलम् (उ० २, ७४)'—इति युचि बाहुलकात् कुत्वं धिलोपश्च निपात्यते दीर्घश्च। शीघ्रमागच्छत्यनेन क्रियाफलम्। तस्मात् जसोऽ-सुक्। "धिष्णो'रिव प्राध्वने' शूघनासः (य० वा० सं० १८, ८५)"—इति निगमः। 'शूघनासः क्षिप्रगमनाः'—इत्युवटः॥

(९) शीभम्। 'शीभृ कत्थने (भू० धा०)'। घञ्। शीभ-तेऽनेन तद्वान्। "प्रयात शीभमाशुभिः (ऋ० सं० १, ३, १४, ४)"—"मातुर्वर्णाः पृणध्वं यात शीभम् (ऋ० सं० ३, २, १४, २)"—इति निगमौ॥

(१०) तृषु। 'ञि त्वरा सम्भ्रमे (भू० धा०)'। 'मसजीषी-षुक्'—इति बाहुलकात् षुक्प्रत्ययो धातोस्तृभावश्च। त्वरत्व-नेन फललाभमस्य, त्वरितेनैव फलमागन्तुम्। "तृष्वद्रिक्व-तसेषु तिष्ठति (ऋ० सं० १, ४, २, २)"—"तृष्वीमनुप्रसितिं दुद्राण. (ऋ० सं० ३, ४, २३, १)"—इति निगमौ॥

(११) तूयम्। व्याख्यातमुदकनामसु (१०६पृ०)। सर्व-

तेऽनेन तद्वत्त व्याख्या.। "प्रपित्वे न. प्रपित्वे तूतुमा गंहि (ऋ॰ सं॰ ५, ७, ३०, ३)"—इति निगमः ॥

(१२) तूर्णि.। 'ञि त्वरा सम्भ्रमे'। 'वह्रिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (उ॰ ४, ५१)'—इति निप्रत्ययः। त्वरतेऽनेन फलनागन्तुम्। "अपो यस्तूर्णिश्चरति प्रजानन् (ऋ॰ सं॰ ८, ४, २१, १)"—"सुतमा गन्त तूर्णयः (ऋ॰ सं॰ १, १, ६, २)"—इति निगमौ ॥

(१३) अजिरम्। 'अज गतिक्षेपणयोः (भ्व॰ प॰)'। 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा (उ॰ १, ५२)'—इति किरच्प्रत्ययो जिभावश्च निपात्यते। क्षिपति फलोत्पत्तिमाशयम्। "त्वा सोमस्य अजिर दत्वाय (ऋ॰ सं॰ ५, २, १४, २)"—इति निगम ॥

(१४) भुरण्युः। भुरण्यतिर्गतिकर्मा। 'मृगय्वादयश्च (उ॰ १, ३६)'—इति क्युप्रत्यय। "अग्ने पावक चर्षसा (ऋ॰ सं॰ १, ४, ८, १)"—इत्यत्र स्कन्दस्वामिना 'भुरण्यतिः शीघ्रकरणार्थे'—इति प्रतिपादितम्। तत्र 'भुरण्यशब्दस्य शीघ्रविशिष्टगमनादिक्रियाकर्त्तरि सत्यन्वेव प्रवृत्ति.। शीर्षाभुर्व्याद्दिवं भुरण्यु (ऋ॰ सं॰ १, ५, १२, १)"—इति निगम । 'भुरण्यतेर्गतिकर्मण इद, क्षिप्रनाम वा'—इति स्कन्दस्वामिभाष्यम् ॥

(१५) शु । निपात.। "आनं शुस्तो वीर्यद्दितारमब्रवीत् (ऋ॰ सं॰ २, ३, ६, २)"—इति निगम.। 'शु आशुगामी'—इति निरुक्तम् (६, १) ॥

(१६) आशुः। 'अश्‌ व्याप्तौ'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ॰ १, १)। व्याप्नोत्यनेन नरवैलक्षण्येन व्याप्यम्। 'आशु इव चिन्तानः क्षिप्रगामी'—इति स्कन्दस्वामि-

(३)। तुर्वशे (४)। अस्तमीके (५)। आके (६)। उपाके (७)। अर्वाके (८)। अन्तमानाम् (९)। अवमे (१०)। उपमे (११)। इत्येकादशान्तिक-नामानि॥ १६॥

(१) तळित। 'तड आघाते' चुरादि। 'ताडेर्णिलुक् च (उ॰ १, ९५)'—इतीतिप्रत्ययः। "दूरे चित् सन्तळिदिवाति रोचसे (ऋ॰ सं॰ १, ६, ३१, २)"—"या नो' ददे तळिती य अर्यात्" (ऋ॰ सं॰ २, ६, २॰, ४)'—इति निगमौ॥

(२) आसात्। 'आस उपवेशने (अदा॰ आ॰)'। 'पुंसि संज्ञायां घः प्रायेण (३. ३, ११८)'। अन्तिके आसते। "आ तु इन्द्रो' दूरादान आसात् (ऋ॰ सं॰ ४, ६, ३, १)"—"स नो दूराच्चासाच्च (ऋ॰ सं॰ १, २, २२, ३)"—इति निगमौ। 'आसादित्यन्तिकनाम'—इति स्कन्दस्वामिभाष्यम्। "आमादासे'—इति माधव॥

(३) अम्बरम्। 'कदराद्यश्च'—इत्यरन्प्रत्ययो मुगागमश्च निपात्यते। प्राप्यते ह्यासन्नम्। "यद्वासत्या परावति यद्वा स्थो अध्यम्बरे (ऋ॰ सं॰ ५, ८, २७, ४)"—इति निगमः। स्कन्दस्वामिव्यतिरिक्तभाष्यकारमते। स्कन्दस्वामी तु 'मध्यमस्थ नाम'—इति॥

(४) तुर्वशे। व्याख्यातं मनुष्यनामसु (१५२ पृ॰)। तूर्वे व्याप्यते अन्तिकम्। "यद्वासत्या परावति यद्वा स्थो अधि तुर्वशे' (ऋ॰ सं॰ १, ४, २, २)"—इति निगमः॥

(५) अस्तमीके। अस्तशब्दे उपपदे माते 'अलीकादयश्च (उ॰ सं॰ ४, २५)—इति वीकन्प्रत्ययो धातोर्लोपश्च निपा-

म्यते। अस्तं प्राप्यते अस्मिन्, अन्तिकस्थं हि नाम्यते। "अर्चस्व नः पराक आ सर्वस्मास्तमुीक आ (ऋ० सं० २, १, १०, ४)" —इति निगमः ॥

(६) आके। (७) उपाके। (८) अर्वाके। आङ्‌उपार्वस्ब-स्वेपूपपदेषु क्रामतेः 'वलाकादयश्च (उ० ४, १४)'—इति आक-प्रत्ययो धातोर्लोपश्च निपात्यते। अर्वाक् गन्ता। आक्रम्यते उपक्रम्यते गन्तृभिः। क्रम्यते च ह्यासन्नम्। "आके नियासो भद्रभिर्देविद्युतः (ऋ० सं० ३, ७, २१, ६)"—"सिन्धौ कूर्मो उपाक (ऋ० सं० १, २, २३, १)"—"यत्रासत्या पराके अर्वाके अस्ति भेषजम् (ऋ० सं० ५, ८, २२,५)"—इति च निगम. ॥

(९) अन्तमानाम्। अन्तिकशब्दात्तमपि 'तमोदय'—इति तादिलोपः। अन्तिकतमकल्पिमम्। "यथाते अन्तमानाम् (ऋ० स० १, १, ७, ३)"—"शिवा सखो अन्तमस्य (ऋ० स० १, २, २२, ३)"—इति निगमौ। आद्युदात्तमन्तिकम्, अन्तो-दात्तन्तु तृतीयाबहुवचनम्, "अतो वयमन्तमेभिर्युजानाः (ऋ० सं० २, ३, २४, ५)"—इति माधवः ॥

(१०) अवमे। 'अव रक्षणादिषु (भू० प०)'। 'अवेश्च वा इति मप्रत्ययः। गम्यते ह्यासन्नम्। "यमे वञ्च नामवमाय सख्ये (ऋ० सं० २, ७, २४, २)"—"मध्यमस्यामवमस्यामुत स्थः (ऋ० सं० १, ७, २७, ५)"—इति निगमौ ॥

(११) उपमे। उपपूर्वात् मिनातेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। उपच्छिद्यते ह्यन्तिकम्। उपमे रोचने दिवः (ऋ० सं० ६, ६, १, ४)"—"मुखाद्दुलयसुपम सूर्याम् (ऋ० सं० १, ४, २०, ३)"—इति निगमौ।

इत्येकादशान्तिकनामानि ॥ १६ ॥

रणः (१)। विवाक् (२)। विखादः (३)। नदनुः (४)। भरे (५)। आक्रन्दे (६)। आहवे (७)। आजौ (८)। पृतनाज्यम् (९)। अभीके (१०)। समीके (११)। ममसत्यम् (१२)। नेमधिता (१३)। सङ्काः (१४)। समितिः (१५)। समनम् (१६)। मीळ्हे (१७)। पृतनाः (१८)। स्पृधः (१९)। मृधः (२०)। पृत्सु (२१)। समत्सु (२२)। समर्ये (२३)। समरणे (२४)। समोहे (२५)। समिथे (२६)। सङ्खे (२७)। सङ्गे (२८)। संयुगे (२९)। सङ्गथे (३०)। सङ्गमे (३१)। वृत्रतूर्ये (३२)। पृक्षे (३३)। आणौ (३४)। शूरसातौ (३५)। वाजसातौ (३६)। समनीके (३७)। खले (३८)। खजे (३९)। पौंस्ये (४०)। महाधने (४१)। वाजे (४२)। अज्म (४३)। सद्म (४४)। संयत् (४५)। संवतः (४६)। इति षट्चत्वारिंशत् संग्रामनामानि ॥ १७ ॥

(१) रण । 'मण रण क्वण शब्दार्थाः (भू॰ प॰)'। 'घञि रणयोरुपसंख्यानम् (३, ३, ५८ वा॰)'—इत्यप्। 'रणन्ति उभयेऽत्र योधा वा परस्पर शब्दायन्ते। यद्वा, रमते

'राष्ट्रामाखाम्नूणावीणाः (उ० ३, १३)'—इत्यादिना नप्रत्ययो मकारलोपश्च निपात्यते। रमणीयो हि सग्रामो विचित्रकर्माधिष्ठानत्वात्। "मुरुत्वं इन्द्र वृषभो रणाय (ऋ० सं० ३, ३, ११, १)"—इति निगमः॥

(२) विवाक्। विविधा विरुद्धा वाचो यत्र योधानाम्। "इवेत्त उ त्वा हव्यं विवाचि (ऋ० सं० ५, ३, १४, २)"—इति निगमः॥

(३) विखाद'। 'खद स्थैर्ये हिंसायाञ्च (भू० प०)'। विशिष्टं स्थैर्यमत्र शूराणां हिंसनं वा। "न विखादे मत्रि मुग्ध स्तुतं नरम्। (ऋ० सं० ७, ८, १४, ४)"—इति निगमः॥

(४) नदनु। 'णद अव्यक्ते शब्दे (भू० प०)'। 'अनुङ् नदेश्च (उ० ३, ४८)'—इति चानुङ्प्रत्ययः। "यदा कृणोषि नदनुं समूहसि (ऋ० सं० ६, २, ३, ४)"—इति निगमः॥

(५) भरे। 'डु भृञ् धारणपोषणयोः (जु० उ०)'। 'नन्दिग्रहिपचादिभ्यः (३, १, १३४)' तत्र गणपाठः—'पच-वच-वप वद-लप तज-भराः'—इति। बिभर्त्ति पोषयति सुभटानां धैर्यं यशो वा। यद्वा, 'पुंसि सञ्ज्ञायां घः (३. ३, ११८)'। बिभ्रत्यनेन जयलक्ष्मीं योधाः। उभयत्रापि वृषादेराकृतिगणत्वादाद्युदात्तत्वम्। यद्वा, 'भृ भर्त्सने क्र्यादिः स्वादिश्च। भर्त्सयन्ते हि तत्र शत्रवः। हृञ्तेर्वा भः। ह्रियन्ते हि तत्र योधना मायूंषि धनानि च। 'हृग्रहो-र्भश्छन्दसि (३, १, ८४ वा०)'। "अस्मिन् भरे नृतमं वाजसातौ (ऋ० सं० ३, २, ४, ७)"—"अत्तु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३, ७, ११, ५)"—इति निगमौ॥

(६) आक्रन्दे। 'कदि कदि क्रदि आह्वाने रोदने च

(भू० प०)'। क्रन्दन्त्याह्वयन्त्यन्योन्यमत्र, रुदन्ति वानेन वस्तुविनाशहेतुत्वात्। निगमोऽन्वेषणीयः॥

(७) आहवे। 'ह्वेञ् स्पर्द्धायाम् (भू० उ०)'। 'आङि युद्धे (३, ३, ७३)'—इत्यप्। "बहुलं छन्दसि (६, १, ३४)"—इति सम्प्रसारणञ्च। आह्वयन्त्यत्र परस्परं स्पर्द्धया योधाः। "न कश्चन सहत आहवेषु (ऋ० सं० ४, ७, १०, १)"—इति निगमः॥

(८) आजौ। 'अज गतिक्षेपणयोः (भू० प०)'। 'अजि-तिभ्याश्च (उ० ४, १२७)'—इति इण्प्रत्ययः। बाहुलकाद् वीभावाभावः। अजन्ति गच्छन्त्यत्र विजयश्रियं योद्धारः, कातराः पराभवं वा। एवमर्थो गत्यर्थेषु द्रष्टव्यः। क्षिपन्ते शस्त्राणि क्षिपन्त्याक्षिपन्ति वान्योन्यं वीर्य्यतारतम्यात्। "तेन वाजं सनिषदुभिराजौ (ऋ० सं० ८, ३, ७, ४)"—इति निगमः।

(९) पृतनाज्यम्। पृतनाशब्दोपपदादजतेश्च अघ्न्यादित्वात् (उ० ४, १०८) यत्प्रत्ययः। पृतनानां सेनानामजनं यत्र। "गव्युं सुहंसः पृतनाज्येषु (ऋ० सं० ८, ५, २१, ३)"—इति निगमः॥

(१०) अभीके। अभिपूर्वादेतेः 'अलीकादयश्च (उ० ४, २५)'—इतीकप्रत्ययो धातोर्लोपश्च निपात्यते। यद्वा, न विद्यते भीर्येषां ते अभीकाः। अभीकैः क्रियमाणत्वात् अभीकमित्युच्यते। "पाहि वज्रिवो दुरितादभीके (ऋ० सं० १, ८, २६, ४)"—इति निगमः॥

(११) समीके। संपूर्वादेतेः। अभीकवत्। निगमोऽन्वेषणीयः॥

(१२) ममसत्यम्। मम सत्यं जयः इति योद्धृणां वाक्यः

विषयत्वाग्मनसत्यमित्याचक्षते । पृषोदरादिः । "त्वां जना ममसत्ये ष्विन्द्र (ऋ० सं० ७, ८, २२, ४)"—इति निगमः ॥

(१३) नेमधिता । 'सुधितवसुधितनेमधितधिष्वधिषीय च (७, ४, ४५)'—इति नेमपूर्वाद्दधातेः तप्रत्यये इत्वमिडागमो वा निपात्यते । नेमशब्दो दानपर्य्यायः । सप्तम्येकवचनस्याकारादेशः (७, १, ३९) । "इन्द्रवन्तो नेमधिता हवन्ते (ऋ० सं० ५, २, ११, १)"—"धिष्ट्यमर्त्तो नेमधिता चिकित्वान् (ऋ० सं० १, ५, १७, ४)"—"नेमधिता न पौंस्या (ऋ० सं० ८, ४, २८, १३)"—इति निगमाः ॥

(१४) सङ्काः । सचतेर्गतिकर्मणः बाहुलकादङ्कप्रत्ययष्टिलोपश्च । यद्वा, सम्पूर्वात् किरतेः छन्दतेर्वा 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः । सङ्कीर्य्यन्तेऽत्र योद्धारः, सम्यक् छाद्यन्ते छिद्यन्ते आयुधैर्वा । "इषुधिः सङ्काः पृतनाश्च सर्वाः (ऋ० सं० ५, १, १९, ५)'—इति निगमः ॥

(१५) समितिः । सम्पूर्वादेतेः क्तिन् । "राजानः समिताविव (ऋ० सं० ८, ५, ९, १)"—इति निगमः ॥

(१६) समनम् । 'सम ष्टम अवैक्लव्ये (भू० प०)' । समन्ति विक्लवा भवन्त्यस्मिन् शूराः । "ज्या इयं समने पारयन्ती (ऋ० सं० ५, १, १९, ३)"—इति, वि या सृजति समने (ऋ० सं० १, ४, ४, १)"—इति च निगमौ ॥

(१७) मीळ्हे । "मीळ्हम्"—इति धननामसु व्याख्यातश्च (१८७ पृ०) । मीळ्हार्थत्वात् सङ्ग्रामोऽपि मीळ्हम् । यद्वा, मीळ्हमस्मिन्नस्तीति 'लुगकारेकाररेफाश्च (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक् । "प्रधने"—इत्यपठितमपि सङ्ग्रामनाम । प्रकीर्णान्यस्मिन्निति आभरणरूपेण चूडामणिकटकविक्षेपात् । "समीळ्हे नरं घाला हवन्ते (ऋ० सं० १,

५, ५, १)"—इति निगमः। 'स्वर्मीळ्हे। स्वरित्युदकनाम,। तटकार्ये संग्रामे आजौ अन्यस्मिन्नपि संग्रामे'—इति स्कन्दस्वामिभाष्यम्। "स जामिभिर्यत्समजाति मीळ्हे (ऋ० सं० १, ७, १०, १)"—इति च॥

(१८) पृतनाः। 'पृङ् व्यायामे (तु० आ०)'। 'पृपुसा किव्' —इति तनन्प्रत्ययः। व्याप्रियन्तेऽत्र योद्धारः। "रणाय निघ्नन् पृतनासु शत्रून्"—इति निगमः॥

(१९) स्पृधः। 'स्पर्ध संघर्षे (भू० आ०)'। 'क्विब्वचिप्रच्छि- (३, २, १७८वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः (३, २, १७८ भा०)'—इत्युक्तेः क्विप्। पृषोदरादित्वात् रेफस्य ऋकारोऽल्लोपश्च। शसि स्पृधः। स्पर्धन्तेऽत्र परस्परं योद्धारः। "जयेम् सयुधि स्पृधः (ऋ० सं० १, १, १५, ३)"—इति निगमः। 'स्पृध इति संग्रामनाम, 'तत्करोति (३, १, २५ वा० २)'—इति णिजन्तात् क्विप्, संग्रामकारिण इत्यर्थः'—इति स्कन्दस्वामिभाष्यम्॥

(२०) मृधः। 'अप्रर्हन्ता सोमपेयाय देवा (ऋ० सं० ३, १, २५, ४)'—'मिथो न पीतमस्मृधम् (ऋ० सं० ७,१४,१,१)'— इत्यादौ 'मृधिर्हिंसार्थः'—इति स्कन्दस्वामिभाष्यम्। तत्र पूर्ववत् क्विप् शस्। "अयं सुतः सुमखस्मा मृधश्चः (ऋ० सं० २, ६, २१, ४)"—"वि न इन्द्र मृधो जहि (ऋ० सं० ८, ८, १०, ४)"—इति निगमौ॥

(२१) पृत्सु। पृतनाशब्दस्य संग्रामनामसु पठितोऽपि 'नासिकापृतनामासूना नसपृत्स्नवो वाच्या (६, १, ६३वा०)' —इति पृदादेशे विशेषत्वात् पुनः पाठः। "अग्ने पृत्सु मस्त्यम् (ऋ० सं० १, २, २३, २)"—इति निगमः॥

(२२) समत्सु। सम्पूर्वादत्तेः क्विप् समाद्यन्ति योद्धृणामा-

यूंषि ।— सम्पूर्वोमदो हर्षे इत्यस्मात् क्विपि समो मलोपः। सङ्घर्षन्ति तत्र सुभटाः। "सुमत्सु त्वा हवामहे (ऋ० सं० ५, ८, ३६, ३)"—"धन्वना तीव्राः सुमदो जयेम (ऋ० सं० ५, १, १८, २)"—इति निगमौ॥

(२३) समर्ये। मर्यशब्दो मनुष्यनामसु व्याख्यातः (१५१पृ०) मर्यैः मरणधर्मिभिः सह वर्त्तते, सहशब्दस्य सभावः। "मास्मे ताद्दगपंगृहः समर्ये (ऋ० सं० ७, ७, १८, ४)"—"तवं स्वथाय इयमार्समर्ये (ऋ० सं० १, ५, ७, १)"—इति निगमौ॥

(२४) समरणे। सम्पूर्वात् 'ऋ सृ गतौ (भू० प०)'—इत्यस्मात् ल्युट्।— "मां वृताः समरणे हवन्ते (ऋ० सं० ३, ७, १७, ५)"—इति निगमः॥

(२५) समोहे। 'उहिर् दुहिर् धर्दने (भू० प०)'। नञ्पूर्वादुहेर्घञ्। सम्यगुह्यन्ते अर्द्यन्तेऽत्र मिथो योधार। 'अग्निं गव्य ओहम् (ऋ० सं० १, ४, २७, १)'—इत्यादौ वहेरिद रूपमिति स्कन्दस्वामी। स च सम्पूर्वाद्वहेर्घञि पृषोदरादित्वात् सम्प्रसारणे लघूपधगुणः। समुह्यन्तेऽत्र रथादिना सुभटाः, सुभटैर्वा कवचानि। "समोहे वा य आशत (ऋ० सं० १, १, १६, १)"—इति निगमः। 'अन्तोदात्त सङ्ग्रामनाम, मध्योदात्त णमुलन्तम्'—इति माधवः। "इयर्त्ति रेणु मघवा समोहम् (ऋ० सं० ३, ५, २२, ३)"—इति णमुलन्तम्॥

(२६) समिथे। सम्पूर्वादेते 'समोणः (उ० २, १०)'—इति थक्। "दद्रुन्वस्तृपः समिथे बभूव (ऋ० सं० ५, ६, २५, ६)"—"स इन्मुतानि समिथानि मज्मना (ऋ० सं० १, ४, १८, ५)"—इति निगमौ॥

(२७) सङ्खे। सम्पूर्वात् चक्षिङः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, 'बहुलं सञ्ज्ञाच्छन्दसोः (२, ४, ५४

वा०)'—इति ख्याजादेशः, पृषोदरादित्वादकारलोपः। सम्पृ-र्थंदविवर्जनार्थः। सम्बध्यते कातरैः। यद्वा, सम्पूर्वात् श्रृणोतेः 'डिश'—इति खप्रत्ययः, टिलोपेन धातुलोपः। सम-न्नु यतेऽस्मिन्नन्योन्यं योद्धारः। निगमोऽन्वेषणीयः॥

(२८) सद्वे। सम्पूर्वाद् गमेर्डः 'अन्येष्वपि दृश्यते (३, २, १०१)"—इति डः, पूर्ववद् वा। "मह्वे समन्नु वृत्रहा (ऋ० सं० ८, ७, २१, १)"—इति निगमः।

(२८) संयुगे। 'युजिर् योगे (रु० उ०)' घञ्। उञ्छा-दिषु युगशब्दस्य पाठात् निपातनादगुणत्वम्, 'वियोगेऽसौ निपातनमिष्यते, कालविशेषे रथाद्युपकरणे च'—इति वृत्तिः। सङ्गता रथयुगा यस्मिन्। निगमोऽन्वेषणीयः।

(३०) सङ्गथे। सम्पूर्वात् 'गूथ यूथ गोथ पृष्ठादयः'—इति थप्रत्ययान्तो निपात्यते। "भ्रा ते ग्रामस्य सङ्गथे (ऋ० सं० २, ८, ६, ४)"—इति निगमः॥

(३१) सङ्गमे। सम्पूर्वाद् गमेः 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यप्। "तेव्रं यन्ते अनुमदाम सङ्गमे (ऋ० सं० १, ७, १४, २)"—इति निगमः॥

(३२) वृत्रतूर्ये। वृत्रशब्दो मेघनाम, भवासुरः शत्रुव-चनः। मेघनामसु व्याख्यातः (५८६०)। 'तुर्वि गतित्वर-हिंसयोः (दि० भा०)' भव्रादित्वात् (उ० ४, १०८)। वृत्रस्तूर्यतेऽनेनास्मिन् वा। "इन्द्रो वृणीत वृत्रतूर्ये" महान्तं वृत्रतूर्ये"—इति निगमौ॥

(३३) पृक्षे। 'पृची सम्पर्के (रु० प०)'। विभ्यः कित् (उ० ३, ६२)'—इति बाहुलकात् भवति। सम्पृच्यन्तेऽस्मिन् परस्परं योद्धारः। निगमोऽन्वे-षणीयः॥

(३४) आर्णौ । 'अण रण व्रण शब्दार्थाः (भू० प०)' । 'अर्तिश्रिविपसिषसिजम्यर्पिमनिभ्य इण्' । रणवदर्थः । "त्वं ग्रुष्णं वृजने पृक्ष आणौ (ऋ० सं० १, ५, ४, ३)"—इति निगमः । 'आणौ इति संग्रामनाम'—इति स्कन्दस्वामिभाष्यम् ॥

(३५) शूरसातौ । 'शु गतौ ( सौत्रः )'—इत्यस्मात् 'शुसिचिमीनां दीर्घश्च ( उ० २, २४ )'—इति रन्प्रत्ययः । 'षणु दाने ( त० उ० )' । 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ( ३, ३, ९७ )'—इति सनोतेः 'जनसनखनाम् ( ६, ४, ४२ )'—इत्यात्वे कृते क्तरि निपात्यते । स्यतेर्वा 'द्यतिस्यति ( ७, ४ ४० )'—इतीत्वाभावश्च । शूराणां सातिः वेतनादानं मरणं वा येन । "यः शूरसाता परितक्म्ये ( ऋ० सं० १, २, ३३, १ )"—इति निगमः ॥

(३६) वाजसातौ । वाजोऽन्नं दीयते येन । "बुधे च नो भवतं वाजसातौ ( ऋ० सं० १, ३, ५, ६ )"—इति निगमः ॥

(३७) समनीके । 'अन प्राणने ( अदा० प० )' । 'अनिहृषिभ्यां किच्च ( उ० ४, १७ )'—इति ईकन्प्रत्ययः । अनित्यनीकम् । यद्वा, नञ्पूर्वान्नयतेः 'पिपीलिकादयश्च ( उ० ४, २५ )'—इति निपात्यते । न नीयते न चाल्यते अनीकम् सेनाविशेषः । सङ्गतान्यनीकानि यस्मिन् । "भोजः शत्रून् त्समनीकेषु जेता ( ऋ० सं० ८, ६, ४, ५ )"—इति निगमः ॥

(३८) खले । 'खज मन्थे ( भू० प० )' । 'पुंसि संज्ञायां घः ( ३, ३, ११८ )' । व्यत्ययेन जकारस्य लकारः । मथ्यते हि योद्धारस्तत्र । 'स्खल सञ्चलने ( भू० प० )'—इत्यस्माद्वा घः । व्यत्ययेन सकारलोपः । स्खलन्ति तत्र कातराः । "खले न पर्षान् प्रति हन्मि भूरि ( ऋ० सं० ८, १६, २ )"—इति निगमः ।

(३९) खजे । 'खज मन्थे (भ्वा० प० )'। पूर्ववत् साध्योऽर्थः। "कर्मन् कर्मञ्छतमूति खजङ्कर (ऋ० सं० १, ७, १५, १)"—इति निगमः ॥

(४०) पौंस्ये । बलनामसु व्याख्यातम् (१८४पृ०)। अभिवर्द्धतेऽनेन । निगमोऽन्वेषणीय ॥

(४१) महाधने । 'मह पूजायाम (भ्वा० प० )'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ० २, ७८)—इति निपातनम। धवि प्रीणनार्थ (भ्वा० प०)। इदित्त्वान्नुम्। पचाद्यच। वकारलोप, इकारस्याकारश्च पृषोदरादित्वात्। धिनोतीति धनम प्रीणयतीति सग्रामो यद्वारा। महच्चासौ धनञ्च महाधनम। महद्धनमर्योऽनेनेति वा। "इन्द्रं वयं महाधने (ऋ० स० १, १, १३, ५)"—"नास्य वर्त्ता न तरुता महाधने (ऋ० स० १, ३, २१, २)"—इति निगमौ ॥

(४२) वाजे । वाजशब्दो व्याख्यातो बलनामसु (१८०पृ०)। "इन्द्र वाजेषु नोऽव (ऋ० स० १, १, १३, ४)"—"तं त्वा वाजेषु वाजिनम (ऋ० स० १, १, ८, ३)"—इति निगमौ ॥

(४३) अज्म । 'अज गतिक्षेपणयो (भ्वा० प०)'। मनिन्। "युध्मिनादोदेक्षित द्रुहो अज्मसुवा (ऋ० सं० १, ७ १६, २)"—इति निगम । 'यज्ञगृहे युद्धे वा'—इति माधव ॥

(४४) सद्म । सदेर्मनिन् । अवसादयन्त्यत्र प्राणिन । निगमोऽन्वेषणीय ॥

(४५) समत् । सम्पूर्वात यमेरततेर्वा औणादिक क्विप्। यमेरनुनासिकलोप तुगागम.। सं यतन्ते सं यच्छन्ति वृथा टोन। "इन्द्रोत सुमतं करत (ऋ० स० ५ ७, २, २)'। 'समत् संग्राम'—इति हरदत्तः। "धासु यते मिन्द्र

स्त्रिम् (ऋ० सं० ४, ६, १४, ५)"—इत्यत्र 'संयतं युद्धम्'—इति माधवः॥

(४६) संवतः। सम्पूर्वाद् वनेः सम्पदादित्वात् क्विप्, अनुनासिकलोपे तुगागमः। संवननीयो हि शूरैः संग्रामः। "परस्या अधि संवतः (ऋ० सं० ६, ५, २६, ५)"—"स संवतो नवजातस्तु तुर्यात् (ऋ० सं० ४, १, ७, ३)"—इति निगमौ॥

इति षट्चत्वारिंशत् संग्रामनामानि। १७।

इन्वति (१)। नक्षति (२)। आक्षाणः (३)। आनट् (४)। आष्ट (५)। आपानः (६)। अश्नुत् (७)। नशत् (८)। आनशे (६)। अश्नुतः (१०)। इति दश व्याप्तिकर्माणः॥ १८॥

(१) इन्वति। अत्र वधकर्मसु ऐश्वर्यकर्मसु च अनेकार्थत्वादिगतिकर्मादावुक्तमनुसन्धेयम्। 'इवि व्याप्तौ (भू० प०)'। "सखीनां योर्गमिन्वति (ऋ० सं० १, १, ३५, २)"—इति निगमः॥

(२) नक्षति। 'नक्ष अक्ष गतौ (भू० प०)'। "नक्षद्दाभं ततुरिं पर्वतेष्ठाम् (ऋ० सं० ४, ६, १३, २)"—"इन्द्रस्य, चिद्वर्द्धनो यामिनक्षत् (ऋ० सं० १, ४, १०, ४)"—इति निगमौ। 'इन्वति नक्षतीति व्याप्तिकर्मसु पठितत्वं इकार आगमश्छान्दसः'—इति स्कन्दस्वामिभाष्यम्॥

(३) आक्षाणः। अश्नोतेर्लटि शानच्। 'सिब्बहुलं लेटि (३, १, ३४)'—इति बाहुलकात् सिप्, उपधादीर्घत्व, व्रश्चादित्वे 'षढोः कः सि (८, २, ४१)' 'आदेशप्रत्यययोः (८, ३,

५८)' पलम "श्राशुणे शूर वज्रिव (ऋ० सं० ७, ७, ८, १)"—इति निगम । भाष्य द्रष्टव्यम् ॥

(४) आनट् । 'अश अदर्शने (दि० प०)' । लुङि च्लेः 'मन्त्र घसह्वरणश (२, ४, ८०)'—इति लुक् । सयोगान्तलोपे (८, २, २३), व्रश्चादिपत्वे (८, २, ३६), जश्त्वम् । 'छन्दस्यपि दृश्यते (६, ४, ७३)'—इति आडागम । "किमिच्छन्ती सरमा प्रेदमानट (ऋ० सं० ८, ६, ५, १)"—"धर्म ब्रह्मद्विषा आ नट् व्यानट (ऋ० सं० ८, २, १६, १)"—इति निगमौ ॥ यद्वा, अश्नोतेर्लिटि एकत्वे व्यत्ययेन पशो लुक, व्रश्चादिना पत्वम, 'झलां जशोऽन्ते (८, २, ३९) वावसाने (६ ४, ५६)' । "उपागुना समंमश्नतुरस्मानट् (ऋ० सं० १, ८, १०, १)—इति निगमः ॥

(५) आष्ट । अश्नोतेर्लुङि आत्मनेपदप्रथमपुरुषैकवचनम् । "आष्ट मां दार्थगाधम"—इति निगम ॥

(६) आपान । 'आप्लृ व्याप्तौ (स्वा० प०)' । शानच् । अन्तर्लिर्वधकर्मण 'तद्रूपम्' इति स्कन्दस्वामी । "आपा नामो विवस्वत (ऋ० सं० ६, ७, ३४, ५)"—इति निगम । भाष्य द्रष्टव्यम (निरु० ३, १०) ॥

(७) अगत् । अश्नोते व्यत्ययेन लङि च्लेः पूर्ववत् लुक् । 'बहुल छन्दस्यमाङ्योगेऽपि (६, ४, ७५)'—इत्यडभाव । निगमोऽन्वेषणीय ॥

(८) नशत् । नशयतेर्लिटि 'लेटोऽडाटौ (३, ४, ९४)' इतश्च लोप परस्मैपदेषु (३, ४, ९७)' । "स धीतये ते नशत्"—"न कि ष्टं वाविते नशत् (ऋ० सं० ६, ५, २, ३ "—इति निगमौ ॥

(९) आनशे । अश्नोतेर्लिटि रूपम् । "न कि ष्कर्ज आनशे (ऋ० सं० १, ६, ६, २)"—इति निगम ॥

(१०) अश्नुते । "अर्तसतनूर्नतट्रासो अश्नुते (ऋ० सं० ७, १, ८, १)"—"व्यश्नुहि तर्पया कार्ममेषाम् (ऋ० सं० १, ४, १८, ४)"—इति निगमौ ॥

इति दश व्याप्तिकर्माणि ॥ १८ ॥

दभ्नोति (१) । श्नथति (२) । श्नर्थति (३) । श्नुवति (४) । वृणक्ति (५) । वृश्चति (६) । कृन्तति (७) । कृन्तति (८) । श्वसिति (९) । नमते (१०) । अर्दयति (११) । स्तृणाति (१२) । स्नेहयति (१३) । यातयति (१४) । स्फुरति (१५) । स्फुलति (१६) । निर्वपन्तु (१७) । अवतिरति (१८) । वियातः (१९) । आतिरत् (२०) । तलित् (२१) । आखण्डल (२२) । दूणाति (२३) । शृणाति (२४) । शणाति (२५) । शृत्नाति (२६) । तृणेढि (२७) । ताब्हि (२८) । नितोशते (२९) । निबर्हयति (३०) । मिनाति (३१) । मिनोति (३२) । धमति (३३) । इति त्रयस्त्रिंशत् वधकर्माणः ॥१९॥

व्याप्तिकर्मसु शाकपूणेरतिरिक्ता एव "विव्याच"—"उरु व्यचा"—"विव्रे" —इति स्कन्दस्वामी ॥

(१) दभ्नोति । "दम्भु दम्भे' स्वादिः (प०) । "न त्वा वेता च दंभुवन्ति भूर्णय (ऋ० सं० १, ४, २०, २)"—इति निगम ॥

(२) श्रथति। 'श्रथ क्नथ क्रथ हिंसायाम् (भू० प०)'। "अर्थद् हवमुत संनोति वाजम् (४, ८, २७, १)"—"नव पुत्री नवतिं च श्रथिष्टम् (ऋ० सं० ५, ६, २३, ५)"—इति निगमौ।

(३) स्वरति।

(४) धूर्वति। 'तुर्व थुर्व दुर्व धुर्व हिंसार्थाः (भू० प०)'। 'उपधायाश्च (८, २, ७८)'—इति दीर्घः। "धूर्वन्तं धूर्व धूर्वन्तं धूर्व (य० वा० सं० १, ८)"—इति निगमः।

(५) वृणक्ति। 'वृजी वर्जने' रुधादिः। "नि चक्रेव रथ्या दुष्पदा वृणक् (ऋ० सं० १, ४, १६, ४)"—इति निगमः।

(६) वृश्चति। 'ओव्रश्चू छेदने' तुदादिः। 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्। 'वृश्चा मध्यं प्रत्यग्रं शृणीहि (ऋ० सं० ३, २, ४, २)"—"विवृश्च वज्रेण वृत्रमिन्द्र (ऋ० सं० १, ४, २८, ५)"—इति निगमौ।

(७) कृन्वति। 'कृवि हिंसाकरणयोः (भू० प०)'। व्यत्ययेन 'धिन्विकृण्व्योरच (३, १, ८०)'—इत्यं तत्र भवति।

(८) कृन्तति। 'कृती छेदने (पा०)' तुदादिः। 'शेमुचादीनाम् (७, १, ५९)'। "वि दस्यूंर्योनावकृतो वृथाषाट् (ऋ० सं० १, ५, ४, ४)"—इति निगमः।

(९) श्वसिति।

(१०) नभते। 'णभ तुभ हिंसायाम्' (भू०) आत्मनेपदी। "नभन्तां मन्युके समे (ऋ० सं० ६, ३, २२, १)"—इति निगमः।

(११) अर्दयति। 'अर्द हिंसायाम् (भू० प०)' स्वार्थीयः। "वृत्रं विपर्वमर्दयत् (ऋ० सं० २, ५, ६, १)"—इति निगमः।

(१२) स्तृणाति। 'स्तृञ् आच्छादने' क्र्यादिः स्वादिश्च।

"कद्रु ह वृत्री यस्तु तम् (ऋ० सं० ६, ४, ४९, ५)"—इति निगमः॥

(१३) खेदयति। 'खिद खेदने' चुरादिः। "यः खौहितीषु पूर्व्यः (ऋ० सं० १, ५, २१, २)"—इति निगमः। 'खेदयतिर्बधकर्मा'—इति स्कन्दस्वामी।

(१४) यातयति। 'यति निकारोपस्कारयोः' चुरादिः। "यातयन्त क्षितयो नवग्वाः (ऋ० सं० १, ३, २, १)"—इति निगमः॥

(१५) स्फुरति। (१६) स्फुलति। 'स्फुर स्फुरणे' 'स्फुल सञ्चलने' तुदादि, कुटादिः। "मुद्रा चुम्पमिव स्फुरत् (ऋ० सं० १, ६, ६, ३)"—"यार्जी इमे विस्फुरन्तो अमित्रान् (ऋ० सं० ५, १, १९, ४)"—इति निगमः। 'स्फुरतीति वधकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(१७) निवपन्तु। 'टु वप बीजसन्ताने (भू० उ०)'—इत्यस्मात् लोट्। "अन्यन्ते अस्मन्निवपन्तु सेनाः (ऋ० सं० २, ७, १८, १)"—इति निगमः॥

(१८) अवतिरति। तरतेर्लट् 'बहुलं छन्दसि (७, ४, ७८)'—इतीत्वम्। "अवातिरज्जयोतिषाग्निस्तासोसि (ऋ० सं० ३, ५, ११, १)"—यदिन्द्र शारदी रवातिरः (ऋ० सं० २, १, २०, ४)"—इति निगमौ।

(१९) वियातः। 'तत्र वियात इत्येतद् वियातयन इति वियातयेति वा (निरु० ३, १०)'—इति भाष्ये स्कन्दस्वामी तस्य समाधिमर्थं व्याचष्टे—'विपूर्वस्य यातयतेर्वा ये प्रत्यये वियातय इति भवति धारयः पारयः इतिवत्। तस्य सम्बोधनम् वियातयेति। वियातयितरिति वा पाठान्तरम्'—इति। धारयपारयेति दृष्टान्तमदर्शनेन 'व्यत्ययो बहुलम् (३,

तोशते (ऋ० । सं० ७, ५, १२, ४)"—"इन्दुरिन्द्राय तोशते निर्तोशते (ऋ० सं० ७, ५, २१, ११)"—सुमास्तीरा हविषा तोशमाना"—इति निगम. ॥

(३०) निवर्हयति। 'वर्हि हिंसायाम्' चुरादि, निपूर्व। "बृहिर्बृहि नि मुहसानि बृहये (ऋ० सं० १, ४, १६, १)"—इति निगम. ॥

(३१) मिनाति, (३२) मिनोति, (३३) धमति। गतिकर्मसु व्याख्याता: (२०४पृ०)। "न ता मिनन्ति मायिनो न धीरा (ऋ० सं० ३, ४, १, १)"—"न मिनन्ति वेधम"—"अग्निभो नामिमोत् वर्णाम् (ऋ० सं० २, ५, २४, ५)"—इति मिनातिनिंगमा। अत्र, 'मिनातिर्वधकर्मा'—इति स्कन्दस्वामी। "द्यावा वर्षं चरत आमिनाने (ऋ० सं० १, ८, १, २)"—"उत द्विवर्हा अमिन: सहोभि (ऋ० सं० ४, ६, ७, १)"—इति मिनोतेर्निगमौ। अनयो, 'मिनोतिर्वधकर्मा'—इति स एव। "वि सुप्तरश्मिरधमत्तमांसि (ऋ० सं० ३, ७, २६, ४)"—इति निगम ॥

इति त्रयस्त्रिंशत् बधकर्माणि ॥ १८ ॥

दिद्युत् (१)। नेमिः (२)। हेतिः (३)। नमः (४)। पविः (५)। सृकः (६)। टकः (७)। वधः (८)। वज्रः (९)। अर्कः (१०)। कुत्सः (११)। कुलिशः (१२)। तुजः (१३)। तिग्मम् (१४)। मेनिः (१५)। स्वधितिः (१६)। सायकः (१७)। परशुः (१८)। इत्यष्टादश वज्रनामानि ॥ २० ॥

(१) दिद्युत्। 'द्युत दीप्तौ (भ्वा० आ०)'। 'द्युतिगमिजुहोतीनां द्वे च (३, २, १७८ वा० २)'—इति क्विपि द्वित्वे, 'द्युतिस्वाप्योः सम्प्रसारणम् (७, ४, ६७)'—इत्यभ्यासस्य सम्प्रसारणम्। द्योतते उज्ज्वलत्वात्। द्यतेर्वा क्विपि पृषोदरादित्वात् रूपसिद्धिः। द्यति शत्रून्। "अस्तुर्न दिद्युत्त्वेषप्रतीका (ऋ० सं० १, ५, १०, ४)"—"यत्रा वो दिद्युद्रदति (ऋ० सं० २, ४, २, १)"—"या ते दिद्युदवसृष्टा (ऋ० सं० ५, ४, १६, ३)"—इति निगमाः॥

(२) नेमिः। नयतेः 'नियो मिः (उ० ४, ४३)'—इति मिप्रत्ययः। नयति शत्रून् विनाशं, नीयन्तेऽनेन वा ऐश्वर्यम्। यद्वा, 'णमु प्रह्वत्वे (भ्वा० प०)'। उपसर्गे च्छन्दसि गमादिभ्यो दर्शनात् (३, २, १७१ भा०)'—इति किप्रत्ययः। लिड्वद्भावाद् द्विर्वचने 'अत एकहल्मध्येऽनादेशादेर्लिटि (६, ४, १२०)' अन्तर्भावितण्यर्थो नमिः। नमयति शत्रून्। "अरिष्टनेमिं पृतनाजमाशुम् (ऋ० सं० ८, ८, २६, १)"—इति निगमः॥

(३) हेतिः। हन्तेर्हिनोतेर्वा 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च (३, ३, ९७)'—इति क्तिनि हन्तेर्नकारस्यैत्वम्, हिनोतेर्गुणश्च निपात्यते। हन्यन्तेऽनेन शत्रवः, गम्यतेऽनेन जयः, वर्द्धते वैश्वर्यम्। "ब्रह्मद्विषे तपुषिं हेतिमस्य (ऋ० सं० २, २, ४, २)"—इति निगमः॥

(४) नमः। नमतेरसुन्। नेमिवदर्थः। निगमोऽन्वेषणीयः॥

(५) पविः। पवतिर्गतिकर्मा। 'अच इः (उ० ४, १३४)'। गत्वा शत्रून् गम्यतेऽनेन जय इति च। "मूर्धा सु मायं पविमिन्द्र तिग्मम् (ऋ० सं० ८, ८, १८, २)'—इति निगमः। वज्रतिग्मशब्दावत्र क्रियाशब्दौ।

(६) वृकः । 'वृ गतौ (भू० प०)' । सृवृभूशुषिमुषिभ्यः कक् (उ० ३, ४१)—इति कप्रत्ययः । दर्शितनिगमः (ऋ० सं० ८, ८, ३८, २) ॥

(७) वृकः । 'वृक आदाने (भू० आ०)' इगुपधज्ञाप्रीकिरः कः (३, १, १३५) । आदत्ते शत्रुप्राणान् । वृणक्तेर्वा के पृषोदरादित्वात् (६, ३, १०९) रूपसिद्धिः । इतिवद्दर्थः । निगमोऽन्वेषणीयः ॥

(८) वधः । 'जनिवध्योश्च (७, ३, ३५)'—इति वृद्धिप्रतिषेधः । इतिवद्दर्थः । "वृत्रस्य यद् भृष्टिमता वधेन (ऋ० सं० १, ४, १४, ५)"—"इन्द्रो अस्या अवधर्जंभार (ऋ० सं० १, २, ३७, ४)"—इति निगमौ ॥

(९) वज्रः । 'व्रज गतौ (भू० प०)' । 'ऋज्रेन्द्र (उ० २, २७)'—इत्यादिना रन्प्रत्ययान्तो निपात्यते । यद्वा, वृजक्तेर्हिनुमत्यान्तात् रक्, गुणे, प्राप्तस्य रेफस्य लोपः । वर्जयति प्राणै. शत्रून् । अन्ये वर्जयतिमेव विनाशार्थमाहुः विनाशयति शत्रून् । "त्वष्टास्मै वज्रं स्वर्यं ततक्ष (ऋ० सं० १, २, ३६, २)"—इति निगमः ॥

(१०) अर्कः । 'अर्च पूजायाम् (भू० प०)' । 'कृदाधारार्चिकलिभ्यः कः (उ० ३, ३८)'—इति कप्रत्ययः । 'चोः कुः (८, २, ३०) "इन्द्रः पुर्भिदातिरद्दासमर्कैः (ऋ० सं० ३, २, १५, १)"—इति निगमः ।

(११) कुत्सः । कृन्ततेः । 'स्तुवश्चिकृत्यृषिभ्यः कित् (उ० ३, ६३)'—इति सप्रत्ययः । कृन्ततेरकारस्य बाहुलकादुत्वम् । कृन्तति शत्रून् । यद्वा, 'कुत्स क्षेपणे' चुरादिरात्मनेपदी । अच् । कुत्सयत्यनेन शत्रून् । "सद्यो दस्यन् प्रमृण कुत्स्येन (ऋ० सं० २, ५, १८, २)"—इति निगमः । यकार उपजनः ॥

(१२) कुलिशः। "'कुलपर्वतान् श्यति पक्षच्छेदेन तनू-करोति'—इति स्कन्दस्वामी। क्षीरस्वामी—कुलशब्द उप-पदे श्यतेः 'आतोऽनुपसर्गे कः (३, २, ३)' पृषोदरादित्वात् अकारस्येकारः। यद्वा, कुलशब्दोपपदादन्तर्णीतण्यर्थात् 'शद्लृ शातने (भू० तु० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, पूर्ववदिकारः। मेघस्यान्ते पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कुलानीव, तेषां शातनात्। "स्कन्धा-ंसीव कुलिशेना विवृक्णाहिः (ऋ० सं० १, २, २६, ५)"—इति निगमः॥

(१३) तुजः। तुजेः पचाद्यच्। हिंसितेत्यर्थः। निगमो-ऽन्वेषणीयः॥

(१४) तिग्मम्। 'तिज निशाने' चुरादिः। 'युजिरुचि-तिजां कुश्च (उ० १, १४३)'—इति मक्प्रत्ययः कुत्वञ्च। तिग्यते तीक्ष्णीक्रियते। 'तिग्मं तेजतेरुत्साहकर्मणः तीक्ष्णं ह्यायुधं योद्धारमुत्साहयति तिग्मशातनः'—इति माधवः। "वि तिग्मेन॑ वृष॒भेणा॒ पुरो॑ऽभेत् (ऋ० सं० १, ४, ३, २)—इति निगमः।

(१५) मेनिः। मन्यतेः कान्तिकर्मणः 'इगुपधज्ञाप्रीकिरः कः' ... 'उत्सर्गतन्त्रस्वमि गमादिभ्यो दर्शनात् (३, २, १७१ मा०)'—इति क्तिप्रत्ययः। नेमिवत् प्रक्रिया। काम्यते हि आयुधम्। यद्वा, 'मिञ् हिंसायाम् (क्या० उ०)' 'वीज्याज्वरिभ्यः (उ० ४. ४८)'—इति बाहुलकात् निप्रत्ययः। हिंसितेत्यर्थः। निगमोऽन्वेषणीयः।

(१६) स्वधितिः। स्वशब्दोपपदात् 'धि धारणे (तु० प०)'—इत्यस्मात् क्तिन्। स्वं धनं धीयतेऽनेन। "न स्वधिति॒र्वन॑न्वति (ऋ० सं० ६, ७, १२, ४)"—इति निगमः॥

(१७) सायकः। 'षोऽन्तकर्मणि (दि० प०)'। ण्वुल्,

इत्यौ 'श्रांतो युक् चिणूलतोः (७, ३, ३३)'। अयूणामन्तकरः। 'पिञ् बन्धने (क्रा० उ०)'—इत्यस्माद्वा खुल्। वध्नाति स्थिरीकरोति तद्वत् ऐश्वर्य्यादि। "पुरीपिणं सायकेना हिरण्ययम् (ऋ० सं० ८, १, ५, ५)"—"न सायकस्य चिकिते जनासः (ऋ० सं० ३, ३, २३, ३)"—इति निगमौ ॥

(१९) परशुः। 'शॄ हिंसायाम् (क्रा० प०)'। 'आङ्परयोः खनिशॄभ्यां डिच्च (उ० १, ३२)'—इति कुप्रत्ययः। डित्वाट्टिलोपः। 'परान् शृणातीति परशुः'—इति दण्डनाथवृत्तिः। 'परान् शतीति परशुः'—इति चीरस्वामी। तत्र कृगवादित्वात् (उ० १, २६) कुः। "शिशीते नूनं परशुं स्वायसम् (ऋ० सं० ८, १, १४, २)"—"अभीदु शक्रः परशुर्यथावनम् (ऋ० सं० ५, ७, ८, १, ४)"—इति निगमौ ॥

इत्यष्टादश वधनामानि ॥ २० ॥

**इरज्यति (१)। पत्यते (२)। क्षयति (३)। राजति (४)। इति चत्वार ऐश्वर्य्यकर्म्माणः ॥२१॥**

(१) इरज्यति। कण्ड्वादिः। "य एकश्चर्षणीनां वसूनामिरज्यति (ऋ० सं० १, १, १४, ४)"—"मह्नो नृमणस्य धर्म्मणामिरज्यसि (ऋ० सं० १, ४, १८, ३)"—इति निगमौ।

(२) पत्यते। नैरुक्तधातुः। दिवादौ 'तप ऐश्वर्य्ये वा' इत्यस्य स्थाने 'पत ऐश्वर्य्ये' इति केचित् पठन्ति। "त्वं ग्नयः पत्यते धृष्ण्वोजः (ऋ० सं० ३, २, १८, ४)"—"युतग्रामाभिर्युतः पत्यमानः (ऋ० सं० ४, ८, ५, ४)"—इति निगमौ ॥

(३) क्षयति। "सेदु राजा क्षयति चर्षणीनाम् (ऋ० सं० १, २, १८, ५)"—इति निगमः ॥

(४) राजति । 'राजृ दीप्तौ (भू० उ०)' स्वरितेत् । "विभ्रो विभ्रा विराजति (ऋ० सं० १, १, ६, ३)"—"राजन्तमध्वराणाम् (ऋ० सं० १, १, २, ३)"—इति निगमौ ।

इति चत्वार ऐश्वर्यकर्माणः । २१ ।

## राष्ट्री (१) । अर्य्यः (२) । नियुत्वान् (३) । इनइन (४) । इति चत्वारीश्वरनामानि ॥२२॥

(१) राष्ट्री । राजतेरैश्वर्यकर्मणः (निघ० २,२१, ४) । 'ष्ट्रन् सर्वधातुभ्यः (उ० ४, १४४)'—इति ष्ट्रन्प्रत्ययः । व्रश्चादिना (८, २, ३६) षत्वम् । षित्वात् ङीप् (४, १, ४१) । "राष्ट्री देवानां निषसाद मन्द्रा (ऋ० सं० ६, ७, १, ४)"—इति निगमः ।

(२) अर्य्यः । 'ऋ गतौ (भू० प०)'—इत्यस्मात् ण्यति प्राप्ते 'अर्य्यः स्वामिवैश्ययोः (३, १, १०३)'—इति यदिपात्यते । गम्यते हि सर्वैरीश्वरः । "समर्य्या गा अजति यस्य वष्टि (ऋ० सं० १, ३, १, १)"—"मंहिष्ठो अर्य्यः सत्पतिः (ऋ० सं० ६, १, २५, ६)"—इति निगमौ ।

(३) नियुत्वान् । नियुच्छब्दो व्याख्यातः 'नियुतो वायोः' इत्यत्र (१३० पृ०) । नियुतोऽश्वाः ताभिस्तद्वान् । 'तसौ मत्वर्थे १, ४, १९)'—इति भसंज्ञाया विधानाज्जश्त्वं न भवति । "अतो नो गुप्तमर्वसे नियुत्वान् (ऋ० सं० ४, ७, १२, ५)"—इति निगमः ।

अस्य स्थाने "पतिः"—इति केचित् पठन्ति । तत्र 'पा रक्षणे (अदा० प०)' 'पातेर्डतिः (उ० ४, ५७)' । रक्षिता ह्यीश्वरः । 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु० ४, २१) अत्र पातेर्णिजन्तात् बाहुलकात् डतिः कथञ्चि

हिव स्कन्दस्वामिना उक्तः । "शिप्रिन् वाजानां पते (ऋ० सं० १, २, २७, २)"—इति निगमः ॥

(४) इनः । एतेः सम्भाजनार्थे वर्त्तमानात् समुपसर्गार्थ-विशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इति नक्प्रत्ययः । अर्थस्तु 'तत्रेन इत्येतत्सनित. (निरु० ३, ११)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्त । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० स० २, ३, १८, १)"—इति निगम ॥

इति चत्वारीश्वरनामानि । २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने

द्वितीयोऽध्याय समाप्त. ॥ २ ॥

अपस्तुङ्मनुष्याञ्चायत्यग्नुवो वश्च्यन्ध्र आवयव्योनोमघमन्नग्रारेलतेङ्कलो वर्त्ततेनु-तलिद्रणं इन्वतिदभ्नोतिद्रिद्युदिरज्यतिराष्ट्री ति द्वाविंशतिः ॥

इति निघण्टौ द्वितीयाध्यायः समाप्तः ॥२॥

---

(४) राजति। 'राजृ दीप्तौ (भू० उ०)' स्वरितेत्। "विश्वा विराजति (ऋ० सं० १, १, ६, ३)"—"राजन्तमध्वराणाम् (ऋ० सं० १, १, २, ३)"—इति निगमौ॥

इति चत्वार ऐश्वर्यकर्माणः। २१॥

राष्ट्री (१)। अर्य्यः (२)। नियुत्वान् (३)। इनइन (४)। इति चत्वारीश्वरनामानि॥२२॥

(१) राष्ट्री। राजतेरैश्वर्यकर्मणः (निघ० २,२१, ४)। 'ष्ट्रन् सर्वधातुभ्यः (उ० ४, १५४)'—इति ष्ट्रन्प्रत्ययः। व्रश्चादिना (८, २, ३६) षत्वम्। षित्त्वात् ङीष् (४, १, ४१)। "राष्ट्री देवानां निषसाद मन्द्रा (ऋ० सं० ६, ७, ३, ४)"—इति निगमः॥

(२) अर्य्यः। 'ऋ गतौ (भू० प०)'—इत्यस्मात् ण्यति प्राप्ते 'अर्य्यः स्वामिवैश्ययोः (३, १, १०३)'—इति यन्निपात्यते। गम्यते हि सर्वैरीश्वरः। "समर्य्यो गा अजति यस्य वष्टि (ऋ० सं० १, ३, १, १)"—"मंहिष्ठो अर्य्यः सत्पतिः (ऋ० सं० ६, १, २५, ६)"—इति निगमौ॥

(३) नियुत्वान्। नियुच्छब्दो व्याख्यातः 'नियुतो वायोः' इत्यत्र (१३० पृ०)। नियुतोऽश्वाः ताभिस्तद्वान्। 'तदस्यास्त्यस्मिन्निति मतुप्' (५, २, ९४)। 'झयः' (८, २, १०)—इति मतुपो वत्वम्। 'तसौ मत्वर्थे' (१, ४, १९)—इति भसंज्ञाया विधानाज्जश्त्वं न भवति। "अतो नो यज्ञमवसे नियुत्वान् (ऋ० सं० ४, ७, १२, ५)"—इति निगमः।

अस्य स्थाने "पतिः"—इति केचित् पठन्ति। तत्र 'पा रक्षणे (अदा० प०)' 'पातेर्डतिः (उ० ४, ५७)'। रक्षिता हीश्वरः। 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु० ४, २१) अत्र पातेरस्माद् बाहुलकात् डतिः कृपसि-

विश्व स्कन्दस्वामिना उक्तः । "अग्निर्न् वाजानां पते (ऋ० सं० १, २, २७, २)"—इति निगमः ॥

(४) इनः । एतेः सम्भाजनार्थे वर्त्तमानात् समुपसर्गार्थ-विशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इति नक्प्रत्ययः । अर्थस्तु 'तत्रेन इत्येतत्सनितः (निरु० ३, २१)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तः । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० सं० २, ३, १८, १)"—इति निगमः ॥

इति चत्वारीश्वरनामानि । २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने

द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

अर्पस्तुङ्मनुष्याग्न्यायत्यगुवो वरस्यन्ध्य

श्चावयत्योजोमुघमनग्रान्रेजतेहेलो वृत्तेतेनु-

त्तलिद्रणं इन्वतिद्म्नोतिदिद्युदिरज्यतिराष्ट्री ति

द्वाविंशतिः ॥

इति निघण्टौ द्वितीयाध्यायः समाप्तः ॥२॥

---

## अथ तृतीयाध्यायः।

—:○:—

उरु (१)। तुवि (२)। पुरु (३)। भूरि (४)। शश्वत् (५)। विश्वम् (६)। परीणसा (७)। व्यानशिः (८)। शतम् (९)। सहस्रम् (१०)। सलिलम् (११)। कुवित् (१२)। इति द्वादश बहुनामानि ॥ १ ॥

(१) उरु। उर्विति पृथिवीनामेति उरुशब्दो व्याख्यातः। आच्छाद्यते घ्नेनाल्पम्। "उरु णस्तन्वे तन उरु क्षयाय नस्कृधि (ऋ० स० ६, ५, २६, १)"—इति निगमः॥

(२) तुवि। तवतिवृद्ध्यर्थः। सौत्रो धातुः। 'अच इः (उ० ४, १३४)'। हविर्हि बहुः। "तुविजाता उरुक्षया (ऋ० स० १, १, ४, ४)"—इति निगमः।

(३) पुरु। पृणातेः 'पॄभिदिव्यधिगृधिधृषिहृषिभ्यः' (उ० १, २३)'—इति कुप्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उत्वम्। पुरुरिव बहुः पुरुभुजा चनस्यतम् (ऋ० सं० १, १, ५, १)"—इति निगमः।

(४) भूरि। भवतेः 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४, ६५)'—इति क्रिन्प्रत्यय.। भवति तत् सर्वस्यानुग्रहदा। "यत्र गावो भूरिशृङ्गा अयासः (ऋ० स० २, २, २४, ५)"—इति निगमः॥

(५) शश्वत्। 'टु ओ श्वि गतिवृद्ध्योः (भू० प०)'। 'अंश-

सृम्यह्वेहत् (उ० २, ७८)'—इत्यादिना द्विर्वचनम्, अभ्यासवकारेकारेकारस्याकारो ङित्वमाद्युदात्तत्व नियात्यते । परिवहते गम्यते वा। "ग्रुहं धनानि सञ्जयामि शश्वतः (ऋ० सं० ८, १, ५, १)"—"यचिचि शश्वता तनो (ऋ० सं० १, २, २१, १)"—इति निगमौ ॥

(६) विश्वम् । (७) परीणसा ।

(८) व्यानशिः । विपूर्वादश्नोतेरुत्सर्गतश्छन्दसि गमादिभ्यो दर्शनात् (३, ३, १७१ भा०)'—इति किः । द्वित्वम् । अत आदेः अश्नोतेश्च । विविधं व्याप्नोति । "व्यानशिः पवसे सोमधर्मभिः (ऋ० सं० ७, ३, १२, ५)"—इति निगमः ॥

(९) शतम् । 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (५, १, ५९)'—इति दशदशाशभावस्त च निपात्यते । "दशदशतः" इति निरुक्तम् (३, १०) । निपातनसामर्थ्यात् बहुमात्रेऽपि वर्त्तते । "नाजयामः शतक्रतो (ऋ० सं० १, १, ८, ४)"—इति निगमः ॥

(१०) सहस्रम् । सहो बलनामसु व्याख्यातम् (१८३पृ०) । रो मत्वर्थीयः । अस्यापि भाविनी शक्तिरस्मिन्नस्ति । "सहस्राचरा परमे व्योमन् (ऋ० सं० २, ३, २२, १)"—इति निगमः ॥

(११) सलिलम् । व्याख्यातमुदकनामसु ( ८३ पृ० ) । गम्यते हि जलवत् । "अप्रकेतं सलिलं सर्वमा इदम् (ऋ० सं० ८, ७, १७, ३)"—इति निगमः । 'सलिलमिति बहुनाम । सलिलं कुविदिति पाठात्'—इति हरदत्तः ।

(१२) कुवित् । निपातोऽयम् । "कुवित् सोमस्यापामिति (ऋ० सं० ८, ६, २६, २)"—इति निगमः ॥

इति द्वादश बहुनामानि । १ ॥

क्रुहन् (१)। ह्रस्वः (२)। निघृष्वः (३)। मायुकः (४)। प्रतिष्ठा (५)। कृधु (६)। वम्रकः (७)। दभ्रम् (८)। अर्भकः (९)। क्षुल्लकः (१०)। अल्प (११)। इत्येकादश ह्रस्वनामानि ॥ २ ॥

(१) ऋहन्। 'रुह बीजजन्मनि (भू॰ प॰)'—'रह त्यागे (भू॰ प॰)'। अनयोः 'संश्चत्तृपद्वेहदित्यादयः (उ॰ २, ८४)'—इति रेफस्य सम्प्रसारणम्, इतिप्रत्ययः, अद्वत्भावश्च निपात्यते। तत्र, दण्डनाथवृत्तिः—'आदिग्रहणाद्विरूहियदित्यादयो भवन्ति'—इति। आरुह्यते हि क्षस्तो वृत्तादिः, त्यज्यते वा दीर्घार्थिभिः। "बृहन्तं चिद्दहते रन्धयानि (ऋ॰ सं॰ ७, ७, २१, ३)"—इति निगमः॥

(२) ह्रस्वः। 'सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे'—इति वनुप्रत्ययान्तो निपात्यते। ह्रसतिः शब्दार्थे पठित, तथाप्यत्र न्यूनार्थे वर्त्तते। "नमो ह्रस्वाय च वामनाय च (य॰ वा॰ सं॰ १६, ३०)"—इति निगमः॥

(३) निघृष्व। 'घृषु सङ्घर्षे (भू॰ प॰)'। अत्र न्यूनार्थः। इगुपधलक्षणः कः। ह्रस्वत्वदर्थः। निगमोऽन्वेषणीयः॥

(४) मायुकः। 'डु मिञ् प्रक्षेपणे (क्र्या॰ उ॰)'। 'कृवापा (उ॰ १, १)'—इत्युण्। स्वार्थे कः। प्रक्षिप्यतेऽनायासेन। निगमोऽन्वेषणीयः॥

(५) प्रतिष्ठा। प्रतिपूर्वात् तिष्ठतेर्न्यूनार्थात् 'घञर्थे कविधानम् (३, ३, ५८ वा॰)'—इति बाहुलकात् कर्त्तरि कः। प्रतितिष्ठति। निगमोऽन्वेषणीयः॥

(६) कृधु। 'कृती छेदने (रु॰ प॰)'। 'पृभिदिव्यधिगृधिधृषिभ्यः (उ॰ १, २३)'—इत्यादिना बाहुलकात् कुप्रत्ययस्त-

कारस्य धकारश्च। 'निह्नत्तमिव हि तद् भवति ह्रस्वत्वादेव'—इति स्कन्दस्वामी। "यो अस्य धीयुरनद्र सर्वान् (ऋ० सं० ४, ६, १३, ३)"—इति निगमः॥

(७) वम्रकः। 'टु वम उद्गिरणे (भू० प०)' न्यूनार्थे। 'स्फायितञ्चिवञ्चि (उ० २, १३)'—इत्यादिना बाहुलकाद्रक्। ततः स्वार्थे कः (५, ३, ८७)। "वम्रकः पुड्भिरुपसर्प दिन्द्रम् (ऋ० सं० ८, ५, १४, ६)"—इति निगमः। "स्तर्वानो वम्रो विर्जधान सन्दिहः (ऋ० सं० १, ४, १०, ४)"—इत्यत्र 'वम्रः ह्रस्वनामैतत् द्रष्टव्यम्। स्वार्थिककप्रत्ययान्तो ह्रस्वनामसु पठितम्'—इति स्कन्दस्वामी॥

(८) दभ्रम्। दभतिर्न्यूनार्थः। 'स्फायितञ्चिवञ्चि (उ० २, १३)'—इति रक्। 'नेड्वशि कृति (७, २, ८)'—इतीट्प्रतिषेधः। "दभ्रं पश्यद्भ्य उर्विया विचक्षे (ऋ० सं० १, ८, १, ५)"—इति निगमः॥

(९) अर्भकः।

(१०) क्षुल्लकः। क्षुधं लाति। 'आतोऽनुपसर्गे कः (३, २, ३)'। स्वार्थे कः। 'क्षुधं लाति क्षुल्लकः'—इति क्षीरस्वामी। "नमो महद्भ्यः क्षुल्लकेभ्यश्च क्षुल्लका शिपिविष्टका"—इति निगमः॥

(११) अल्पः। 'अलं भूषणपर्याप्तिवारणेषु'। 'अलितल्पिभ्यां... पः'—इति पः। "अल्पा एनं पशवो मूत्रन्त उपतिष्ठेरन्"—इति निगमः॥

इत्येकादश ह्रस्वनामानि। २॥

महत् (१)। ब्रध्नः (२)। ऋष्वः (३)। बृहत् (४)। उक्षितः (५)। तवसः (६)। तविषः

(७)। महिषः (८)। अभ्वः (९)। ऋभुक्षाः (१०)। उक्षाः (११)। विहायाः (१२)। यह्वः (१३)। ववक्षिथ (१४)। विवक्षसे (१५)। अम्भृणः (१६)। माहिनः (१७)। गभीरः (१८)। ककुहः (१९)। रभसः (२०)। व्राधन् (२१)। विरप्शी (२२)। अद्भुतम् (२३)। बर्हिष्ठः (२४)। बर्हिषत् (२५) इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

(१) महत्। 'मानेनान्यान् जहातीति शाकपूणिर्मंहनीयो भवतीति वा (निरु० ३, १३)'—इति भाष्यम्। 'मानेन स्वगुणेन परिमाणेन अन्यान्, यदपेक्ष्य तस्य महत्त्वं, तान् जहाति अतिक्रामति मानशब्दात् जहातेश्चेति शाकपूणि। निर्वचनलाघवात् महते पूजाकर्मणो वटत्याचार्य'—इति स्कन्दस्वामी। उभयत्रापि 'वर्त्तमाने पृषद्बृहन्महत् (उ० २, ७८)'—इत्यतिप्रत्यये निपातनाद्रूपसिद्धि। "महत्तदुल्बं स्थविरं तदासीत् (ऋ० सं० ८, १, १०, १)"—इति निगम।

(२) ब्रध्न। व्याख्यातमश्वनामसु (१२४पृ०)। बध्नाति स्वगुणै सर्वान् वेतनदानेन भृत्यादीन्। "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ० सं० १, १, ११, १)"—इति निगम ॥

(३) ऋष्व। 'ऋष गतौ (तु० प०)'। 'सर्वनिघृष्व (उ० १५१)'—इति वन्प्रत्ययो गुणाभावश्च निपात्यते। गम्यते हि महान् सर्वं गतो वा भूमिम्। इमावर्थौ गत्यर्थेषु बोद्धव्यौ। 'ऋषिर्दर्शनात् (निरु० २, ११)'—इति भाष्यादपि दर्शनार्थम्।

दर्शनीयो हि महान् "कृवार्त इन्द्र स्थविरस्य बाहू (ऋ० सं० ४, ७, २१, ३)" इति निगमः ॥

(४) बृहत्। 'बृहि वृद्धौ (भू० प०)'। 'वर्त्तमाने पृषद्बृहन् (उ० २, ७८)'—इति निपातनम्। परिवृद्धं भवति हि महत्त्वं, वर्द्धतेऽस्मिन्नैश्वर्यादि, वर्द्धतेऽनेन समाश्रितः। बृहदर्थेष्वेवमर्थो बोद्धव्यः। "बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ५, १८, ६)"—"उरोऋ॒ष्वस्य बृहतः (ऋ० सं० १, २, १७, ४)"—इति निगमौ। उरोर्ऋष्वस्येत्यत्र 'ऋष्वस्य महन्नाम. बलवतः, बृहतः एतदपि महन्नामैव। वेगसम्बन्धेन न च पुनरुक्तिः। महतः वेगेन शीघ्रस्येत्यर्थः'—इति स्कन्दस्वामिभाष्यम् ॥

(५) ऊर्जितः। 'ऊर्जतिर्वृद्ध्यर्थः'—इति स्कन्दस्वामी। निष्ठायामिडागमः। निगमोऽन्वेषणीयः ॥

(६) तवसः। तवतिर्वृद्ध्यर्थः।' 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। "रजस्तुरं तवसं मारुतं गणम् (ऋ० सं० १, ५, ८, २)"—"तन्त्वा गृणामि तवसं मर्त्यान् (ऋ० सं० ५, ६, २५, ५)"—इति निगमौ ॥

(७) तविषः। तवतेरेव। 'तवेर्णिद्वा (उ० १, ४८)'—इति टिषच्प्रत्ययः। "सानुं गिरीणां तविषेभिरूर्मिभिः (ऋ० सं० ४, ८, ३०, २)"—इति निगमः ॥

(८) महिषः। महतेः 'अविमह्योष्टिषच् (उ० १, ४५)'। महदर्थः। यद्वा, महतेः क्विप्, सप्तम्येकवचनम्, महे 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्यय., 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इति अलुक्, 'सुषामादिषु च (८, ३, ९८)'—इति षत्वम्। महि महति स्थाने सीदत्यास्ते

मन्दिव.। "मुह्रिपासो मायिनश्चित्रभानवः (ऋ० मं० १, ५, ७, २)"—इति निगमः॥

(९) अभ्वः। व्याख्यातमुदकनामसु (१०६पृ०)। आ सम- न्तात् भवतीति कीर्त्तिमत्त्वात्। यद्वा, भवतेः सत्तार्थात् प्राप्त्यर्थाद्वा नञ्पूर्वात् 'नञि भुवो डित्'—इति क्वप्रत्ययः। न भवत्यनेनापद्वचोऽस्मिन्निति वा न प्राप्यते लेशैः। "न वै वातस्य प्रमिनन्त्यभ्वम् (ऋ० सं० १, २, १४, १)"—आ यो नो अभ्व ईयते (ऋ० स० १, ३, १८, ३)"—इति निगमौ॥

(१०) ऋभुक्षाः। 'ऋ गतौ (भू० प०)'। 'अर्त्तेर्भुक्षि- नक्'—इति भुक्षिनक्प्रत्ययः। 'पथिमथ्यृभुक्षामात् (७, १, ८५)' 'इतोऽत् सर्वनामस्थाने (७, १, ८६)'। उरु विस्तीर्णं भाति, ऋतेन सत्येन यज्ञेन वा भाति भवति वा, ऋभुः। मेधावी महत् स्थान वा। उरुशब्दादुपपदाद् भातेर्भवतेर्वा 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययः। पूर्वपदस्य स्वर्णटिलोपः सम्प्रसारणञ्च निपात्यते। क्षयतेरैश्वर्यकर्मण. क्षियतेर्वा 'वृतेश्छन्दसि (उ० ४, १३६)'—इति बाहुलकादिनि टिलोपश्च। ऋभूणा क्षयति ईष्टे, ऋभौ महति स्थाने निव- सति वा। "त्वमृभुक्षानर्य स्त्वं पाट् (ऋ० स० १, ५, ४, ३)"—इति निगमः॥

(११) उक्षा। उक्षतेर्वृद्ध्यर्थात् 'श्वन्नुक्षन्पूषन् (उ० १, १५५)'—इति कनप्रत्ययान्तो निपात्यते। निगमोऽन्वे- षणीय.॥

(१२) विहायाः। 'वहिहाधाञ्भ्यश्छन्दसि (उ० ४, २१९)' —इति अक्षातेर्जिहीतेर्वा बाहुलकात् पुनभावेऽपि युगागमो निपात्यते। कृष्णादुदस्थादर्या विहाया' (ऋ० सं० २, १, ४, १)"—इति निगमः॥

(१३) यज्ञः । यजतेः 'शेवयह्वजिह्वाग्रीवाप्वामीवा (उ० १, १५२)'—इति वन्प्रत्ययो जकारस्य ह्रकारश्च निपात्यते । यजते देवपूजादिकं करोति । यद्वा, 'यसु प्रयत्ने (दि० प०)' 'यमोष'—इति क्वन्प्रत्ययः'—इति भोजदेवः । यस्यति प्रयत्यते प्रवृत्त्वाच्चयादौ । 'यह्व इति महतो नामधेयम्, यातश्च ह्रुतश्च भवति'—इति (निरु० ८, ८) भाष्ये 'यातश्चासावाहूतश्च वार्थिभिः, ह्रुतश्चासौ गत्यार्थिभिः, द्विधातुजत्वं दर्शितम्' इति स्कन्दस्वामी । ततोऽत्र यातेर्ह्वयतेश्च 'गेहे कः (३, १, १४४)' इति बाहुलकात् भूते कप्रत्ययो ह्वयतेः सम्प्रसारणाभावश्च । "प्रवो॑ य॒ह्वं पु॑रू॒णाम् (ऋ० सं० १, ३, ८, १)—इति निगमः ।

(१४) ववक्षिथ । (१५) विवक्षसे । 'तत्र ववक्षिथ विवक्षस इत्येते (निरु० ३, १३)'—इत्यादिभाष्ये अनयोराख्यातयोर्महत्वामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना । ववक्षिथेत्यत्र 'छन्दतः (८, ४, ७८)"—इतीत्वाभाव, एकवचनस्य स्थाने बहुवचनम्, सकारात् परस्याकारस्येत्वञ्च व्यत्ययेन । "पतिर्विश्वं ववक्षिथ (ऋ० सं० १, ४, १, ५)"—"गौर प॑वुकयो॑षिपु॒ विवक्षसे (ऋ० सं० ७, ०, ४, १)"—इति निगमौ ।

(१६) अभ्भृणः । अमतेः क्विप् । बिभर्तेः 'इर्णसिष्ठजिटि (उ० ३, २)'—इत्यादिना बाहुलकात् नप्रत्ययः । "प्रिया॒ह्वं॑-भूटिमभ्भृणम् (ऋ० सं० २, १, २२, ५)"—इत्यत्र 'अभ्भृणस्य महतः फलस्य हेतुभूता'—इति स्कन्दस्वामी ।

(१७) माहिनः । महतेः । 'महेरिनण् च (उ० २, ५३)'—इति इनण्प्रत्ययः । "प्रणो न दमि॒ स्तोम॑ माहिनाय (ऋ० सं० १, ४, २०, १)"—इति निगमः ।

(१८) गभीरः। वाङ्नामसु व्याख्यातम् (६५ पृ०)। प्रतिष्ठितो महति स्थाने लिप्यन्ते। "उकृव्यचो वरिमतो गभीरम् (ऋ० सं० १, ७, २६, २)"—इति निगमः॥

(१९) ककुहः। 'ककु महने'। 'ककेरुहः'—इति उह-प्रत्ययः। महते अभिभवति शत्रून्, महते चमतेऽपराधान् वा। "वृष्णो वां ककुहासः (ऋ० सं० १, ३, २३, ३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः। 'रभ राभस्ये (भू० आ०)'। 'अत्यविच-मितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। रभते महान्ति कर्माणि, संरभ्ये वा शत्रुषु। "अधेनं वृको रभसासो अद्युः (ऋ० सं० ८, ५, ३, ४)"—इति निगमः॥

(२१) ब्राधत्। ब्रन्धातेः 'संश्चत्तृपद्वेहदित्यादयः (उ० २, ७८)'—इतीतिप्रत्ययः आ आगमश्च निपात्यते। "स ब्राधतो नहुषो दंसुजूतः (ऋ० सं० २, १, २, ४)"—इति निगमः॥

(२२) विरप्शी। 'रप लप व्यक्तायां वाचि (भू० प०)' विपूर्वः। 'रपधकस्यभिकुभ्यः शक्'—इति बाहुलकात् शक्। विविधं रपतीति विरप्शाः स्तोतार, तेऽस्य सन्ति इति विरप्शी। यद्वा, विविध रपणं विरपणं तदस्यास्ति वा। महि मह इत्यसुबन्तपाठश्च। विरप्शी गोमती मही (ऋ० सं० १, १, १६, ३)"—इत्यादीकारान्तोपादानं मन्त्रे इनिव्रत्य-र्थम्। "क्रत्वे वरिष्ठो विरप्शीन् (ऋ० सं० ४, ७, १२, २)" —"विरप्शिने वज्रिणे शन्तमानि (ऋ० सं० ४, ७, ४, १)" —इति निगमौ।

(२३) अद्भुतम्। 'भू सत्तायाम् (भू० प०)'। 'अदि भुवो डुतच् (उ० ५, १)'। 'अदित्यावर्यार्थोऽव्ययम्'—इति क्षीर-

स्वामी । तत्र सम्पूर्वाद् विभर्त्तेर्वा बाहुलकात् क्तन्प्रत्यये मलोऽभावश्च । सम्यक् पोषितो धनादिभिः, सम्यक् विभर्त्यां श्रितेनेति वा । "सद॑स॒स्पति॒मद्भु॑तम् (ऋ० सं० १, १, ३५, १)"—"वषट्कृतस्याद्भुतस्य दस्ता (ऋ० सं० १, २, २२, ४)"—इत्यत्र 'मद्भवामाद्युदात्तः स्यादव्ययीभूतेऽन्तोदात्तः स्वरः'—इति माधवः । "तन्न स्तुरी॒पमद्भु॑तम् (ऋ० सं० २, २, ११, ४)"—इति निगमः ॥

(२४) वंहिष्ठः । वहि महि वृद्धौ (भू० आ०)' । लहि-वंह्योर्नलोपश्च (उ० १, २८)'—इति वहुपदम्, तत इष्ठन्-प्रत्ययः । 'वंहतेर्वहुलं मत्वर्थीयः'—इति चीरस्वामी । अतिशयेन वहुलो वंहिष्ठः । 'प्रियस्थिरस्फिरोरुवहुल (६, ४, १५७)'—इत्यादिना वहादेशः । यद्वा, 'निचुलवञ्जुलवकुल-मूलपृथुलस्थूलविमस्थूलादयः'—इति वहेरुलच्प्रत्ययो नलो-पश्च निपात्यते । अन्यत् पूर्ववत् । "यद्वंहि॑ष्ठं नाति॒ विधे॑-सुदानू (ऋ० सं० ४, ४, ३१, ३)"—इति निगमः ॥

(२५) बर्हिषत् । हृह वृहि वृद्धौ (भू० प०)' । 'वृंहेर्न-लोपश्च (उ० २, १०२)'—इति इसिप्रत्ययः । बर्हिःशब्द उप-पदे सत्तः 'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विप् । पृषो-दरादित्वाद्वर्हिषः सकारलोपः । सुषामादित्वात् (८, ३, ८८) षत्वम् । यद्वा, 'अनिते (८, ३, १८)'—इति । 'सर्व-धातुभ्यः (उ० ४, ११८)'—इति इन् । अन्यत् पूर्ववत् । परि-हृढे स्थाने स्यादिति हि मद्यान् । निगमोऽन्वेषणीयः ॥

इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

गयः॑ (१) । छर्दिः॑ (२) । गर्त्तः॑ (३) हर्म्यम् (४) । अस्तम् (५) । पस्त्य॑म् (६) ।

(१८) गभीरः। वाङ्नामसु व्याख्यातम् (६५ पृ०)। प्रतिष्ठितो महति स्थाने लिप्यन्ते। "उरुव्यचा वरिमता गभीरम् (ऋ० सं० १, ७, २६, २)"—इति निगमः॥

(१९) ककुहः। 'ककु महने'। 'कक्केरुहः'—इति उह-प्रत्ययः। महते अभिभवति शत्रून्, महति चमतेऽपराधान् वा। "वृचन्ते वां ककुहासः (ऋ० सं० १, ३, ३३, ३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः। 'रभ राभस्ये (भू० आ०)'। 'अत्यविच-मितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। रभते महान्ति कर्माणि, संरभ्ये वा शत्रुषु। "अर्धेनं इका रभसासो अद्युः (ऋ० सं० ८, ५, २, ४)"—इति निगमः॥

(२१) ब्राधत्। ब्रन्धातेः 'सच्चत्तृम्पद्रेहदित्यादयः (उ० २, ७८)'—इतीतिप्रत्ययः आ आगमश्च निपात्यते। "स ब्राधतो नहुषो दस्युजूतः (ऋ० सं० २, १, २, ४)"—इति निगमः॥

(२२) विरप्शी। 'रप लप व्यक्तायां वाचि (भू० प०)' विपूर्वः। 'रपश्चकन्यभिशुभ्यः शक्'—इति वाहुलकात् शक्। विविध रपतीति विरप्शाः स्तोतार, तेऽस्य सन्ति इति विरप्शी। यद्वा, विविध रपणं विरपण तदस्यास्ति वा। महि मह इत्यसुबन्तपाठय। विरप्शी गोमती मही (ऋ० म० १, १, १६, ३)"—इत्याटीकारान्तोपादानं मन्दे हनिहत्य-र्थम्। "क्रत्वं अर्पितो विरप्शीन् (ऋ० सं० ४, ७, १२, २)" —"विरप्शिने वज्रिणे शन्तमानि (ऋ० सं० ४, ७, ४, १)" —इति निगमौ।

(२३) अद्भुतम्। 'भू सत्तायाम् (भू० प०)'। 'अदि भुवो डुतच् (उ० ५, १)'। 'अदित्यावय्योर्थोऽव्ययम'—इति कौर-

स्वामी। तत्र सम्पूर्वाद् बिभर्त्तेर्वा बाहुलकात् कुतन्प्रत्यये मस्मोऽभावश्च। सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्यायितेनेति वा। "सद्समस्तिमद्भुतम् (ऋ० सं० १, १, २५, १)"—"वषट्कृतस्याद्भुतस्य दस्रा (ऋ० सं० १, २, २२, ४)"—इत्यत्र 'मद्दत्वामाद्युदात्तः स्यादत्राश्चर्य्यभूतेऽन्तोदात्तः स्वरः'—इति माधवः। "तन्न सुदीप्रमद्भुतम् (ऋ० सं० २, २, ११, ४)"—इति निगमः॥

(२४) वंहिष्ठः। वहि महि इडौ (भू० आ०)'। लङ्घिवंह्योर्नलोपश्च (उ० १, २८)'—इति वहुपदम्, तत्र इष्ठन्प्रत्ययः। 'वहतेर्बहुलं मत्वर्थीयः'—इति क्षीरस्वामी। अतिशयेन बहुलो वंहिष्ठः। 'प्रियस्थिरस्फिरोरुबहुल (६, ४, १५७)'—इत्यादिना बंहादेशः। यद्वा, 'निचुलवञ्जुलवकुलमूलपृथुलस्थूलविसस्थूलादयः'—इति वंहिकलच्प्रत्ययो नलोपश्च निपात्यते। अन्यत् पूर्ववत्। "यदवंहिष्ठं नाति विधे' सुदानू (ऋ० सं० ४, ४, ३१, ३)"—इति निगमः॥

(२५) बर्हियत्। वृह वृहि वृद्धौ (भू० प०)'। 'वृंहेर्नलोपश्च (उ० २, १०२)'—इति इसिप्रत्ययः। बर्हिःशब्द उपपदे मतः 'मत्सूदिप (३, २, ६१)'—इत्यादिना क्विप्। पृषोदरादित्वादुत्तरङ्घिपः सकारलोपः। सुषामादित्वात् (८, ३, ८८) षत्वम्। यद्वा, 'अनिते (८, ३, १८)'—इति। 'सर्वधातुभ्यः (उ० ४, ११८)'—इति इन्। अन्यत् पूर्ववत्। परिवृद्धे स्थाने स्यादिति हि महान्। निगमोऽन्वेषणीयः ॥

इति पञ्चविंशतिर्महन्नामानि, अर्थः, भाद्गुणश्च।

गयः (१)। कृर्भा इति पर्यायेणास्यार्थकथनम्'

हर्म्यम् (४)। अस्तिष्टीदमूता वतिचिद्रत्रोणे (ऋ०

सं० ३, ८; (८, ४)"—मध्वे मित्रेणोरुखो दुर्गोणे (ऋ० मं० १, ५, १३, २)"—इति निगमो ।

(८) नीलम् । 'ध्याङकोङकुहोडादय'—इति बहुवचनप्रत्ययः, मत्वर्थादेर्लोपो गुणाभावश्च निपात्यते । नीयन्तेऽत्र पदार्था, नयति सुखानि स्वसनमिति वा । "आ यो मुहः गुर्हं सुनादनील (ऋ० सं० ८, १, १७, १)"—इति निगमः ।

(९) दुर्य्याः । 'दुर्वी हिंसार्था (भू० प०)' । 'बाहुलकादित्वाद् यत्प्रत्यये वकारलोपे दीर्घाभावश्च निपात्यते । हिंसन्ति मीनाति हि त दु खम । यद्वा, दुःशब्दपूर्वात् याते, 'घञर्थे कविधानम् (३, ३, ५८, वा० २)'—इति क । 'दुःखेन प्राप्यन्ते, दुर गृहद्वाराणि अर्हन्तीति वा दुर्य्या गृहा उच्यन्ते'—इत्युवट । "अवो रक्षा प्रचेता सोऽनु दुर्य्यात् (ऋ० सं० १, ६, २२, ४)"—इति निगम ॥

(१०) स्वसराणि । व्याख्यातमहर्नामसु (४६ पृ०) । स्वेन स्वननेन क्षियते प्राप्यते स्वैर्देहवतो प्रातिभि व्रियते, सुखु अस्यन्ते वास्मिन् पदार्था । निगमोऽन्वेषणीय ॥

(११) अमा । 'अम गतिभजनशब्देषु (भू० प०)' । 'पुंसि सज्ञायां घ प्रायेण (३, ३, ११८)' । गम्यन्तेऽस्मिन् भजन्ते शब्दायन्ते वा । यद्वा, निपातोऽयम । "अमात्यम् (ऋ० सं० ५, २, २०, १)"—इत्यत्र, उवट—'अमा गृहवचन सहवचनो वा । अव्ययात् त्यप् तत्र भव इत्यर्थे । गृहे सत्यामा भवति अमात्य'—इति । "सा नो भूमा सो चरंन्तु निपातु (ऋ० सं० ८, २, ५, ७)"—"अमा सते वहसि भूरिवामम् (ऋ० सं० २, १, ८, २)—"अमाजूरिव पित्रो सचासती (ऋ० मं० २, ६, २०, २)"—इति निगमा ॥

(१२) दमे । 'दम उपशमने (दि० प०)' । घञ् । 'नोदा-

त्योपदेशस्य (७, ३, ३४)'—इति वृद्धिप्रतिषेधः । शाम्यतेऽनेन शीतादि, दान्तः क्लेशः । "वर्द्धमानं स्वे दमे (ऋ० सं० १, १, २, ३)"—"इस्कर्त्तारं दमे दमे (ऋ० सं० ३, ५; ६, २)"—इति निगमौ ॥

(१३) कृत्तिः । 'कृती छेदने (तु० क० प०)' । क्तिन् । छदरवदर्थः । निगमोऽन्वेषणीयः ॥

(१४) योनिः । व्याख्यातमुदकनामसु (१०१ पृ०) । मिश्रीतेऽनेन सुखम्, पृथग्भूयन्तेऽनेनाविष्टा इति, परीवीतो वा प्राकारादिना जायेव । जायेव योनावरं विश्वस्मै (ऋ० सं० १, ५, १०, ३)"—इति निगमः ॥

(१५) सद्म । सदेर्मनिन् । सीदत्यस्मिन् । "सद्मेव धीराः सम्मायं चक्रुः (ऋ० सं० १, ५, ११, ५)"—इति निगमः । 'सद्म गृहनाम'—इति स्कन्दस्वामी ॥

"वर्म" इति केचित् पठन्ति । वृणोतेर्मन् । व्रियते तेन, सम्भज्यते वा गृहिभिः । निगमोऽन्वेषणीयः ॥

(१६) शरणम् । शृणातेः 'युच् बहुलम् (उ० २, ७४)'—इति युच् । शृणाति शीतादिक्लेशम्, रचितवान् वा क्लेशेभ्यः 'शरिः प्राप्त्यर्थः'—इति माधवः । प्राप्यते हि तत् । "तोदस्येव शरण आ महस्य (ऋ० सं० २, २, १८, १)"—इति निगमः ॥

(१७) वरूथम् । 'वृञ् वरणे (स्वा० उ०)' । 'जूवृञ्भ्यामूथन् (उ० २, ५)' । वर्मवदर्थः । "भवा वरूथं गृणते विभावो (ऋ० सं० १, ४, २४, ४)"—इति निगमः ॥

(१८) छर्दिः । 'छर्द सन्दीपने (चु० प०)' । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः (उ० २, १०१)' । सन्दीप्यते ज्वालया । "अश्वो यच्छतादवकं पृथु छर्दिः (ऋ० सं० १, ४, ५, ५)"—

"वरूथं मह्नियच्छताद्ं (ऋ० सं० ६, ४, ५२, १)"—इति निगमौ।

(१८) छदि। 'छद अपवारणे (चु० उ०)'। "विच्। पूर्ववदिस्। 'छादेर्घे द्व्युपसर्गस्य (६, ४, ८६)'। 'इस्मन्-न्क्विपु च (६, ४, ९७)'—इति ह्रस्व। णिलोप। छाद्यते हि तत्। निगमोऽन्वेषणीय ॥

(२०) छाया। 'छो छेदने (दि० प०)'। मास्यानमोच भ्यो य। व्रुतिवदर्थ। छायाकरत्वाद्वा छाया। "यस्य छाया मृतम् (ऋ० सं० ८, ७, ३, २)"—इति निगम।

(२१) शर्म। शृणाति अरे अयतेर्वा मन्। अयतेर्बा-हुलकाद्रूपसिद्धि.। श्रीयते हि तत्। अन्यत्र शरणवदर्थ। "त्वामिदिन्द्रस्य शर्मणि (ऋ० सं० १, १, ८, १)"—"त्रिधातु शर्म वहत शुभस्पती (ऋ० सं० १, ३, ४, ६)"—इति निगमौ ॥

(२२) अज्म। अजे 'अर्त्तिस्तुसुहुसृधृक्षि…च (उ० १, १३७)'—इत्यादिना बाहुलकात् मन्। अस्त्रवदर्थ। "येषा-मज्मेषु पृथिवी (ऋ० सं० १, ३, १२, ३)"—इति निगम ॥

इति द्वाविंशतिर्गृहनामानि ॥ ४ ॥

इरज्यति (१)। विधेम (२)। सपर्यति (३)। नमस्यति (४)। दुवस्यति (५)। ऋध्नोति (६)। ऋणद्धि (७)। ऋच्छति (८)। सपति (९)। विवासति (१०)। इति दश परिचरण-कर्माणः ॥ ५ ॥

(१) इरज्यति। 'ईर्ष्य ईर्ष्यायाम्' कण्ड्वादि, यगि…

मेत्। अनेकार्थत्वात् इत्यादि यदुक्तं तदिहाध्याये सर्वत्र धातुषु तद् बोद्धव्यम्॥

(२) विधेम। 'विध विधाने' तुदादि। लिङुत्तमपुरुष बहुवचनम्। "युष्मे विधेम नमसा हविर्भिः (ऋ० सं० २, ७, २४, २)"—"हविष्मन्तो विधेम ते (ऋ० सं० १, ३, ८, २)"—"इतेव सद्म विधतो वि तारीत् (ऋ० सं० १, ५, १, १)"—इति निगमः॥

(३) सपर्यति। 'सपर पूजायाम्' कण्ड्वादि। "दूतं देव सपर्यत (ऋ० सं० १, १, २३, २)"—इति निगमः॥

(४) नमस्यति। 'नमोवरिवश्चित्रङः क्यच् (३, १, १९)'। नमस. सत्कारायाम्। नमः करोति। "इन्द्रं नमस्यन्नुपमेभिरर्कैः (ऋ० सं० १, २, १, २)"—"यं नमस्यन्ति कृष्टयः (ऋ० सं० १, २, ११, ४)"—इति निगमौ॥

(५) दुवस्यति। 'दुवस् परिचरणे, परितापे च' कण्ड्वादिः। "दुवस्यन्ति स्वसारो अह्रयाणम् (ऋ० सं० १, ५, २, २)"—इति निगमः॥

(६) ऋध्नोति। "ऋधु वृद्धौ" स्वादिः। अतएव "आ ऋध्नोति हविष्कृतिम् (ऋ० सं० १, १, ३५, ३)"—इति निगमः॥

(७) ऋणद्धि। व्यत्ययेन श्नम्॥

(८) ऋच्छति। 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' (तु० प०)॥

(९) सपति। 'षप समवाये (भ्० प०)'। "अविद्वांसो विदुष्टरं सपेम (ऋ० सं० ४, ५, १८, ५)"—इति निगमः॥

(१०) विवासति। नैरुक्तधातुः। 'विपूर्वात् वसतेश्च'। 'छन्दस्युभयथा (३, ४, ११७)'—इति अपि आर्द्धधातुकत्वात्

विलोप'—इति भट्टभास्करमिश्रः। "दुर्विधो/ अविवासति (ऋ० म० १, १, २३, ३)"—इति निगमः॥

इति दश परिचरणकर्माणि ॥ ५ ॥

गिम्बाता (१)। शतरा (२)। शातपन्ता (३)। शर्म (४)। स्यूमकम् (५)। शेवृधम् (६)। मयः (७)। सुग्म्यम् (८)। सुदिनम् (९)। शूषम् (१०)। शुनम् (११)। शग्मम् (१२)। भेषजम् (१३)। जलाषम् (१४)। स्योनम् (१५)। सुम्नम् (१६)। शेवम् (१७)। शिवम् (१८)। शम् (१९)। कम् (२०) इति विंशतिः सुखनामानि ॥ ६ ॥

(१) गिम्बाता। 'गिड निशाने (स्वा० उ०)'। निम्ब विम्बगिम्बदिम्बडिम्बस्तम्बसम्बादय'—इति गिनोतेर्वप्रत्ययो मुम निपात्यते। अतर्तर्षेन। दुःखानि तनूकुर्वत् प्रार्थ्यते॥

(२) शतरा। शत बहु, अनेकमिन्द्रियप्रमादादि राति ददाति 'आतोऽनुपसर्गे कः (३, २, ३)'॥

(३) शातपन्ता। शो तनूकरणे (दि० प०)' निष्ठा। पतते 'हसिमृग्रिण्वामि (उ० ३, ८६)'—इति बाहुलकात् तन्। शातेन दुःखाना तनूकरणेन पत्यते स्तूयते। विप्वपि द्विवचनस्याकारः। मिथेर्ऋता शतरा शातपन्ता (ऋ० म० ८, ६, १, ५)"—इति निगमः॥

(४) शर्म। व्याख्यात गृहनामसु (२५६पृ०)। "ता नो देवी सुहवा शर्म यच्छत (ऋ० म० ४, २, २८, ७)"—इति

निगमः ॥ अस्य स्थाने "शिलु."—इति केचित् पठन्ति। 'गल गतौ (भू० प०)'। 'वलिफल्योर्गुक् च)'—इति कुप्रत्ययो बाहुलकादकारस्योकारः। गम्यते पुण्यवद्भिः, गच्छत्यनेन ह्रसिम्, गच्छति वान्यमनित्यत्वात्। एवमर्था गत्यर्थेषु बोद्धव्या.। निगमोऽन्वेषणीयः ॥

(५) स्यूमकम्। 'षिवु तन्तुसन्ताने (दि० प०)'। 'अविसिविमिशुषिभ्यः कित् (उ० १, १४१)'—इति मन्प्रत्यय.। 'छोः शूडनुनासिके च (६, ४, १९)' यणादेश, स्वार्थे क। स्यूतं पुण्यमति। निगमोऽन्वेषणीयः ॥

(६) शेवृधम्। शेशब्दे उपपदे वृधेः इगुपधलक्षणः क.। शेवस्य वर्द्धयितृ शेवृधम्। पृषोदरादित्वादुभयत्र रूपसिद्धि। "स शेवृधमधि धा द्युम्नमस्मे (ऋ० स० १, ४, १८, ६)"—इति निगमः ॥

(७) मयः। 'मिञ् हिंसायाम् (स्वा० उ०)'। असुन्। हिनस्ति दुःखम्। "मयं कृणोषि मय आ च सूरये (ऋ० स० १, २, ३३, २)"—इति निगम. ॥

(८) सुग्म्यम्। सुपूर्वात् गमेः अघ्न्यादित्वात् यत्प्रत्यय उपधालोपश्च। "ऊधा ददातु सुग्म्यम् (ऋ० सं० १, ४, ५, ३)" —"आ सुग्म्याय सुग्म्यम् प्राता (ऋ० सं० ६, ३, ७, ५)"—इति निगमौ ॥

(९) सुदिनम्। व्याख्यातमहर्नामसु (६७ पृ०), अत्र सुपूर्वम्। सुष्ठु द्यति दु.खम्, खण्ड्यते वा भाग्यविद्भ्यश्चेत्। निगमोऽन्वेषणीयः ॥

(१०) शूषम्। व्याख्यातं बलनामसु (१८२ पृ०)। शुष्यत्यनेन दुःखम्, प्रियावहत्त्व सुखम्। "नाक्षाके भिद्वेतरौ न शर्मः (ऋ० सं० ४, ५, १४, ४)"—इति निगम. ॥

(११) शुनम्। 'शुन गतौ (तु० प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः। "शुनं नः फाला वि कृषन्तु भूमिम् (ऋ० म० ३, ८, ८, ८)"—शुनं हुवेम मघवानमिन्द्रम् (ऋ० म० ३, २, ४, ७)—इति निगमौ॥

(१२) शग्मम्। शशब्दे उपपदे गम 'गेहे कः (३, १, १४४)'—इति कः। गमहनेत्युपधालोपः (६, ४, ९८)। पृषोदरादित्वात् गमो मलोपः। सुखं गम्यतेऽनेन दुष्कृतादि शमनेन वा। यद्वा, शकेः 'युजिरुचितिजां कुश्च (उ० १, १४३)'—इति बाहुलकात् मक्प्रत्ययः, ककारस्य गकारश्च। शक्नोति तृप्तिं जनयितुम्। "वास्तोष्पते शग्मया संसदा ते (ऋ० म० ५, ४, २१, २)"—इति निगमः॥

(१३) भेषजम्। (१४) जलाषम्। व्याख्याते उदकनामसु (१०८पृ०) भिषज्यतिरत्र सुखनार्थः। "इदं जलाषभेषजम् (ऋ० म० १, ३, २६, ४)"—इति निगमः॥ 'जलाषज सुखा दोषधम्'—इति स्कन्दस्वामिभाष्यम्॥

(१५) स्योनम्। 'षिवु तन्तुसन्ताने (दि० प०)'। 'सिवेष्टेर्यू च (उ० ३, ९)'—इति नप्रत्यये गुणः। स्युमवदर्थः। स्योनमिति सुखनाम, 'स्यतेरवस्यन्त्येतत्'—इति (निरु० ८, ९) भाष्ये 'स्यतेः सेवतेर्वा स्योनम्'—इति व्याख्यातं स्कन्दस्वामिना। तत्र बाहुलकान्नप्रत्यये टेर्यूट्। "दुर्वेभ्यो [illegible] तये स्योनम् (ऋ० म० ८, ६, ८, ४)"—"स्योना पृथिवि भव (ऋ० म० १, २, ६, ५)"—इति च निगमौ॥

(१६) सुम्नम्। 'राज्ञामासासुम्नदुम्नानिम्नेति भोजसूत्रम् शोभनेन कर्मणा मीयते निर्मीयते, सुष्ठु मीयते परि [illegible] भाषनेति वा। "ऋ व सुम्ना नव्यांसि (ऋ० म० १, ७, १४, ३)" "सुम्नाय वर्तयामसि (ऋ० म० ६, ४, ५५, १)"—इति निगमौ

(१७) शेवम् । (१८) शिवम् । 'शीङ् स्वप्ने (अदा० आ०)' । 'इण्शीभ्यां वन् (उ० १, १५०)' । 'सर्वनिघृष्व (उ० १, १५१)'—इति शीङो धातोर्वन्प्रत्ययो गुणाभावश्च निपात्यते । 'शेवमिति सुखनाम (निरु० १०, १७)' इत्यादि-भाष्ये । शिष्यतेर्व्युत्पादितावेतौ । तत्रार्थस्तु—शेषयति हिनस्ति क्लेशान्, शेषयति वा सायम् । "जने न शेवं आहूर्यः सन् (ऋ० सं० १, ५, १३, २)"—"शिवाभिर्न स्मयमानाभिरागात् (ऋ० सं० १, ५, २७, २)"—इति निगमौ ॥

(१९) शम् । निपातोऽयम् । यद्वा, शाम्यतेर्विन् । शाम-यिता क्लेशानाम् । "श नो सन्तु प्रचेतसे (ऋ० सं० १, १, १०, २)"—इति निगमः ॥

(२०) कम् । अयमपि निपातनम् । "श्रियसे कं भानुभिः सम्मिमिक्षिरे (ऋ० सं० १, ६, १२, ६)"—"आ वो मक्षू तनाय कम् (ऋ० सं० १, २, १८, २)"—इति निगमौ । "अद्ये कमिन्द्र चरतो वितर्तुरम् (ऋ० सं० १, ७, १४, २)"—इत्यत्र 'कमिति सुखनामेदमव्ययम्'—इति स्कन्दः ॥

इति विंशतिः सुखनामानि ॥ ६ ॥

निर्णिक् (१) । वव्रिः (२) । वर्पः (३) । वपुः (४) । अमतिः (५) । अप्सः (६) । प्सुः (७) । अप्नः (८) । पिष्टम् (९) । पेशः (१०) । कृशनम् (११) । भरः (१२) । अर्जुनम् (१३) । ताम्रम् (१४) । अरुपम् (१५) । शिल्पम् (१६) । इति षोडश रूपनामानि ॥ ७ ॥

(१) निर्णिक् । 'णिजिर् शौचपोषणयोः (जु० उ०)'

निशब्दपूर्वं क्विप्। निर्णिक्तं हि तत्, पोषयति वा प्रीतिम्। "शर्धो वस्त निर्णिजम् (ऋ० सं० १, २, १८, ३)"—इति निगमः॥

(२) वव्रिः। 'वृञ् वरणे (स्वा० उ०)'। 'आदृगमहन जनः किकिनौ लिट् च (३, २, १७१)' द्विर्वचनम्, कित्त्वाद् गुणाभावः, यणादेशः। तद्धि स्वाश्रयमावृणोति, व्रियते वा। "विद्युद् भवन्तो प्रति वव्रिमौहत (ऋ० सं० २, ३, १८, ४)"—इति निगमः॥

(३) वर्पः। 'वृङ् सम्भक्तौ (क्र्या० आ०)'। 'वृञ्शीङ्भ्यां रूपस्वाङ्गयोर्पुट् च (उ० ४, १८६)'—इत्यसुन्। भज्यते हि तत्। वृणोतेर्वा बाहुलकादसुन् पुट् च। यन्निवदर्थः। "मा वर्पो अस्मदप गूह एतत् (ऋ० सं० ५, ६, २५, ६)"—इति निगमः॥

(४) वपुः। व्याख्यातमुदकनामसु (१०६ पृ०)। उप्यते स्वाश्रये "वपुर्भिरा चरन्तो अन्यान्या (ऋ० सं० १, ५, २, ३)"—इति निगमः॥

(५) अमतिः।

(६) अप्सः। 'अप्स इति रूपनामाप्सातेः (निरु० ५, १३)'—इत्यादिभाष्ये स्कन्दस्वामिना अप्सशब्दो व्युत्पादितः। तत् प्रकारेण निर्वचनं प्रदर्श्यते। नञ्पूर्वात् प्सातेरसुनि बाहुलकादाकारलोपः आप्नोतेर्वा। 'वृतृवदिहनिकमिकषिभ्यः सः' (उ० ३, ५८)'—इति सप्रत्ययः। "उषाहुस्तेव निर्णीते अप्सः (ऋ० सं० २, १, ८, २)"—"अप्सु रसं परि जज्ञे वसिष्ठ (ऋ० सं० ५, २, २४, २)"—"अप्सु रसा गन्धर्वाणाम् (ऋ० सं० ८, ७, २४, ६)"—इति निगमाः॥

(७) प्सुः। 'प्सुर स्फुरणे (तु० प०)'। 'मृगय्वादयश्च (उ०

१,२६)—इति कुन्प्रत्ययः, सकारपकारयोः फकारस्य च व्यत्ययश्च निपात्यते। स्फुरति हि तत्। "यद्दन्ते अङ्क्त प्रुवः (ऋ० सं० ६, १, ३७, २)"—"शुभ्रा दन्द्रं मवाता अङ्क्त प्रुवः (ऋ० सं० १, ४, १२, ४)"—इति निगमौ।

(८) अप्नः। अपत्यनामसु व्याख्यातम् (१४५ पृ०)। तेन हि कृत्स्नमाश्रयं व्याप्नोति। "अभिसर्न्ति जुम्भया ता अनु-प्नसः (ऋ० सं० २, ६, ३०, ४)"—इति निगमः।

(९) पिष्टम्। 'पिश अवयवे (तु० प०)' 'पिस गतौ (भू० प०)'—इति चोरस्वामी। 'पिशिः किच (उ० ३, ८२)'—इति क्तः, गुणाभावश्च, 'तितुत्रथ (७,२, ८)'—इतीट्प्रतिषेधः। 'पिशितम्, अवयवशो विभक्तमित्यर्थः'—इति स्कन्दस्वामी। 'पिश आश्लेषणार्थः'—इति माधवः। आश्लिष्यत्याश्रयम्। "पिष्टं रुक्मभिर्ञ्जिभिः (ऋ० सं० ४, ३, १८, १)"—इति निगमः॥

(१०) कृशनम्। (११) पेशः। व्याख्याते हिरण्यनामसु (१६पृ०) दीप्यते हि तत्, दीप्यतेऽनेन वा तद्वान्। पेशसः पिष्टवदर्थः। कृशनस्य निगमोऽन्वेषणीयः। "पेशो मर्या अपेशसे (ऋ० सं० १, १, ११, ३)"—इति निगमः॥

(१२) भरः। 'स्फुर स्फुलने (तु० प०)'। असुन्। पृषोदरादित्वात् (६, ३, १०९) सकारपकारयोर्व्यत्ययः। स्फुरति हि तत्। "मद्दिप्सरो वर्पस्य (ऋ० सं० १, ३, २३, २)" —"वर्चो द्रेव प्सरस्तमम् (ऋ० सं० १, ५, २३, १)"—इति निगमौ।

केचिदत्र मर्कक्छन्द पठन्ति। तद्धिरण्यनामसु व्याख्यातम् (१७पृ०)। निगमोऽन्वेषणीयः॥

(१३) अर्जुनम्। व्याख्यातमुषोनामसु (४१पृ०) अर्जु-

मीत्यत्र। "अर्हन् बिभर्षि सायकानि धन्व (ऋ० सं० ४, ४, १९, १)"—इति निगमः ॥

(१४) ताम्रम्। 'तमु काङ्क्षायाम् (दि० प०)'। 'अमित-म्योर्दीर्घश्च (उ० २, १४)'—इति रक्प्रत्ययः। काङ्क्ष्यं हि तत्, तस्मात् ताम्रम्। "आपो दिवाद्या ताम्र"—इति निगमः। "असौ यस्ताम्रो अरुणो (य० वा० सं० १६, ६)" —इति च ॥

(१५) अरुषम्। व्याख्यातमुषोनामसु अरुषीत्यत्र (४३पृ०)। आ रोचते। निगमोऽन्वेषणीयः ॥

(१६) शिल्पम्। 'शिल्प विशेषणे (कु० प०)'। 'खष्प शिल्पशष्पवाष्परूपतल्पाः (उ० ३, २६)'—इति पप्रत्ययः। षकारस्य लकारो बाहुलकात् गुणाभावश्च निपात्यते। विशेषयति तद्रूपम्। "ऋक्षामयो शिल्पे स्थः (य० वा० सं० ४, ८)"—इति निगमः ॥

इति षोडश रूपनामानि ॥ ७ ॥

अमेमाः (१)। अनेमाः (२)। अनेद्यः (३)। अनवद्यः (४)। अनभिशस्ताः (५)। उक्थ्यः (६)। सुनीथः (७)। पाकः (८)। वामः (९)। वयुनम् (१०)। इति प्रशस्यस्य ॥८॥

(१) अमेमा। 'मिवु गतिशोषणयोः (प०)' दिवादिर्न-अपूर्वः, 'मनिन् सर्वधातुभ्यः (उ० ४, १४०)'—इति मनिनि बाहुलकात् आडभावः, 'लोपो व्योर्वलि (६, १, ६६)'—इति वकारलोपः, गुणः। न गच्छत्यकीर्त्तिम्, अगम्यो

णाम्, न मच्छत्वमाद् गुणाः । अर्मु मार्ण तरषि वीलु-जंभम् (ऋ० सं० ३, १, ३४, ३)"—इति निगमः ॥

(२) अनेमाः । नञ्पूर्वान्नयतेर्मनिन् । नेतुमशक्यो दुर्मार्गम् । निगमोऽन्वेषणीयः ॥

(३) अनेद्यः । 'णिदि कुत्सायाम् (भू० उ०)' नञ्पूर्वः, आगमानित्यत्वान्नुम् न क्रियते, 'ऋहलोर्ण्यत् (३, १, १२४)' "माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य (ऋ० सं० ६, ३, १८, १)" —इति निगमः ॥

(४) अनवद्यः ।

(५) अनभिशस्ताः । 'शस्त हिंसायाम् (भ्वा० प०)' । निगमोऽन्वेषणीयः ॥

(६) उक्थ्यः । 'वच परिभाषणे (अदा० प०)' । 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २, ६)' सम्प्रसारणञ्च । उक्थशब्दः स्तुतिपर्य्यायः । उक्थमर्हति । 'छन्दसि च (५, १, ६७)'—इति यः । स्तुत्यर्ह इत्यर्थः । "क्रतुर्भवत्युक्थ्यः (ऋ० सं० १, १, २२, ५)"—"गाय गायत्र मुक्थ्यम् (ऋ० सं० १, २, १७, ४)"—इति निगमौ ॥

(७) सुनीथः । नयतेः 'हनिकुषिनीरमिकाशिभ्यः क्थन् उ० २, २)' । नीथा स्तुतिः । शोभना नीथा यस्य सः । हिरण्यहस्तो असुरः सुनीथः (ऋ० सं० १, ३, ७, ५)"— "गभीरवेपा असुरः सुनीथः (ऋ० सं० १, ३, ७, १)"—इति निगमौ ॥

(८) पाकः । पातेः 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३, ४१)'—इति कन् । रक्ष्यते राजादिना गुणवत्त्वात् । "तं पाकेन मनसा पश्यमन्तितः (ऋ० सं० ८, ६, १६, ४)"— इति निगमः । "अपाको विष्णुर्यशसे पुरुषि"—इति च ॥

(९) व्राम। 'वनषण सम्भक्तौ (भू०प०)'। 'मिदमिश्यासुसृभ्यो मक् (उ० १, १४२)'—इति प्रत्ययः, नकारस्याकारश्च। सम्भजनीयो हि प्रशस्तः। "म दूलो इ अनुददासि व्रामम् (ऋ० स० २, ३, १२, ५)"—इति निगमः॥

(१०) वयुनम्। अजति 'अजियमिशीङ्भ्यश्च (उ० ३, ५८)'—इत्युननप्रत्ययः, वीभावः। प्रशंसमवदर्थः। 'वयुन वेतेः, कान्तिर्वा प्रज्ञा वा (निरु० ५, १४)'—इति भाष्यम्। तत्र बाहुलकादुनन्, मत्वर्थीयस्य लुक्, कान्तिमान् प्रज्ञावान् वा। "विमानमग्निर्वयुनश्च वाघतांम् (ऋ० स० २, ८, २०, ४)"—इति निगमः॥

॥ इति दश प्रशस्तनामानि॥ ८॥

केतः (१)। केतुः (२)। चेतः (३)। चित्तम् (४)। क्रतुः (५)। असुः (६)। धीः (७)। शचीः (८)। माया (९)। वयुनम् (१०)। अभिख्या (११)। इत्येकादश प्रज्ञानामानि॥९॥

(१) केत। 'चायृ पूजानिशामनयोः (भू०उ०)'। 'चाय की (उ० १, ७५)'—इति तप्रत्ययो धातोः कीरादेशो गुणश्च। पूज्यते। "पुरूरवोऽनुतेकेतमायम् (ऋ० स० ८, ५, १, ५)" —इति निगमः।

(२) केतु।

(३) चेत। (४) चित्तम्। 'चिती संज्ञाने (भू०प०)'। 'अचिद्रतिभ्य (उ० ३, ८६)'—इति बाहुलकात् क्त। केतय-

स्थः। "ऋतावानं विचेतसम् (ऋ० सं० ३, ५, ६, २)"—"सत्त्वाचित्तं चित्तेन मन्तम्" इति निगमौ ॥

(५) क्रतुः। व्याख्यातं कर्मनामसु (१२८ पृ०) क्रियतेऽनया धर्मादिविचारः। "अग्निर्होता कविक्रतुः (ऋ० सं० १, १, १, ५)"—इति निगमः ॥

(६) असुः। असतेः 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उप्रत्ययः। 'असुरिति प्राणनाम (निरु० ३, ८)'—इति भाष्ये, अस्यति चिपत्यनर्थान्, अस्ताः चिप्ताः अस्यामर्थाः इत्यर्थप्राप्त्यनर्थपरिहारात्मकमुभयमपि प्राप्नोति ॥

(७) धीः। (८) शची। व्याख्याते कर्मनामसु (१४१, १४२, पृ०)। निधीयते द्रव्येषु, धारयत्यर्थान् ध्यायन्तेऽनया देवता, गम्यन्ते अवगम्यन्तेऽनयार्थाः, गच्छत्यनया इष्टप्राप्तिमनिष्टपरिहारञ्च। "चिदसि मनासि धीरसि (य० वा० सं० ४, १९)"—"दोषावस्तर्धियावयम् (ऋ० सं० १, १, २, १)"—"ऋणोरक्षं न शचीभिः (ऋ० सं० १, २, २१, ५)"—इति निगमाः ॥

(९) माया। 'माङ् माने (अदा० आ०)'। 'माछाससिभ्यो यः (उ० ४, १०६)'—इति यप्रत्ययः। मीयन्ते परिच्छिद्यन्तेऽनया पदार्थाः। "मायाभिरिन्द्र मायिनम् (ऋ० सं० १, १, २१, ७)"—"इमामूनु कवितमस्य मायाम् (ऋ० सं ४, ४, ३१, १)"—इति निगमौ ॥

(१०) वयुनम्। व्याख्यातं प्रशस्यनामसु (२६६ पृ०)। गतौ यथोदर्यः, चेयवेऽनुवत्। "विद्वां अग्ने वयुनानि चितीनाम् (ऋ० सं० १, ५, १०, २)"—इति निगमः ।

(११) अभिख्या। 'ख्या प्रकथने (अदा० प०)'। 'आतश्चोपसर्गे (३, ३, १०६)'—इत्यङ्। प्रकर्षेण कथ्यन्तेऽनयार्थाः।

"प्र॒भि॒स्त्या भ्रा॒सा बृ॒ह॒ता शुशुक्वनि॑. (ऋ० सं० ६, २, ८, ५)"
—इति निगमः। भाष्यं द्रष्टव्यम्।

इत्येकादश प्रज्ञानामानि ॥ ९ ॥

बट् (१)। श्रत् (२)। स॒त्रा (३)। अ॒द्धा (४)। इ॒त्था (५)। ऋतम् (६)। इति षट् सत्यनामानि ॥ १० ॥

(१) बट्। (२) श्रत्। (३) सत्रा। (४) अद्धा। (५) इत्था। बडादयो निपाताः। "बण्म॒हाँ अ॑सि सूर्य (ऋ० सं० ६, ७, ८, १)"—"श्र॒द्दधा॒ग्निः समि॑ध्यते (ऋ० सं० ८, ८, ९, १)"—"स॒त्रादा॒वन्नपां वृधि (ऋ० सं० १, १, १४, १)"—"स॒त्यम॒द्धा नकि॑र॒न्यस्त्वावा॑न् (ऋ० सं० १, ४, १४, ३)"—"प्रा॒ञ्चि॒त्था धि॒या न॑रा (ऋ० सं० १, १, ४, १)"—इति निगमाः।

(६) ऋतम्। व्याख्यातमुदकनामसु (१०० पृ०)। गच्छत्यनेन सुगतिम्। 'ऋतम् सत्तः, प्राप्यते तदिन्द्रियैः'—इति माधवः। "ऋ॒तेन॑ मित्रावरुणौ (ऋ० सं० १, १, ४, २)"—इति निगमः।

इति षट् सत्यनामानि ॥ १० ॥

चिक्य॑त् (१)। चाक॑नत् (२)। आच॑क्ष्म (३)। चष्टे॑ (४)। विच॑ष्टे (५)। विच॑र्षणिः (६)। वि॒श्वच॑र्षणिः (७)। अवचा॑कशत् (८)। इत्यष्टौ पश्यतिकर्माणः ॥ ११ ॥

(१) चिक्यत्। (२) चाकनत्। (३) आचक्ष्म। (४) चष्टे। (५) विचष्टे। इति पञ्चितो दर्शनार्थानि व्याख्यातानि।

'विचर्षणिरित्यादीनि चायत्यर्थनिगमानि'—इति स्कन्दस्वामिना भाष्यमुक्तम्। 'कित ज्ञाने (भू० प०)' यङ्लुकि शतरि व्यत्ययेन 'नुगतोऽनुनासिकान्तस्य (७, ४, ८५)'—इति न भवति। विगमोऽन्वेषणीयः ॥

(३) आचक्ष। आङ्पूर्वस्य चक्षिङो लङि मध्यमपुरुषैकवचने थासः सादेशो व्यत्ययेन। "अतश्चिदाद्युदितिं दितिंघ (ऋ० स० ४, २, ११, ३)"—इति निगमः ॥

(४) चष्टे। (५) विचष्टे। केवलाद् विपूर्वाच्च आत्मनेपदप्रथमपुरुषैकवचने संयोगादिलोपे ष्टुत्वे च रूपम्। "तेभिश्चष्टे वरुणो मित्रो अर्यमा (ऋ० स० ८, ४, २४, १)" —"इतो जातो विश्वमिदं विचष्टे (ऋ० स० १, ७, ६, १)"—इति निगमौ ॥

(६) विचर्षणिः। (७) विश्वचर्षणिः। विपूर्वाद् विश्वपूर्वाच्च 'कृष विलेखने (भू० प०)'—इत्यस्मात् 'कृषेरादेश्च चः (उ० २, ८७)'—इति अनिप्रत्ययः, आदेः ककारस्य चकारश्च। यद्वा, चायतेरेव बाहुलकात् अनिप्रत्ययो धातोर्हस्वमभावश्च। विविध द्रष्टा विचर्षणिः। विश्वस्य द्रष्टा विश्वचर्षणिः। "सकान् पिपर्षि विदथे विचर्षणे (ऋ० स० १, २, ३३, १)"—"स्तोमेभिर्विश्वचर्षणे (ऋ० स० १, १, १७, ३)"—इति निगमौ ॥

(८) अवचाकशत्। 'काशृ दीप्तौ (भू० आ०)' अवपूर्वं। यङ्लुकि शतरि व्यत्ययेन ह्रस्वत्वम्। "जनाना धेना अवचाकशद् वृषा (ऋ० स० ७, ८, २५, १)"—"उभे सोमावचाकशत् (ऋ० स० ६, ८, २२, ४)"—इति निगमौ।

इत्यष्टौ पश्यतिकर्माणः ॥ ११ ॥

---

हिकम् (१)। नुकम् (२)। सुकम् (३)। आहिकम् (४)। आकीम् (५)। नकिः (६)। माकिः (७)। नकीम् (८)। आकृतम्। (९) इति नवोत्तराणि पदानि सर्वपदसमाम्नाय ॥१२॥

(१) हिकम्। (२) नुकम्। (३) सुकम्। (४) आहिकम्। (५) आकीम्। (६) नकिः। (७) माकिः। (८) नकीम्। एते निपाताः। "वमुर्वंशु पतिर्हिकम् (ऋ० सं० ६, ३, ४०, ४)"—"इमा नु कम्भुवना (ऋ० सं० ८, ८, १५, १)"—"मीम धामातिष्वतिलवतासुकम्"—"पृङ्क्त हवींष्यपि मधुना हि कं गतम् (ऋ० सं० २, ८, १, ५)"—"आकीं सूर्यस्य रोचनात् (ऋ० सं० १, १, २७, ३)"—"न किरिन्द्र त्वदुत्तरो (ऋ० सं० ३, ६, १८, १)"—"माकिर्नेशन्माकीं रिषत् (ऋ० सं० ४, ८, २०, २)"—"नकीं हधीक इन्द्र ते (ऋ० सं० ६, ५, २१, ४)"—इति निगमाः॥

(९) आकृतम्। निष्ठान्तस्य कृतशब्दस्यात पाठात् सर्वत्रैवयमपि निपातसमाहाररूपो निपातित। कृतशब्दस्य विभक्तिप्रतिरूपकत्वात् निपातत्वमित्याहु। निगमोऽन्वेषणीय॥

इति नव सर्वपदसमाम्नाय॥ १२॥

इदमिव (१)। इदं यथा (२)। अग्निर्न ये (३)। चतुरश्चिद्ददमानात् (४)। ब्राह्मणा व्रतचारिणः (५)। वृक्षस्य नु ते पुरुहूत वयाः (६)। जार आ भगम् (७)। मेषो भूतोऽभि

यन्नयः (८)। तद्रूपः (९)। तद्वर्णः (१०)। तद्वत् (११)। तथा (१२)। इत्युपमाः ॥ १३ ॥

इदमित्यादीनि भाष्यकारेणैव व्याख्यातानि (निरु० ३, १३—१८) ॥ १३ ॥

अर्चति (१)। गायति (२)। रेभति (३)। स्तोभति (४)। गूर्धयति (५)। गृणाति (६)। जरते (७)। ह्वयते (८)। नदति (९)। इच्छति (१०)। रिहति (११)। धमति (१२)। कृपायति (१३)। कृपण्यति (१४)। पनस्यति (१५)। पनायते (१६)। वल्गूयति (१७)। मन्दते (१८)। भन्दते (१९) छन्दति (२०)। छदयते (२१)। शशमानः (२२)। रञ्जयति (२३)। रजयति (२४)। शंसति (२५)। स्तौति (२६)। यौति (२७)। रौति (२८)। नौति (२९)। भनति (३०)। पणायति (३१)। पणते (३२)। सपति (३३)। पपृक्षाः (३४)। महयति (३५)। वाजयति (३६)। पूजयति (३७)। मन्यते (३८)। मदति (३९)। रसति (४०)। स्वरति (४१)। वेनति (४२)। मन्द्रयते (४३)। जल्पति (४४) इति चतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

(१) अर्चति। 'अर्च पूजायाम् (भू० प०)'। "अर्चन्त्यर्कमुर्किणः (ऋ० सं० १, १, १८, १)"—इति निगमः॥

(२) गायति। 'कै गै शब्दे (भू० प०)'। "गायन्ति त्वा गायत्रिणः (ऋ० सं० १, १, १८, १)"—इति निगमः।

(३) रेभति। (४) स्तोभति। 'रेभृ शब्दे (भू० आ०)' 'ष्टुभ स्तम्भे (भू० आ०)'। आत्मनेपदिनौ व्यत्ययेन परस्मैपदम्। "रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन् (ऐ० ब्रा० ६, ५, ६)"—"सोमं पुवित्रमभ्येति रेभन् (ऋ० सं० ७, ४, ७, १)"—"परिष्टोभत विष्टुति (ऋ० सं० १, ५, ३०, ४)"—इति निगमाः॥

(५) गूर्द्धयति। नैरुक्तधातुः। "तद्गूर्द्धयुः स्वर्णरम् (ऋ० सं० ६, १, २८, १)"—इति निगमः॥

(६) गृणाति। 'गॄ शब्दे' क्र्यादि स्वादिश्च। "कृष्वन्तमो नाम गृणाति नृणाम् (ऋ० सं० १, ४, ३, ४)"—इति निगमः॥

(७) जरते। नैरुक्तधातुः। "पुरुष्टुतो जरते सुनृतावान् (ऋ० सं० १, ४, २५, ७)"—इति निगमः॥

(८) ह्वयते। 'ह्वेञ् स्पर्द्धायाम् (भू० उ०)'। "वाहिष्ठो वां हवानाम् (ऋ० सं० ६, २, २८, १)"—इति निगमः। 'स्तवाः स्तोमाः ह्वयतेरर्चतिकर्मत्वात्'—इति स्कन्दस्वामी॥

(९) नदति। 'णद अव्यक्ते शब्दे (भू० प०)'। "नुदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)"—इति निगमः॥

(१०) पृच्छति। 'प्रच्छ ज्ञीप्सायाम्' तुदादि.। 'अहिश्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्॥

(११) रिहति। 'रिह कत्थनादौ'—इति क्षीरस्वामी।

तुदादिः । "शिशुं न विप्रा मतिभी रिहन्ति (ऋ० सं० ८, ७, ७, १)"—इति निगमः। अत्र भाष्ये तु "समानवृत्तित्व-प्रदर्शनपरं लिहन्ति पर्यायवचनम्"—इति । "विप्रा रिहन्ति धीतिभिः (ऋ० सं० १, २, ६, ४)"—इत्यत्र 'रिहतिधमती-त्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामी ।

(१२) धमति। गतिकर्मसु व्याख्यातः (२०२ पृ०) ॥

(१३) क्रपायति। (१४) क्रपण्यति। (१५) पनस्यति। नैरुक्तधातवः। "प्रवर्तता ये कृपणन्त रत्नम् (ऋ० सं० ८, ३, ५, ३)"—इत्यत्र क्रपणन्त स्तुवन्ति'—इति भट्टभास्कर-मिश्रः। "त्वं पनस्युमर्किणम् (ऋ० सं० १, ३, १७, ५)"—इति निगमः। 'पनस्यतिरर्चतिकर्मा, स्तुत्यमित्यर्थः'—इति स्कन्दस्वामी ॥

(१६) पनायते। 'पण व्यवहारे स्तुतौ च'—'पन च (भू० आ०)'। गुपूधूपविच्छिपणिपनिभ्य आयः (३, १, २८)'। "अभीशूनां महिमानं पनायत (ऋ० सं० ३, १, २०, १)"—इति निगमः ॥

(१७) वलायति । 'वला पूजाधृष्टयोः' कण्ड्वादिः । "वलायति वन्दते पूर्वभाजम् (ऋ० सं० ३, ७, २७, २)"—इति निगमः ॥

(१८) मन्दते । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भू०)' आत्मनेपदी। "प्र वो महे मन्दमानायान्धसः (ऋ० सं० ८, १, ८, १)"—इति निगमः ॥

(१९) भन्दते। 'भदि कल्याणे सुखे च' आत्मनेपदी। "पुरुप्रियो भन्दते धामभिः कविः (ऋ० सं० २, ८, २०, ४)"—इति निगमः ॥

(२०) छन्दति। 'छदि संवरणे' चुरादिः। बहुलमन्यत्रापि

सञ्ज्ञाच्छन्दसोः (उ० २, २१)'—इति लुक्। "वृषाच्छन्दुर्भवति हर्यतो वृषा (ऋ० सं १, ४, १८, ४)"—इति निगमः।

(२१) छदयति। 'छद अपवारणे' चुरादिः। 'सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)'—इति वृद्ध्यभावः। 'भद-न्तोद्रष्टव्य.'—इति भट्टभास्करमिश्र॥

(२२) शशमान.। 'शशमानः शंसमानः (निरु० ६, ८)'—इति भाष्ये 'शंसु स्तुताविव्यस्य शंशस्त्रित्यवगम्यते'—इति स्कन्दस्वामी। शसेर्लटि पृषोदरादित्वाद्रूपसिद्धिः। यद्वा, 'शश प्लुतगतौ (भू० प०)'। 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)'। "यो वा यज्ञैः शशमानोह दाशति (ऋ० सं० २, २, २१, २)"—इति निगमः॥

(२३) रञ्जयति। (२४) जरयति। 'रञ्ज रागे (भू० उ०)', 'जॄष् वयोहानौ (दि०प०)' हेतुमतो णिच्॥

(२५) शंसति। 'शंसु स्तुतौ (भू० प०)'। "मा चिदन्यद्वि शंसत (ऋ० सं० ५, ७, १०, १)"—इति निगम.॥

(२६) स्तौति। 'ष्टु स्तुतौ' अदादिः। 'उतो वृद्धिर्लुकि-हलि (७, ३, ८९)'। "इदमित् स्तोतारं मघवं सचासुत"—इति निगम.॥

(२७) यौति। (२८) रौति। (२९) नौति। 'यु मिश्रणे' 'रु शब्दे' 'नु स्तुतौ' अदादयः। "ब्रह्मोद्यायप्रवानेभिरेवैः (ऋ० सं० ३, ८, ८, १)"—इति निगम। "पुष्टं गिः भि प्रणौनुमः (ऋ० सं० १, ५, २६, १)"—इति निगम.॥

(३०) भनति। नैरुक्तधातु।

(३१) पणायति। (३२) पणते। पण व्यवहारे स्तुतौ च (भू० आ०)'। 'गुपूधूप (३, १, २८)'—इत्यादिना आय., आर्धधातुकत्वात् आयप्रत्यये विकल्पिते पणते इति रूपम्।

"देवो नयत् सविता सुपाणिः (ऋ० सं० ३, २, १३, १)"—इति निगमः। 'पाणिः पणायतेः पूजाकर्मणः (२, २६)'—इति निरुक्तम् ।

(३३) सपति । 'षप समवाये (भू० प०)'। "मल्मुरास: प्रसुपं साकमीरते (ऋ० सं० ७, २, २२, २)"। 'प्रसुप. सपतेरर्चतिकर्मणः'। "वि ये चृतन्त्यृता सपन्तः (ऋ० सं० १, ५, ११, ४)"—इति निगमौ ॥

(३४) पपृचाः। पृच्छतिर्नैरुक्तधातुः। पृचेः सनि 'हलन्ताच (१, २, १०)'—इत्यत्र हलग्रहणस्य जातिवाचकत्वात् 'अनिदिताम् (६, ४, २४)'—इति नलोपः गुणाभावश्च। सनन्ताल्लेटि (३, ४, ७), सिपि (३, १, ३४), आडागमे (३, ४, ९४), 'इतश्चलोपः (३, ४, ९७)'। "वायो तव प्रपृञ्चती (ऋ० सं० १, १, ३, ३)'—इत्यत्र 'पपृचाः, महयति,—इत्यर्चतिकर्मसु पाठात् पृच्छतिः स्तुत्यर्थोऽपि'—इति स्कन्दस्वामी ॥

(३५) महयति। 'मह पूजायाम् चुरादिरदन्तः'। "त्वं सु मेषं महया स्वर्विदम् (ऋ० सं० १, ४, ११, १)"—इति निगम. ॥

(३६) वाजयति। वजेर्णिच्। "वाजयामः शतक्रतो (ऋ० सं० १, १, ८, ४)"—इति निगमः ॥

(३७) पूजयति। 'पूज पूजायाम्' चुरादिः ॥

(३८) मन्यते। 'मन ज्ञाने' दिवादिः। "इमा उ वां भूमयो मन्यमाना (ऋ० सं० ३, ४, ८, १)"—इति निगमः ॥

(३९) मदति। 'मदी हर्षग्लेपनयोः (दि० प०)'। "चुमन्तो याभिर्मदेम (ऋ० सं० १, २, ३०, ३)"—इन्द्रं गीर्भिर्मदता वस्वो अर्णवम् (ऋ० सं० १, ४, ८, १)"—इति निगमौ। 'मदति रसतीत्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामिभाष्यम् ॥

(४०) रसति। 'रस शब्दे (भू० प०)'।

(४१) स्वरति। 'स्वृ शब्दोपतापयोः (भू० प०)'। "स्वरे-याद्रिं स्वर्याः नवग्वे (ऋ० स० १, ५, १, ४)"—"ऋषिस्वर चरति यास्त नाम ते (ऋ० स० ४, २, २४, ३)"—इति निगमौ। "स्वरेथाद्रिम्"—इत्यत्र 'स्वरति वेनतीत्यर्चति-कर्मसु पाठात्'—इति, "ऋषिस्वरम्"—इत्यत्र 'स्वरतिरर्चति-कर्मा'—इति च स्कन्दस्वामी।

(४२) वेनति। (४३) मन्दयते। नैरुक्तधातू। "अनु-वीर्यं हयुर्भं मन्द्रजिह्वम् (ऋ० स० २, ५, १२, १)"—इति निगमः। 'मन्द्रयतिरर्चतिकर्मा स्तुत्यवाचकम्'—इति स्कन्द-स्वामी।

(४४) जल्पति। 'जल्प व्यक्तायां वाचि (भू० प०)'।

इति चतुश्चत्वारिंशदर्चतिकर्माणि ॥ १४ ॥

विप्रः (१)। विग्रः (२)। गृत्सः (३)। धीरः (४)। वेनः (५)। वेधाः (६)। कण्वः (७)। ऋभुः (८)। नवेदाः (९)। कविः (१०)। मनीषिः (११)। मन्धाता (१२)। विधाता (१३)। विपः (१४)। मनश्चित् (१५)। विपश्चित् (१६)। विपन्यवः (१७)। आकेनिपः (१८)। उशिजः (१९)। कीस्तासः (२०)। अद्धातयः (२१)। मतयः (२२)। मतुथाः (२३)। वाघतः (२४)। इति चतुर्विंशतिर्मेधाविनामानि ॥ १५ ॥

(१) विप्रः। 'टु वप बीजसन्ताने (भू०उ०)'। 'विप क्षेपे'—इति क्षीरस्वामी। 'ऋज्रेन्द्राग्रवज्रविप्र (उ० १, २७)' —इत्यादिना रन्प्रत्यये इत्वं गुणाभावश्च निपात्यते। उप्यतेऽभिवतिशयेन मेधा। क्षिपत्यनया पापं वा। यद्वा, 'विप्'—इति सङ्ग्रामनामसु व्याख्यातम् (१६२ पृ०), सास्यास्तीति रो, मत्वर्थीयः, पृषोदरादित्वात् जश्त्वाभावः। वाग्वयी हि मेधा। यद्वा, 'प्रा पूरणे (अदा० प०)' विपूर्वः। 'आतोऽनुपसर्गे (३, २, ३)'—इति कः। 'आतो लोप इटि च (६, ४, ६४)'। विशेषेण पूरयति विद्यार्थिनामपेक्षाः। "गृणन्ति विप्र ते धियः (ऋ० सं० १, १, २६, २)"—इति निगमः।

(२) विप्रः। विपूर्वात् ग्रणातेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। विविधं ग्रणात्यर्थान्। "परे हि विप्रमस्तृतम् (ऋ० सं० १, १, ७, ४)"—इति निगमः।

(३) गृत्सः। 'गृधु अभिकाङ्क्षायाम् (दि०प०)' ऋषिकुषिकुदिहयिगृभ्यः कित्'—इति सप्रत्ययः। अभिकाङ्क्षते सर्वैः। यद्वा, गृणातेः स्तुतिकर्मणो बाहुलकात् सक्प्रत्ययो कृत्वं तुगागमश्च। स्तुत्यो लोकस्य, स्तोता वा देवानाम्। "गृत्सस्य धीरा स्तवसो विवो मदे (ऋ० सं० ७, ७, ११, ५)" —"नमो गृत्सेभ्यो गृत्सपतिभ्यश्च (य० वा० सं० १६, २५)" —इति निगमौ॥

(४) धीरः। दधातेः 'सुसूधीगृधिभ्यः क्रन् (उ० २, २३)' —इति क्रन्प्रत्यय, 'घुमास्थागापा (६, ४, ६६)'—इतीत्वम्। धत्ते श्रुतमर्थम्, ददाति वा विद्याः शिष्येभ्यः। यद्वा, धीः प्रज्ञा कर्म वा, रो मत्वर्थीयः। 'धियमीरयति'—इति क्षीरस्वामी। तत्र धीशब्दे उपपदे 'कर्मण्यण् (३, २, १)'।

"धमाधीतुः याकुमबाविवेश (ऋ॰ सं॰ २, ३, १८, १)"—इति निगमः।

(५) वेनः। श्रजतेः 'धापूवस्त्वज्यतिभ्यो नः (उ॰ ३, ६)'—इति नप्रत्ययः, वीभावः। गच्छति सत्कारं लोके, श्रवमच्छत्यर्थान्, श्रवमच्छत्यस्मादर्थसंशयान्, गच्छन्त्येन विद्यार्थिनः, चिपत्यनर्थान् पापं वा। यद्वा, वेनतेः कान्तिकर्मणो गतिकर्मणो वान्तिकर्मणो वा 'पुंसि सञ्ज्ञायां घः (३, ३, ११८),' "गिरिं न वेना अधिरोह तेजसा (ऋ॰ सं॰ १, ४, २१, २)'—इति निगमः॥

(६) वेधा.। दधातेर्विपूर्वात् 'विधाञो वेध च (उ॰ ४, २१८)'—इत्यसुन् वेधादेशश्च। विदधाति काव्यादि। "सोर्मर्या मृच कंपुनेवं वेधसः (ऋ॰ स॰ ४, २, १५, १)"—"सोमो न वेधा ऋत प्रजातः (ऋ॰ सं॰ १, ५, ८, ५)"—"धा पृच्छ्यो विश्पतिर्विद्वुवेधाः (ऋ॰ सं॰ १, ४, २६, २)"—इति निगमाः॥

(७) कण्वः। 'कण शब्दे (भू॰प॰)' 'कण निमीलने (चु॰ प॰)' वा। 'अशुपुषिलटिकणिखटिविशिभ्यः कन् (उ॰ १, १४८)'। कणति स्तोत्रलक्षणं शब्दं करोति, कण्यते स्तूयते वा, निमोलयति परान् वा स्वतेजसा। "कण्वा अभि प्रगायत (ऋ॰ सं॰ १, २, १२, १)"—'कण्वतमो नाम गृणाति नृणाम् (ऋ॰ सं॰ १, ४, ३, ४)"—इति निगमौ॥

(८) ऋभुः। 'ऋभुचा इत्यत्र व्याख्यातम् (२४८ पृ॰)'। "ऋभुर्ऋभुभिरभि वः स्याम (ऋ॰ स॰ ५, ४, १५, २)"—इति निगमः।

(९) नवेदाः। "एषां भूत नवेदा मतानाम् (ऋ॰ सं॰ ३, ३, २६, ३)"—इत्यत्र नवेदेति न वेत्तीत्यभिवर्यं वर्तते। कृत

एतत् ? निपातनात्, वैयाकरणा 'नभ्राणनपान्नवेदा (६, ३, ७५)'—इति निपातयन्ति'—इति स्कन्दस्वामी । तत्र द्विनञ्पूर्वाद् विदेः कर्त्तर्यसुनि एकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च निपात्यत इति भावः । "विश्विंत्रो घृया भवतं नवेदसा (ऋ० सं० १, ३, ४, १)"—इति निगमः ॥

(१०) कविः । 'कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२, १३)'—इति भाष्ये 'क्रामतेः कवतेर्वा गतिकर्मण इति रूपम्'—इति स्कन्दस्वामी । क्रामतेः कवतेश्च 'इन् सर्वधातुभ्यः (उ० ४, ११८)'—इतीन्प्रत्ययः क्रामतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात् । क्रान्तमस्यास्तीति मत्वर्थीयस्य लुक् । कविः क्रान्तदर्शनः । 'अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः'—इत्युवटः । "कवी नो मित्रावरुणा (ऋ० सं० १, १, ४, ३)"—इति निगमः ॥

(११) मनीषिणः । 'मनु अवबोधने (दि० आ०)' । 'कृतॄभ्यामीषन् ( उ० ४, २६ )'—इति बाहुलकादीषन् । मनीषा प्रज्ञाऽस्यास्ति व्रीह्यादित्वात् इनिः । यद्वा, मनस ईषा स्तुतिः प्रज्ञा वा मनीषा । पृषोदरादित्वाद्रूपसिद्धिः । पूर्ववदीषन् । "घृतपृष्ठं मनीषिणः (ऋ० सं० १, १, २४, ५)"—इति निगमः ।

(१२) मन्धाता । मन्यतेर्ल्युट्, दधातेस्तृच् । मानस्य ज्ञानस्य विधातयिता, पृषोदरादिः (६, ३, १०९) । "मन्धातारं द्रविणोदा ऋतुना वा (ऋ० सं० ७, ५, २०, २)"—इति निगमः ॥

(१३) विधाता । विपूर्वात् दधातेस्तृच् । वेधःशब्दवदर्थः । निगमोऽन्वेषणीयः ॥

(१४) विपः । 'विप क्षेपे (चु० प०)' । इगुपधलक्षणः

कः (३, १, १, ३५)। विप्रवदर्थः। "यस्तु'वाद् व्रु'व्रो विप्रो (ऋ० सं० ६, ४, ४३, १)"—इति निगमः ॥

(१५) मनश्चित्। मन शब्दोपपदात् 'चिती संज्ञाने (भू० प०) इत्यस्मादौणादिकः क्विप्। मनसा चेतयते। निगमोऽन्वेषणीयः ॥

(१६) विपश्चित्। विपो वाचश्चेतयते 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इत्यलुक्। 'विपश्यंश्चेतयते'—इति क्षीरस्वामी। पृषोदरादित्वात् पश्यतेरूपम्। "धर्म कर्ते' विपश्चिते' पनस्यवे' (ऋ० सं० ६, ७, १, १)"—इन्द्रं पृच्छा विपश्चितम् (ऋ० सं० १, १, ७, ४)"—इति निगमौ ।

(१७) विपन्यवः। विपनेः 'कत्युच् विपेश्च (उ० ३, ४८)'—इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकाविध्यर्थत्वात् कत्युच्प्रत्ययः। यद्वा, विविधं पनमं स्तुतिः 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययः। "विपन्यवो विप्रासो वाजसातये (ऋ० सं० ६, ६, १०, ६)"इति निगमः ।

(१८) आकेनिपः। आङ्शब्दे, केशब्दे, निशब्दे चोपपदे विपूर्वात् पततेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'। के आत्मनि पतन्ति अध्यात्मज्ञाने पतन्त इत्यर्थः। "अग्नी यथा केनिपा-नामिनो वृधे (ऋ० सं० ७, ८, २६, ४)"—इति निगमः ॥

(१९) उशिजः। 'वश कान्तौ (अदा०प०)' 'वशेः किच्च (उ० २, ६८)'—इति इजिप्रत्ययः। ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्। कामयते प्राज्ञास्सभ्यमितु' व्याख्यातु' वा। "कुक्षीवन्तं य औशिजः (ऋ० सं० १, ३४, १)"—इति निगमः ।

(२०) कीस्तासः। कीर्तयतेः असाग्रुचि (३, १, १

घ्रि वा। कीर्त्तयन्ति प्रशस्तानर्थान् "कीस्तासो' घुभिर्धवः (ऋ० सं० २, १, १३, २)"—इति निगमः॥

(२१) ऋतायवः। ऋतेति सत्यनाम। ऋततेरतयः। सत्यं प्राप्नोति, गत्यर्था बुद्धार्थाः, सत्यं जानाति वा। "तद्-ऋतायुरिदुः (ऋ० सं० ८, ३, २३, १)"—इति निगमः॥

(२२) मतयः। मन्यतेः क्तिन्। व्यायन्तेऽस्मादर्थाः। यद्वा, मतिरस्यास्ति मत्वर्थीयस्य लुक्। "भद्रो वाचं मतिभिः शविष्ठम् (ऋ० सं० ४, ६, १३, २)"—"त्वामिन्द्र मतिभि सुतम्"—इति निगमौ॥

(२३) मतुथा। 'गूथप्रोथपृष्ठादय'—इति मनेस्थकि नकारस्य तुभावो निपात्यते। "तुथोऽसि विश्ववेदाः (य० वा० सं० ५, ३१)"। 'विभजत्व. 'ब्रह्म वै तुथः (श० ब्रा० ४, ३, ४, १५)'—इति श्रुति —इत्युवटः। मत ज्ञानं तुथो मनुथेः। तेन मनतुथाः सन्त पृषोदरादित्वेन मतुथा। निगमोऽन्वेषणीयः॥

(२४) वाघतः। वहेः 'सश्चत्तृम्पड्वेहत् (उ० २, ८६)'—इति प्रत्यय, उपधावृद्धि', हकारस्य घकारश्च निपात्यते। निवहति ग्रन्थार्थान्। "विष्टी शमी तरणित्वेन वाघतः (ऋ० सं० १, ७, ३०, ४)"—इति निगम.॥

इति चतुर्विंशतिर्मेधाविन इति मेधाविनामानि॥१५॥

रेभः (१)। जरिता (२)। कारुः (३)। नदः (४)। स्तामुः (५)। कीरिः (६)। गौः (७)। सूरिः (८)। नादः (९)। छन्दः (१०)। स्तुप् (११)। रुद्रः (१२)। कृपण्युः (१३) इति त्रयोदश स्तोतृनामानि॥ १६॥

(१) रेभः। रेभतिरर्चतिकर्मा (२७२ पृ०)। पचाद्यच्। स्तौति। निगमोऽन्वेषणीयः॥

(२) जरिता। जरतेरर्चतिकर्मणः (२७२ पृ०)। "त्वामग्ने जरितारः (ऋ० सं० १, १, ३, २)"—इति निगमः॥

(३) कारुः। करोतेः 'कृवापाजि (उ० १, १)'—इत्युण्। कर्त्ता "विदुष्टे तस्य कारवः (ऋ० सं० १, १, २१, ६)"—इति निगमः॥

(४) नदः। नदति स्तुतिकर्मा (२७२ पृ०)। पचाद्यच्। "नदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)"—इति निगमः।

(५) स्तामुः। 'षम ष्टम अवैक्लव्ये (भू० प०)'। 'कृष्ठ-सीयः (उ० १, २)'—इति बाहुलकादुण्। स्तोत्रकर्माणि "तामु"—इति केचित् पठन्ति। 'तमु काङ्क्षायाम् (दि० प०)'। पूर्ववद् बाहुलकादुण्। काङ्क्षति स्तोतुम्। उभयोरेव निगमोऽन्वेषणीयः॥

(६) कीरिः। 'कै गै रै शब्दे (भू० प०)'। 'कायः कीः'—इति इप्रत्ययः। आकारलोपः। स्तोत्रलक्षणं शब्दमीरयति। 'इन् सर्वधातुभ्यः (उ० ४, ११४)' "कीरेश्चिद्यस्य मनसा वृणोषि तम् (ऋ० सं० १, २, ३४, ३)"—इति निगमः।

(७) गौः। व्याख्यातं पृथिवीनामसु (४ पृ०)। गीयन्ते स्तूयन्तेऽनेन देवताः। "गो अर्णानां गवां गोपतिर्गो (ऋ० सं० १, ७, १२, ४)"—इति निगमः। 'गोपतिः स्तोत्रपतिः'—इति स्कन्दस्वामी॥

(८) सूरिः। 'षू प्रेरणे (तु० प०)'। 'सूरुः क्रिः (उ० ४, ६४)'—इति सुवतेः क्रिर्भवति। प्रकर्षेण प्रेरयति स्तोत्रम्।

"सदा पश्यन्ति सूरयः (ऋ० मं० १, २, ७, ५)"—इति निगमः ॥

(८) नादः । नदतेर्घञ् । भवत्यस्मात् स्तुतिः । निगमोऽन्वेषणीयः ॥

(१०) छन्दः । छन्दतिरर्चतिकर्मा (२७३ पृ०) । असुन् । 'छद आच्छादने (चु० प०)' । 'छदेश'—इत्यसुन् । आच्छादयति स्तोत्रैः । निगमोऽन्वेषणीय. ।

(११) स्तुप् । स्तोभतिरर्चतिकर्मा (२७२ पृ०) । क्विप् । निगमोऽन्वेषणीयः ।

(१२) रुद्रः । रौतेः क्विप्, रुत् शब्दः, मत्वर्थीयो रः । स्तोतलक्षणशब्दवानित्यर्थः । "क्राणा रुद्रेभिर्वसुभिः पुरोहित (ऋ० सं० १, ४, २३, ३)"—इति निगमः ॥

(१३) कृपण्यु ॥

इति त्रयोदश स्तोतृनामानि । १६ ॥

यज्ञः (१) । वेनः (२) । अध्वरः (३) । मेधः (४) । विदथः (५) । नार्यः (६) । सवनं (७) । होत्रा (८) । इष्टिः (९) । देवताता (१०) । मखः (११) । विष्णुः (१२) । इन्दुः (१३) । प्रजापतिः (१४) । घर्मः (१५) । इति पञ्चदश यज्ञनामानि ॥ १७ ॥

(१) यज्ञ. । 'प्रख्यातं यजतिकर्मेति नैरुक्ता (३, १८)'—इत्यादि भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादितः । यजेः 'यजयाचयतविच्छप्रच्छरक्षो नङ् (३, ३, ९०)' । यजनम् । इज्यन्तेऽत्र देवता । अन्येषु पृषोदरा-

दितेन रूपसिद्धिः। "प्रग्नेयमे नु उर्दंव (ऋ॰ सं॰ ३, ८, २१, ४)"—इति निगमः॥

(२) वेन.। व्याख्यातं मेधाविनामसु (२७८ पृ॰) गच्छत्यनेन स्वर्गम्, प्रक्षिप्यते देवतोद्देशेन वास्मिन् द्रव्यम्, तेनात्र देवता: काम्यन्ते वा। निगमोऽन्वेषणीयः॥

(३) अध्वरः। ध्वरतेर्वधकर्मणः 'पुंसि सञ्ज्ञायां घः (३, ४, ११८)'। नञ्पूर्वः। ध्वरा हिंसा, तदभावो यत्र। अतएव शिष्टाः स्मरन्ति—'ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'—इति। तस्मादुपपन्नं यज्ञे हिंसा खल्वित्यामितयज्ञीयवचनादहिंसा प्रतीयते। अन्यत्र विस्तरेणोपपादितः। अथवा पथ्यार्थं बहुव्रीहिः। अविद्यमानोऽध्वरो यस्य मोऽध्वर' रक्षोभिरहिंसितः। "रार्वन्तमध्वराणाम् (ऋ॰ सं॰ १, १, ३, ३)"—इति निगमः।

(४) मेध'। व्याख्यातं धननामसु (१८॰ पृ॰)। गच्छन्त्यत्र देवता हविर्ग्रहीतुं, दक्षिणार्थं वा सदस्यात्, हिनस्त्यनेन पापं वा। 'कर्त्ता यज्ञो द्रव्याणामुत्तमसामर्थ्यविषय सारभूतात्'—इति माधवः। "मेधं जुषन्त वह्नयः (ऋ॰ सं॰ १, १, ६, ३)"—"तं मेधेषु प्रथमं देवयन्तीः (ऋ॰ सं॰ १, ५, २४, ३)"—इति निगमौ॥

(५) विदथः। 'विद ज्ञाने (अदा॰प॰)' 'विद विचारणे (रु॰ आ॰)' 'विदॢ लाभे (तु॰ उ॰)' 'विद सत्तायाम् (दि॰ आ॰)'। 'रुविदिभ्यां डित् (उ॰ ३, ११३)'—इति अथप्रत्ययः। ज्ञायते हि यज्ञ', लभते हि दक्षिणादिकम्, विचार्यते हि विद्वद्भिः, भावयत्यनेन फलम्। "यथा विप्रो विदथमावदाथ (ऋ॰ सं॰ ८, ३, २१, २)"—इति निगमः॥

(६) नार्यः। 'नृ नये' क्रयादिः। 'ऋहलोर्ण्यत् (३, १, १२४)'। नयति स्वर्गं कर्त्तारम्, नीयतेऽन्नमनुष्ठानेन वा। निगमोऽन्वेषणीयः॥

(७) सवनम्। 'षुञ् अभिषवे (स्वा०उ०)'। 'सुयुरुहभ्यो युच् (उ० २, ७०)'। अभिषूयतेऽस्मिन् सोम। "उयं नः सवना गहि (ऋ० सं० १, १, ७, २)"—इति निगमः॥

(८) होता। व्याख्यातं वाङ्नामसु (७३ पृ०)। हूयतेऽस्मिन् हविः। "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० सं० ७, ६, १८, ४)"—इति निगमः॥

(९) इष्टि। यजेरिषेर्वा क्तिन्। यजतेर्यज्ञवदर्थः, इष्यते हि सः। 'इष्टिशब्दो हविर्यज्ञे आद्युदात्तः, यज्ञमात्रे मोदात्तः' —इति माधवः। "यथातउश्मसीष्टये (ऋ० सं० १, २, ३०, २)"—इति निगमः॥

(१०) देवताता। 'दिवु क्रीडादौ (दि० प०)'। दीव्यन्ति सुवन्त्यत्र देवताः। देव एव देवता। 'सर्वदेवात्तातिल् (४, ४, १४२)' सप्तम्या आकारः (७, १, ३९)। "त्रिर्देवताता त्रिरुताहतं धियाः (ऋ० सं० १, ३, ४, ५)"—"आ देवताता हविषा विवासति (ऋ० सं० १, ४, २३, १)"—इति निगमौ॥

(११) मखः। 'मह पूजायाम् (भू० प०)'। 'मंहेः ख च' खप्रत्ययो हलोपश्च। महन्त्यत्र देवताः। यद्वा, 'मख गतौ' घः। वेनवदर्थः। "मखः सहस्रदर्चति (ऋ० सं० १, १, १२, ३)"—"विर्वाक्षि वह्निः सपुत्र ते मखः (ऋ० सं० ७, ६, १०, १)"—इति निगमौ॥

- (१२) विष्णुः। विप्लृ व्याप्तौ (जु० उ०)'। 'विषेः कि च (उ० ३, ३९)'—इति नुप्रत्ययः। विषयेणाप्नोति स्वर्गम्।

(६) नार्यः। 'नृ नये' क्र्यादिः। 'ऋहलोर्ण्यत् (३, १, १२४)'। नयति स्वर्गं कर्त्तारम्, नीयतेऽसमनुष्ठानेन वा। निगमोऽन्वेषणीयः॥

(७) सवनम्। 'षुञ् अभिषवे (स्वा० उ०)'। 'सुयुरुहभ्यो युच् (उ० २, ७०)'। अभिषूयतेऽस्मिन् सोम। "उप नः सवना गहि (ऋ० सं० १, १, ७, २)"—इति निगम.॥

(८) होत्रा। व्याख्यात वाङ्नामसु (७३ पृ०)। हीयतेऽस्मिन् हवि। "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० म० ७, ६, १८, ४)"—इति निगम॥

(९) इष्टि। यजेरिष्टिर्वा क्तिन्। यजतेर्यष्टवदर्थं, इष्यते हि सः। 'इष्टिशब्दो हविर्यज्ञे आद्युदात्त., यज्ञमात्रे नोदात्त.' —इति माधवः। "यथातदुरुममीष्टये (ऋ० सं० १, २, ३०, २)"—इति निगमः॥

(१०) देवताता। 'दिवु क्रीडादौ (दि० प०)'। दीव्यन्ति सुवन्त्यत्र देवताः। देव एव देवता। 'सर्वदेवात्तातिल् (४, ४, १४३)' समस्या आकार. (७, १, ३९)। "विदद्देवताता त्रिरु नाहत् धियाः (ऋ० सं० १, ३, ४, ५)"—"आ देवताता हविषा विवासति (ऋ० सं० १, ४, २३, १)"—इति निगमौ॥

तय (६, ४, १०२)'—इति श्रीभावो मकारलोपाभावश्च। "इन्द्र यो यन्धि जीवसे (ऋ० सं० ६, ४, ३, २)"—इति निगमः ॥

(१४) इषुध्यति। 'इषु वरणे' कण्ड्वादिः। "विश्वो राय इषुध्यति (ऋ० सं० ४, ३, ४, १)"—इत्यत्र 'इषुध्यतिर्याञ्चाकर्मणः'—इत्युवटः ॥

(१५) मदेमहि। 'मदी हर्षग्लपनयोः' स्वरितेत्, लिङ्॥

(१६) मनामहे। 'म्ना अभ्यासे' व्यत्ययेनात्मनेपदम्, पाघ्राध्मास्थाम्ना (७, ३, ७८)'—इत्यादिसूत्रेण मनादेशः। "सुम्नयो मनामहे (ऋ० सं० १, २, २१, ६)"—इति निगमः ॥

(१७) मायते। नैरुक्तधातुः ॥

इति सप्तदश याञ्चाकर्माणः ॥ १८ ॥

दाति (१)। दार्यति (२)। दार्सति (३)। राति (४)। रार्सति (५)। पृणक्ति (६)। पृणाति (७)। शिक्षति (८)। तुञ्जति (९)। मंहते (१०) इति दश दानकर्माणः ॥ २० ॥

(१) दाति। 'दाप् लवने' अदादिः, ददातेर्वा 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुक्। "दाति प्रियाणि चिद्वसु (ऋ० सं० ३, ५, ८, ३)"—इति निगमः ॥

(२) दाशति। 'दाशृ दाने' स्वरितेत्। "धन यस्मै दुदाशुमर्त्यः (ऋ० सं० १, २, ८, ४)"—इति निगमः ॥

(३) दासति। 'दास दाने' स्वरितेत् ॥

(४) राति। 'रा दाने' अदादिः। "तस्य मे रास्व तस्य ते भक्षयाय"—इति निगमः ॥

(५) रासति। 'रासृ शब्दे' व्यत्ययेन परस्मैपदम्। श

नो॑ रास्वच्छुरुर्व॑सुन्द्राग्राः (ऋ० सं० ४, ८, ६, ३)"—इति निगमः॥

(६) पृणचि। 'पृची सम्पर्के' रुधादिः। "पृणचि॑ सानसि क्रतुम् (ऋ० सं० ८, ७, २८, ४)"—इति निगमः॥

(७) पृणाति। 'पॄ पालनपूरणयो.' क्र्यादिः स्वादिश्च। "यः पृणाति स ह॑ दे॒वेषु॑ गच्छति (ऋ० सं० २, १, १०, ५)"—इति निगमः॥

(८) शिचति। शक्तेः 'सनि मीमा (७, ४, ५४)'—इति इस्। 'अत्र लोपोऽभ्यासस्य (७, ४, ५८)' संयोगादिलोप (८, २, २९) "यस्तुभ्यं दाशाद् यो वा ते शिचात् (ऋ० सं० १, ५, १२, ३)"—इति निगम.। 'शिचतिर्दानकर्मा पठित'—इति स्कन्दस्वामिभाष्यम्॥

(९) तुञ्जति। 'तुजि हिंसायाम् पालने च'। "तुञ्जे तु॑ञ्जे य उत्त॑रे (ऋ० सं० १, १, १४, २)"—इति निगमः॥

(१०) मंहते। 'मंहि महि वृद्धौ' आत्मनेपदी। "स्तोतृभ्यो मंहते मघम् (ऋ० सं० १, १, २१, ३)"—इति निगम.॥

इति दश दानकर्माणः॥ २०॥

परि॑स्रव (१)। पव॑स्व (२)। अभ्य॑र्ष (३)। आशिषः (४)। इति चत्वारोऽध्येषणाकर्माणः॥ २१॥

(१) परिस्रव। 'स्रु गतौ (भ्वा० प०)' परिपूर्वः। लोण्मध्यमैकवचनम्। "इन्द्रायेन्द्रो परि॑स्रव (ऋ० सं० ६, ६, १४, ३)"—इति निगमः॥

(२) पवस्व। 'पूङ् पवने (भ्वा० आ०)'। "पव॑स्व सोम मन्दयन् (ऋ० सं० ७, २, १६, १)"—इति निगमः॥

(३) अभ्यर्धं । 'ऋध गतौ' तुदादिः । 'छन्दस्युभयथा (३, ४, ११७)'—इति आर्धधातुकत्वे कित्त्वाभावाद् गुणः । "अभ्यर्धं स्वायुधा"—इति निगमः ॥

(४) आशिषः । अश्नोतेर्लेट् । 'सिब्बहुलं लेटि (३, १, ३४)' इट्, 'लेटोऽडाटौ (३, ४, ९४)' ॥

इति चत्वारोऽध्येषणाकर्माणः ॥ २१ ॥

स्वपिति (१) । सस्ति (२) । इति द्वौ स्वपितिकर्माणौ ॥ २२ ॥

(१) स्वपिति । 'ञि ष्वप शयने' अदादिः । तिपि 'रुदादिभ्य सार्वधातुके (७, २, ७६)'—इतीट । "यो दीर्घितं स्वपिति"—इति निगमः ॥

(२) सस्ति । 'षस स्वप्ने' अदादि । "सस्तु माता सस्तु पिता (ऋ० सं० ५, ४, २२, ५)"—इति निगमः ॥

इति द्वे स्वपितिकर्माणी ॥ २२ ॥

कूपः (१) । कातुः (२) । कर्त्तः (३) । वव्रः (४) । काटः (५) । खातः (६) । अवतः (७) । क्रिविः (८) । सूदः (९) । उत्सः (१०) । ऋश्यदात् (११) । कारोतरात् (१२) । कुशयः (१३) । केवटः (१४) । इति चतुर्दश कूपनामानि ॥२३॥

(१) कूपः । कुशब्दोपपदात् पिबतेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः । कुत्सितं पानमत्र, जलस्याल्पत्वात्क्षीणसम्भवाद्वा । यद्वा, 'कुप क्रोधे' दिवादिः । इगुपधलक्षणः कः,

पृषोदरादित्वात् दीर्घः। कुप्यन्त्यस्मै मनुष्याः दुरादानजलत्वात्। यद्वा, कवतेर्गतिकर्मणः, 'कुयुभ्याञ्च (उ० २, २५)'—इति पप्रत्ययः, किन्त्वाद्दीर्घश्च। गम्यते जलार्थिभिः। "त्रितः कूपेऽवहितः (ऋ० सं० १, ७, २३, २)"—इति निगमः॥

(२) कातुः। 'कै गै शब्दे (भू० प०)'। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ० १, ६७)'—इति बाहुलकात्तुन्। शब्द्यते बहुलत्वादिना। यद्वा, कशब्दे उपपदे अततेः 'छन्दसीणः (उ० १, २)'—इति बाहुलकादुण्। कमुदकमस्मिन् अत्यते अधिगम्यते। निगमोऽन्वेषणीयः॥

(३) कर्त्तः। करोतेर्वा हिंसार्थात्। 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् (उ० ३, ८३)'—इति बाहुलकात्तन्। क्रियते उत्पाद्यते पुरुषैः, हिंस्यन्त्यत्र चौराः पथिकादीनर्थमतः, कस्य ऋत मासिरवेति वा। "कर्त्तमन्वस्य वित्तमादाय ह्नन्ति"—इति निगमः॥

(४) वव्रः। 'वृञ् सम्भक्तौ (स्वा० उ०)'। 'घञर्थे कविधानम् (३,३,५८ वा० २)'—इति कः। 'कञादीनां के द्वे भवतः (३, ३, ५८ वा० ३)'। सम्भज्यते जलार्थिभिः। "वव्रं अनन्तां अवसा पदीष्ट (ऋ० सं० ५, ७, ८, २)"—इति निगमः॥

(५) काटः। 'कटे वर्षावरणयोः (भू० प०)' घञ्। आव्रियते जलार्थिभिः। यद्वा, 'कट पट गतौ (भू० प०)' घञ्। "काटे निबाळ्ह ऋषिरह्व ऊतये (ऋ० सं०, १, ७, २४, ६)"—इति निगमः॥

(६) खातः। 'खनु अवदारणे (भू० प०)'। निष्ठा। निगमोऽन्वेषणीयः॥

(७) अवतः। अवपूर्वादततेः पचाद्यचि (३, १, १३४) शकन्ध्वादित्वात् पररूपम् (६, १, ८४ वा०)। अवातति

स्वयमानोऽधोमच्छति द्रोणाहावमवतमश्मचक्रम् (ऋ॰ सं॰ ८, ५, १८, १)"—"आहतासोऽवतासो न कर्तृभिः (ऋ॰ सं॰ १, ४, २०, ३)"—इति निगमौ।

(८) क्रिविः। करोतेः कृणोतेर्वा 'कृविघृष्विछविस्थविकिकीदिवि (उ॰ ४, ५६)'—इतीन्प्रत्ययो रिदादेशश्च निपात्यते। कर्त्तवदर्थः। "मात्र इन्द्र क्रिविं यथा (ऋ॰ सं॰ १, २, २८; १)"—इति निगमः।

(९) सूदः। 'सूद क्षरणे हिंसायाञ्च (भू॰ आ॰)'। क्षरत्यस्मात् जलं, हिंसायां कर्त्तवदर्थः। 'शोभनोदकः सुस्थिरोदको वा सूदः'—इति हरदत्तमिश्रः। 'उदकस्योदः सञ्ज्ञायाम् (६, ३, ५७)'। निगमोऽन्वेषणीयः।

(१०) उत्सः। उत्पूर्वात् सर्त्तेः सदेः स्यन्देर्वा डप्रत्ययः। स्यन्देर्यलोपो बाहुलकात्। उन्देर्वा 'उन्देर्नलोपश्च'—इति सप्रत्ययः। उद्गच्छत्यस्मात् जलम्, स्यन्दते आर्द्रीक्रियते वा जलेन। "उत्सं न कश्चिज्जनुपानमक्षितम् (ऋ॰ सं॰ ७, ५, २२, ५)"—इति निगमः।

(११) ऋश्यदात्। 'ऋषी गतौ (तु॰ प॰)'। 'अघ्न्यादयश्च (उ॰ ४, १०८)'—इति यत्प्रत्ययो मूर्द्धन्यस्य शादेशो गुणाभावश्च निपात्यते। ऋश्या मृगाः। ऋश्यान् द्यति। 'आतोऽनुपसर्गे कः (३, २, ३)'। पञ्चम्येकवचनम्। कूपो हि दुर्ग्रहजलत्वात् ऋश्यान् खण्डयति, खण्डितत्वञ्च जलादानेच्छा न करोति। "युवं वन्दनमृश्यदादुदूपथुर्युवं (ऋ॰ सं॰ ७, ८, १६, ३)"—इति निगमः।

(१२) कारोतरात्। करणं कारः। करोतेर्घञ्। कारेण खननक्रियया उत्तरः अधिकः प्रदेशान्तरादुत्कृष्टो वा। यद्वा, उत्खातमुदकं यस्य सः कारोत्तरः क्षतोदको वा इष्टोद-

रादित्वात् कारोतर:। पद्मस्येकवचनम्।—निगमोऽन्वेष-णीय.।

(१३) कुशय'। कौ शेते। 'अधिकरणे शेते. (३, ५, १५)'—इत्यच्प्रत्यय.। निगमोऽन्वेषणीय.॥

(१४) केवटः। 'केवृ सेवने (भू० आ०)'। 'शकादिभ्यो-ऽटन् (उ० ४, ७८)'—इत्यटन्प्रत्ययः। सेव्यते जलार्थिभि। "माकी स शारि केवटे (ऋ० स० ४, ८, २०, २)"—इति निगम.।

इति चतुर्दश कूपनामानि। २३।

तृपुः (१)। तक्वा (२)। रिम्वा (३)। रिपुः (४)। रिक्वा(५)। रिहायाः (६)। तायुः (७)। तस्करः (८)। वनर्गुः (९)। हुरश्चित् (१०)। मुषीवान् (११)। मलिम्लुचः (१२)। अघशंसः (१३)। वृकः (१४)। इति चतुर्दशैव स्तेनना-मानि॥ २४॥

(१) तृपुः। 'तृप प्रीणने (दि० प०)'। 'ईषे किच्च (उ० १, १३)'—इति बाहुलकादुप्रत्ययः किच्च। परद्रव्यापहारात् तृप्यति। निगमोऽन्वेषणीय'।

(२) तक्वा। तकतिर्गतिकर्मा, 'तक सहने (भू० प०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति वनिप्। गच्छति मोषणार्थम्, मोषणेन वा सहते अभिभवति। "तक्वा न भूर्णिर्वना सिषक्ति (ऋ० सं १, ५, १०, १)"—इति निगम॥

(३) रिम्वा। 'रभ राभस्ये (भू०आ०)'। पूर्ववद्वनिप्।

पृषोदरादित्वाद् इकारो गुणाभावश्च। रमते भोगवर्गेषु वेगेन करोति। निगमोऽन्वेषणीय.॥

(४) रिपु.। 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु (तु० प०)' 'ईपेः किञ्च (उ० १, १३)'—इति बाहुलकादुप्रत्यय। "रिपति" केचित् पठन्ति। तत्र बाहुलकादेव फकारस्य पकार। रिफति, मोषणार्थं युद्धते हिनस्ति वा निन्द्यते च सत्पुरुषैः। "मा नु स रिपुरीशत (ऋ० सं० १, ३, ११, १)"—इति निगमः।

(५) रिक्था। 'रिचिर् वियोजने (रु० उ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति क्वनिप्। चकारस्य ककारो व्यत्ययेन। वियोजयत्यर्थरथंत, वियुज्यते वा प्राणैः। निगमोऽन्वेषणीय।

(६) रिहायाः। 'रिह कत्थनादो'—इति चीरस्वामी। 'परसैकूसुधाविहायस्'—इत्यादिनासुनि आयुडागमो गुणाभावश्च निपात्यते। रिपुवदर्थं। निगमोऽन्वेषणीय।

(७) तायु। 'तायृ सन्तानपालनयोः (भ्वा० आ०)'। 'छन्दसीण (उ० १, २)'—इति बाहुलकाद् गुण। ताय्यते यस्मात् सर्वम्। यद्वा, तसैरुपचयार्थात् पूर्ववदुणि बाहुलकात् सकारस्य यकारः। 'उपचीर्णोऽसाविह लोके आयुषा, यदा तदा राज्ञामारिष्यमाणत्वात्, परलोकेऽपि भ्रमणधर्मकत्वात्' —इति स्कन्दस्वामी। "अपत्ये तायवो यथा (ऋ० सं० १, ४, ७, २)"—उत त्यो न वस्त्रमथिन तायुम् (ऋ० सं० ३, ७, ११, ३)"—इति निगमौ॥

(८) तस्कर। तत्करोतीति विगृह्य 'दिवाविभानिशाप्रभा (३, २, २१)'—इत्यादिना टप्रत्यय। 'करोति यत् पापकम्'—इति नैरुक्ताः। तच्छब्देन प्रकरणसामान्यादर्थप्राप्त-

न्याच पापकर्मनिर्देशमभिप्रेतमित्याह—'यत् पापकमिति नैरुक्ताः'—इति। वैयाकरणास्तु शब्दपरत्वात् सामान्येऽप्याहुः 'तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च (६, १, १५७ ग० सू०)'—इति। तनोतेर्वा स्यात् सन्तानकर्मेति समानम्। तच्च सन्ततकर्मत्वं दर्शयति—'दिवा पथि मोषणेन, रात्रौ सन्धिच्छेदनेन'—इति स्कन्दस्वामी। तनोतेः क्विपि नलोपे तुकि चर्त्वम्। यद्वा, 'त्यजियजितनिभ्यो डित् (उ० १, १३१)'—इति श्रदिप्रत्यये तत्। कर्मशब्दस्य मकारलोपः। पृषोदरादित्वात् रूपम्। "तनूत्यजेव तस्करा वनर्गू (ऋ० सं० ७, ५, ३२, ६)"—"तस्कराणां पतये नमः (य० वा० स० १६, २१)"—इति निगमौ ॥

(९) वनर्गुः। 'वनशब्दोपपदात् गमेः मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययो रुडागमश्च निपात्यते। तस्करो हि मोषणार्थं सदा वनं गच्छति। निगमोऽन्वेषणीयः ॥

(१०) ह्वरश्चित्। 'ह्वृर्छा कौटिल्ये (भू० प०)'। क्विप्। राल्लोपः (६, ४, २१)'—इति वकारलोपः। 'चिती संज्ञाने (भू० प०)'। क्विप्। ह्वरः कौटिल्यानि चेतयते। यद्वा, ह्वर्त. 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)—इति विचि गुण, पृषोदरादित्वात् अकारस्योकारः। ह्वरः अर्थानामाहर्तॄन्, चेतयतेः चिनोतेर्वा क्विप्। ह्वरः ह्रतानर्थान् सञ्चिनोति। अपिशब्दात् अत्र कर्मणि विच्। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इत्यलुक्। "अप्रप्रोथन्तः सनुतर्हुरश्चितः (ऋ० सं० ७, ४, २४, ५)"—इति निगमः ॥

(११) सुषीवान्। 'सुष स्तेये (क्र्या० प०)'। अच्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्। सुषी मोषणमस्यास्ति। 'छन्दसीवनिपौ (५, २, १२२ वा० २)'—इति

वनिप्। "सुग्रीवार्धं दुरयितम् (ऋ० सं० १, २, २४, २)" —इति निगमः। अत्र 'परोक्षहर्त्ता चौरो सुग्रीवान्, प्रत्यक्षहर्त्ता दुरयित्'—इति माधवः॥

(१२) मलिम्लुचः। मलमस्यास्ति। 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः (५, २, ११४)' —इति मलिनो निपात्यते। म्लुच स्तेयकरणे (भू० प०)। 'इगुपधज्ञाप्रीकिरः कः (३, १, १३५)'। मलिनश्चासौ म्लुचश्च मलिम्लुच।। पृषोदरादित्वे न नलोप।। निगमोऽन्वेषणीयः।

(१३) अघशंसः। आङ्पूर्वात् हन्ते. 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति ड.। पृषोदरादित्वात् आङो ह्रस्वत्वं इकारस्य घत्वञ्च। शंसे. पचाद्यच्। आहन्ता, वधस्वभावः, आत्मसमानश्च। "अघशंस स्य कस्यचित् (ऋ० सं० १, २, २४, ४)"—इति निगम.॥

(१४) वृक। व्याख्यातम्त्विङ्नामसु (२८७पृ०)। वारको मार्गस्य। "यो नः पूषन्नघो वृकः (ऋ० सं० १, ३, २४, २)" —इति निगमः।

इति चतुर्दश स्तेननामानि॥ २४॥

निण्यम् (१)। सस्वः (२)। सनुतः (३)। ह्विरुक् (४)। प्रतीच्यम् (५)। अपीच्यम् (६)। इति षट्निर्णीतान्तर्हितनामधेयानि॥ २५॥

(१) निण्यम्। निर्शब्दपूर्वात् नयते. 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययष्टिलोपो रेफलोपश्च निपात्यते। निर्णीत वहिर्नीतम्, निर्गतमन्तर्हित वा। "वृषभस्य निण्यं चेरुत्यार्यः (ऋ० सं० १, २, ३०, ५)"—"निण्याः सचन्तो मनसा चरामि (ऋ० सं० २, ३, २१, २)"—इति निगमौ।

(२) सस्वः । सम्पूर्वात् स्वरतेर्गतिकर्मणो विचि रपरगुणः । समोऽन्तलोपः । सम्यगन्तर्गतं विनिर्गतं वा । "सुस्वर्दूं यन्म-वतो गोतमो वः (ऋ० सं० १, ६, १४, ४)"—"यत् सुस्वर्त्तो जिह्वीळिरे यट्टाविः (ऋ० सं० ५, ४, २८, ५)"—इति निगमौ ।

(३) सनुतः । (४) ह्निरुक् । स्वरादिः । "सनुतर्हेहि तं ततं (ऋ० सं० ६, ६, २६, २)"—"य ईं दुदर्श ह्निरुगिन्नु तस्मात् (ऋ० स० २, ३, २०, २)"—इति निगमौ ॥

(५) प्रतीच्यम् । (६) अपीच्यम् । अपीच्यमपगतमप-चितम् (निरु० ४, २५)'—इत्यादिभाष्ये 'प्रत्यपचित स्थितम्' इति स्कन्दस्वामी । प्रतिपूर्वात् अपमावपूर्वाच्च चिनोतेः पृषदादित्वात् यप्रत्ययटिलोपादि च निपात्यते । प्रतीच्यस्य निगमोऽन्वेषणीयः ॥ "नाम त्वष्टुरपीच्यम् (ऋ० सं० १, ६, ७, ५)"—"(य उस्राणामपीच्या२ (ऋ० सं० ६, २, २६, ५)"—इति निगमौ ॥ 'य उस्राणामपीच्या'—इत्यत्र 'अपिपूर्वाद-ञ्चतेः 'ऋत्विगित्यादिना (३, २, ५९) क्विन्प्रत्ययः, ततो 'भवे छन्दसि च (४, ४, ११०)'—इति यत्, 'अचः (६, ४, १३८)'—इत्यकारलोपः, 'चौ (६, ३, १३८)'—इति पूर्वपदस्य दीर्घः । 'अपीच्योऽप्रकाशः'—इति भट्टभास्करमिश्रः ॥

इति षट् निर्णीतान्तर्हितनामानि ॥ २५ ॥

**आके (१) । पराके (२) । पराचैः (३) । आरे(४) । परावतः (५) । इति पञ्च दूरना-मानि ॥ २६ ॥**

(१) आके । (२) पराके । आङ्पूर्वात् परापूर्वाच्च एते 'पिनाकादयश्च (उ० ४, १५)'—इति आकप्रत्ययो धातुलो-

पञ्च निपात्यते। यद्वा, आङ्पूर्वात् परापूर्वाच्च किरतेः 'बव्रे-
ष्वपि (३, २. १०१)'—इति डः। आकीर्णं पराकीर्णं च तद्
विक्षिप्तमिव भवति आके निगमोऽन्वेषणीयः॥ "वर्धन्त-
मस्तु दर्जस' पराके (ऋ० सं० ५, ६, २५, ५)"—इति निगमः॥

(३) परावैः। 'नीचैरिति वदन्त्य पराकै.'—इति भट्ट-
भास्करमिश्रः। निगमोऽन्वेषणीयः॥

(४) आरे। अव्ययम्। "नु हि त्वदारे निमिषंश्च नेशे"
(ऋ० सं० २, ७, १०, १)"—इति निगमः॥

(५) परावत.। ईरयतिर्वहनेर्गतिकर्मणो वा संसाधनेऽर्थे
वर्त्तमानात् सोपसर्गात् परोपसर्गाद्वा 'उपसर्गाच्छन्दसि
धात्वर्थे (५, १, ११८)'—इति वति'। पृषोदरादित्वात् प्रथ-
मस्य पराभाव'। प्रकर्षेण ईरति विक्षिप्त' परागतमिव वा
तत् भवति। "परावतं परमा गन्तवा उ' (ऋ० सं० ८, ५,
३, ४)"—"सुसारंसी परावतः (ऋ० सं ३, ६, २१, १)"—इति
निगमौ॥

इति पञ्च दूरनामानि॥ २६॥

प्रत्नम् (१)। प्रदिवः (२)। प्रवयाः (३)।
सनेमि (४)। पूर्व्यम् (५)। अह्नाय (६)। इति
षट् पुराणनामानि॥ २७॥

(१) प्रत्नम्। 'नश्च पुराणे प्रात् (५, ४, २५ वा० २)'—
इति तनप्रत्ययः। "तम् प्रत्नथा पूर्वथा विश्वथेमथा (ऋ० सं०
४, २, २३, १)"—इति निगमः॥

(२) प्रदिवः। "यदीमनु प्रदिवः (ऋ० सं० ३, २, ८,
३)"—इत्यत्र पुंलिङ्गद्विवचनान्तेन, "यत्र रोचाना प्रदिवः
(ऋ० सं० ३, २, २३, ४)"—इत्यत्र, बहुवचनान्तेन

"इन्द्राय सोमाः प्रदिवः (ऋ० सं० ३, २, १८, २)"—इत्यत्र प्रथमाबहुवचनान्तेन च प्रदिव इत्येव सामानाधिकरण्यदर्शनात् सकारान्तमेतदव्ययमित्याहुः। इन्द्रार्थत्वे नानादिकालप्रवृत्ता इत्यभाषयत्। तेन प्रगतानि दिनान्यस्य पृषोदरादित्वात्नकारस्य वकारः इत्यादि व्युत्पत्तिः। निगमेषु वचनव्यत्ययश्चान्वेषणीय एव॥

(३) प्रवयाः। प्रगतं वयो यस्य। वयः कालमात्रमत्र। निगमोऽन्वेषणीयः॥

(४) सनेमि। अव्ययम्। "सनेम्युस्मद्युयवन्नमीवाः (ऋ० सं० ५, ४, ५, ७)"—"सनेमि सुख्यं स्वपस्यमानः (ऋ० सं० १, ५, २, ४)"—"सनेम्यस्मे मुरुतो जुनन्ति (ऋ० सं० २, ४, ८, ३)"—इति निगमाः॥

(५) पूर्व्यम्। 'पूर्व पूरणे (भू० प०)'। पचाद्यच् (३, १, १३४)। वयःप्रवृत्तिं पूरयतीति, पूर्वस्मिन् काले भवं पूर्व्यम् 'भवे छन्दसि (४, ४, ११०)'—इति यत्। यद्वा, 'पूर्वैः कृतमिनयौ च (४, ४, १३३)'—इति यः। "पूर्व्यं होतुरस्य नः (ऋ० सं० १, २, २०, ५)"—"यः स्तोमेभिर्वावृधे पूर्व्येभिः (ऋ० सं० ३, २, ११, ३)"—इति निगमौ॥

(६) अह्नाय। अव्ययम्। निगमोऽन्वेषणीयः॥

इति षट् पुराणनामानि॥ २७॥

नवम् (१)। नूतम् (२)। नूतनम् (३)। नव्यम्(४)। इदा(५)। इदानीम्(६)। इति षडेव नवनामानि॥ २८॥

(१) नवम्। यद्वा, 'णु स्तुतौ (अदा० प०)'। 'ऋदोरप्

(१, ३, ५०)'। नूयते स्तूयते, अविरतरूतत्वेन रमणीयत्वात् इति। "नवेन पूर्वं दयमानास्स्याम्"—इति निगम ।

(२) नूनम्। नीतेरेव। 'रास्नासास्ना (उ० ३, १३)'—इत्यादिना नमत्ययो दीर्घश्च निपात्यते। "नूयते नूनं। इदंनूनं ते वयमूती (ऋ० स० ६, २, २, २)"—इति निगम ॥

(३) नूतनम्। नवस्य नू—आदेशः 'त्नप्तनप्तनखाश्च प्रत्यया वक्तव्याः (५, ४, २५ वा० १)'—इति तनप्प्रत्ययः। "ईळो नूतनैरुत (ऋ० स० १, १, १, २)"—इति निगम ॥

(४) नव्यम्। नवमेव नव्यम्। 'शाखादिभ्यो यत् (५, ३, १०३)'—इति स्वार्थे यत्। यद्वा, नौतेः 'अचो यत् (३, १, ९७)'—'वान्तोयि प्रत्यये (६, १, ७८)'। "इन्द्राग्नी स्तोमं जनयामि नव्यम् (ऋ० स० १, ७, २८, २)"—इति निगमः ॥

(५) इदा। 'तयोर्दाहिलौ च छन्दसि (५, ३, २०)'—इति इदंशब्दात् सप्तम्यन्तात् दाप्रत्ययः। "इदा हि व उपस्तुतिम् (ऋ० स० ६, २, २३, १)"—इति निगम ॥

(६) इदानीम्। 'दानीं च (५, ३, १८)'—इति तस्मादेव दानींप्रत्ययः। "इदानीमह्नः उपवाच्यो नृभिः (ऋ० स० ३, ८, ५, १)"—इति निगम ।

इति षडेव नवनामानि ॥ २८ ॥

प्रपित्वे (१)। अभीके (२)। दभ्रम् (३)। अर्भकम् (४)। तिरः (५)। सतः (६)। त्वः (७)। नेमः (८)। ऋक्षाः (९)। स्तृभिः (१०)। वम्रीभिः (११)। उपजिह्विका (१२)। जर्दरम् (१३)। कर्दरम् (१४)। दुभ्रः (१५)। पिनाकम् (१६)।

मेना(१७)। ग्नाः(१८)। येमः (१९)। वैनतसः (२०)। अया(२१)। एना(२२)। विषंक्तु(२३)। सचते(२४)। भ्यसते (२५)। रेजते(२६)। इति षड्विंशतिर्द्विश उत्तराणि नामानि ॥२९॥

प्रपित्वे इत्यादीनि भाष्यकारेणैव निरुक्तानि (निरु० ३, २०, २१) ॥ २८ ॥

स्रुचे (१)। पुरन्धी (२)। धिषणे (३)। रोदसी(४)। क्षोणी(५)। अम्भसी(६)। नभसी (७)। रजसी(८)। सदसी(९)। सद्मनी(१०)। घृतवती (११)। बहुले (१२)। गभीरे (१३)। गम्भीरे (१४)। ओण्यौ (१५)। चम्वौ (१६)। पार्व्यौ(१७)। मही (१८)। उर्वी (१९)। पृथ्वी (२०)। अदिती (२१)। अही (२२)। दूरेअन्ते (२३)। अपारे (२४)। अपारे इति चतुर्विंशतिर्द्यावापृथिवीनामधेयानि नामधेयानि ॥३० ॥

उर्व्यृहन्मकृद्गयदृज्यतिश्रिम्बातानिर्णि-गर्त्तेमाकेतुर्वदृचिकग्रद्विकमिदमिवार्चतिविप्रोरे-भोयत्रोभरताईमच्छेदातिपरिस्रवस्वपितिकूपस्तृ-पुर्निरृथमाकेमतन्नवम्रपित्वे स्रुचे विंशत् ॥

इति निघण्टौ तृतीयाध्यायः समाप्तः ॥ ३ ॥

(१) स्वधे। व्याख्यातमन्ननामसु (१०७ पृ०। १७५ पृ०)। स्वेनात्मना भूतग्रामं धारयतः, स्वं धनं धीयते अनयोरिति वा। द्यावापृथिवीनामसु सर्वत्र द्विवचनान्तत्वम्। तथा च "स्वादु सुव्राते मिथुनानि नाम (ऋ० सं० ३, ३, २४, २)'—इत्यत्र, स्कन्दस्वामी—'मिथुनानि द्विवचनसंयुक्तानि नामानि 'स्वधे पुरन्धी'—इत्यादीनि स्रोटव्य:'—इति।

(२) पुरन्धी। पुराणि धीयन्तेऽनयोः। 'कर्मण्यधिकरणे च (३, ४, ८३)'—इति किप्रत्ययः। पृषोदरादित्वान्मकार उपजनः। निगमोऽन्वेषणीयः॥

(३) धिषणे। व्याख्यातं वाङ्नामसु (७५ पृ०)। स्व रचितुं प्रगल्भे समर्थे, धारयित्र्यौ वा देवमनुष्यादीन्, शब्द्यते स्तूयते वा। निगमोऽन्वेषणीयः॥

(४) रोदसी। 'इलीदमस्ति स्त्रीलिङ्गद्विवचनान्तम्, द्यावापृथिव्योर्वर्त्तमानं चास्ति नपुंसकद्विवचनान्तम्, अस्ति चाव्ययम्। तत्र निगमानां साधारण्यात् त्रेधा त्रयाणामपि साधारणोऽयं पाठः'—इत्याहु। 'प्रस्तरस्यापि विभुत्वात् "रोदसी रोदसी च ते"—इत्यत्र आद्य ईवन्तो दिवि भुवि च वर्त्तते, अन्य. सान्तः'—इति क्षीरस्वामी। तत्र रुधेरसुन्, पृषोदरादित्वात् धकारस्य दकार, स्त्रीलिङ्गे तु 'उगितश्च (४, १, ६)'—इति ङीप्, 'वा छन्दसि (६, १, १०६)'—इति पूर्वसवर्णः। आभ्यां हि विविधं रुद्धानि सर्वभूतानि। "नमो दिवे बृहते रोदसीभ्याम् (ऋ० सं० २, १, २६, ६)"—"होतारं सत्ययजं रोदस्योः (ऋ० सं० ३, ४, २०, १)"—"इमे रोदसी अपारे (ऋ० सं० ३, २, १, ५)"—इति निगमाः। "त्रिपिंतसुका रोदसी नृमणाः (ऋ० सं० २,४,४,५)" अन्तोदात्तो रोदसीशब्दो रुद्रपत्नीवचनः'—इति माधवः।

(५) चोष्यौ। व्याख्यातं पृथिवीनामसु (७ पृ०)। "श्रयः क्षोणी संचते माहिना वाम् (ऋ० सं० २, ४, २३, ५)"—इति निगमः॥

(६) अम्भसी। व्याख्यातमुदकनामसु (८२ पृ०)। बाहुलकादत्रापि तुम्। यद्वा, अम्भ उदकमनयोरस्ति, मत्वर्थीयस्य लुक्। एकत्वावशिष्टमपरत्वावशिष्यमाणमादित्यमण्डलस्यम्। निगमोऽन्वेषणीयः॥

(७) नभसी। 'णह बन्धने (दि० उ०)'। 'नहेर्दिवि भय (उ० ४, २०५)'—इति असुन्। साहचर्यात् उभे अपि नभःशब्देनोच्यते। सम्बध्यते पुण्यवद्भिः। निगमोऽन्वेषणीयः॥

(८) रजसी। 'रञ्ज रागे (भ्रू० उ०)'। 'भूरञ्जिभ्यां कित् (उ० ४, २११)'—इत्यसुन्। 'रजकरजनरजःसूपसंख्यानम्' इति वा नलोपः, रजके स्वगुणे भूतानां 'रजोरजतेर्गतिकर्मणः'—इति माधवः। गम्यते पुण्यवद्भिः। निगमोऽन्वेषणीयः॥

(९) सदसी। सदेरसुन्। सीदन्त्यनयोर्देवमनुष्यादयः। निगमोऽन्वेषणीयः॥

(१०) सद्मनी। सदेरेव मनिन्। "पुराणीः सद्मनोः केतुरन्तः (ऋ० सं ३, ३, २८, २)"—इति निगमः। भाष्य द्रष्टव्यम्॥

(११) घृतवती। उदकवत्यौ। निगमोऽन्वेषणीयः॥

(१२) बहुले। 'बंहिष्ठ'—इति महन्नामसु व्याख्यातम् (२५१ पृ०) बहुभिः पदार्थैस्तद्वत्यौ। "उर्वी पृथ्वी बहुले दूरेअन्ते (ऋ० सं० २, ५, ३, २)'—इति निगमः॥

(१३) गभीरे। (१४) गम्भीरे। व्याख्याते वाङ्नामसु (६१ पृ०)। गम्यते सत्पुरुषैः, प्रतितिष्ठन्त्यनयोर्देवमनुष्यादयः। निगमावन्वेषणीयौ॥

(१५) ओण्यौ । 'ओणृ अपनयने (भू॰ प॰)' । 'इन् सर्वधातुभ्यः (उ॰ ४, ११४)' । 'कृदिकारादक्तिनः' (४, १, ४५ वा॰)'—इति ङीष् । अपनयतः स्वाश्रितानां क्लेशान् । यद्वा, अवतेर्नुटि, छान्दसत्वात् सम्प्रसारणं गुणश्च, टित्वात् ङीप् । "अभि त्यं देवं सवितारमोण्योः (य॰ वा॰ सं॰ ४, २५)"—इति निगमः ।

(१६) चम्वौ । 'चमु अदने (भू॰ प॰)' । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः (उ॰ १, ८०)'—इति ऊप्रत्ययः । चमन्त्यनयोः । "उत्तानयोश्चम्वोर्योनिरन्तः (ऋ॰ सं॰ २, ३, २०, ३)"—इति निगमः ।

(१७) पार्श्वौ । 'स्पृश संस्पर्शने (तु॰ प॰)' । 'स्पृशेः श्वण्शुनौ पृ च (उ॰ ५, २७)'—इति श्वण्प्रत्ययो धातोः पृभावश्च । णित्वाद् वृद्धिः । व्यत्ययेन पुंलिङ्गता । "पार्श्वे"—इति पाठान्तरम् । संस्पृशतो व्याप्नुतः सर्वान् पदार्थान् । निगमोऽन्वेषणीयः ।

(१८) मही । एतदादीनि चत्वारि पृथिवीनामसु व्याख्यातानि (९ पृ॰) । महत्यौ पूजनीये वा । "वेपेते भियसा मही (ऋ॰ सं॰ १, ५, २१, १)"—इति निगमः ॥

(१९) उर्वी । विस्तीर्णे, आच्छादयित्र्यौ वा स्वगर्भस्थितलोकस्य । निगमोऽन्वेषणीयः ।

(२०) पृथ्वी । प्रथिता विस्तारिता ब्रह्मणा सृष्टिकाले । निगमोऽन्वेषणीयः ॥

(२१) अदिती । देवमनुष्यादिसकलप्रपञ्चधारणेऽप्यदीने इत्यर्थः । निगमोऽन्वेषणीयः ॥

(२२) अही । गोनामसु व्याख्यातम् (१८२ पृ॰) । अह्येते प्राणिभिः । निगमोऽन्वेषणीयः ॥

(२३) दूरेऽन्ते । दुःशब्दोपपदात् एते 'दुरीणो लोपश्च (उ० २, १८)'—इति रक्प्रत्ययो धातोर्लोपश्च । 'रोरि (८, ३, १४)'—इति रेफलोप, लोपे पूर्वस्य दीर्घः (६, ३, १११) । 'अन्तो अततेः (निरु० ४, २५)'—इति भाष्यम् । तत्र बाहुलकात्तन् मकारस्यान्तादेश । 'दुःखेन गम्यते दूरमतोऽस्यादिर्मध्यश्च सततगतो भवति, न कदाचिदादौ मध्ये वास्ति'—इति स्कन्दस्वामी । दूरं अन्तमवसानगतिर्ययो । 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इत्यलुक् । "समान्या वियुते दूरेऽन्ते (ऋ० सं० ३, ३, २५, २)"—इति निगम ।

(२४) अपारे । 'पार तीर कर्मसमाप्तौ' चुरादिरदन्तः । घञ् । समाप्तिरिति वा समाप्यतेऽनेनेति वा पार । 'अपारे दूरपारे (निरु० ६, १)'—इति भाष्ये । 'अविद्यमान पारमन्त ययो ते अपारे । दूरत्वेन पराभव दर्शयति पुरा एवद्यावा लोकयव्यन्तताम्'—इति स्कन्दस्वामी । निगमोऽन्वेषणीयः ॥

अध्यायपरिसमाप्तिसूचकद्विर्वचनमिति सिद्धम् ॥

इति देवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने
तृतीयाध्याय ॥ ३ ॥

इति नैघण्टुकं नामाद्यं काण्डं समाप्तम् ॥

---

---

स्वरादीनीति पूर्वमुक्तस्य प्रकरणद्वयस्य (२५पृ०, २७०पृ०, ३०२ पृ०), निगमदेवताकाण्डयोश्च निर्वचनं भाष्यस्कन्दस्वामिभ्यां प्रदर्शितं तदत्र क्रमेण लिख्यते। तत्र, निगमव्याख्यानादि यदत्रानुसंहितं, तत् तत्रैव द्रष्टव्यम्।

(१) स्वः। सुपूर्वादर्त्तेरीरयतेर्वा 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विचि दृशिग्रहणस्य प्रयोगानुसरणार्थत्वादकर्त्तर्य्यपि भवति। ईरयतेरिकारस्याकारो व्यत्ययेन, गुणः। 'स्वरादिनिपातमव्ययम् (१, १, ३०)' सुपो लुक् (२, ४, ७१), रेफस्य विसर्जनीयः (८, ३, १५)। शोभनमरणं गमनं सुखाय हिताय वा यस्य, शोभनं वा प्रेरणं तमसां यस्य, सुष्ठु वा कृतो रश्मिभिः रसानादातुम्, भासं वा ज्योतिषां नक्षत्रादीनां, भासा सुष्ठु कृतः प्राप्त इति वा, स आदित्यः द्यौश्च। सु सुष्ठु शोभनमरणमस्यामरूपैर्वा पुण्यवद्भिरर्य्यते, सुष्ठु वा पुण्यकृत ईरयति सृतो रश्मेः सृतो भाभिर्ज्योतिषा, स्वयमेव वा दीप्तम्। "भूर्भुवः स्वः (य० वा० सं० ३, ३७)—इति दिव उदाहरणम्। "एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्ण ज्योतिः (ऋ० सं० ३, ५, १०, ३)'—इत्यादित्यस्य।

(२) पृश्निः। प्रपूर्वादश्नोतेः स्पृशतेर्वा 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि (उ० ४, ५२)'—इति निप्रत्ययः, प्राशेः स्पृशेश्च पृषभावो निपात्यते। प्राश्नुत एनं शुक्लो वर्णः संस्पृष्टा रसान्। कृतव्याख्यानमन्यत् पूर्वेण। संस्पृष्टा भासं ज्योतिषामसौ, भासेति वा पृश्निरादित्यः। द्यौस्तु संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि (श० ब्रा०

१, ४, ७, २, मा० भा०)'—इति श्रुतेः। "पृश्ने: पृश्वा उप्रमामी रश्मिष्ठाः (ऋ० सं० ४, ३, २३, ५)"—इति निगमो दिवः। "अयं वेनश्चोदयत्पृश्निगर्भाः (ऋ० सं० ८, ७, ७, १)" —इत्यादित्यस्य॥

(३) नाकः। नयतेः 'पिनाकादयश्च (उ० ४, १५)'—इत्या-कप्रत्ययष्टिलोपश्च निपात्यते। नेता रसानाम्, नेता भासा-मात्मीयानाम्, ज्योतिषां प्रणायकश्चादित्यः। द्यौस्तु, कमिति सुखनाम, न कम् अकम् असुखम्, न अकं यत्र स नाकः। 'नभ्राण्नपान्नवेदा (६, ३, ७५)'—इत्यादिना नञः प्रकृति-भावः। "न वा अमुं लोकं जग्मुषे किञ्च नाकम् (निरु० २, १४)"—इति ब्राह्मणम्। अत्यन्तसुखमित्यर्थः। "नाकस्य पृष्ठे अधितिष्ठति श्रितः (ऋ० सं० २, १, १०, ५)"—इति दिवः। तस्मिन्नधि नाके अस्मिन् (ऋ० सं० ८, ०, १८, २))" —इति निगम आदित्यस्य॥

(४) गौः। व्याख्यातं पृथिवीनामसु (४ पृ०)। गमिर-त्रान्तर्णीतण्यर्थः। गमयति रसान् मण्डलं प्रति रश्मिभिः, गच्छति वान्तरिक्षे इति गौरादित्यः। यत् पृथिव्या उपरि दूरं गता, यद्वास्यां ज्योतींऽपि गच्छन्तीति गौः द्यौः। "गवा-मसि गोपतिरेक इन्द्र (ऋ० सं० ५, ६, २३, ६)"—इति दिवः। "उताद: परुषे गवि (ऋ० सं० ४, ८, २२, ३)"— इत्यादित्यस्य॥

(५) विष्टप्। 'टभि' अतिबन्धे (आदा० तौघ प०)'। विधू-र्वात् क्विपि भकारस्य पकारो व्यत्ययेन। विटभिरत्राविशते-ऽर्थे वर्त्तते। यद्वा, विशेरेव बाहुलकाद्रूपसिद्धिः। पृथिवीतो रसानादातुमाविष्टोऽभिनिविष्ट इत्यर्थः। एवमेव भासं ज्योतिषां भासा वाविष्टो व्याप्तः आदित्यः। द्यौराविष्टा ज्योतिर्भिः पुण्य-

छविष। "उप्यद्ब्रध्नस्य विष्टपम् (ऋ० सं० ६, ५, ६, १)"—इत्याद्युदाहरणम्।

(६) नभः। नयतेरसुनि गुणे 'नय' इति स्थिते बाहुलकात् यकारस्य भकारः। नाकशब्देन समानोऽर्थः। अथवा भाधनशब्दस्य ह्रस्वत्वं, सकारलोपः, नकारभकारयोश्च स्थानविपर्ययः, सान्तत्वञ्च। सर्वत्र सूत्राप्राप्त्यनुक्तौ पृषोदरादित्वात् द्रष्टव्यम्। यद्वा, न भाति 'नभः'। असुनि भातेष्टिलोपश्च। एतेन द्यौर्व्याख्याता। "ज्योतिष्मति प्रतितिष्ठ ते नभः"—"स्वर्ज्ञानो नभसा (ऋ० सं० ७, २, १४, ५)"—इत्युदाहरणम्।

इति षट् साधारणानि दिवश्चादित्यस्य ॥ १, ४ ॥

---

इदमाद्युपमानामानि। भाष्यकारेण स्कन्दस्वामिना च विस्तरेण व्याख्यातानि (निरु० ३, १३—१८)। निपातप्रायत्वात् शब्दनिर्वचनस्याशक्यत्वात् उदाहरणमात्रमत्र प्रदर्श्यते।—

(१) इदमिव। (२) इदं यथा। अत्र इदंशब्द उपमानशब्दसन्निधानाय प्रयुक्तः। इवादयश्च निपाताः, परान्वयस्योपमानत्वस्य धर्मस्य प्रतिपादनार्थाः। "इन्द्र इवेह ध्रुवस्तिष्ठ (ऋ० सं० ८,८, २१, २)"—"यथा वातो यथा वनम् (ऋ० सं० ४, ४, २०, ४)"॥

(३) अग्निर्न ये। अत्र नशब्द उपमानार्थः। "अग्निर्न ये भ्राजसा रुक्मवक्षसः (ऋ० सं० ८, ३, १२, २)"॥

(४) "चतुरश्चिद्ददमानात्" (ऋ० सं० १, ३, २२, ४)। अत्र चिच्छब्दः॥

(५) "ब्राह्मणा व्रतचारिणः (ऋ० सं० ५, ७, ३, १)"। उपमाप्रतिपादनेनादिलोपाश्रुतोयमः।

(६) "वृषभ्य तु ते' पुरुहूत वृषाः (ऋ० सं० ४, ६, १७, ३)"। अत्र तुशब्दः॥

(७) जार आ भगम्। "उदीरय पितरा जार आ भगम् (ऋ० सं० ७, ६, १०, १)"। अत्र आकारः॥

(८) "मेषो भूतो ३' भि यन्नयः (ऋ० सं० ५,७,२४, ५)"। अत्र भूतशब्देनोपमोच्यते॥

(९) तद्रूप.। (१०) तद्वर्णः। रूपशब्देन वर्णशब्देन चोत्तरपदेन समासादुपमा प्रतीयते॥.

(११) तद्वत्। पूर्ववत्तच्छब्दस्यार्थः। "प्रियमेधवदत्रिवत् (ऋ० सं० १, २, ३१, ३)"। 'तेन तुल्यं क्रिया चेद्वतिः (५, १, ११५)"॥

(१२) तथा। "तम्प्रत्नथा पूर्वथा विश्वथेमथा (ऋ० सं० ४, २, २२, १)"। 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि (५, ३, १११)'—इति इवार्थेऽयं थाल् विहितः॥

इति द्वादशोपमानामानि। ३, १३।

"तथा"—इत्यस्यानन्तरं "सिंहः"—इति केषुचित् कोशेषु दृश्यते, तत्र पठनीयम्, अथ लुप्तोपमानि (निरु० ३, १८)'—इत्यादिभाष्यस्य तु "ब्राह्मणा व्रतचारिणः (५)"—इति पूर्वमुक्तस्य लुप्तोपमस्य प्रपञ्चत्वात्॥

(१) प्रपित्वे। (२) अभीके। इत्यासन्नस्य। प्रपूर्वादाप्नोतेर्निष्ठायां प्राप्तशब्दस्य प्रपित्वभावः। यद्वा, 'इत्वनादयोऽन्येभ्योऽपि दृश्यन्ते'—इतीत्वन्प्रत्यये बाहुलकादाप्नोतेराकारलोपः। पित्वशब्द आसन्नार्थः। प्रकृष्टदेशकालयोः प्राप्तिः प्रपित्वे इति॥ अभिपूर्वादञ्चतेः 'अलीकादयश्च (उ० ४, २५)'—इतीकन्प्रत्ययो धातुलोपश्च निपात्यते। अभ्यक्ते आसन्ने इत्यर्थः। सोपसर्गौ सप्तम्यन्तौ यथादृष्टाविति पठितौ॥

"प्रपित्वे नः प्रपित्वे तूयमागहि (ऋ० सं० ५,७, १०, ३)"—"अभीके चिदु लोककृत् (ऋ० सं० ८, ७, २१, १)"—इत्यपि निगमौ।

(३) दभ्रम्। (४) अर्भकम्। इत्यल्पस्य। दभ्रमिति दम्नोतेर्वधकर्मणः 'स्फायितञ्चि (उ० २, १२)'—इत्यादिना रक्, 'अनिदिताम् (६, ४, २४)'—इति नलोपः। सुदर्शं सुच्छेदम् अल्पत्वात्॥ ऋच्छतेः 'अर्भकस्य पृथुकपाका वयसि'—इति कप्रत्यये, ऋकारस्य भकारे गुणे रपरत्वे अकारे चोपजने च अर्भकमिति निपात्यते। अवह्रृतमूनपरिमाण इत्यर्थः। "मा मे दभ्राणि मन्यथाः (ऋ० सं० २, १, ११, ७)"—"नमो महद्भ्यो नमो अर्भकेभ्यः (ऋ० सं० १, २, २४, ३)।

(५) तिरः। (६) सतः। इति प्राप्तस्य। अप्राप्तस्येत्यपरः पाठः। तरतेरसुनि बाहुलकात् अकारस्येकारः। तीर्णं प्राप्तमागतम्॥ सर्त्तेरसुनि रेफस्य तकारः। सतः संगतम्॥ अप्राप्तस्येति पाठे पराजित तरण सरण च द्रष्टव्यम्। "तिरश्चिदर्य्या परि (ऋ० सं० ४, ४, १६, २)"—"पार्वे अभिन्दन् सत एति रक्षसे (ऋ० सं ५, ७, ८, १)।

(७) त्वः। (८) नेमः। इत्यर्द्धस्य। अर्द्धशब्दोऽत्र भागविभागवचनः, अर्द्धे हरते इति नपुंसकनिर्देशात्। त्वः, अपगतः अपेत्य समुदायात् गतः पृथग्भूतः। तनोतेरुपधायाः पूर्वे उकारः, यणादेशः, नकारस्य विसर्जनीयः इति स्कन्दस्वामी। तनोतेः 'सर्वनिघृष्वरिष्वलष्व (उ० १, १५१)' इति वन्प्रत्ययष्टिलोपो निपात्यते॥

नेमशब्दोऽन्ननामसु व्याख्यातः (१७५ पृ०)।

समुदायादपनीतः पृथग्भूत इत्यर्थः॥ "पीयति त्वो गृणाति (ऋ० सं० २, २, १६, २)" "प्र नेमोऽस्य सोमो अन्तः (ऋ० सं० ८, १, ६, ५)"।

(९) ऋचाः। (१०) स्तृभिः। इति नक्षत्राणाम्। 'ऋच गतौ (तु॰ प॰)'। ऋक्षेः 'इगुपधात् कित् (उ॰ ४, ११६)'— इति किदिन्प्रत्ययः। ऋषिरत्र उदर्थविशिष्ट'। उद्गतानि ऊर्द्ध्वमीरितानीव प्रकाशन्ते॥ 'स्तृञ् आच्छादने (क्र्या॰ उ॰)'। कर्मण्यौणादिकः क्विप्, बाहुलकात्तुग् न भवति। तीर्णानि प्रसारितानि विस्तीर्णानि च प्रकाशन्ते हि। तस्य पाठो यथादृष्टम्॥ "अमी य ऋचा निहितास उच्चा (ऋ॰ सं॰ १, २, १४, ५)"—"पश्यन्तो द्यामिव स्तृभिः (ऋ॰ सं॰ ३, ५, ६, ३)"॥

(११) वम्रोभिः। (१२) उपजिह्विका। इति सीमिकानाम्। वम्रशब्दो ह्रस्वनामसु व्याख्यात (२४५ पृ॰)। 'जातेरस्त्रीविषयात् (४, १, ६३)' इति ङीप्। जातिशब्दस्यार्थ स्त्रीपुंसयोर्दृष्टो लोके स्त्रीलिङ्गो प्रसिद्ध इति स पठितः॥ वमन्ति हि ते मृदमुपजिह्विका। 'शेवयह्वजिह्वा (उ॰ १, १५२)'—इति जिघ्रतेर्जिघर्त्तेर्वा वप्रत्ययान्तं निपात्यते जिह्वा, 'सञ्ज्ञायां कन् (५, ३, ८७)' 'प्रत्ययस्थात् (७, ३, ४४)'—इतीत्वम्। उपजिघ्रन्ति कायम्, उपरचयन्तीदकस्य उपजिह्विका॥ "यदस्य उपजिह्विका यद्वम्रो अतिसर्पति (ऋ॰ सं॰ ६, ७, १२, ६)" वम्रशब्दस्यायमेव निगमः॥ "वम्रीभिः पुत्रमग्रुवो अदानम् (ऋ॰ सं॰ ३, ६, २, ४)"—इति स्त्रीलिङ्गस्य॥

(१३) ऊर्दरम्। (१४) कृदरम्। इत्यावपनस्य। ऊर्दरं— उत्पूर्वात् 'दॄ विदारणे (क्र्या॰ प॰)'—इत्यस्मात् 'ईर गतौ (अदा॰ आ॰)'—इत्यस्माद्वा 'ऋदोरप् (३, ३, ५७)' घञि च उर्दरमुदीरं वा सदूर्दरम्। ऊर्द्ध्वं तद्दीर्णञ्च मध्यत', ऊर्द्ध्वमीर्णं गतं वा दीर्णमिति त्वादित्वान्निष्ठानत्वम् (८, २, ४४)॥ कृदरम्, गृहनामसु व्याख्यातम् (२५२ पृ॰)। कृतदरम्।

"तमूर्द्दं न पूंषता यवेन (ऋ॰ सं॰ २, ६, (१४, ४)"—
"शमिद्ो अज्जन् कर्दरं मतीनाम् (य॰ वा॰ स॰ २८, १)" ॥

(१५) रम्भ । (१६) पिनाकम्। इति दण्डस्य। 'रभ राभस्ये (भू॰ आ॰)' धवालमने वर्त्तते। कर्मणि घञ्। 'रभेरशब्लिटो (७, १, ६३)'—इति नुम्। आरभन्ते आश्रयन्ते ह्यवष्टभ्याय दण्ड.। "आ त्वा रम्भन्त जिव्रयः (ऋ॰ सं॰ ६, ३, ४५, ४)" ॥ पिनाक—'पिष सञ्चूर्णने (रु॰ प॰)'। 'पिनाकादयश्च (उ॰ ४, १५)'—इति आकप्रत्यय, पकारस्य नकारो गुणाभावश्च निपात्यते। प्रतिपिनष्टि छिनत्त्यनेन शत्रून्, दण्डाकार धनुरुच्यते, तच्च रूढितो महादेवीयमेव सामान्येन। "अवततधन्वा पिनाकावसः कृत्तिवासा. (य॰ वा॰ स॰ ३, ६१)" ॥

(१७) मेना। (१८) ग्ना। इति स्त्रीणाम्। उभावपि शब्दौ व्याख्यातौ वाङ्नामसु (६७पृ॰। ७४पृ॰)। मानयन्ति हि ताः पतिश्वशुरमातुलादय पूज्या भूषयितव्याश्चेति आरगात्।. गच्छन्त्येना अपत्यार्थिन। "अमेनाश्चिज्जनिवतश्च कर्थ (ऋ॰ सं॰ ४, १, २८, २)"—"ग्नास्त्वाकृन्तं तपसोऽतन्वत (ता॰ ब्रा॰)" ॥

(१९) शेप। (२०) वैतस। इति पुम्प्रजननस्य। शेपः—सपतेरसुनि बाहुलकात् सगस्य शभाव। स्पृशत्यनेन स्त्रीन्द्रियम्। तद्धेतुतय विशिष्टानन्दलक्षणं स्नेहुख स्पृशत्युच्यते। त्वगिन्द्रियस्पर्शमात्रक शेपमित्याहुरपरेऽका-रान्तत्वेन दर्शनात् करणे घञन्त इति केचित्, वा तत्र द्रष्टव्य। यद्यपि 'ष्टङ्गीभ्या रूपसादयोः पुट् (उ॰ ४, १८६)'—इति शीकः असुनागमेन सिध्यति तथापि तत्रार्थानौचित्यात् "मुष्कयोरदधात्

—"मुष्कयोर्निहिता सपः"—"मा नो मघेव निःषपि"—इत्यादौ सपशब्देन मेहनस्याभिधानादर्थौचित्याच्च सपशब्दस्य शेभावेन कथञ्चिन्निर्वोढुं युक्तमिति सपतेरित्युक्तम्। तथाचोक्तम्—'अर्थो नित्यः परीक्षेत न संस्कारमाद्रियेत'—इति॥ विपूर्वात् 'तसु उपक्षये (दि० प०)'—इत्यस्मात् पचाद्यचि (३, १, १३४) वितसः। वितस एव वैतसः। प्रज्ञादित्वादण्। विशेषेण तस्यति क्षीणोभवति प्राक् सम्भोगकालात्। यद्वा, विमथिकमितिवत् विशब्दः प्रतिषेधार्थीय। न तस्यति अक्षीणम् सेकसामर्थ्यस्यानुपक्षीणत्वात्। "यस्यामुषन्तः प्रहराम शेपम् (ऋ० सं० ८, ३, २७, २)"—"वि मु माङ्क्षः श्रयथो वैतसेन (ऋ० सं० ८, ५, १, ५)"॥

(२१) अया। (२२) एना। इत्युपदेशस्य। प्रत्यक्षाभिधानमिहोपदेशोऽभिमतः। सामान्येन चैते त्रिष्वपि लिङ्गेषु। अनयेति पदस्य नशब्दलोपेन अया। "अया ते अग्ने समिधा विधेम (ऋ० सं० ३, ४, २५, ५)"—इति स्त्रिया समिधा सामानाधिकरण्यात्॥ एना 'द्वितीयाटौस्स्वेनः (२, ४, ३४)'—इति इदमेतदोरन्वादेशविषये एनादेशः, तृतीयैकवचनस्याकारः। "एना वो अग्निनमसा (ऋ० सं० ५, २, २१, १)"—इति नपुंसकस्य मनसो सामानाधिकरण्यात्। एना पत्या तन्वं १ सं सृजस्व (ऋ० सं० ८, ३, २५, २)"—इति पुंसः पत्युः सामानाधिकरण्यात्॥

(२३) सिषक्तु। (२४) सचते। इति। सिषक्तीति कर्त्तुरभिधानम्। तस्य प्रत्ययार्थत्वेन प्राधान्यादत आह सेवमानस्येति। वैयाकरणसिद्धान्तप्रसिद्धार्थमेवमवोचत्, परमार्थतस्तु धात्वर्थप्रतिपादनपरतयैवाख्यातपदोपादानमर्थाभिगमत्वञ्च। अतश्चैतदुक्तं भवति। सिषक्तु सचत इति सेवार्थौ धातू इति।

तथाहि। "भावप्रधानमाख्यातम्"—इति हि सिद्धान्तः। भिषक्तः सचते। 'षच समवाये' भ्वादिः स्वरितेत्, षच सेवार्थः। सिषक्तीति लोटि तिपि शप्। तस्य 'बहुलं छन्दसि (२, ४, ७६)'—इति श्लुः। 'अर्त्तिपिपर्त्योश्च'। 'बहुलं छन्दसि (७, ४, ७८)'—इत्यभ्यासस्येत्वम्। "स नं सिषक्तु यस्तुरः (ऋ० सं० १, १, २४, २)"—सचस्वा नः स्वस्तये (ऋ० सं० १, १, २, ४)"—इति तु यथानिगमसुदाहरणम्।

(२५) भ्यसते। (२६) रेजते। इति। भयवेपनयोर्धातुः भ्यसते इति। रेजते इति नैरुक्तो धातुः। उभावप्युभयोरर्थयोः। "यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ० सं० २, ६, ७, १)"—"रेजते अग्ने पृथिवी मखेभ्यः (ऋ० सं० ५, १, ८, ४)"—इति।

इति षड्विंशतिर्दिग्भनामानि ॥ ३, २८ ॥

(इति नैघण्टुकटीकापरिशिष्टं समाप्तम्)

---

## अथ चतुर्थोध्यायः।

—:○:—

अथ नैगमं नाम द्वितीयं काण्डं व्याख्यायते—

जहा(१)। निधा(२)। शितांम(३)। मेहना (४)। दमूनाः(५)। मूषः(६)। इषिरेण(७)। कुरुतनं(८)। जठरे(९)। तितंउ (१०)। [illegible] (११)। सध्या (१२)। सन्दू (१३)। [illegible] (१४)। कायमानः(१५)। लोधम्(१६)। [illegible]

(१७) । विद्रधे (१८) । द्रुपदे (१९) । तुग्वनि (२०) । नंसन्ते (२१) । नसन्त (२२) । आहनसः (२३) । अश्नसत् (२४) । इष्मिणः (२५) । वाहः (२६) । परितक्म्या (२७) । सुविते (२८) । दयते (२९) । नूचित् (३०) । नूच (३१) । द्रावने (३२) । अकूपारस्य (३३) । शिशीते (३४) । सुतुकः (३५) । सुप्रायणाः (३६) । अप्रायुवः (३७) । च्यवनः (३८) । रजः (३९) । हरः (४०) । जुहुरे (४१) । व्यन्तः (४२) । क्राणाः (४३) । वायो (४४) । विषुणः (४५) । जामिः (४६) । पिता (४७) । शंयोः (४८) । अदितिः (४९) । एरिरे (५०) । जसुरिः (५१) । जरते (५२) । मन्दिने (५३) । गौः (५४) । गातुः (५५) । दंसयः (५६) । तूताव (५७) । चयसे (५८) । वियुते (५९) । ऋधक् (६०) । अस्याः (६१) । अस्य (६२) । इति द्विषष्टिः पदानि ॥ १ ॥

(१) जहा । हन्तेर्लिङुत्तमैकवचने णलि, द्विवचने, अभ्यासचर्त्वं, कुत्वाभावो नकारलोपश्छान्दसत्वात् । जघानेत्यर्थः । "जहा को अस्मदीषते (ऋ० म० ८, २, ४९, २)" ॥

(२) निधा । निपूर्वाद्धाते 'आ तश्चोपसर्गे (३, १, १३६)' —इति कः । निधीयते स्थाप्यते मृगपक्षिग्रहणाय । निधा

ग्रामसमूहः । "मुमुग्ध्यस्मान्निधयेव बद्धान् (ऋ० सं० ८, १, ४, ६)" ॥

(३) शिताम । श्वितशब्दस्य रेफलोपोऽतो दीर्घत्वं मशब्दश्चोपजनः । षड्डे श्वितत्वाद् दोः शिताम । सितशब्दस्य वा सकारस्य शकारः, अन्यत् पूर्ववत् । योनिः शिताम । योनिर्गुदम् । शिपितः । त्रिविधं सितो वर्णो भवति तृतीयोऽस्मिन्वेलायां विकषति सङ्कोचः । "पार्श्वतः श्रोणितः शितामतः (य० वा० सं० २१, ४३)" ॥

(४) मेहना । मंहतिर्दानकर्मणो ल्युट्, बाहुलकादकारस्यैकारो नकारलोपश्च । सुपां सुलुगित्यादिना सोराकारादेशः । मंहनीयं धनादि । छन्दोगानां 'मदंहना'—इत्येवं रूपं पाठः । प्रसङ्गेन च वेदान्तराधीतस्य व्याख्यानं भाष्यकारेण कृतम् (निरु० ४, ४) । "यदिन्द्र चित्र मेहना (ऋ० सं० ६, २, १०, १)" ॥

(५) दमूनाः । 'दम उपशमे दाने वा' । दान्ते पुरुषे वा, दमे यज्ञगृहे वा मनो यस्य स दमूनाः । दान्तमनश्शब्दस्य नलोपः । दमदान्तशब्दयोर्दभावः, मनःशब्दे मकारात्परस्याकारस्य ऊकारादेशः । दमशब्दो व्याख्यातो गृहनामसु (२५४ पृ०) । ददातेर्ल्युटि दानं, दमेर्निष्ठायां मतुपि दान्तमः । 'दमेरूनसिः (उ० ४, २३८)'—इति वैयाकरणाः । "जुष्टो दमूना अतिथिर्दुरोणे (ऋ० सं ३, ८, १८, ५)" ।

(६) मूषः । 'मुष स्तेये (क्र्या० प०)' । 'क्विब्वचिप्रच्छि (३, २, १७८ वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धि (भा०)'—इति क्विप् दीर्घश्च । जस् । मूषिकाः । कुसुमानि मुष्णन्ति हरन्ति । "मूषो न शिश्ना व्यदन्ति माध्यः (ऋ० सं० १, ७, २१, १)" ।

(७) इषिरेण । 'इषु इच्छायाम् (तु० प०)' । 'इषिमदिमुदि उ० १, ५१'—इत्यादिना किरच्प्रत्ययः । यद्वा, ईषयतेर्गतिकर्मणः ईषेर्दर्शनार्थस्य वा बाहुलकात् किरच् ह्रस्वभावश्च । मनो विशेषणमेतत् । "इषिरेण ते मनसा सुतस्य (ऋ० सं० ६, ४, १२, २)" ॥

(८) कुरुतन । करोतेर्लोण्मध्यमपुरुषबहुवचनस्य तशब्दस्य 'तप्तनप्तनथनाश्च (७, १, ४५)'—इति छान्दसस्तनादेशः । तत्र तशब्द एवार्थवान् नशब्दस्तूपजनोऽनर्थकः । कुरुतनेत्यस्य प्रतिपादनार्थमाह भाष्यकार,— कर्त्त नहन्तनयातनेत्यनर्थका उपजना भवन्ति (निरु० ४, ७)'—इति । अत्र बहुवचनमन्येऽप्येवंरूपा उपजनाः सन्तीति प्रतिपादनार्थम् । 'क्षो यद्' 'प्राव्नवेरसुक्'—इत्येवमादयः । "रिप्रेण तपसा कुरुतन" —"यध्वर्यवः कर्त्तना श्रुष्टिमस्मे (ऋ० सं० २, ६, १४, ३)" —"तदिङ्ठेन हन्मना हन्तना तम् (ऋ० सं० ५, ४, ३०, २)"— "प्रयातन सखीँ रच्छा सखायः (ऋ० सं० २, ३, २६, ३)"— "इत्वाय शत्रून् विभजस्व वेदः (ऋ० सं० ८, ३, १८, २)"— "आह्वयासः पितरः सोम्यासः (ऋ० सं० ५, १, २०, ५)" ॥

(९) जठरम् । जग्धशब्दापपदात् धृञो दधातेर्वा 'उदरादयश्च (उ० ५, ६२)'—इति अरन्प्रत्ययो जग्धशब्दस्य जभावो धकारस्य ठकारश्च निपात्यते । जग्धं भक्षितमन्नमस्मिन् ध्रियते तिष्ठति, धीयते प्रक्षिप्यत इत्यर्थः । "आसिञ्चस्व जठरे मध्व ऊर्मिम् (ऋ० सं० ३, ३, ११, १)" ।

(१०) तितउ । तनोतेस्तुदेश्च निष्ठायां मतुपि उपधाया इत्वं दकारलोपो वकारस्य सम्प्रसारण तल्लोपश्च । तिलमात्रं तुन्नं वा । तिलशब्दात् तिः, तुन्नशब्दात् उकारतकारौ । मत्वर्थे बहुव्रीहिः । तनेन मध्येन, तुन्नैश्छिद्रैः, तिलमात्रैश्च

तैरुद्र्। तरोतेः क्तान्तादिति वैयाकरणाः । ततं निरुत ।
"सतुं निरुत् तितंउना पुनन्तः (ऋ॰ सं॰ ८, २, २३, २)" ।

(११) शिप्रे । 'सृ गतौ (भू॰ प॰)' । 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपि (उ॰ २, १२)'—इति रक्, बाहुलकात् सृशब्दस्य शिभावः । यद्वं गम्भनं प्रति सृते भवतः । "विष्यस्व शिप्रे विसृजस्व धेने (ऋ॰ सं॰ १, ७, १२, ४)" ।

(१२) मध्या । मध्यशब्दात् सप्तम्येकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना आकारः । मध्ये इत्यर्थः । "मध्या कर्तोर्विततं सं जभार (ऋ॰ सं॰ १, ८, ७, ४)" ।

(१३) मन्दू । मन्देस्तुदर्थात् 'भृमृशीतॄचरि (उ॰ १, ७)'—इत्यादिना बाहुलकादुप्रत्ययः । मदेर्वा उप्रत्ययो नुम् च । प्रथमाद्विवचनम् । तृतीयैकवचनस्य वा 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना पूर्वसवर्णः । मदिष्णू मदिष्णुना वा । "मन्दू समानवर्चसा (ऋ॰ सं॰ १, १, १२, २)" ।

(१४) ईर्मान्तासः । 'ईर प्रेरणे (चु॰ प॰)' । 'अर्त्तिस्तुसुहुसृधृक्षि (उ॰ १, १३७)'—इति मन्प्रत्ययः । अन्तशब्दो व्याख्यातः (२१८ पृ॰) । आदित्याश्वा उच्यन्ते । ते च सप्त । तेषां ये अन्ताः ईर्मान्, ईरिताः, प्रेरिताः विरला इत्यर्थः । अथवा अश्वस्य अन्ता जघनं सर्वेषामीर्मं पृथुरित्यर्थः । "ईर्मान्तासः सिलिकमध्यमासः (ऋ॰ सं॰ २, ३, १२, ५)" ।

(१५) कायमानः । 'चायृ पूजानिशामनयोः' भ्वादिः, ऋदित् । चायमानः । चकारस्य ककारः । यद्वा, कमि-णिङ्, ततो लटः शानच् । कामयमान इत्यस्य मकारलोपः । "कायमानो वना त्वम् (ऋ॰ सं॰ ३, १, ४, २)" ।

(१६) लोधम् । 'लुभ् गार्ध्ये' क्त । लुब्धशब्दस्य बलोप

एकारस्यौत्वञ्च । सुध्नमित्यर्थः । "लोधं नयन्ति पशुमन्य-मानाः (ऋ० सं० ३, ३, २३, ३)" ॥

(१७) शीरम् । शिङः 'स्फायितञ्चिवञ्चिशकि (उ० २; १३)'—इत्यादिना बाहुलकाद्रक् । अश्नोतेर्वा पूर्ववद्रक् धातोः शीभावश्च । अयमग्निरुच्यते । अनुशायिनमाशिनं वा । अनु-गम्यन्ते भूतानि जङ्गमानि जाठरात्मना, स्थावराणि च सूक्ष्मेण अनभिव्यक्तप्रशस्यात्मना यः शेते व्यवतिष्ठते, अश्नोति वा । एवंशीलः । "शीरं पावकशोचिषम् (ऋ० सं ३, १, ६, ३, )" ॥

(१८) विद्रधे । विपूर्वात् 'दृभी भये' इत्यस्मात् अनेका-र्थत्वेन हिंसार्थात् क्तः । विदृब्धा इति स्थिते ऋकारस्य रादेशो बकारलोपश्च । बहुवचनस्य स्थाने एकवचनम् । विविधं हिंसितेषु कुपितेषु इत्यर्थः । "कनीनकेव विद्रधे (ऋ० सं० ३, ६, २०, ७)" ॥

(१९) द्रुपदे । द्रुशब्दो द्रुमपर्य्यायः । द्रुममयेषु पदेषु पादु-काख्येषु इत्यर्थः । वचनव्यत्ययः पूर्ववत् । "नवे द्रुपदे अर्भके (ऋ० सं० ३, ६, २०, ७)" ॥

(२०) तुग्वनि । तूर्णशब्दोपपदात् गमेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति वनिपि तूर्णशब्दस्य तुभावो गमेष्टिलोपश्च । तुठतीत्यर्थः । तद्विपानायावगाहनाय वा क्षिप्रमागच्छन्ते । सप्तम्येकवचनम् । "सुवास्त्वा अधि तुग्वनि (ऋ० सं० ६, १, २५, ७)" ॥

(२१) नंसन्ते । नमेर्मकारात् परः सुगागमः, व्यत्ययेना-त्मनेपदम् । नमन्ति इत्यर्थः । "कुविन्नंसन्ते मरुतः पुनर्नः (ऋ० सं० ५, २, ८, ५)" ॥

(२२) नसन्त । 'नस कौटिल्ये' भ्वादिरात्मनेपदी,

अवाप्नोतिरनसतेर्वार्थे वर्त्तते। 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'—इति वर्त्तमाने लङ्। 'बहुलं छन्दस्यमाङ्योगेऽपि (६, ४, ७५)—'इत्यडभावः। ' प्राप्नुवन्ति नमन्ति वा। "घृतस्य धारा॑ अ॒भिचा॑कशीमि" नसन्त (ऋ० सं० ३, ८, ११, २)" ॥

(२३) आहनसः। आहन्तेरसुन्, मत्वर्थीयस्य लुक्। 'सुवे इदमाहतम्' 'ब्राह्मणे इदमाहतम्'—इत्यादिप्रयोगदर्शनात् आहन्तिर्वचनार्थः। आहनवन्तो वचनवन्त इत्यर्थः। "ये ते मदा॑ आ॒हन॑सो॒ विहा॑यसः (ऋ० सं० ७, २, ३३, ५)" ॥

(२४) अग्रसत्। 'अदेर्मन्'—इति मनिन्। अद्यते इत्यद्म अन्नम्। तस्मिन् सीदन्ति सनोति वा तत्। अद्मन्युपपदे सदेः सनोतेर्वा 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—'क्विप च (३, २, ७६)'—इति क्विपि रूपम्। सनोतेर्नकारलोपे ह्रस्वत्वे पिति तुक्। "अ॒द्म॒सद्व॒ सं॒म॒तो बो॒धय॑न्ती (ऋ० सं० २, १, ०, ४)" ॥

(२५) इषिणः। 'इषेरिच्छार्थात् (तु० प०)' 'इषियुधीन्धि (उ० १, १४२)'—इति मक्प्रत्ययः। ईषतेरिषतेर्वा बाहुलकात् मकि धातोरिष्भावः। इच्छा, गमनं, दर्शनं वा इष। 'अत इनिठनौ (५, २, ११५)'। यद्वा, उणादिको मिन्प्रत्यय। एषितारो हविषा स्तुतीनाञ्च गन्तारः, द्रष्टारो वा सर्वार्थानाम्। "ते वा॑ भो॒मस॑ इ॒ष्मिणो॑ अ॒भी॒र॑वः (ऋ० सं० १, ६, १२, ६)" ॥

(२६) वाहः। वहतेः 'वहश्च'—इति णिदसुन्। देवताः प्रत्युह्यमानत्वात् वाहः स्तुतिः। अथवा यदेतत् कूपसमीपे तदुदकार्थीकृतस्य स्थानमावाह इति लोके प्रसिद्धं, तस्मादस्य-

त्वात् सोमरसस्य पूर्णमभिषवणं चमं वाह इत्युच्यते । "इन्द्राय वाहं कृणवाव जुष्टम् (ऋ० म० ३, ३,१८, ३)" ॥

(२७) परितक्म्या । परिपूर्वात् तकतेर्गतिकर्मणो मनिन् । परित, सर्वतो गच्छति, सर्वस्मिन् देशे रात्रिरस्ति । अथवा तकोष्ण तत् परित उभयत एना परिगृह्यते वर्त्तते इति । तदुक्तम् । 'तक्म त्युष्णनाम, तक इति मत इति तेन परितक्मा सति यकारोपजननेन परितक्म्या' । "कस्मे त्विति का परितक्म्यासीत् (ऋ० मं० ८, ६, ५, १)"

(२८) सुविते । सुपूर्वादेतेः क्तप्रत्ययः । 'षुङ प्राणिगर्भ मोचने'—इत्यस्माद्वा क्ते छान्दसत्वादिडागमः, उवङ च । सप्तम्येकवचनम् । शोभनं गम्यते यत्र स्वर्गादौ तत्, प्रसूते प्रजाया वा । "सुविते मा धा (य० वा० स० ५, ५)" ॥

(२९) दयते । 'दय दानगतिरक्षणहिंसादानेषु (भू० धा०)' अनेकार्थत्वात् विभागदहनगमनेष्वपि वर्त्तते । "महो-धनानि दयमानः (ऋ० स० २, १, १८, २)"—इति दाने । "नवेन पूर्वं दयमानाः स्याम (निरु० ४, १७)"—इति रक्षणे । "य एक इद्विदयते (ऋ० स० १, ६, ६, २)"—इति दाने विभागे वा । "दुर्वर्तुर्भीमो दयते वनानि (ऋ० स० ४, ५, ८, ५)"—इति दहने । "त्रिदद्ध सुर्दयमानो वि शत्रून् (ऋ० म० ३, २, १५, १)"—इति हिंसायाम् । "मा वायसो दोषा दयमानो अबूबुधत् (निरु० ४, १७)"—इति गतिकर्मा ॥

(३०) नूचित । (३१) नूच । अनयो पदद्वयो । "नूचा चिन्नूचित्तदपो नदीनाम् (ऋ० स० ४, ७, २, ३)"—"नूर्च पुरा च सदनं रयीणाम् (ऋ० स ० १, ७, ४, २)" ।

(३२) दावने । ददाते 'आतो मनिन्क्वनिब्वनिपश्च (३, २, ७४)—इति व्यत्ययेन कर्मणि वनिप् । तत पष्ठ्यर्थे द्वितो-

यार्थे वा चतुर्थी (२, ६, ६२, वा०), अल्लोपाभावश्छान्दस (६, ४, १३४)। देवस्य देव वेत्यर्थ ॥

(३३) अकूपारस्य। 'पृ पालनपूरणयो (जु० प०)'। घञ्। पार पालन पूरण वा। अकुत्सितं पालन पूरण वा यस्य तदकुपारं सत् कोर्दीर्घत्वेनाकूपारम्। तस्य दावने इति सम्बन्ध। "अकूपारस्य दावने (ऋ० सं० ४, २, १०, २)"। आदित्यसमुद्रावप्यकूपारौ। पूर्ववत्। कच्छपोऽप्यकूपार। कूपशब्दे कर्मण्युपपदे ऋत्तेँ कर्मण्यण्। न कूपार अकूपार। कच्छपो हि सति सम्भवे ह्रद गच्छति न कूपमल्पोदकत्वात्। त्रयाणा निगमा पथ्यथा ॥

(३४) शिशीत। 'शो तनूकरणे' दिवादि परस्मैपदी। व्यत्ययेन शप श्लो ओकारस्येत्वमात्मनेपदञ्च। श्यतीत्यर्थ। 'शिशीते शृङ्गे रक्षसे विनिक्षे' (ऋ० स० ३, ८, १५, ३)" ॥

(३५) सुतुक। सुपूर्वात्तकतेर्गतिकर्मण गेहे क (३, १, १४४)'—इति बाहुलकात् कप्रत्ययोऽकारस्योकारश्च। सुपूर्वाद्वा तुच्छन्दस्याकार उपजन चकारस्य जकारश्च वा ककारभावश्च। सुगमन. सुप्रजा वा। "अग्नि. सुतुक सुतुकेभिरश्वै (ऋ० स० ७,५,३१,७)" ॥

(३६) सुप्रायणा। सुप्रपूर्वादयतेर्ल्युट्। 'उपसर्गस्यायतौ (८, २, १८)'—इति लत्वाभावश्छान्दस। सुप्रगमना इत्यर्थ। ""सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधः (य० वा० स० २८ ५)" ॥

(३७) अप्रायुव। प्र आ इत्युपसर्गद्वयपूर्वात् 'यु मिश्रणे (अदा० प०)'—इत्यस्मात् 'गेहे क (३, १, १४४)'—इति बाहुलकात् कप्रत्यय, उवङि कृते अन्त्यस्याकारस्य लोपे च जसि रूपम्। 'सुपा सुलुक् (७, १, ३९)'—इति जस स्थाने

सुः । न मायुर्वोऽमायुवः । अमगतमनस्का न प्रमाद्यन्त इति । "अप्रायुवो रक्षितारो दिवे दिवे (ऋ० सं० १, ८, १५, १)" ॥

(३८) च्यवानः । अन्तर्णीतण्यर्थात् च्यवतेः 'युच् बहुलम् (उ० २, ७४)'—इति युचि पूर्ववद् बाहुलकाद्दीर्घः । देशान् प्रति सोमानां च्यावयिता गमयिता सोतेत्यर्थः । ऋद्विलादिप्रसङ्गनिवृत्तिः । "युवं च्यवानं सनयं यथा रथम् (ऋ० सं० ७, ८, १५, ४)" । च्यवनस्य तु "च्यवनो भार्गवः शार्यातं मानवमभिषिषेच (ऐ० ब्रा० ८, ४, ७)"—"अप्रवानवत् च्यवनवत् भृगुवत्"—इत्यादिर्निगमः प्रसिद्धः ॥

(३९) रजः । व्याख्यातं द्यावापृथिवीनामसु (२०५ पृ०) ।
(४०) हरः । ज्वलनामसु (१३४ पृ०) व्याख्यातम् । रजस्तु ज्योतिरुदकलोकासृगह्निवाचकम् । अनुरञ्जयति ह्येतत् सर्वं स्वेन स्वेन व्यापारेण सर्वप्राणिनः । "या ते अग्ने रजःशया (य० वा० सं० ५, ८)"—"भुवो यज्ञस्य रजसश्च नेता (ऋ० सं० ७, ६, ४, ६)"—"त्वया हृषानि सुक्रतो रजांसि (ऋ० सं० ४, ७, २, ४)"—"विरात्रेण रजस्वला शुचिर्भवति"—"विवर्त्तेते रजसी वेद्याभिः (ऋ० सं० ४, ५, ११, १)"—इति क्रमेण निगमाः ॥ हरो ज्योतिरुदकलोकवाचकम् । ज्योतिर्हरति तमसम्, उदकं वहत् हरति सर्वलोकेषु, क्रियन्ते सर्वा एव वा कालेन मृत्युनाभियन्ते । "प्रत्यग्ने हरसा हरः शृणीहि (ऋ० सं० ८, ४, ९, ५)"—इति ज्योतिषाम् । उदकलोकवाचिनिगमौ पर्येष्यौ ॥

(४१) जुहुरे । जुहोतेः 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'—इति लिट्, 'इरयोरे (६, ४, ७६)'—इति रे, जुहुति ।

यद्वा, यङ्प्रापणो लिट् जुहुरे हुतवन्तः। "जुहुरे वि चितयन्तः (ऋ० सं० ४, १, ११, २)"॥

(४२) व्यन्तः। व्यन्त इत्येषोऽनेककर्मा (निरु० ४, १९)। व्यन्त इत्यत्र य एष धातुः स इयतिवदनेकार्थ इत्यर्थः। 'वी गतिप्रजननकान्त्यसनखादनेषु (अदा० प०)'। अनेकार्थत्वात् पश्यत्यर्थोऽपि॥

(४३) क्राणाः। करोतेर्लटः शानचि विकरणव्यत्ययेन लुक्। "गोभिः क्राणा अनूषत (निरु० ४, १९)"॥

(४४) वाशी। व्याख्यातं वाङ्नामसु (६५ पृ०)। यद्वा, वासीशब्दश्छेदनद्रव्यविशेषवचनः, तस्य सकारस्य शकारेण व्युत्पत्तिः। "वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८, ५, १९, ४)"॥

(४५) विषुणः। विषमशब्दस्य अकारस्योकारो मकारस्य णकारश्च। विषमः। "सर्वहृर्यो विषुणस्य जन्तोः (ऋ० सं० ५, ३, ३, ५)"॥

(४६) जामिः। व्याख्यातमङ्गुलीनामसु (१६४पृ०)। अतिरेकवालिशसमानजातीयानां वाचको जामिशब्दः। अतिरेकः पुनरुक्तमुच्यते, पुनर्जायमानत्वात्। "जामि वा एतद् यज्ञे क्रियते (ऐ० ब्रा० ३, ५, ३)"। वालिशो मूर्खः। स हि कस्मैचित् पुरुषायालम्। अत्र निगमः पर्येष्यः। समानजातीयो भगिनीलक्षणोऽर्थः। समानाभ्यां मातापितृभ्यां जातत्वात्। जाशब्देनाभिधातं भक्षमिति मिशब्द उपजनः। "यत्र जामयः कृणवन्न जामि (ऋ० सं० ७, ६, ७, ५)"॥

(४७) पिता। 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ (उ० २, ८८)'—इत्यादिना पातेः केवलात्

स्यन्ताद्वा डच्प्रत्ययान्तो निपात्यते। पतिशब्दत्वेन च नामार्थो व्याख्यातः (२४० पृ०)। "द्यौर्मे पिता जनिता नाभिरत्र (ऋ० सं० २, ३, २०, ३)"॥

(४८) शयोः। शाम्यतेः क्विप् शम्। 'यु पृथग्भावे' इत्यस्मात् विच्। अन्ये पदद्वयमिति वर्णयन्ति। 'शमनं रोगाणां यावनं च भयानाम्'। "अधानः शंयोररपो दधात (ऋ० सं० ७, ६, १७, ४)"। प्रसङ्गेन स्तुतिसारूप्यात् भाष्ये 'शयापि शयुर्बार्हस्पत्यः (निरु० ४, २१)'—इत्युक्तम्॥

(४८) अदितिः। पृथिवीनामसु व्याख्यातम् (१० पृ०)। ऐतिहासिकानां मते देवमाता, नैरुक्तानां मते अदीनादिगुणः अथवात्मप्रचे प्रकृतिः। "अदितिर्द्यौरदितिरन्तरिक्षम् (ऋ० सं० १, ६, १६, ५)"॥

(५०) एरिरे। प्रोपसर्गार्थवृत्त्याद्पूर्वात् 'ईर गतौ (चु० प०)'—इत्यस्माल्लिटि झस्य रे च। प्रेरितवन्त इत्यर्थः। "यमेरिरे भृगवो विश्ववेदसम् (ऋ० सं० २, २, १२, ४)"॥

(५१) जसुरिः। 'जसु ताडने (चु० प०)'। 'जसिसहोरुरिन् (उ० २, ६८)'—इति उरिन्प्रत्ययः। यद्वा, जस्यतेर्बाहुलकादुरिन्प्रत्यये जुडागमश्च धातोः। ताडितो वद्रमुक्तो हतवेगश्रान्तो जसुरिः। "नीचायमानं जसुरिं न श्येनम् (ऋ० सं० ३, ७, ११, ५)"॥

(५२) जरते। नैरुक्तधातुः। यद्वा, 'गृ स्तुतौ (क्र्या० प०)'—इत्यस्य गकारस्य जकार इति स्कन्दस्वामी। "इन्द्रोन एनं जरते स्वाधीः (ऋ० सं० ७, ८, २८, १)"॥

(५३) मन्दिने। मन्दते स्तुतिकर्मणो धात्विं मन्द. स्तुति। छान्दसत्वादत इनिठनौ नेष्यते हि एकाचरात्, ततो जाते,

समम्याश्च ।" "प्र मन्दिने पितुमदर्चता वचः (ऋ० सं० १, ७, १२, १)" ॥

(५४) गो । व्याख्यात रश्मिनामसु (२६ पृ०) । "अत्रा ह गोरमन्वत (ऋ० सं० १, १, ७, ५)" ॥

(५५) गातु । व्याख्यात पृथिवीनामसु (१२ पृ०) । अत्र भावे तुन् गमनमित्यर्थः । "गातु यज्ञाय गातु यज्ञपतये (निरु० ४, २१)" ॥

(५६) दसय । दस इति कर्मनामसु व्याख्यातम (१३७पृ०) । अत्र तु 'अच इ (उ० ४, १३४)' जस् । दमय कर्माणि दस यन्त्येनानि । "कुत्साय मन्मन्नह्यश्च दू सयः (ऋ० सं० ८, ७, २६, १)" ॥

(५७) तूताव । तवतेर्वृद्धिकर्मणो लिटि णलि 'तुजादीनां दीर्घोऽभ्यासस्य (६, १, ७)' । "स तूताव नैनमश्नोत्व हति (ऋ० सं० १, ६, ३०, २)" ॥

(५८) चयसे । 'चय गतौ' भूवादिरात्मनेपदी । अत्र चातयतेर्नाशनार्थस्यार्थे वर्त्तते । यद्वा, चातयतेरेव विकृतं रूपम् । "वृहस्पते चयस इत् पियारुम् (ऋ० सं० २, ५, १२, ५)" ॥

(५९) वियुते । यौतिरेव पृथग्भावार्थो विपूर्वः । "समान्या वियुते दूरे अन्ते (ऋ० सं० २, ३, २५, २)" ॥

(६०) ऋधक् । अव्ययमिद पृथग्भावस्य वाचकम् । यदिन्द्र दिवि पार्ये यदृधक् (ऋ० सं० ४, ७, १२, ५)" । यथाप्युत्कर्षार्थे दृश्यते, तदा 'ऋधु वृद्धौ (स्वा० प०) 'अस्मात् 'प्रथ कित् (उ० १, १२०)'—इति बाहुलकादजिप्रत्ययः किञ्च । ऋधु वन् 'ऋध कुर्वन् । "ऋधंगया ऋधंगुतार्शमिष्ठा (य० वा० सं० ८, २०)" ॥

(६१) येस्याः । (६२) । यस्य । अन्वादेशेनानादिष्टस्य अविधिविशिष्टपदार्थलक्षणस्याभिधेयस्योच्चारणं प्रथमादेशः आदिष्टतमस्य तस्योच्चारणमन्वादेशः । तत्र प्रथमादेशविषयत्वादुदात्तं पदद्वयं तीव्रार्थतरमतिस्फुटप्रयोजनम्, अन्यानादिष्टस्वार्थत्वात् । अन्वादेशविषयतामत्त्वादनुदात्तं पदद्वयमणीयोऽर्थतरमतिशयेनास्फुटप्रयोजनम्, अन्यादिष्टस्वार्थत्वात् । "अस्या ऊ षु ण उप सातये भुवः (ऋ० सं० २, २, २, ४)"—"दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४)" ॥ "अस्य वामस्य पलितस्य होतुः"—"तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १)" ॥

इति द्विषष्टिः पदानि ॥ १ ॥

सस्निम्(१) । वाहिष्ठः(२) । दूतः(३) । वावशानः(४) । वार्य्यम्(५) । अन्धः(६) । असश्चन्ती (७) । वेनुष्यति(८) । तरुष्यति (९) । भन्दना: (१०) । आहुनः(११) । नदः(१२) । सोमो अक्षाः (१३) । श्वात्रम्(१४) । ऊतिः (१५) । हासमाने (१६) । प्रभुभिः (१७) । सुतम् (१८) । द्विता (१९) । नाः(२०) । वराहः(२१) । स्वसराणि (२२) । शर्य्याः(२३) । अर्कः(२४) । पविः(२५) । वक्षः(२६) । धन्व(२७) । सिनम्(२८) । इत्था (२९) । सचा (३०) । चित् (३१) । आ (३२) । द्युम्नम् (३३) । पविनम् (३४) । तोदः (३५) ।

स्वञ्चाः(३६)। शिपिविष्टः(३७)। विष्णुः(३८)। आघृणिः(३९)। पृथुज्रयाः(४०)। अथर्युम्(४१)। काणुका(४२)। अधिगुः(४३)। आङ्गूषः(४४)। आपान्तमन्युः(४५)। श्मशा(४६)। उर्वशी(४७)। वयुनम्(४८)। वाजपस्त्यम्(४९)। वाजगन्ध्यम् (५०)। गध्यम्(५१)। गधिता(५२)। कौरयाणः (५३)। तौरयाणः(५४)। अह्रयाणः (५५)। हरयाणः(५६)। आरितः(५७)। व्रन्दी(५८)। निष्षपी(५९)। तूर्णाशम्(६०)। क्षुम्पम्(६१)। निचुम्पुणः(६२)। पदिम्(६३)। पादुः (६४)। वृकः(६५)। जोषवाकम्(६६)। कृत्तिः (६७)। श्वघ्नी (६८)। समस्य (६९)। कुटस्य (७०)। चर्षणिः(७१)। शम्बः(७२)। केपयः(७३)। तूतुमाकृषे (७४)। अंसत्रम् (७५)। काकुदम् (७६)। बीरिटे (७७)। अच्छ (७८)। परि (७९)। ईम्(८०)। सीम्(८१)। एनम्(८२)। एनाम्(८३)। सृणिः(८४)। इति चतुरुत्तरमशीतिः पदानि ॥ २ ॥

(१) सस्निम्। 'ष्णा वेष्टने (अदा० प०)' 'ष्णा शौचे (अदा० प०)'। 'आदृगमहनजनः किकिनौ लिट् च (३, २, १७१)'—इति किन्प्रत्ययः। लिड्वद्भावाद् द्विर्वचनादि। 'आतो-

लोप इति च (६, ४, ६४)'। अववेष्टयिताभिरन्तःप्रविष्टाभि र्व्यापितो वा मेघः सर्व । "सर्विमविन्दच्चरथे नदीनाम् (ऋ० स ८, ७, २७, ७)" ॥

(२) वाहिष्ठ । "वोढ़शब्दात् 'तुश्छन्दसि (५, ३, ५८)'— इतीष्ठनि 'तुरिष्ठमेयःसु (६, ४, १५४)'—इति तृचो लोप । वाहिष्ठ इति उपधादीर्घश्छान्दस । अतिशयेन वोढा वाहिष्ठ । "वाहिष्ठोवा हवानाम (ऋ० स० ६, २, २८, १)" ॥

(३) दूत ।

(४) वावशान । 'वश कान्तौ (अदा० प०)' 'वाश्ट शब्दे (दि० आ०)'। 'लिट कानज् वा ( ३, २, १०६)'। द्विर्वच नादि । 'तुजादीना दीर्घोऽभ्यासस्य (६, १, ७)'। 'न वश (६, १, २०)'—इति यङि लिटि सम्प्रसारणनिषेधाद् विन् प्रत्यये कानज्यपि न भवति, वाश्यतिरुपधाह्रस्वत्वञ्च व्यत्यये नैव। यङ्लुकि शानचि रूपमिति श्रीनिवास । "सुतसमूर कर्णयोर्वावशान (ऋ० स० ७, ५, ३३, ५)" ॥

(५) वार्यम्। 'वृञ् वरणे (स्वा० उ०)'। 'एतिस्तुशास्‌वृदृ जुष क्यप् (३, १, १०८)'—इति क्यपि प्राप्ते 'कृत्यल्युटो बहु लम् (३, ३, ११३)'—इति ण्यत्। 'क्यब्विधौ वृ ग्रहणे वृञो ग्रहणमिष्यते न वृङ'—इति वैयाकरणा । अथवाऽस्वय कार्यौ ण्यत्प्रत्यया द्रष्टव्य । वार्यं वरणीयम्, अतिशयेन वर श्रेष्ठ वा। तद् वार्यं वृणीमहे (ऋ० स० ६, २, २३, ३)" ॥

(६) मन्द्र । व्याख्यातमन्त्रनामसु (१०० पृ०)। "धामंत्रेभि मिन्वता मद्रमन्द्र (ऋ० स० २, ६, १३, १)" ॥ तमोऽन्धसुन्ध ध्यन्ध । अत्र ध्यायतिर्नञ्पूर्व अविद्यमान ध्यान दर्शनमस्मिन् आलोकाभावात्। अन्धुर्हीने अकारान्तमिदम्। "यस्मदन्ध-

खाव विचेतदुग्धः (ऋ० सं० २, ३, १७, १)"—इति वेङ्कटाचार्यस्य ॥

(७) भसमन्तो । भसतिर्गतिकर्मा, अत्र भसतिरत्तेरर्थे वर्त्तते । शतरि ङीपा नलुमभावः । पेदमवेव साम्यमितीभवन्ती । अर्वाचिपन्त्या वाम्विते वा द्यावापृथिव्या उच्येते । "भसंभन्तो भूरिधारे पयस्वती (ऋ० सं० ५, १, १७, २)" ॥

(८) वनुष्यति । व्याख्यातं क्रुध्यतिनामसु (१८४ पृ०) । अत्र तु हन्त्यर्थः । "वनुयाम वनुष्यतः (ऋ० सं० २, १, २१, १)" ॥

(९) तरुष्यति । नैरुक्तधातुर्गत्यर्थः । 'मृत्युं तरति' 'ब्रह्महत्यासुत्तरन्ति' । विनाशयन्ति अपीहन्तीति हन्त्यर्थे तरतेः प्रयोगदर्शनात् तरतेरुकारयकारावुपजनावित्याहुः । "इन्द्रेण युजोतरुषेम वृत्रम् (ऋ० सं० ५, ४, १५, २)" ॥

(१०) भन्दनाः । भन्दतेः स्तुतिकर्मणः 'युच् बहुलम् (उ० २, ७४)'—इति युच् टाप् प्रत्ययः । भन्दना स्तुतिरित्यर्थः । "सभन्दना उदियर्त्ति प्रजावतीः (ऋ० सं० ७, ३, २०, १)" ॥

(११) आहनः । आहन्तेरसुनि आहन्ति आहनाः सम्बुद्धौ आहनः अभ्यसर्वनादाहन्तः । "भ्रन्येन मदाहनो याहि तूयम् (ऋ० सं० ७, ६, ७, २)" ॥

(१२) नदः । व्याख्यातं स्तोतृनामसु (२८२ पृ०) । "नदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)" ॥

(१३) सीमो मघाः । अश्नोतेर्लुङि सिपि 'बहुलं वा (७, २, ५१)'—इति अनिट् पक्षे आडागमे च आष्टेति, इटपक्षे आशिष्टेति प्राप्ते व्यत्ययेन तस्य स्थाने सिपि तस्य आदेशे आकार इत्यविसर्जनीयौ । चियतेर्वा चकेथमिति प्राप्ते व्यत्ययेन थस्य स्थाने लुट्, तिपः स्थाने सिप्, चु इत्य, धातोरिलोपः, दीर्घश्च, इत्यविसर्जनीयौ । चियतोत्यर्थः । "यन्ये

गोमान् गोभिरक्षाः (ऋ० सं० ७, ५; १३, ४)"॥ 'क्षर सञ्चलने (भू० प०)' अक्षारीदिति प्राप्ते तिपि सिचि इडो बहुलं छन्दसीतीडभावे इतश्च लोपे संयोगान्तस्य लोपे रात्सस्येति सलोपे रेफस्य विसर्जनीयः आडागम चरतीत्यर्थः। "सोमो'-दक्षामिरचा. (ऋ० सं० ७, ५, १३, ४)"। 'सर्वे विधयो निगमाः'—इति शाकपूणिर्निर्वाह उक्तः॥

(१४) श्वात्रम्। श्वाग्र्यातं धननामसु (१८६ पृ०)। इह क्षिप्रनाम। "श्वात्रमग्निरक्रणोज्जातवेदाः (ऋ० सं० ८, ४, १०, ४)"॥

(१५) ऊति। अवतेः 'ऊतियूतिजूतिसातिहेति (३, ३, ९७)'—क्तिन्नुदात्तो निपात्यते। ज्वरत्वरेत्यूठ्। अत्रावनं रक्षणं तर्पणं वा। "आ त्वा रथं यथोतये (ऋ० सं० ६, ५, १, १)"॥

(१६) हासमाने। हासतिः स्पर्द्धायां हर्षणे वा वर्त्तते। स्पर्द्धमानौ परस्परं हृष्यन्तौ वा। "अश्वे इव विषिते हासमाने (ऋ० सं० ३, २, १२, १)"॥

(१७) पड्भिः। पिबते. स्वाशयतेर्वा बन्धनार्थात् स्पशतेर्वा 'सर्त्तेरटि (उ० १, १३३)'—इति बाहुलकादटिप्रत्ययो धातूनां पकारभावश्च। पाने. सोमस्य। यद्वा, स्पाशनैर्बन्धनैः स्पर्शनैः स्तुतिनक्षणैर्गुणानाम्। "वस्त्रकः पड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८, ५, २५, ६)"॥

(१८) ससम्। 'षस स्वप्ने (अदा० प०)'। पचाद्यच् (३, १, १३४)। स्वपीतीति ससम्, माध्यमिकं ज्योतिरुच्यते, वर्षाव्यतिरिक्तकालेऽदर्शनात् स्वापव्यपदेश। "ससं न पक्कमविदच्छुचन्तम् (ऋ० सं० ८, ३, १४, ३)"॥

(१९) द्विता। द्विशब्दात् 'सङ्ख्याया विधार्थे धा (५, ३,

४२)। धकारस्य तकारेण व्युत्पत्तिः। हिंसेत्यर्थः। "हिता च सत्ता स्वधया च शम्भु (ऋ० सं० ३, १, १७, ५)"॥

(२०) व्राः। 'वृञ् वरणे (स्वा० उ०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः, यणादेशः, जस्। वरितारो-ऽन्वेष्टारो मृगादीनाम्। व्रात्यस्थानीया लुब्धकादयः। "मृगं न व्रा मृगयन्ते (ऋ० सं० ५, ७, १८, १)"॥

(२१) वराहः। व्याख्यातो मेघनामसु (५३ पृ०)। निगमोऽपि तत्रैव दर्शितः॥

(२२) स्वसराणि। अहर्नामसु व्याख्यातोऽयं शब्दः (४६ पृ०) निगमोऽपि तत्रैव दर्शितः॥

(२३) शर्याः। अङ्गुलीनामसु व्याख्यातः (१६१ पृ०)। अत्र इषव उच्यन्ते। "शर्याभिर्न भरमाणो गभस्त्योः (ऋ० सं० ७, ५, २२, ५)"॥

(२४) अर्कः। अर्चतेः 'कृदाधारार्चिकलिभ्यः कः' (उ० ३, ३८)'—इति कः। अर्चति जीवयतीत्यन्नमन्त्रम् इति अन्ये। स्पष्टमुदाहरणम्। अतएव केचिद्‌ पठन्त्यत्र अर्कम्। वृक्षे-ऽप्यर्चति। "अर्कपर्णं जुहोति"॥

(२५) पविः। व्याख्यातो वाङ्नामसु (६६ पृ०)। रथनेमि-र्वज्रश्च पविः। "उत पव्या रथानाम् (ऋ० सं० ४, ३, ८, ४)"। वज्रस्य दर्शितः॥

(२६) वक्षः। वहते. 'वह. सुट् च'—इत्यसुन्। मध्य काय उपरि कायस्य प्राप्त प्रापित वेत्यर्थः। उर इत्युच्यते। "उपो' अदर्शि शुन्ध्युवो न वक्षः (ऋ० सं० २, १, ७, ४)"॥

(२७) धन्व। व्याख्यातमन्तरिक्षनामसु (२१ पृ०)। स एव निगमः॥

(२८) सिनम् । व्याख्यातमन्ननामसु (१७१ पृ०) । स एव निगमः ॥

(२९) इत्था । इदंशब्दात् 'था हेतौ च छन्दसि (५, ३, २६)'—इति हेतौ प्रकारवचने, थाल्प्रत्ययः । एतेर्वा थाल् 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि (५, ३, १११)'—इति इवार्थे थाल् विहितो व्यत्ययेन प्रकृतिभूतादिदंशब्दादपि भवति । अनेन हेतुना, अनेन प्रकारेण, अयमेवेति वार्थः । इत्था चन्द्रमसो गृहे (ऋ० सं० १, ६, ७, ५)" ॥ 'अमुथा (निरु० ५, ५)'—इत्यर्थकथनं कथमिति निरूपणीयम्, इत्थाविति स्कन्दस्वामिग्रन्थश्च निरूपणीयः ॥

(३०) सचा । सहार्थोऽयं निपातः । "आदित्यै रुद्रैर्वसुभिः सचा भुवः (ऋ० सं० ६, ३, १४, १)" ॥

(३१) चित् । निपातो नाम च । निपातोऽनुदात्तः । 'चिदित्येषोऽनेककर्मा'—इत्यादिना व्याख्यातः (निरु० १, ४) । "चतुरश्चिद्ददमानात् (ऋ० सं० १, ३, २२ ४)"—इत्युपमायाम् । अथकुत्सनादिष्वपि निगमा अन्वेष्याः । नाम तु चिनोतेश्चेतयतेर्वा क्विपि चिदिति भवति । चितां भागः चीरादिभिः चिद्रूपा वा सोमक्रयण्युच्यते । "चिदसि मनासि धीरसि (य० वा० सं० ४, १९)" ॥

(३२) आ । 'आ इत्यर्वागर्थे'—इत्युपसर्गो व्याख्यातः (निरु० १, ३) । "परा याहि मघवन्ना च याहि (ऋ० सं० २, ३, १९, ५)"—इत्युपसर्गस्य । "जार आ भगम् (ऋ० सं० ७, ६, १०, १)"—इत्युपमायाः । "आमेन्यस्य रजसो यदभ्र आँ अपः (ऋ० सं० ४, ३, २, १)"—इत्यध्यर्थस्य ॥

(३३) द्युम्नम् । व्याख्यातं धननामसु (१८८पृ०) । अत्र

यथोऽश्वं वाभिधीयते। "अस्मे द्युम्नमधिरत्नं च धेहि (ऋ० सं० ५, ३, ८, ३)" ॥

(३३) पवित्रम्। पुनाति 'पुवः सञ्ज्ञायाम् (३, २, १८५)' —'कर्त्तरि चर्षिदेवतयोः (३, २, १८६)'—इतीत्रप्रत्ययः। मन्त्ररश्म्यापोऽग्निवायुसोमसूर्य्येन्द्राद्यभिधेयाः। मन्त्रादिषु
१ २ २ २   २ १ ० १
करणसाधनः अग्न्यादिषु कर्मसाधनः। "येन देवाः पवित्रेण (मा० सं० २, ५, २, ८, ४)"—इति मन्त्रस्य। "गर्भस्त्रिपूतो नृभिरद्रिभिः सुतः (ऋ० सं० ७, ३, १८, ४)"—"पवित्रवन्तः परि वाचमासते (ऋ० सं० ७, २, २८, ३)"—इति च रश्मीनाम्। "घृतपवित्राः स्वधया मदन्तीः (ऋ० सं० ५, ४, १४, ३)"—इत्यपाम्। "अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रन्ते मा पुनन्तु (निरु० ५, ६)—इत्यग्न्यादीनाम् ॥

(३४) तोदः। तुद्यते पुत्रपौत्रादिभिः स्वसमीहितसाधनाय। तुदेर्घञ्। यद्वा, 'देवसेवमेवादयः पचादौ द्रष्टव्याः' —इति पचाद्यच्। तुदति प्रेरयति कार्येषु कर्मकारानिति तोदो गृहस्थः। "तोदस्येव शरण आ महस्य' (ऋ० सं० २, २, १८, १)" ॥

(३६) स्वश्वाः। सुपूर्वादश्नोतेरसुन्। सुगमश्च प्रत्यर्थः। "आ जुह्वानो घृतपृष्ठः स्वश्वाः (ऋ० सं० ८, २, ८, १)" ॥

(३७) शिपिविष्टः। (३८) विष्णुः। एते विष्णोरादित्यस्य नामनी। शिपिविष्टशब्दोऽत्र सामर्थ्यादन्तर्णीतोपमानार्थः। 'यादृशः शेपो निर्वेष्टितः तादृश इति, शेप इव वेष्टनत्वग्विवर्जित'—इति औपमन्यवः। उदितमात्रत्वादप्रतिपन्नरश्मिः। अपि वा, 'उपमानयोगात् कुत्सितार्थीयमिदम्'—

इत्यौपमन्यवः। पृषोदरादित्वाद्रूपसिद्धिः अर्थसिद्धिश्च। 'प्रशंसानाम'—इत्याचार्य्यः। शिपिभिः रश्मिभिः आविष्ट शिपिविष्टः सूर्यान्तरश्मिः॥ विष्णुशब्दो व्याख्यातो यज्ञनामसु (२८५ पृ०) अर्थोऽनुगुणः। "किमित्ते विष्णो परि चक्ष्यं भूत् प्रयद् ववक्षे शिपिविष्टो अस्मि (ऋ० सं० ५, ६, २५, ६)"—इत्युभयोर्निगमः॥

(३८) आघृणिः। घृणिशब्दो ज्वलनामसु (१३४ पृ०), क्रोधनामसु (१८५ पृ०) च व्याख्यातः। आगतदीप्तिरागतक्रोधो वा। "आघृणे संसचावहै (ऋ० सं० ४, ८, २१, १)"—इति दीप्तिनामत्वे निगमः। क्रोधवचने स्वेभ्य उदाहरणं कर्त्तव्यम्॥

(४०) पृथुज्रयाः। 'ज्रि अभिभवे (भू० प०)'। असुनि बाहुलकात् याकारस्य रेफः। ज्रयो वेगः। पृथुः ज्रयो यस्य सः। वेगेनान्यानभिभविता महाजव इत्यर्थः। "पृथुज्रया अमिनादायुर्दस्योः (ऋ० सं० ३, ३, १३, २)॥

(४१) अथर्युम्। अततेः। 'जनिमनियजिदमिभ्यः'—इति बाहुलकात् युसूप्रत्ययो धातोरथरादेशश्च सकार इत्सञ्ज्ञकः। अतनं गमनमथर्युशब्दे नोच्यते मत्वर्थीयस्य लुक् गमनवन्तमित्यर्थः। "दूरे दृशं गृहपतिमथर्युम् (ऋ० सं० ५, १, २३, १)"॥

(४२) काणुका। कान्तक्रान्तकृतशब्दाना काणुभावः। तत्र स्वार्थे कः। 'आमि शेश्छन्दसि बहुलम् (६, १, ७०)'—इति शेर्लुक्। कान्तानि प्रियाणि, क्रान्तानि आहवनीय प्रति गतानि, ऋत्विक् प्रति कृतानि, ऋत्विग्भिः संस्कृतानि सवांसि विशिष्यन्ते। यद्वा, काणुकेति इन्द्रविशेषणम्। सोमस्य कान्तः वल्लभः। यद्वा, कणेशब्दः 'कणेमनसी श्रद्धा-

इत्यौपमन्यवः। पृषोदरादित्वाद्रूपसिद्धिः अर्थसिद्धिश्च। 'प्रशंसानाम'—इत्याचार्यः। शिपिभिः रश्मिभिः आविष्टः शिपिविष्टः उपात्तरश्मिः॥ विष्णुशब्दो व्याख्यातो यज्ञनामसु (२८५ पृ०) अर्थोऽनुगुणः। "किमित्ते विष्णो परि चक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि (ऋ० सं० ५, ६, २५, ६)"—इत्युभयोर्निगमः॥

(३८) आघृणिः। घृणिशब्दो ज्वलनामसु (१२४ पृ०), क्रोधनामसु (१८५ पृ०) च व्याख्यातः। आगतदीप्तिरागतक्रोधो वा। "आघृणे संसचावहै (ऋ० सं० ४, ८, २१, १)"—इति दीप्तिनामत्वे निगमः। क्रोधवचने त्वेष्य उदाहरणं कर्त्तव्यम्॥

(४०) पृथुज्रयाः। 'ज्रि अभिभवे (भू० प०)'। असुनि बाहुलकात् ककारस्य रेफः। ज्रयो वेगः। पृथुः ज्रयो यस्य सः। वेगेनाप्यनभिभविता महाजव इत्यर्थः। "पृथुज्रया अमिनादायुर्दस्योः (ऋ० सं० ३, ३, १३, २)॥

परिगधिता" (ऋ० सं० २, १, ११, ६)"। आगृहीता, अवयवैर्गाढं परिष्वक्ता सतीत्यर्थः। परिगधिता, सर्वतोऽन्तर्वेष्टिव मिश्रितः आलिङ्गनचुम्बनपुरःसरं प्राप्तप्रजनना सती सानुरागं सम्भोगाय परिगृहीता च सतीत्यर्थः॥

(५३) कौरयाणः। कौरशब्दः कृतशब्दपर्यायः। शत्रून् प्रति कृतमेव यानमायानं नित्यं कृतमनः। यद्वा, हन्यन्तो रथ इत्यादिसङ्ग्रामे कृतं कल्पितं प्रयाणाभिमुखं यानं वाहनं यस्य स कौरयाणः। "पाकं स्थामा कौरयाणः (ऋ० सं० ५, ७, २८, १)"॥

(५४) तौरयाणः। तूर्णशब्दस्य तौरभावः। तूर्णयाणः क्षिप्रगमन इत्यर्थः। "स तौरयाण उपयाहि यज्ञम् (ऋ० सं० ३, ३, १६, ३ वा०)"।

(५५) अह्रयाणः। ह्रीतशब्दस्य ह्रभावः। अह्रीयमाणः अलज्जितमानः यो ह्यर्थिभ्यो दातुं न शक्नोति, स ह्रीतो गच्छति, तदस्य नास्ति, अतः श्लाघ्यगमन इत्यर्थः। "अनुष्टुपा कृणुह्यह्रयाणः (ऋ० सं० ३, ४, २५, ४)"।

(५६) हरयाणः। हरतेः पचाद्यचि हरः। शत्रूणां जीवितैश्वर्यादिहन्तृ यानं यस्य सः। शत्रुजीवितादीनां हर्त्तेत्यर्थः। "रजतं हरयाणे (ऋ० सं० ६, २, २५, २)"॥

(५७) आरितः। 'ऋ गतौ'। 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम् (३, १, २२ वा०)'—इति विहितस्य यङः 'यङोऽचि च (२, ४, ७४)'—इत्यत्र बहुलानुवृत्तेरनैमित्तिके लुकि प्रत्ययलक्षणेऽत्र 'सन्यङोः (६, १, ९)'—इति ऋ इत्यस्य द्विर्वचने उरदत्वाभ्यासस्य ऋकारस्यात्वे 'रुग्रिकौ च लुकि (७, ४, ९१)' इति लुकि निष्ठायां छान्दसत्वादिट्, ऋकारस्य यणादेशः 'रोरि (८, ३, १४)' इत्यभ्यासरेफलोपे ढ्रलोपे पूर्वस्य

(६, ३, १११) दीर्घत्वे च आरित इति। छान्दसत्वात्। स्तोमान् प्रति गतो यज्ञं प्रति गत इत्यर्थः। "य आरितः कर्मणि कर्मणि स्थिरः (ऋ० सं० १,७,१२,४)"॥

(५८) ब्रन्दी। ब्रन्दति नैरुक्तधातुः। 'गमेरिनिः (उ० ४, ६)'—इति बाहुलकादिनिः। "शुष्णस्य चिद् व्रन्दिनो रोरुवद् वना (ऋ० सं० १, ४, १७, ५)"॥

(५९) निष्षपी। 'षप समवाये (भू० प०)'—इत्यस्मात् सुप्रत्यये वर्त्तमानात् असुनि सकारपकारविपर्ययः। स्पर्श-श्चात्र तद्वारकः सुखातिशयोऽभिप्रेतः। सपति स्पृशति सुख-यतीति सपः, निःपूर्वः, निष्षपा इति प्राप्ते निष्षपी। "मा नो मघेव निष्षपी परा दाः (ऋ० सं० १, ७, १८, ५)"। यदा विनिर्गतपसा इति पठन्ति, तदा सर्वैरपि विपर्यस्ताच-यात् 'पुंसि संज्ञायां घः (३, ३, ११८)'। अर्थः स एव। अन्यत् सर्वं पूर्ववत्। यथापि विनिर्गतपसा इति पाठस्य प्राचुर्यात् तमाश्रित्य स्कन्दस्वामिना व्याख्यातम्॥

(६०) तूर्णाशम्। 'तूर्णाशमुदकं भवति। तूर्णमश्नुते (निरु० ५, १६)'—इति भाष्यम्। तूर्णाशमित्यनवगतं शब्दतयार्थतश्च उदकमभिधेयम्। तूर्णमश्नुते व्याप्नोति एवं निर्वचनात् तूर्णशब्दस्य क्रियाविशेषणत्वेनाकर्मत्वात् कर्मोपपदाभावात् क्तो न स्यादिति चेत्,—अश्नुत इत्यश तूर्णञ्च तदशञ्च तूर्णाशम्। "तूर्णाशं न गिरेरधि (ऋ० सं० ६, २, १, ४)"॥

(६१) क्षुम्पम्। 'क्षुभ सञ्चलने (दि० प०)'। 'शकि लिङ् च (३, ३, १७२)'—इति शक्यार्थे यत्। क्षौभ्यमिति प्राप्ते औकारस्य ह्रस्वत्वं, भकारस्य पकारो यकारलोपो मकारोपजनः। अयत्नेनैव क्षोभयितुं शक्यम्। अहिच्छत्रकास्तु-

च्यते। "पृदा कुम्भमिव स्फुरत् (ऋ० सं० १, ६, ६, ३)॥"

(६२) निचुम्पुणः। 'पीणातिपृणातिभ्यो घञ्चलात्तपञ्च-णादयः'—इति निचान्तनियमनीचैःशब्दोपपदेभ्यः प्रीणाति-पृणातिपुणातिभ्यो घक्प्रत्ययो धातूनां पुभावः उपपदानां निचुभावश्च निपात्यते। नीचैरुपपदात् दधातेर्वा पूर्ववन्निपातनम्। 'चमु अदने (दि० धा०)'। निचान्तो भक्षितः प्रीणातीति निचुम्पुणः सोमः। "श्रुधी जामिनिचुम्पुणः (ऋ० सं० ६, ६, २५, २)"। नियमेन चम्यते इति निचमनमुदकं, तेन पूर्यते इति समुद्रः। निगमः पर्येयः। नीचैरस्मिन् क्वणन्ति नीचैःशब्देनात्र कर्म कुर्वन्ति इत्यवभृथो निचुम्पुणः। "अव-भृथनिचुम्पुण (य० वा० सं० ८, २७)"॥

(६३) पदिम्। 'पद्लृ गतौ (भू० प०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)' पदिः पक्षी। आकाशे ह्यसौ नित्यं पत्यते गच्छति। "मुचीजयेव पदिमुत्सितानि (ऋ० सं० २, १, १०, २)"॥

(६४) पादुः। पद्यतेः 'छन्दसीणः (उ० १, २)'—इति बाहुलकादुण् वृद्धिः। पदनं पादुः। "स प्राद्रुरस्य निर्णिजो न मुच्यते (ऋ० सं० ७, ७, १८, ४)"॥

(६५) वृकः। व्युपसर्गार्थविशिष्टात् वृणोतेः 'सृवृभूशुषि-मुषिभ्यः कित् (उ० ३, ३८)'—इति कप्रत्ययः। वृकश्चन्द्रमा। विवृतं स्पष्टज्योतिष्मत्वात् विवृत इत्युच्यते, न हि नक्षत्राणामिवास्यक्रमस्य ज्योतिः। विकृतविकान्तशब्दयोर्हैकभावः। विकृतत्वं ज्योतिषः शीतत्वात् क्षयवृद्धिभ्यां वा। विक्रान्तत्वं ज्योतिषो दिगन्तरगमनात्। "अरुणो मा सकृद्वृकः (ऋ० सं० १, ७, २३, ३)"। यद्वा, 'वृजी वर्जने' चरादिः। धने-कार्थत्वादावृणोत्यर्थः। पूर्वसूत्रेण बाहुलकात् को नकारलश्च।

रलोपश्च। आदित्य उच्यते। आवृङ्क्ते आवृणोति जगत् प्रकाशेन, आवृणोति चोदकानि रश्मिभिः सम्भजत इत्यर्थः। यद्वा, वृणक्तेर्वधकर्मणः पूर्ववद्रूपम्। विनाशयति तमांसि। "आस्नो वृकस्य वर्तिकामभीके (ऋ० सं० १, ८, १६, १ )"। विविधं कृन्तति उरणादीनि विकर्त्ता सन् वृकश्च। विपूर्वात् कृन्ततेः पूर्ववद्रूपसिद्धिरुन्नेया। "वृकश्चिदस्य वारण उरामथिः (ऋ० सं० ६, ४, ४८, ३)"। अपि वा शृगालो शिवेति प्रसिद्धा, सा वृकुच्यते। "शतं मेषान् वृक्ये चक्षदानम् (ऋ० सं० १, ८, ११, १)"॥

(६६) जोषवाकम्। 'जुषी प्रीतिसेवनयोः (तु० आ०)'। कर्मणि घञ्, वचेर्भावे। जोषयितव्यं वचनम्। विस्पष्टार्थे सेवितव्यं वचनम्। अविस्पष्टं वचनमित्यर्थः। "जोषवाकं वदतः पज्रहोषिणा (ऋ० सं० ४, ८, २५, ४)" ॥

(६७) कृत्तिः। कृन्ततेः रूपम्। यशोऽन्नं वा। यशो हि द्विषतः कृन्तति दुर्भक्षं चान्नं सापादि भोक्तारम्।"मुष्टी च कृत्तिः यदुणा त इन्द्र (ऋ० सं० ६, ६, १२, ६)"। शरीरात् कृन्तति चर्ममय्यपि कृत्तिः। सूत्रमय्यपि कृत्तिः चारुवस्त्र-खण्डग्रथितत्वात् कर्त्तनसामान्यात्। कृत्तिरिव कृत्तिः चन्द्रोच्यते। कृत्तिं वसान आचर (य० वा० सं० १६, ५१)" ॥

(६८) श्वघ्नी। स्वशब्दे कर्मण्युपपदे भूतेऽर्थे 'कर्मणि हनः (३, २, ८६)'—इति णिनिप्रत्ययः। स्वं धनं हतवान् स्वघाती सन् श्वघ्नो कितवः। स्वशब्दः स्वधेत्यत्र (१०७ पृ०) व्याख्यातः। "कृतं न श्वघ्नी विचिनोति देवने (ऋ० सं० ७, ८, २४, ५)" ॥

(६९) समस्य। समशब्दः सर्वपर्यायः सर्वनामसु पठ्यते 'त्वत्वसमसिमनेमेत्यनुच्चानि (फि० ४)'—इति सर्वानुदात्त.। "मा नः समस्य दूढ्यः (ऋ० सं० ६, ५, २५, ४)"। "उरु-

स्थाणौ अघायतः समस्मात् (य॰ वा॰ स॰ ३, २६)"। "उत समस्मिन्नाशिशीहि नो वसो (ऋ॰ स॰ ६, २, २, ३)"। "नभन्तामन्यके समे (ऋ॰ स॰ ६, ३, २२, १)"॥

(७०) कुटस्य। (७१) चर्षणिः। कृतशब्दस्य कुटभावः। कुटयति कुटे कप्रत्यय इत्यन्ये। चर्षणिशब्दो व्याख्यातः पश्यतिकर्मसु (२६८ पृ॰)। "पिता कुटस्य चर्षणिः (ऋ॰ स॰, १, ३, ३३, ४)"॥

(७२) शम्ब। व्याख्यातः शम्बर इति मेघनामसु (५४ पृ। "वृषेव शम्बं पुरुहूत तेन (ऋ॰ स॰ ७, ८, २३, ३)"॥

(७३) केपयः। कुशब्दोपपदात् पुनातेः 'अन्विपुणकृतिभ्यः ष्वपः'—इति बाहुलकात् कपय, कौ कादेशः। कपूय दुःपूय दुःशोध्य दुष्कामेत्यर्थः। कपूयेन तद्वन्तोऽपि कपूयाः, अकारो मत्वर्थीयः। कुत्सितकर्माण उत्थापितपापकर्माणो वोच्यन्ते। कपूया सन्त केपयः। "इहैवते न्यविशन्त केपयः (ऋ॰ स॰ ७, ८, २७, १)"॥

(७४) तूतुमाकृषे। 'तूतुमित्यस्य शीघ्रगत्यर्थस्य तूर्णमित्यवगमः'—इति स्कन्दस्वामी। निर्वाहो निरूपणीयः। करोतेर्लिटि थास से (३, ४, ८०)' उपव्ययस्य बहुलं छन्दसि (२, ४ ७३)'—इति लुक् कृषे इत्यर्थः। "एता विश्वा सवना तूतुमा कृषे (ऋ॰ स॰ ८, १, ८, ६)"॥

(७५) अंसत्रम्। आङ्पूर्वाद्धन्तेरसुनि टिलोप आकारस्य ह्रस्वत्वं च। आहन्तीत्यंह पापम्। पापेन वात्र तत्पन्नभूतप्रहारादिर्लक्ष्यते। अंहसस्त्रायते। 'आतोऽनुपसर्गे कः (३, २, ३)'—इत्यंहसस्य सदंसत्रम्। धनुर्वा कवचं वा। "अंसत्रकोशं सिञ्चता नृपाणम् (ऋ॰ स॰ ८, ५, १९, १)"॥

(७६) काकुदम्। कौति शब्दकर्मणो यङि, पचाद्यचि,

'यङोऽचि च (२, ४, ७४)'—इति यङ्लुकि, द्विर्वचनादौ, 'न धातुलोप आर्द्धधातुके (१, १, ४)'—इति गुणनिषेधः। कोकूयते पुनः पुनः शब्दं करोतीति काकुर्जिह्वा। कोकुवाधानं सद् वर्णसूत्यादिना काकुदं तालु। कोकूयमाना नुदतीति वा। ·कोकूयतेर्नुदेश्च काकुदम्। अनुचरन्ति काकुदम् (ऋ० सं० ६, ५, ७, २)" ॥

(७७) बीरिटे। भियो वा नक्षत्रादीनां वाभामस्ततिस्ततनं यस्मिन्। तत् भीततनं भास्ततनं वा सत् बीरिटमन्तरिक्षम्, मनुष्यगणो वा अनालम्बेऽन्तरिक्षे हि भीतिः कस्य न जायते, इडचरेन्द्रो यतो हि तस्मात्तदपि तद् भयं। "आ विश्वतो बु बीरिट इयाते (ऋ० सं० ५, ४, ६, २)" ॥

(७८) अच्छ। निपातः। अभेरर्थे। आभिमुख्यार्थे वर्त्तते। आप्तुमित्यस्यार्थे इति शाकपूणिः ॥

(७९) परि। (८०) ईम्। (८१) सीम्। इति व्याख्यातानि प्राथमिके निपातप्रकरणे (१, ३ ख०) अनेकार्थत्वादिहोपन्यासः। एषामुदाहरणानि प्रसिद्धानि ॥

(८२) एनम्। (८३) एनाम्। एतत्पदद्वयमस्या अस्येत्यनेन पदद्वयेन 'उदात्तम् प्रथमादेशे, अनुदात्तमन्वादेशे'—इत्येवं व्याख्यातम् (निरु० ४, २५)। अनेकार्थत्वादुपन्यासः। "वित एनमायुनग्"—इत्येवमादीन्युदाहरणानि।

(८४) सृणिः। 'सृ गतौ (भू० प०)'। 'घृघुषिस्थिदन्विच्चरित्वरिभ्यः कित्'—इति णिप्रत्ययः। नवितव्यं प्रति सरणात् सृणिशब्देनात्र दात्रमभिप्रेतम् ॥ "नदीषु इतसृण्यः प्रक्रमेयात् (य० वा० सं० १२, ६८)" ॥

इति चतुरशीतिः पदानि ॥ २ ॥

आशुशुक्षणिः(१)। आशाभ्यः(२)। काशिः (३)। कुणारुम्(४)। अलातृणः(५)। सललूकम् (६)। कत्पयम्(७)। विस्रुहः(८)। वीरुधः(९)। नक्षद्दाभम्(१०)। अस्कृधोयुः(११)। निशृम्भाः (१२)। बृबदुक्थम् (१३)। ऋदूदरः (१४)। ऋदूपे(१५)। पुलुकामः(१६)। असिन्वती(१७)। कपना (१८)। भाऋजीकः (१९)। रुजानाः (२०)। जूर्णिः(२१)। ओमना(२२)। उपलप्रक्षिणी(२३)। उपसि(२४)। प्रकलवित्(२५)। अभ्यर्धयज्वा(२६)। ईक्षे(२७)। क्षोणस्य(२८)। अस्मे (२९)। पाथः (३०)। सवीमनि (३१)। सप्रथाः(३२)। विदथानि(३३)। श्रायन्तः(३४)। आशीः(४५)। अजीगः(३६)। अमूरः (३७)। शशमानः (३८)। देवो देवाच्या कृपा (३९)। विजामातुः (४०)। ओमासः (४१)। सोमानम् (४२)। अनवायम् (४३)। किमीदिने (४४)। अमवान्(४५)। अमीवा(४६)। दुरितम्(४७)। अप्वे (४८)। अमतिः (४९)। श्रुष्टी (५०)। पुरन्धिः(५१)। रुशत्(५२)। रिशादसः(५३)। सुदत्रः(५४)। सुविदत्रः(५५)। आनुषक्(५६)।

तुर्वणिः (५७)। गिर्वणाः (५८)। असूक्त सूक्तं (५९)। अर्यक् (६०)। याद्दस्मिन् (६१)। जार्यायि (६२)। अग्रिया (६३)। चनः(६४)। पूचुता (६५)। युवर्ध: (६६)। अग्निनः (६७)। जज्झतीः(६८)। अप्रतिष्कुतः(६९)। शार्थदानः (७०)। सृप्रः(७१)। सुशिप्रः(७२)। रंसु(७३)। द्विबर्हाः(७४)। अक्रः(७५) उराणः(७६)। स्त्रियानाम्(७७)। स्त्रिमाः(७८)। जवारु(७९)। जरूथम् (८०)। कुलिशः (८१)। तुञ्जः(८२)। बर्हणा(८३)। ततनुष्टिम् (८४)। इलीबिशः। (८५)। कियेधाः(८६)। भृमिः(८७)। विष्पितः (८८)। तुरीपम् (८९)। रास्पिनः (९०)। ऋञ्जतिः (९१)। ऋजुनीती (९२)। प्रतद्वसू (९३)। हिनोत (९४)। चोष्कूयमाणः (९५)। चोष्कूयते (९६)। सुमत् (९७)। दिविष्टिषु (९८)। दूतः (९९)। जिन्वति (१००)। अमत्रः (१०१)। ऋचीषमः (१०२)। अनर्शरातिम् (१०३)। अनर्वा (१०४)। असामि (१०५)। गल्दया (१०६)। जल्हवः (१०७)। बकुरः (१०८)। बेकनाटान् (१०९)। अभिधेतन

(११०)। अंहुरः (१११)। बतः (११२)। बाताप्यम् (११३)। चाकन् (११४)। रथर्यति (११५)। असश्चाम् (११६)। आधवः (११७)। अनवब्रवः (११८)। सदान्वे (११९)। शिरिम्बिठः (१२०)। पराशरः (१२१)। क्रिविर्दती (१२२)। करूळती (१२३)। दनः (१२४)। शरारुः (१२५)। इदंयुः (१२६)। कीकटेषु (१२७)। बुन्दः (१२८)। बृन्दम् (१२९)। किः (१३०)। उल्बम् (१३१)। ऋबीसम् (१३२)। ऋबीसमिति द्वात्रिंशच्छतं पदानि ॥ ३ ॥

जहासस्निमाशुशुक्षणिस्त्रीणि ॥

इति निघण्टौ चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

(१) आशुशुक्षणिः। शुचेर्ज्वलतिकर्मणः क्विपि शुक् दीप्तिः, क्षणिर्हिंसार्थः, 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्, सनोतेर्वा इन्। आशु शुचा दीप्त्या क्षणिता हिंसिता तमसा सनिता सम्भक्ता वा पाके दाहप्रकाशनादेः स्वव्यापारस्य। अग्निरुच्यते। यद्वा, आङ्पूर्वाच्छुचेरन्तर्णीतण्यर्थात् सनि आशुशुक्ष इति स्थिते 'आङि शुषेः सनः'—इति विहितः अनिप्रत्ययो बाहुलकाच्छुचेरपि भवति। 'आङि शुचेः'—इत्येव वा तत्र पाठः। आशु शोचयिषा आदीपयितुमिच्छा, तस्याः कर्त्ता आशुशुक्षणिः आदीपयिषुरित्यर्थः। "त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः (ऋ० सं० २, ५, १७, १)"।

(२) आंगोभ्यः॥ व्याख्यातं दिङ्नामसु (३२ पृ०)। स एव निगमः (ऋ० सं० २, ८, ८, २)॥

(३) काशिः। काशतेः 'इन् सर्वधातुभ्यः (उ० ४, ११४)' —इतीन्प्रत्ययः। प्रकाश्यते इति काशिर्मुष्टिः। "यत्स गृभ्णा मघवन् काशिरित्ते[1] (ऋ० सं० ३, २, १, ५)"॥

(४) कुणारुम्। क्वणतेः शब्दकर्मणः 'क्वणेरारुः'—इति बाहुलकात् आरुप्रत्ययस्ताच्छीलिकः, वकारस्य सम्प्रसारणञ्च। शब्दनशीलः कुणारुः, तच्च मेघ उच्यते। "अभुस्त मिन्द्र सम्पिणक् कुणारुम् (य० वा० स० १८, ६९)"॥

(५) अलातृणः। अलंशब्दोपपदात् तृदेर्हिंसार्थात् 'वीणात्सूण-प्रवणभूणधृणतृणवणघृणादयः (उ० ३, १३)'—इति णप्रत्ययो दकारलोपो गुणाभावोऽलमोमकारस्याकारश्च निपात्यते। यद्वा, क्युटि दकारस्य लोपो गुणाभावश्च पृषोदरादित्वात्। अलं पर्याप्तमातर्दनं हिंसा यस्य, बहुदकत्वात् मेघो विशिष्यते। "अलातृणो वल इन्द्र व्रजो गोः (ऋ० सं० ३, २, २, ५)"॥

(६) सललूकम्। सम्पूर्वाल्लुभेर्निष्ठायां 'लुभो विमोहने (७, २, ५४)'—इतीडागमः। यद्वा, सर्त्तेः 'मण्डूकोलूकोल्क-शूकशम्बूकयूकवरूकादयः (उ० ४, ४०)'—इत्यूकप्रत्यये गुणे रपरे कृते अरित्यस्य द्विर्वचनरेफयोर्लत्वापत्तिश्च निपात्यते। सरणशीलमत्यन्तदूरं नष्टमित्यर्थः। रथो विशिष्यते। "आ कीर्दतः सललूकं चकर्थ (ऋ० सं० ३, २, ४, २)"।

(७) कत्पयम्। कमिति सुखनाम। तस्य मकारस्य तकारः पयसश्च सलोपः। कम्पयसं सुखपयसमित्यर्थः। मेघो-ऽभिधेयः। "त्वष्टिद्दित्या कत्पयं शयानम् (ऋ० सं० ४, १, ३२, ६)"॥

(१८) कपना। 'कपि चलने (भ्वा० आ०)'—इत्यस्मात् 'युच् बहुलम् (उ० ४, ७४)'—इति युचि बाहुलकादागमानित्यत्वान्नुम् न क्रियते। घुणाः क्रिमय उच्यन्ते। "मोषथा वृक्षं कपनेव वेधसः (ऋ० सं० ४, ३, १५, १)"॥

(१९) भाऋजीकः। ऋजुका अकुटिला अप्रतिहता प्रसिद्धा भा दीप्तिर्यस्य स ऋजुकभाः सन् भाऋजीकः। अग्निरुच्यते। "धूमकेतुः समिधा भाऋजीकः (ऋ० सं० ७, ६, ११, २)"॥

(२०) रुजानाः। व्याख्यातं नदीनामसु (११२ पृ०)। स निगमः (ऋ० सं० १, २, ३७, १)॥

(२१) जूर्णिः। व्याख्यातं क्रोधनामसु (१८६ पृ०)। अत्र सेनाभिधेया। "श्रिया जूर्णिर्न वंसति (ऋ० सं० २, १, १७, ६)"॥

(२२) ओमना। अवनशब्दस्याकारवकारयोरोकारमकारौ विभक्तेराकारः। अवनाय अवनेन वा। "परिप्रसन्नोमना वां वयो गात् (ऋ० सं० ५, ५, ११, ४)"॥

(२३) उपलप्रक्षिणी। उपलशब्दोपपदात् क्षिणोतेः क्षिपतेर्वा 'सुप्यजातौ (३, २, ७८)'—इति णिनिप्रत्यये व्यत्ययेन टिलोपः। उपलेषु ग्रावसु वालुकासु यवान् क्षिणोति हिनस्ति भृज्जतीत्यर्थः, उपलेषु यवान् प्रक्षिपति चूर्णयतीत्यर्थः। सक्तुकारिकाभिधेया। "उपलप्रक्षिणी नना (ऋ० सं० ७, ५, २५, ३)"॥

(२४) उपसि। उपस्थमध्यस्य। "आसीन ऊर्ध्वामुपसि क्षिणाति (ऋ० सं० ७, ७, १०, ३)"॥

(२५) प्रकलवित्। प्रकर्षेण कलाः मानोन्मानप्रतिमानादिविषयाः प्रकटाक्रयविक्रयरत्नपरीक्षादिका वेद विजानाति।

'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विपि 'ङ्यापो सञ्ज्ञाछन्दसोर्बहुलम् (६, ३, ६३)'—इति ह्रस्व।' प्रकलविद् वणिग् भवति। "दुर्मिंत्रासं प्रकलविन्मिमानाः (ऋ० सं० ५, २, २६, ५)"॥

(२६) अभ्यर्धयज्वा। 'ऋधु वृद्धौ (दि० प०)'। णिजन्तात् पचाद्यचि णिलोपे अभ्यर्ध, यजेर्दानार्थात् 'सुयजोर्ङ्वनिप् (३, २, १०३)' अन्नानपि रसान् अभ्यर्धयन् मरुद्भ्यो ददाति धन वा स्तोतृभ्यो यो ददाति सः। पूषा विशेष्यते। "मिर्यक्ति पूषा अभ्यर्धयज्वा (ऋ० सं० ४, ८, ८, ५)"॥

(२७) ईंचे। ईश ऐश्वर्ये (अदा० आ०)'। 'धास से (३, ४, ८०)'। व्यत्ययेन ईशसे न भवति। "ईंचे हि वस्व उभयस्य राजन् (ऋ० सं० ४, ६, ८, ५)"॥

(२८) चोणस्य। 'चि निवासगत्योः (तु० प०)'। 'कृत्यल्युटो बहुलम (३, ३, ११३)'—इति कर्तरि ल्युट्। चयण स्येत्यत्र यकारस्योकारे 'आद्गुण (६, १, ८७)'। निवसितुरित्यर्थः। "मह चोणस्याखिना कण्वाय (ऋ० सं० १, ८, १४, ३)"॥

(२९) अस्मे। अस्मद्। जसादीना शे प्रत्ययः, लुकेव टे। जसादिषु सुबन्तेषु क्रमेणोदाहरणानि,—"अस्मे ते बन्धुः (य० वा० सं० ४, २२)" "अस्मे यात नासत्या सजोषा (ऋ० सं० १, ८, १८, ६)" "अस्म सं मानेभिर्वृषभ पौंस्येभि (ऋ० सं० २, ३, २५, ३)" "अस्मे प्रयन्धि मघवन्नृजीषिन् (ऋ० सं० ३, २, २०, ५)" "अस्मे आराच्चिद्द्वेष सनुतयुयोतु (ऋ० सं० ४, ७, ३२, ३)" "ऊर्व इव पप्रथे कामो अस्मे (ऋ० सं० ३, २, ४, ४)" "अस्मे धत्त वसवो वसूनि (य० वा० सं० ८, १८)"॥

(३०) पाथः। पथतेः पन्यतेर्वा गत्यर्थादसुनि धातूनां पाथ इत्ययमादेशः। पथ्यते गम्यते पक्ष्यादिभिरन्तरिक्षवासिभिर्वा पाथः।। अन्तरिक्षम्। "श्येनो न दीयन्नन्वेति पाथः (ऋ० सं० ५, ५, ५, ५)"। उदकमपि पाथः। 'पिबतेस्तुट् च'—इत्यसुन्। पीयते ह्युदकम्। अन्ने पिबतिरभ्यवहारार्थः। "आचष्ट आसां पाथो नदीनाम् (ऋ० सं० ४, ३, २५, ५)"—इत्युदकस्य। "देवानां पाथ उप प्रविद्वान् (ऋ० सं० ८, २, २२, ४)"—इत्यन्नस्य॥

(३१) सवीमनि। 'सु प्रसवैश्वर्ययोः' (भू० प०)। 'हृभृसृस्तृशुभ्य इमनिच् (उ० ४, १४३)'—इति इमनिच्। प्रसवशब्दस्य एव वर्णव्यत्ययादिना। प्रसवेऽभ्यनुज्ञाने। "देवस्य वयं सवितुः सवीमनि (ऋ० सं० ५, १, १५, २)"॥

(३२) सप्रथाः। प्रथतेरसुन्। सर्वतःशब्दस्य सभाव। सर्वतः पृथुः। "त्वमग्ने सप्रथा असि (ऋ० सं० ४, १, ५, ४)"॥

(३३) विदथानि। विदेरथक् (उ० ३, १११)। वेदनानि विज्ञानानीत्यर्थः। "विदथानि प्रचोदयन् (ऋ० सं० ३, १, २८, २)"॥

(३४) श्रायन्तः। 'श्रिञ् सेवायाम् (भू० भा०)'। शतरि अपि गुणे प्राप्ते व्यत्ययेन हस्वः। समाश्रयन्तः। यद्वा, भूते ल्युट्। समाश्रिताः। "श्रायन्त इव सूर्यम् (ऋ० सं० ६, ०, ३, ३)"॥

(३५) आशीः। आङ्पूर्वात् श्रयतेः शृणातेर्वा 'क्विब्वचिप्रच्छि (३, २, १७८ वा० १)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशाच्छ्रीणातिः (भा०)'—इत्युक्तेः क्विपि प्रकृतेः शीरादेशः। यद्वा, पतयोरर्थे वर्त्तमानात् श्रयतेः क्विपि शीरयम्भे निर्वाहः।

आङ् ईषदर्थद्योतक आग्रयणात् होमार्यस्य सोमस्य ग्रपण दुध्युचते। "इन्द्राग्न गावं आशिरम् (ऋ० स० ६, ५, ६, १)"। 'आङः शासु इच्छायाम्' इत्यस्मात् क्विपि। "सा मे सत्याशीर्देवान् गम्यात्" रेफान्तसकारान्तयोरपि साधारण पाठः समाम्नाये ॥

(३६) अजोग.। जिगर्त्ति र्नैरुक्तधातुर्निगरणार्थो वा ग्रहणार्थो वा। लङि, सिपि, इतय लोपे, 'रात्सस्य (८, २, २४)'—इति सलोप', रेफस्य विसर्जनीय । अवगिरति, गृह्णाति वा। भक्षयतोत्यर्थ.। "आदिद्द् घासिष्ठ ओपधीरजोग. (ऋ० सं० २, ३, १२, २)" ॥

(३७) अमूर। 'मुह वैचित्त्ये (दि० प०)'। निष्ठायाम् उत्वम्, ष्टुत्वढलोपदीर्घा., ढकारस्य रेफ, नञ्पूर्वः सम्बुद्धौ अमूर। अमूढेत्यर्थ.। "मूरा अमूर न वय चिकित्व (ऋ० स० ७, ५, ३२, ४)" ॥

(३८) शशमान । व्याख्यातोऽर्चतिकर्मसु (२७४ पृ०)। स निगम. (ऋ० स० २, २, २१, २) ॥

(३९) देवोदेवाच्या कृपा। देवशब्दोपपदात् अञ्चते. 'ऋत्विग् (३, २, ५९)'—इत्यादिना क्विन्, 'अनिदिताम् (६, ४, २४)'—इति नलोप, 'अच (६, ४, १३८)'—इत्यकारलोप, (६, ३, १३८)'—इति दीर्घ 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा०)'—इति ङीपि 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६, ३, ९२)' न भवति, 'कृपू सामर्थ्ये (भू० आ०)' क्विपि। देवान् प्रति गतया स्तुत्येत्यर्थ। "देवोदेवाच्या कृपा (ऋ० स० २, १, १२, १)" ॥

(४०) विजामातु। धनादन्ये कुलोनत्वादयो विगता जामातृगुणा यस्मात्, सोऽयमप्रातगुणो विजामाता कन्या-

प्रतिरुध्यते। तत्र पञ्चमी। "विजामातुरुत वा घा स्यालात् (ऋ० सं० १, ७, २८, २)" ॥

(४१) ओमासः। अवतेः पालनार्थस्य तर्पणार्थस्य वा कर्त्तरि कर्मणि वा 'अविसिविसिशुषिभ्यः कित् (उ० १, १४१)'—इति मन्प्रत्यये 'ज्वरत्वर (६, ४, २०)'—इत्यादिना ऊठि ओमास इति प्राप्ते व्यत्ययेन गुणः। जस्। 'आज्जसेरसुक् (७, १, ५०)'। रक्षितारस्तर्पयितारस्तर्पणीयाः। "ओमासश्चर्षणीधृत (ऋ० सं० १, १, ६, १)" ॥

(४२) सोमानम्। सुनोतेर्मनिन्प्रत्ययः। अभि सोमानम्। सोतारम्। अभिषोतारं सोमानाम्। "सोमानं स्वरणम् (ऋ० सं० १, १, ३४, १)" ॥

(४३) अनवायम्। (४४) किमीदिने। अनवयवशब्दस्यानवायभावः। अनवयवं सकलमित्यर्थः। किमिदानीं कश्चिदिति चरति, किमिदं वत्तत इति वा चरति। साधुजनवैरी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः। किमिदशब्दस्य वाक्यस्य वा किमीदिनभावः। "द्वेषो धत्तमनवायं किमीदिने (ऋ० सं० ५, ७, ५, २)" ॥

(४५) अमवान्। अमा सहार्थाव्ययम्। तस्य मतुपि रूपम् ससहायः। यद्वा, 'अम रोगे (चु० प०)'। 'पुंसि संज्ञायां घः (३, ३, ११८)'। अमो रोगः कर्त्तव्यः शत्रूणां, रोगस्तद्वान्, दस्यूनां रोगभूत इत्यर्थः। आत्मशब्दस्य वा अमभावः। *यद्वदन् 'आत्मा ओजो बलं अन्तो अन्तो आतपि'* —इति निघण्टुः। "याहि राजेवामवाँ इभेन (ऋ० सं० ३, ४, २३, १)" ।

(४६) अमीवा। 'अम रोगे (चु० प०)'। 'अमेरीवन्'—इति ईवप्रत्ययः। टाप्। अमीवा रोगः हिंसिता वा। यद्वा,

'शेवयह्वजिह्वाग्रीवापामीवा (उ० १, १५२)'—इति वन्-प्रत्ययान्तो निपात्यते। "यस्ते गर्भममीवा (ऋ० सं० ८, ८, २०, २)"॥

(४७) दुरितम्। दुर्मतिप्रापकं कारणभूतम्। 'पापकं कर्म दुरितमुच्यते। "अतिक्रामन्तो दुरितानि विश्वा (निरु० ६, १२)"। दुःशब्दोऽत्र दुर्गतौ वर्त्तते। 'इणश्विहृपिभ्यः क्तः' इति बाहुलकात् करणे क्तः। दुर्गतिर्गम्यते येन तत् दुरितम्॥

(४८) अप्वे। अपपूर्वात् वेञ्धातोरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्यये अपेत्यस्या-न्त्यलोपश्छान्दसः। टाप्। अपवयति अपगमयति सुखं प्राणांश्चेत्यर्थः। 'शेवयह्वजिह्वाग्रीवाप्वामीवा (उ० १, १५२)'—इति वन्प्रत्यये वेञो लोपोऽपशब्दस्यान्त्यलोपश्च निपात्यते। व्याधिर्वा भयं वा अप्वा। "श्टंह्णाणाङ्गान्यप्वे परेहि (ऋ० (सं० ८, ५, २३, ६)"॥

(४९) अमतिः। अमाशब्द आत्मवचनः। आत्ममयी तति-र्मतिर्वा अमतिः। तन्यत इति ततिर्दीप्तिः। मतिरपि प्रका-शरूपत्वाद् दीप्तिः। आत्मप्रकाशमयी ततिर्मतिर्वा अमतिः दीप्तिरभिधेया। अमाततिशब्दस्य आत्ममतिशब्दस्य वा अम-तिभावः। सविद्धविशेषणत्वादात्मप्रकाशमयी ततिर्मतिर्वा

२ १ ७   २ १ १ ।   २७   २

अमतिरित्युपपद्यते। 'ऊर्द्धा यस्या मतिर्भा अदिद्युतत् (सा० छ० आ० ५, २, ३, ८)"।

(५०) स्रुची। (५१) पुरन्धिः। अश्नोतेः 'इक्षपिकषि-मर्षिसुषिशासुव्यशिश्याभ्यः क्तिन्'। 'ऊदिकारादक्तिनः (४, १, ४५, ग० वा०)'—इत्यत्र स्त्रियां विहितस्य ग्रहणात्

विकल्पो ङीप्। त्सु अष्टि व्यासिरत्र सुष्टी। पुरशब्दो बहुनाम। धीरिति कर्मनाम, प्रज्ञानाम वा। बहुकर्मा बहुप्रज्ञो वा पुरुधिः सन् पुरन्धिः। पुराणि दारयतीति वा पुरन्धिः। 'देश्रो डित्'—इति बाहुलकात् डिदिन्प्रत्ययः, दकारस्य धकारः, नकार उपजनः। भगो वरुण इन्द्रश्च पुरन्धिः। सुष्टी भगं नार्मल्यं पुरन्धिम् (ऋ० सं० ५, ४, ६, ४)"। सुष्टीशब्दः सुखस्याभिधायको धान्यशलाकायाश्च। "सुष्टीवरी भूत न्वास्मभ्यमापः (ऋ० सं० ७, ७, २६, १)"—इति सुखस्याभिधायकः। "सुष्टी सहरा असद्य."—इति धान्यशलाकायाः॥

(५२) रुशत्। 'रुच दीप्तौ (भू० आ०)'। 'संश्चत्तृपद्वेहत् (उ० २, ७८)'—इति अतिप्रत्ययो गुणाभावश्च चकारस्य शकारश्च निपात्यते। रोचते रुशत् वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधीयते। यद्वा, रुशेर्हिंसार्थात्तुदादेः रोचत्यर्थे वर्त्तमानाल्लट् शतरि। "घर्मिङस्य रुशदर्शि पाजः (ऋ० सं० ३, ८, १२, २)"॥

(५३) रिशादसः। 'रिश हिंसायाम्' तुदादिः। अस्तर्णीतिण्यर्थः। लटः शतरि छान्दसो दीर्घः। अस्यतेर्विच्। रिशतां शत्रूणां वा असितारः क्षेप्तारः नाशयितार इत्यर्थः। "अग्निं हि वः सजात्य" रिशादसः (ऋ० सं० ४, २, १२, ५)"॥

(५४) सुदत्रः। सुपूर्वात् ददातेः त्रन्, त्रनि बाहुलकात् अत्त्वम्। सुदानः। त्वष्टा सुदत्रो विदधातु रायः (ऋ० सं० ५, ३, २०, २)"॥

(५५) सुविदत्रः। सुपूर्वात् 'विद ज्ञाने (अदा० प०)'—इत्यस्मात् 'अभियजिवधिपतिकमिलमिभ्योऽत्रन्'—इति बाहु-

लकादत्वनूप्रत्ययौ गुणाभावश्च । सुवियत इत्यर्थः । "याम्नि याभिः सुद्रिदत्त्रे'भिरर्वाड् (ऋ० सं० ७, ६, १८, ३)" ॥

(५६) आनुषक् । अनुपूर्वात् 'षञ्ज सङ्गे (भू० प०)'—इत्यस्मात् क्विपि 'अनिदिताम् (६, ४, २४)'—इति नलोप, अनारकारस्य दीर्घश्छान्दसः । अनुषक्तमुपर्युपरि लग्नमित्यर्थः । "स्तृणन्ति बर्हिरानुषक् (ऋ० सं० ६, ३, ४२, २)" ॥

(५७) तुर्वणिः । तूर्णशब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन् । तूर्णं वनोति सम्भजते । तूर्णवनि । "स तुर्वणिर्महाँ अरेणु पौंस्ये (ऋ० सं० १, ४, २१, ३)" ॥

(५८) गिर्वणाः । गीःशब्दोपपदात् वनोतेरौणादिकोऽसुनि वनेर्घटादित्वेन मित्संज्ञकत्वात् ह्रस्वत्वम् । गीर्वण इति प्राप्ते दीर्घाभावश्छान्दसः । निघण्टुकारपठितगीर्वाणशब्देन समानार्थः । अतो देवोऽभिधेयः । स्तोतुरभिमतप्रदानादात्मानं स्तोतृभिः सम्भाजयति । भाष्ये तु (निरु० ६, १४) 'गीर्भिरेनं वनयन्ति'—इत्यर्थनिर्वचनमिति स्कन्दस्वामी । अतोनिवासस्तु स्वार्थे णिच् । गीर्भिरेनं वनयन्ति । "जुष्टं गिर्वणसे वृहत् (ऋ० सं० ६, ६, १२, ७)" ॥

(५९) असूर्त्ते सूर्त्ते । असुशब्दपूर्वस्य सुशब्दपूर्वस्य च 'ईर गतौ (अदा० आ०)'—इत्यस्य निष्ठाया छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे पूर्वत्र दीर्घश्छान्दसत्वात् । सप्तम्येकवचनम् । असुः प्राणः । प्राणश्च वातः । वातसमीरिता मरुदादयो हि मेघाः । सूर्त्ते इति रजसीत्यस्य विशेषणम् । सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्यर्थः । "असूर्त्ते सूर्त्ते रजसि निषत्ते (ऋ० सं०, २, १, ७, ४)" ॥

(६०) अम्यक् । माशब्दद्वितीयैकवचन उपपदे अञ्चतेः

क्विप् नकारलोपे माशब्दस्य इददी द्रष्टव्योऽकारोपजनेन च भाव्यम्। आयुधाख्या शक्तिरभिधेया क्षिप्ता सती मां प्रति इव गता। यद्वा, अभिपूर्वादञ्चतेः क्विनि अभ्यक् सती नका-रस्य मकारापत्त्या अम्यक्। अमून् प्रत्यभिगता। यद्वा, अमा-शब्द: सहार्थे निपात:। अमाक् सती अम्यक् सहभूता। “अम्युक् सा त इन्द्र ऋष्टिरस्मे (ऋ॰ सं॰ २, ४, ८, ३)”।

(६१) याद्दश्मिन्। यादृशे इत्यर्थः “याद्दश्मिन् धायि तम-पस्ययाविदत् (ऋ॰ सं॰ ४, २, २४, ३)”।

(६२) जारयायि। उषोविशेषणम्। तेन व्यत्ययेन नपुं-सकत्वावगमः। ततश्चेदं नाख्यातम्। जार इत्यस्य वा धातो-रविभक्त्याख्यातस्यासम्भवात्। निघातप्रसङ्गाच्च। अन्ये तु जनेरुत्याभिगतमाख्यातमेतदिति मन्यते। ततश्च जारयायि अजायतेत्यवगमः इत्युक्ता मन्त्रव्याख्याने निघातप्रसङ्गस्य भिन्नवाक्यत्वेन वाक्यादित्वादुदात्तप्रतिपादनेन परिहृतत्वात् अजायतेत्येव स्कन्दस्वामिनोऽप्यवगमः। उषोविशेषणवादिनां जारस्यामी यायीति जारयायि। गर्वा यौवनस्य जरयितृत्वा-ज्जारत्वम् गवामभिगमनाद् यायित्वम्। “उषः पृतेव जारु-यायि युक्षे. (ऋ॰ सं॰ ४, ५, १४, ६)”।

(६३) अपिया। अपशब्दोपपदात् याते: 'गेहे' क्र /

त्वकादृवनुप्रत्ययो गुणाभावश्च। सुविद्यत इत्यर्थः। "आग्ने याभिः सुविदत्रेभिरर्वाङ् (ऋ० सं० ७, ६, १८, ३)" ॥

(५६) आनुषक्। अनुपूर्वात् 'षञ्ज सङ्गे (भू० प०)'—इत्यस्मात् क्विपि 'अनिदिताम् (६, ४, २४)'—इति नलोपः, अनोरकारस्य दीर्घश्छान्दसः। अनुषक्तमुपर्युपरि लग्नमित्यर्थः। "स्तृणन्ति बर्हिरानुषक् (ऋ० सं० ६, २, ४२, २)" ॥

(५७) तुर्वणिः। तूर्णशब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्। तूर्णं वनोति सम्भजते। तूर्णवनिः। "स तुर्वणिर्महाँ अरेणु पौंस्ये (ऋ० सं० १, ४, २१, ३)" ॥

(५८) गिर्वणाः। गोःशब्दोपपदात् वनोतेर्बाहुलकादसुनि वनेर्घटादित्वेन मित्संज्ञकत्वात् ह्रस्वत्वम्। गीर्वण इति प्राप्ते दीर्घाभावश्छान्दसः। निघण्टुकारपठितगीर्वाणशब्देन समानार्थः। अतो देवोऽभिधेयः। स्तोतुरभिमतप्रदानादात्मानं स्तोतृभिः सम्भाजयति। भाष्ये तु (निरु० ६, १४) 'गीर्भिरेनं वनयन्ति'—इत्यर्थनिर्वचनमिति स्कन्दस्वामी। श्रीनिवासस्तु स्वार्थे णिच्। गीर्भिरेनं वनयन्ति। "शुष्टं गिर्वणसे बृहत् (ऋ० सं० ६, ६, १२, ७)" ॥

(५९) असूर्ते सूर्ते। असुशब्दपूर्वस्य सुशब्दपूर्वस्य च 'ईर गतौ (अदा० आ०)'—इत्यस्य निष्ठायां छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे पूर्वत्र दीर्घश्छान्दसत्वात्। सप्तम्येकवचन ष्ठा
असुः प्राणः। प्राणश्च वातः। वातसमीरिता मरुदा ईकारिणश्च
मेध्याः। सूर्ते इति रजसीत्यस्य विशेषणम्। य (ऋ० सं०
सुष्ठु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्या
सूर्ते रजसि निषत्ते (ऋ० सं०, २, १, ७, ४) ० उ०)'। प्राप्त-
(६०) अम्यक्। माशब्दद्वितीयैकवचन

व्यत्ययेन पत्वम्। अन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धे अन्येनाप्रतिहतपूर्व इत्यर्थः अप्रतिस्खलितपूर्वो वा। अत्र पक्षे स्खलितशब्दस्य ष्कुतभावः। "शूरस्य भूमप्रतिष्कुतः (ऋ० सं० १, १, १४, १)"॥

(७०) शाशदानः। 'शद्ल शातने (भू० प०)'। अस्माद् यङ्लुगन्ताद् व्यत्ययेन शानच्। पुनः पुनरसुरांस्तत्पुराणि वा शातयन्तः "प्रस्वां मतिभिरतिरच्छाशदानः (ऋ० सं० १, १, २, ३)"॥

(७१) सृप्रः। शिप्रे इत्यत्र (३२० पृ०) सृप्रशब्दो व्याख्यातः। "सृप्रकरस्नमूतये (ऋ० सं० ६, ३, २, ५)"। सृप्रौ करस्नौ बाहू यस्य होमेन तर्पणाय पालनाय वाऽस्मनः सर्पिस्तैलमपि सृप्रम् सर्पणात्। निगमः पर्येष्यः॥

(७२) सुशिप्रः। शिप्रे व्याख्याते (३२० पृ०)। शोभनत्वविशिष्टत्वमत्र विशेषः। सुहनुः सुनासो वा सुशिप्रः। "वाजे सुशिप्र गोमति (ऋ० सं० ६, २, २, ३)"। क्वचिच्छिप्रशब्देन शिरस्त्राणमुच्यते। शिप्राः शीर्षसु वितता हिरण्ययीरिति सुशिप्र सुशिरस्त्राण इत्यर्थः सम्भवति॥

(७३) रंसु। रमतेर्विच्। सप्तमीबहुवचनम्। रमणीयेष्वित्यर्थः। रमणीयशब्दस्य रम्भावः। "स त्रिवेणं चिकिते रंसु भासा (ऋ० सं० २, ४, २४, ५)"।

(७४) द्विवर्हाः। द्विशब्दे सप्तम्यन्ते उपपदे 'वृह वृद्धौ (भ्वा० प०)'—इत्यस्मादसुन्। द्वयोः स्थानयोर्मध्यस्थ परिवृढः इन्द्रः। न ह्यन्तरिक्षे वीर्य्यस्य परिवृढं शक्नोति वर्षितुं नापि दिवि आदित्यादसौ परिवृढोऽतः दिवः सर्वदेवतासाधारणत्वात् देवराजत्वेन च प्रसिद्धिरितिहासेषु द्विवर्हा उच्यते। "उत द्विवर्हा अमिनः सहोभिः (ऋ० सं० ४, ६, ७, १)"॥

(७५) अक्रः । आङ्पूर्वात् क्रमेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, आङो ह्रस्वत्वम् । आक्रामति सर्वमित्य-क्रमाकाशमाक्रम्यते वा । "अक्रो न बभ्रिः समिथे महीनाम् (ऋ० सं० २, ८, १५, २)" ॥

(७६) उराणः । उरु कुर्वाण इति प्राप्ते कवर्णादिलोपा-दिना वाक्यार्थः । उराण इति पदवचनम् । "दूत ईयसे प्रदिव उराणः (ऋ० सं० ३, ५, ७, ३)" । स्वल्पमपि हवि. उरु बहु कुर्वाणः । तथाच श्रुतिः । "यद्वै देवो जीयत हवि-स्तत हिमोतु वहते अथोऽयमपरिमितः"—इति ॥

(७७) स्तियानाम् । स्त्यायतेः सदनार्थात 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच् । दृशिग्रहणस्य प्रयोगानु-सरणार्थत्वान्निरुपपदादपि भवति । इकार उपजनः । षष्ठी-बहुवचनम् । हिमभावेन सहता आप उच्यन्ते । "वृषा सिन्धूनां वृषभः स्तियानाम् (ऋ० सं० ४, ७, २०, १)" ॥

(७८) स्तिपाः । स्तियाः पातीति विच् । स्तियापाः सन् स्तिपाः । यद्वा, उपस्थितपाः सन् अनेकवर्णलोपादिना स्तिपाः । अग्निरुच्यते । स ह्याहुतिद्वारेण पालयिता, अङ्ग-भावोपगमनेन चोपस्थितानां कर्त्तव्यतया ज्योतिष्टोमादी-नाम् । "स नः स्तिपा उत भवा तनूपाः (ऋ० सं० ८, २, १८, ४)" ॥

(७९) जवारु । जवमद्भिर्जरमद्भिर्गरवद्भिर्वा रश्मिभिर्यदा-रोहति तदादित्यमण्डलमुच्यते । जवमज्जरमद्गरमच्छ-ब्दानां जवभाव, आङ्पूर्वाद्रुहेश्च डुमत्ययो निपात्यते । "अग्रे रूप आरुपितं जवारु (ऋ० सं० ३, ५, २, २)" ॥

(८०) जरूथम् । गृणाति स्तुतिकर्मणो जरतेर्वार्चतिकर्मण-'जॄ हस्रो रूथन्'—इति भावे करणे वा रूथन् । बाहुलकाद्

गकारस्य जकारः। स्तवनं स्तूयतेऽनेनेति वा जरूथं स्तोत्रम्। "जरूथं हन्यक्षि राये पुरन्धिम् (ऋ० सं० ५, २, १२, ६)"॥

(८१) कुलिशः। वज्रनामसु व्याख्यातम् (२३८ पृ०)। स निगमः (ऋ० सं० १, २, ३६, ५)॥

(८२) तुञ्जः। तुञ्जतेर्दानकर्मणो भावे घञ्। दानमित्यर्थः "तुञ्जे तुञ्जे य उत्तरे (ऋ० सं० १, १, १४, २)"। बभ्वोऽपि तुञ्ज स्तवैव व्याख्यातः॥

(८३)। बर्हणा। वृहेर्वृद्ध्यर्थस्य 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति भूते कर्त्तरि ल्युट्। परिवृढः। हिंसाकर्मणो वा भावे। हिंसा बर्हणा। तृतीयेकवचनस्थाने डादेशः। वृहच्छ्रवा असुरो बर्हणा कृतः (ऋ० सं० १, ४, १७, ३)"॥

(८४) ततनुष्टिम्। 'तनिमृङ्भ्यां किच्च (उ० ३, ८५)'—इति तनोतेः तन्प्रत्ययः, नुदेर्निष्ठायां नुत्वं नुष्टिभावः। यद्वा, ततशब्दस्य ततन्भाव, वयेर्वा बाहुलकात् कर्त्तरि क्तिचि सम्प्रसारणे उष्टिः। ततमसन्तानादग्निहोत्रादे कर्मणो नुत्रः प्रेरितः ततनं भोगसन्तानं वष्टि ततनुष्टिः, नलोपाभाव। ततनुष्टिम्। "अपाप शुक्रस्ततनुष्टिमूहति (ऋ० सं० ४, २, ३, ३)"॥

(८५) इलीविशः। इलाशब्द उदकशब्दपर्यायः। इला अन्नम्, अन्नावहेतुभूते उदके वर्त्तते। विले इरे शेते इति 'अधिकरणे शेतेः (३, २, १५)'—इत्यच्। इलाबिले शयो यस्य। निपातश्छान्दसः। मेघ उच्यते। इलाबिलशयः सन् इलीविशः। "न्यविध्यदिलीविशस्य दृळ्हा (ऋ० सं० १, ३, २, २)"॥

(८६) किमेधाः। कियच्छब्दे क्रममाणशब्दे वोपपदे दधातेर्विच्। कियदर्थं विज्ञायमानपरिमाणं स्तवनं धारयति,

क्रममाण वाभिमुख परबल धारयति निरुणद्धीति । कियद्वा क्रममाणधा वा सन् कियेधाः । इन्द्रविशेषः । "वृत्राय वज्र मोशानः कियेधाः (ऋ० स० १, ४, २८, २)" ॥

(८७) भ्रमिः । 'भ्रमे. सम्प्रसारणञ्च (उ० ४, ११७)'— इतीन्प्रत्ययः । अग्निरुच्यते । भ्रमिता । स्वय त्रिष्वपि लोके-ष्वप्रतिहतगतिरित्यर्थ. । अन्तर्णीतण्यर्थो वा भ्रमि. । भ्राम-यिता । "भ्रमिरस्यृविजन्मर्त्यानाम् ( ऋ० स० १, २, ३५, १)" ॥

(८८) विष्पितः । विप्राप्तशब्दस्य विष्पितभाव । यद्वा. विपेर्व्याप्त्यर्थात् क्त, इकारपकारावुपजनौ । विस्तीर्ण इत्यर्थ । "पार नो अस्य विष्पितस्य पर्षन् (ऋ० स० ५, ५, २, १)" ॥

(८९) तुरोपम् । तूर्ण व्याप्नु ग्रोलमस्य णिनि. । तुर्णापि सन् तुरोपम् । उदकमभिधेयम् । "तत्र स्तुरोपमङ्गतम् (ऋ० सं० २, २, ११, ४)" ॥

(९०) रास्पिन. । रपतेर्वा रसतेर्वा कर्मणि भावे वा घञ् । रापो रासो वा शब्दा यस्य तद्रापि रासि वा सत् सकारप-कारोपजनेन रास्पिशब्दो वहुदक स्तोत्र वोच्यते । तदस्या-स्तीत्यर्थ आदित्वादच् प्रकृतिभावश्च द्रष्टव्य. । दण्डिमती शालेति यथा । अतश्च शब्दवदुदक तद्वान्मेघोऽभिधेय. । उच्चार्यमाणेन स्तोत्रेण स्तोता वा । "प्रमातरा रास्पिनस्यायोः (ऋ० स० २, १, १, ४)" ॥

(९१) ऋञ्जति. । धातुनिर्देशात् 'ऋजो भर्जने' भूवादि-रत्र प्रसाधनकर्मविषयस्य समीकरण प्रसाधनमात्मसात् करण तदस्येत्यर्थ । "यजिष्ठमृञ्जसे गिरा (ऋ० स० ३, ५, ८, १)" ॥

(९२) ऋजुनीती । "ऋजुनीती नो वरुण (ऋ० स० १, ६, १७, १)" ॥

(८३) प्रतद्वसू। प्राप्तवसूनौ। पकारलोपश्छान्दसः तकारोपजनेः प्रतद्वसू। हरी विशेष्यौ। "हरी इन्द्र प्रतद्वसू अभिस्वर (ऋ० सं० ६, १, १२, २)" ॥

(८४) हिनोत। 'हि गतौ (स्वा० प०)'। लोटि मध्यम त 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् ङित्वाभावे गुणः प्रहिणुतेत्यर्थः। "हिनोता नो अध्वरं देवयज्या (ऋ० सं० ७, ७, २६, १)" ॥

(८५) चोष्कूयमाणः। (८६) चोष्कूयते। 'ष्कुञ् आप्रवणे (स्वा० उ०)' इह दानार्थः, क्वचिद् व्युदसनार्थश्च। यङि पूर्वत्र लट् शानच्, उत्तरत्र व्यत्ययेन पदम्। "चोष्कूयमाण इन्द्र भूरि वामम् (ऋ० सं० १, २, १, ३)। अत्यर्थं ददादित्यर्थः। चोष्कूयते विश इन्द्रो मनुष्यान् (ऋ० सं० ४, ७, २३, १)"। अत्यर्थं व्युदस्यति ॥

(८७) सुमत्। स्वयमित्यर्थे वर्त्तमानो निपातः। "उप प्रागात् सुमन्मे धायि मन्म (ऋ० सं० २, ३, ८, २)" ॥

(८८) दिविष्टिषु। दिविशब्दोपपदात् इषेर्गत्यर्थादिच्छार्थाद्वा कारणे क्तिन्। यौगम्यते प्रार्थ्यते वा याभिस्ताः। "कुह स्वित् दिविष्टिषु (ऋ० सं० ५, ७, २३, ४)"।

(८९) दूत। जवतेर्द्रवतेर्वारयतेर्वा 'दतनिभ्याम् (उ० ३, ८३, ८५)'—इति बाहुलकात् क्तप्रत्ययो धातूना दूभावश्च। गच्छति हि स, द्रवते वा शैघ्र्यात्, वारयति हि स्वसामर्थ्यादिभिरपरम्। "स्तोमो दूतो हुवन्नरा (ऋ० सं० ६, २, २८, १)" ॥

(१००) जिन्वति। जिवि प्रीणनार्थः भ्वादिः इदित्त्वात् नुम्। "भूमिं पर्जन्या जिन्वन्ति (ऋ० सं० २, ३, २३, ५)"।

(१०१) अमत्र.। अमात्रशब्दस्य ह्रस्व। मात्रा परिमाणमपरिमाणोऽप्यमितो वा यद्विस्थित। मितशब्दस्य मभाव।

"मुहुर्ता धर्मचो वृजने विरप्शी (ऋ० सं० ३, २, १८, ४)" ॥

(१०२) ऋचीषमः । 'ऋच स्तुतौ (तु० प०)' । इप्रत्ययः । 'कृदिकारात् (४, १, ४५ ग० वा०)'—इति ङीप् । ऋची स्तुतिः । तया समः । अधिकगुणाध्यारोपेणापि कृता स्तुतिः नातिरिच्यत इत्यर्थः । "स्तवे वज्रयृचीषमः (ऋ० सं० ७, ७, ६, २)" ॥

(१०३) अनर्शरातिम् । अर्शशब्दोऽश्लीलवाची । रातिः क्तिनि रातिर्दानम् । अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः. पापकदानस्तद्विपरीतोऽनर्शरातिः । उत्कृष्टस्य दातेत्यर्थः । "अनर्शरातिं वसुदामुपस्तुहि (ऋ० सं० ६, ७, ३, ४)" ॥

(१०४) अनर्वा । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)' —इति वनिप् । नञ्समासः । 'अर्वणस्त्रसावनञः (६, ४, १२७)'—इति मत्ववद्भावाभावः । अप्रत्यृतः अप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः । "अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २, ५, १२, १)" । अनर्वाणमप्रतिगतमन्यं प्रत्याश्रितं तथा अपराश्रितमित्यर्थः ॥

(१०५) असामि । असामीत्यनवगतम् । अग्रे च सामिशब्द एवानवगतः । यत आह—'सामि प्रतिषिद्धम् असामि (निरु० ६, २३)'—इति । सामि कस्मात् । स्यतेः समास्यर्थस्येति केचित् । तेन सामि समाप्तं चोच्यते । तस्य नञ् प्रतिषेधः । ततश्च असामि असमाप्तमित्यर्थः । अथवा न सामीति । किन्तर्हि । असुसमाप्तमिति । पाठान्तरेणार्थमाह उदाहरणम् (निरु० ६, २३)—"असाम्योजो बिभृथा सुदानवः (ऋ० सं० १, ३, १८, ५)" । असामि असमाप्तमनन्तमित्यर्थः । सुष्ठु वा असमाप्तं पूर्ववदित्यर्थः । 'स्यतेः कित्'

—इति बाहुलकात् मिन्प्रत्यय। साम्यर्थधर्मसामित्समयमित्यस्य भाष्ये (निरु० ६, २३) द्रष्टव्यम्॥

(१०६) गल्दया। गलदाशब्दो गालनपर्यायः। गल्दया गालनेन चारणेन प्रदानेन पूरणेन वसेनेत्यर्थ। "मा त्वा सोमस्य गल्दया (ऋ० म० ५, ७, १३, ५)"॥

(१०७) जल्हवः। ज्वलते क्षिपि ज्वलन ज्वल्, ज्वलन जहातीति 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्यय पूर्वपदस्य जल्भावश्च निपात्यते। ज्वलनेनाग्निना हीना इत्यर्थ। "नारायासो न जल्हवः (ऋ० म० ६, ४, २७, ६)"॥

(१०८) बकुर। भास्करशब्दस्य भासमानद्रविणशब्दस्य वा बकुरभाव। "अभि दस्यु बकुरेणाधमन्त (ऋ० म० १, ८, १७, १)"। बकुरेण भास्करण दीप्तेन भयङ्करेण वा भासमानगमनेन वा सामर्थ्यात् खेनाशुगेन ज्योतिषा वा॥

(१०९) वेकनाटान। वेक इति द्विशब्दस्यार्थे बहुशो दृष्ट। एक कार्षापणमापणिकाय प्रयच्छन् द्वौ मह्य प्रदातव्याविति वमभिनायन दर्शयन्ति। ततो द्विशब्दादेकशब्दान्नटयतेश्च वेकनाटा.। एतदेतेनाटा द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुण कामयन्ते इति वेति। द्वेरकयोर्नाटा नटन तदस्तो वकनाटा। मत्वर्थीयस्य लुक्। नटेर्घञि नाट। द्वेरक शब्दस्य वेकभाव.। वार्द्धुषिका अभिधेया। "इन्द्रो विश्वान् वेकनाटॉ अहर्दृशः (ऋ० म० ६, ४, ४८, ५)"॥

(११०) अभश्वेतन। धावतेर्लोण्मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च (७, १, ४५)—इति तनबादेश। धावशब्दस्य श्वेभाव.। अभिधावत। "जीराश्वो अभिश्वेतन (ऋ० म० ६, ४, ५१, ५)"॥

(१११) अद्दूर। आङ्पूर्वाद्दत्ते मृगय्वादित्वात् (उ० १,

२६) कुप्रत्ययः । आडो ह्रस्वत्वं रुगागमश्च निपात्यते । आघ्नन्ति येयमो विनश्यन्तीति अंहः पापं, रो मत्वर्थीयः अंहुरः । अंहस्वान् । "तासामिकासिदुर्भ्य हुरोगात् (ऋ० सं० ७, ५, ३३, ६)" ॥

(११२) व्रतः । सत्ववाचो प्रथमान्तः । वलादतीत इति वाक्यस्यार्थे पदम् । वनशब्दादततेर्निष्ठायां च वलातीतः मन् व्रतः दुर्बल इत्यर्थः । व्रत निपातोऽसत्ववचनोऽव्ययम्, खेदो दुःखमानसः, अनुकम्पा दया, तयोर्वर्त्तते । "व्रतो वातासि यम नैव ते मनः (ऋ० सं० ७, ६, ८, ३)"

(११३) वाताप्यम् । आङ्पूर्वादाप्यायतेरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इत्यपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् कर्मणि डः । उदकं हृष्टिलक्षणमभिधेयम् । वातः पुरोवात एव । तद्धस्युदकमाप्याययति वातेनाप्याय्यत इत्यर्थः । अथवा वातो यदाप्याययति कर्मोपपदात् कर्त्तरि प्रत्ययः । वातमाप्याययति वाताप्यम् । "पुनानो वाताप्यं विश्वश्चन्द्रम् (ऋ० सं० ७, ४, ३, ४)" ॥

(११४) चाकन् । चायतेः स्वरितेत्वाल्लटः शतरि यकारस्य ककारो बाहुलकात् । अनेकार्थत्वादिच्छार्थोऽपि । चायन् कामयमानो वा । "वने न वायो न्यधायि चाकन् (ऋ० सं० ७, ७, २२, १)" ॥ शाकल्यपदे चाकन्नित्याख्यातम् । तत्र लटि भियस्य कत्वं "बहुलं छन्दस्यमाङ्योगेऽपि (६, ४, ७५)' । कामयते इत्यर्थः ॥

(११५) रथर्यति । रथमात्मन इच्छतीति क्यचि रथीयतीति प्राप्ते रेफ उपजनो व्यवधानादीत्वाभावः । "एष देवो रथर्यति (ऋ० सं० ६, ७, २०, ५)" ॥

(११६) असक्राम् । सम्पर्वात् समानपूर्वाद्वा क्रमेः 'अन-

मन्त्रमगमो विट् (३, २, ६७)'। छन्दस्युपसर्गेऽपि इति चि तवानुवर्त्तते। 'विड्वनोरनुनासिकः स्यात् (६, ४, ४१)'। धातो लोपश्छान्दसः। 'समानस्य छन्दस्यमूर्द्ध (६, ३, ४)'— इति समानशब्दस्य सभावः। न सक्रा असक्रा तां याञ्चीत-मनपायिनीमच्छजातेरप्रासपूर्वामित्यर्थः। "धेनुं न इषं पिन्वतमसंक्राम् (ऋ॰ सं॰ ५, १, ४, ३)"॥

(११७) आधवः। 'धूञ् कम्पने (स्वा॰ प॰)'। पचाद्यच्। अन्तर्णीतण्यर्थोऽत्र धूञ्। आधावकः। कम्पयतेत्यर्थः। "विप्रा-णामाधुवम् (ऋ॰ सं॰ ७, ७, १३, ४)"

(११८) अनवब्रव'। ब्रूञ्। 'ऋदोरप् (३, ३, ५७)'। छन्द स्युभयथा (३, ४, ११७)'—इत्यपः सार्वधातुकत्वाद् वचादेशो न भवति। ब्रवः वचनम्। अनवचिन्नवचनः। 'प्रादिभ्यो धातुजस्य (२, ४, ७८, वा॰)'—इति समासादिः। अप्रतिहत-शासन इत्यर्थः। "विजेषकृदिन्द्र इवानवब्रवः (ऋ॰ सं॰ ८, ३, १८, ५)"॥

(११९) सदान्वे। सदानोनुवशब्दात् सम्बुद्धौ नोनुवशब्दस्य न्वभावः। दुर्भिक्षाधिदेवता अलक्ष्मी चाभिधेया। सदाकर णनलक्षणशब्दकारिणीत्यर्थः। "गिरिभ्यः सदान्वे (ऋ॰ सं॰ ८, ८, १२, १)"॥

(१२०) शिरिम्बिठः। "शिरिम्बिठस्य सत्वभिः (ऋ॰ सं॰ ८, ८, १२, १)"॥

(१२१) पराशरः। परापूर्वस्य शृणातेः विशरणार्थस्य हिंसार्थस्य वा 'ऋदोरप् (३, ३. ५७)'—इति रूपम्। परा-शीर्णः पराशरः ऋषिः। पराशीर्णस्य स्थविरस्य लविष्ठस्य असा चिरस्थते असौ जात इत्यर्थः। "पराशरः शतयातुर्वसिष्ठः (ऋ॰ सं॰ ५, २, २८, १)"। स्वसां परा मातयिता पराशर इन्द्रः।

"इन्द्रो यातूनामभवत् पराशरः (ऋ० सं० ५, ७, ८, १)" ॥

(१२२) क्रिविर्दती। 'क्षविष्टविच्छविष्वविकिकीदिवि (उ० ४, ५६)'—इति विन्प्रत्ययो रिदादेशश्च निपात्यते। ददातेः शतरि 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुक्। 'उगितश्च (४, १, ६)'—इति ङीप्। क्रिवेर्विकर्त्तनस्य दतो। रेफ उपजनः। शतघ्न्यामायुधविशेषे वर्त्तते। "यत्रा वो दिद्युद्रदति क्रिविर्दती (ऋ० सं० २, ४, २, १)" ॥

(१२३) करूलती। कृत्तदन्तशब्दस्य करूलतीभावः। 'सुपां सुलुक् (७, १, ३८)'—इति सोर्लुक्। स्त्रीलिङ्गप्रतिरूपकमेतत्। 'तत्वः (निरु० ६, ३१)'—इति पुलिङ्गनिर्देशात् पूषोच्यत इति निश्चयः। भग इति पूर्व. पक्षः। तस्मात् 'अदन्तकः पूषा (शत० ब्रा० ८, ७३)'—इति च श्रुतिः। "वामं देवः करूलती (ऋ० सं० ३, ६, २२, ४)" ॥

(१२४) दनः। दानमानस इत्यस्य दनसभावः। दानमानस इत्यर्थः। "दनो विश इन्द्र मृध्रवाचः (ऋ० सं० २, ४, १६, २)" ॥

(१२५) शरारुः। समुपसर्गार्थविशिष्टात् शृणातेः 'शृवन्द्योरारुः (३, २, १७३)'—इति ताच्छील्यादिषु विहित आरुप्रत्ययेन इच्छायां भवति। "शरारुरभिमन्यते (ऋ० सं० ८, ४, २, ४)"। संशिशरिपुः सम्शयिषुर्वा दीर्घनिद्रया हि मन्यते दुष्टेनातिशयेन हि भवति ॥

(१२६) इदंयुः। इत्यनवगतम्। क्वचि मान्ताव्ययमतिषेधात्। 'इदं कामयमान उच्यते (निरु० ६, ३१)'। कर्म इदं सामान्येन प्रदर्शितम्। तथाहि लक्षितं धनादि तद् य इच्छति स इदंयु। शयुः किंयुः विशयुः इत्याद्यवगतानवगतक्यजन्तमात्रोपसङ्ग्रहार्थं निगमेषु पठितम्. न विशेषार्थमिति

निरुक्ताकाराभिप्रायः । अतएव च सामान्यविशेषयोरुदाहरणे-मिदम् । तेषाञ्च "वसूयवो वसुकामाः"—इत्यादि बहुधागतत्वाद् विशेषेण नेह किञ्चित् भाष्यकारेणोदाजहार । कार्थतां दर्शयन्नाह—'अथापि तद्दर्थे भाष्यते (निरु० ६, ३१)' प्रयुज्यत इत्यर्थः । तद्वदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते । तेन तद्दर्थे मत्वर्थे इत्यर्थः । "अश्वयुर्गव्यूरथयुर्वसूयुरिन्द्रः (ऋ० म० १, ४, ११, ४)" ॥

(१२७) कीकटेषु । मन्त्रे समस्यन्त इति तथैव निगमेषु पठ्यते । किं कृता । किं क्रिया वा सन्तः कीकटाः किं कृताः किमर्थमुत्पादिताः अयज्ञाचाराः । अथवा यागदानादिभिः क्रियाभिः कृताभिः पिबत खादतेत्येवमभिप्राया नेह येषां ते किंक्रियाः । "किन्ते कृण्वन्ति कीकटेषु गावः (ऋ० म० ३, ३, २१, ४") । कीकटनामानार्यनिवासे देशे । कृपणा वा कीकटाः ।

(१२८) बुन्दः । (१२९) वृन्दम् । भिन्द इति वा भयद इति वा भासमानो द्रवतीति वाक्यार्थपदवचनं विदारणभयदानभासमानद्रवणलक्षणानामर्थेषु सम्भवात् पदलक्षणवर्णसामान्याच्चेदमुक्तम् । 'वृङ् सम्भक्तौ (स्वा० आ०)' । 'भृमृशुरुभ्यो दनच्'—इति दनप्रत्ययः । वबयोरभेदः । बाहुलकात् गुणभावश्च । अनेकार्थत्वात् पूर्वोक्तार्थवृत्तित्वं बोद्धव्यम् । बुन्दो वज्रम । "सुधर्बुन्दो विरुप्सय. (ऋ० म० ६, ५, ३०, ६)" । "इन्द्रो बुन्दं स्वाततम् (ऋ० मं० ६, ५, ३०, १)" ॥

वृन्देषु शत्रुविदारणभयदारणभयदानभासमानद्रवणरूपा अर्था सम्भवन्ति । प्रसिद्धत्वान्निगमो न प्रदर्शितः ॥

(१३०) किः । करोतेः 'केरो वृधिः'—इति बाहुलकात् डम्-

(१) अग्निः। अग्राद्युपपदात् नयतेः 'सत्सूद्विष (३, २, ६१)' इत्यादिना क्विप्। पृषोदरादित्वात् अग्निः। यद्वा, 'वेञो वयि.'—इति बाहुलकादिन्प्रत्ययोऽग्रशब्दस्य रेफाकारयोर्लोपश्च। अग्रणीः। मुख्यत्वञ्च 'अग्निर्हि देवानां सेनानीः'—इति श्रुतेः। अथ प्रथम यज्ञेषु कर्त्तव्येषु तादर्थ्येन प्रणीयते। अङ्गोपपदाद्वा समर्थविशिष्टात् नयतेः पूर्ववदिकारलोपश्च। अङ्ग शरीरं यज्ञस्य, ततः सन्नममानः स्वयमेव अङ्गीभवन् हविषां पाककरणत्वेन साधनभाव प्रतिपाद्यमानो नयति। नञ्पूर्वात् क्नोपयतेः स्नेहनार्थात् किन्प्रत्यये ककारनकारश्च- निरिङ्गं लुप्यते, ककारस्य गकारापत्तिश्च। नञ्विशिष्टेन स्नेहनेन च तद्विपरीतं विरूक्षणञ्च लक्ष्यते, विरूक्षयतीत्यर्थ, दग्धव्यस्य पधादेः शोषणात् विरूक्षण इत्यर्थः। यद्वा, एतेर- यनमित्यादौ दर्शनादकारः। अञ्जेर्जकारस्य दहेर्हकारस्य च निष्ठाया गकारापत्तिर्द्रष्टव्येति ,तयोरन्यतरस्माद् गकार, नयतेः पूर्ववच्चि। इतश्च अञ्जनमभिव्यक्तं वसुप्रकाशकत्वात्म- कत्वेन वा नयतीत्यग्निः। "अग्निमीळे पुरोहितं (ऋ॰ सं॰ १, १, १, १)" ॥

(२) जातवेदाः। जातशब्दोपपदात् विद्तेर्विदेर्विचारा- र्थाद्वा असुन्, जातानि सर्वाणि भूतानि वेद, लोकपालत्वात्। जाते जाते सर्वस्मिन् भूतजाते विद्यते। जात वेदो हविर्लक्षणं धनमैश्वर्यादि इतरद्वा यस्य सः। जातं वेदो विचारणं यस्य, वैश्वानरविद्ययापि च सततविचार इत्यर्थः। जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वात्, जातं वेदः प्रज्ञानं वा यस्य। "प्र नून जातवेदसम् (ऋ॰ सं॰ ८, ८, ४५, १)"।

(३) वैश्वानरः। विश्वान् नरान् इतो लोकात् लोकान्तरं नयति। इदमर्थेन विश्वानराणां नेतृत्वेन सम्पद्यते वा

(१४६ पृ०)। इह पौत्रे वर्त्तते। यद्वा, नुतशब्दस्य नपाद्-भावः। पुत्रापेक्षया नीचैः सुतरां नुतो हि पौत्रः। तनोतेः 'ग्रसयीतृचरित्सरितनिधनिमस्तृजिभ्य ऊः'। तन्वन्त्यस्यां पयआदिभोगाः इति तनूः गोनाम। अस्याः पयो जायते। पयस आज्यमिति। आज्यं तनूनपात्। अथवा तता अन्तरिक्षे इति ततः आपः। ताभ्य ओषधिवनस्पतयो जायन्ते। ओषधिवनस्पतिभ्योऽग्निर्जायते इति। अग्निस्तनूनपात्। "नर्तूनपाच्चथ ऋतस्य यानान् (ऋ० मं० ८, ६, ८, २)"।

(४) नराशंसः। नरैः ऋत्विग्भिः शस्यतेऽस्मिन् 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। यज्ञ उच्यते। नरैः प्रशस्यते स्तूयते इत्यग्निः। "नराशंसस्य महिमानमेषाम् (ऋ० मं० ५, २, १, २)"।

(५) इल। इलाशब्दो व्याख्यातः पृथिवीनामसु (१० पृ०) "आजुह्वान ईड्यो वन्द्य श्च (ऋ० मं० ८, ६,८, ३)"॥ "होतारमिल प्रथमं यजध्यै (ऋ० मं० २, ८, २२, ३)"॥

(६) बर्हिः। व्याख्यातं महन्नामसु (२५१ पृ०)। बर्हिरेवोक्तं दर्भमयम्। यद्वा, 'वृहि उद्यमने (भू० प०)'—इत्यस्मादिसिः। वबयोरभेदादुक्तम्। अग्निपक्षे परिवृढत्वाद् बर्हि। "प्राचीनं बर्हिः प्रदिशा पृथिव्या (ऋ० मं० ८, ६, ८, ४)"॥

(७) द्वारः। जवतेर्द्रवतेर्वा गतिकर्मणः वारयतेर्वा स्यात्। जवतेर्जकारस्य दकारः, द्रवतेः रेफलोपः, वारयतेरिडागमश्च निपातनात्। गम्यन्ते आभिर्यज्ञगृहम्, अनभिमतो हि ताभिरेव निवार्यते। अग्निपक्षे, ज्वाला आगम्यन्ते आभिः, शीतादिनिवारणम्। "देवीर्द्वारो बृहतीर्विश्वमिन्वा (ऋ० मं० ८, ६, ८, ५)"॥

(८) उषासानक्ता । 'उच्छी विवासे (भू० प०)' 'वश कान्तौ (अदा० प०)'—'इषिरुञ्जिभूसृभ्यः कित्'—इति बाहुलकाच्छकारस्य शकारस्य वा षकारः । 'ग्रहिज्या (६, १, १६)'—इति सम्प्रसारणम् । उच्छति कान्ता वा उषा । नक्तशब्दो रात्रिवचनः । 'उषासोषसः (६, ३, ३१)'—इति उषसादेशः । द्विवचनस्याकारः । अग्निपक्षे, उषा दीप्तिः, तमसो विवासनात्, आहुतिस्तद्युक्ता अनक्त्यग्निमिति । "उषासानक्ता सदतां नियोनौ (ऋ० सं० ८, ६, ८, ६)" ॥

(९) दैव्याहोतारा । उभयत्राकारो द्विवचनस्य । आह्वातारौ देवानाम् । पार्थिवमध्यमावग्नी उच्येते । "दैव्याहोतारा प्रथमा सुवाचा (ऋ० सं० ८, ६, ८, १)" ॥

(१०) तिस्रोदेवीः । प्रथमार्थे द्वितीया । भारतीलासरस्वत्यः । अग्नायी पृथिवीलेति स्त्रियः इति प्रत्यक्षेण पठितायां अपि तिस्रोदेव्य इति सामान्येन पाठात् पृथिवीस्थान भाष्यकारेण ज्ञापितम् । सरस्वती मध्यमस्थाना । "आनो यज्ञं भारती (ऋ० सं० ८, ६, ८, २)"—इति निगमः ॥

(११) त्वष्टा । तूर्णशब्दोपपदादश्नोतेस्तृन्निपात्यते । त्वष्टा मध्यमस्थानः । आप्रीत्वादिह समाम्नातः । तूर्णमश्नुते वायुरूपत्वात् । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्चेति वा दीप्तौ ह्रसौ वैद्युतत्वात् । त्वष्टा पूर्ववन्निपातनम् । अग्निपक्षेऽप्युपपद्यन्ते निर्वचनानि । "देवं त्वष्टारमिह यक्षि विद्वान् (ऋ० सं० ८, ६, ८, ३)" । "उभे त्वष्टुर्बिभ्यतुर्जायमानात् (ऋ० सं० १, ७, १, ५)" ॥

(१२) वनस्पतिः । वनानां पाता । वन्यते सेव्यते इति वनम् । 'पुंसि संज्ञायां घः (३, ३, ११८)' । पतिशब्दो व्याख्यात ईश्वरनामसु (२४० पृ०) । अग्निरन्तरत्र प्रविष्टोऽपि

यतो न दहति अतः पातीति व्यपदिश्यते। पिबतेर्वैतद्रूपम्। यूपपक्षे वनस्पतिविकारत्वाद् वनस्पतिः। पारस्करादित्वात् सुट् (६, १, १५७)। "वनस्पतिः शमिता देवो अग्निः (ऋ० सं० ८, ६, ८, १०४)"। "वनस्पते मधुना दैव्येन (ऋ० सं० ३, १, ३, १)"॥

(१३) स्वाहाकृतयः। स्वाहाशब्दो व्याख्यातो वाङ्नामसु (६० पृ०)। अत्र आरण्यार्थमुक्तमस्य प्रयाजस्य वक्ष्यमाणदेवताशब्दीर्त्तनपरत्वात्, स्वाहास्वाहेत्येव पूर्वं कतिवारमुच्चारणं वा समीक्ष्यमाणदेवताना ताः स्वाहाकृतय उच्यन्ते। "स्वाहाकृत हविरदन्तु देवाः (ऋ० सं० ८, ६, ८, ५)"। "स्वाहाकृतीषु रोचते (ऋ० सं० २, ५, ८, ६)"॥

अश्वः (१)। शकुनिः(२)। मण्डूकाः(३)। अक्षाः (४)। ग्रावाणः (५)। नाराशंसः (६)। रथः (७)। दुन्दुभिः (८)। इषुधिः (९)। हस्तघ्नः (१०)। अभीशवः (११)। धनुः (१२)। ज्या (१३)। इषुः (१४)। अश्वाजनी (१५)। उलूखलम् (१६)। वृषभः (१७)। द्रुघणः(१८)। पितुः (१९)। नद्यः (२०)। आपः (२१)। ओषधयः (२२)। रात्रिः (२३)। अरण्यानी (२४)। श्रद्धा(२५)। पृथिवी(२६)। अप्वा(२७)। अग्नायी (२८)। उलूखलमुसले (२९)। हविर्धाने (३०)। द्यावापृथिवी (३१)। विपाट्छु-

तुद्री (३२)। आली (३३)। शुनासीरौ (३४)। देवीजोष्ट्री (३५)। देवीऊर्जाहुती (३६)। इति षट्त्रिंशत् पदानि ॥ ३ ॥

(१) अश्वः। व्याख्यातोऽश्वनामसु (१२०पृ०)। "यद्वाजिनो देवजातस्य सप्तेः (ऋ० सं० २, ३, ७, २)"। "महादश्वं वसवो निरतष्ट (ऋ० सं० २, ३, ११, २)"।

(२) शकुनिः। शकेः क्विपि शक्। उच्यतेः 'वेञो डित्'—इति बाहुलकात् डिदिन्प्रत्यये उदस्तलोपः। शक्नोत्युन्नेतुमात्मानं शकुनिः ककारस्य जश्त्वाभावः। शक्नोत्युन्नयनादिक्रियाः कर्तुम्। "सुमङ्गलश्च शकुने भवासि (ऋ० सं० २, ८, ११, १)"॥

(३) मण्डूकाः। मस्जेः 'शलिमण्डिभ्यामूकन् (उ० ४, ४२)'—इति बाहुलकादूकनि जश्त्वचुत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वात् जकारस्य डकारापत्त्या अन्त्यात् पूर्वस्य नुमि णत्वम्। निमज्जन्ति हिते जले। मदतेस्तृप्त्यर्थात् मन्दतेर्वा मोदत्यर्थात् पूर्ववदूकन् रूपसिद्धिश्च। नित्यमदत्वात्, नित्यतृप्तत्वात् नित्यहृष्टत्वाद्वा मण्डूकाः। मण्डतेर्वा यथाप्राप्ते ऊकनि मण्डूकाः। यद्वा, मण्डो मदतेः। 'गेहे कः (३, १,१४४)'—इति बाहुलकात् कप्रत्यये रूपसिद्धिश्च मण्ड उदकम्। हृष्यन्ति हि तत्र स्नानपानावगाहार्थिनः। मण्डे ओको निवास एषां मण्डशब्दादोकशब्दाच्च मण्डूकाः। "प्र मण्डूका अवादिषुः (ऋ० सं० ५, ७, ३, १)"॥

(४) अक्षाः। अश्नोतेः 'अशेर्देवने (उ० ३, ६२)'—इति सप्रत्ययः। अश्नुवन्ते व्याप्नुवन्ति शृङ्खत्वेनानुदेवितार।

प्रतिघ्नामुवन्त्येभिः परस्परमिति वा। "प्रधैर्मा दोधतः क्षुधिमित् क्षुषस्व (ऋ० सं० ७, ८, ५, ३)" ॥

(५) ग्रावाणः। व्याख्यातः पदनामसु (४८ पृ०)। "ग्रावभ्णो वाचं वदता वदद्भ्यः (ऋ० सं० ८, ४, ८, १)" ॥

(६) नाराशंसः। नरान् शंसतीति कर्मोपपदेऽण्, 'अन्येषामपि दृश्यते (६, ३, १३७)'। ततः प्रज्ञादित्वात् स्वार्थिकोऽण्। नराशंस एव नाराशंसः। मन्त्रोऽयमभिप्रेयः। "धर्मन्त्रांस्तोमान् प्र भरे मनीषा (ऋ० सं० २, १, ११, १)" ॥

(७) रथः। रंहतेर्गतिकर्मणः। 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २, २)'—इति क्थन्, बाहुलकाचकारहकारलोपश्च। गच्छत्यनेन। स्थिरतेर्निरुक्तधातुः। विपरीताचर। 'पुंसि संज्ञायां घः (३, ३, ११८)'। सकारिकारयोर्लोपः। दृढगठितत्वात् स्थिरो हि सः। यद्वा, रमतेस्तिष्ठतेश्च द्विधातुजं रूपम्। रममाणो विस्मन्त्रोऽस्मिंस्तिष्ठति रथी। यद्वा, रमतेरेव यथाप्राप्तः क्थन्। रमणीयो हि रथः। रंहतेर्वा अस्यार्थात् पूर्वसूत्रेण बाहुलकात् क्थनि सकारलोपः। भवति हि तस्यागस्त्य उपलब्धि। "तत्रा रथमुप शग्मं सदेम (ऋ० सं० ५, १, २०, ३)" ॥

(८) दुन्दुभिः। शब्दानुकरणनिमित्तकमेतन्नाम। द्रुमशब्दस्य वा रेफान्तलोपः। भिदेर्धात्वन्तविपर्यय उकारश्चोपजनः। दुन्दुभ्यतेर्वा शेरुक्तधातोर्वधकर्मणः इन्। नादयति ह्यसौ युद्धसमये। "स दुन्दुभे सजूरिन्द्रेण देवैः (ऋ० सं० ४, ७, ३५, ४)" ॥

(९) इषुधिः। इषवो निधीयन्तेऽस्मिन्। कर्मण्यधिकरणे च (३, ३, ९३)'—इति किः। "इषुधिः सङ्काः पृतनाश्च सर्वाः" ॥

(१०) हस्तघ्नः। हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन वा। 'घञर्थे कविधानम् (३,३,५८ वा० २)'—इति क। हस्तघ्नो विश्वा वयुनानि विद्वान् (ऋ० सं० ५, १, २१, ४)" ॥

(११) अभीशवः। व्याख्याता रश्मिनामसु (२७पृ०)। निगमश्च दर्शितः ॥

(१२) धनु। धन्वतेर्गत्यर्थाद् वधार्थाद्वा 'ऋतिस्तृपियजितनिधनितपिभ्यो नित् (उ० २, १०७)'—इति बाहुलकादुसिः प्रत्ययो वकारलोपश्च। धनिर्मारणार्थ इति चोरस्वामी। यथाप्राप्त उसिः। धन्वन्त्यपनयन्त्यस्मादिषवः, घ्नन्ति वा। "धनुः शत्रोरपकामं कृणोति (ऋ० स० ५, १, १८, २)" ॥

(१३) ज्या। जयतेर्जिनातेर्वाऽन्तर्णीतण्यर्थाद् वा 'मध्यविध्यशिवश्च'—इत्यादिना यक्प्रत्ययो धातोर्जकारभावश्च निपात्यते। 'अघ्न्यादयश्च (उ० ४, १०८)'—इति निपातनम्। जयसाधनं हि ज्या। "धन्वज्ज्रा इयं समने पारयन्ती (ऋ० स० ५, १, १८, ३)" ॥

(१४) इषुः। इषतेर्गतिकर्मणो वधार्थाद्वा 'इषेः किच्च (उ० १, १३)'—इति उप्रत्यय। गच्छति शत्रून्, हन्ति वा तान्। "तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ५, १, २१, १)" ॥

(१५) अश्वाजनी। अश्वा अज्यन्ते क्षिप्यन्ते प्रेर्यन्तेऽनया। ल्युट्, 'वा यौ (२, ४, ५७)'—इति वीभावविकल्पः, टित्वात् ङीप्। अश्वानामजनी अश्वाजनी कशोच्यते। "अश्वाजनि प्रचेतस. (ऋ० सं० ५, १, २१, ३)" ॥

(१६) उलूखलम्। उरु विस्तीर्णं खल सुखमस्य, ऊर्ध्वं वा

इकारलोपो द्रष्टव्यः। "या ओषधीः पूर्वा जाता (ऋ० स० ८, ५, ८, १)" ॥

(२३) रात्रि। प्रोपसर्गार्थ विधिविहीन मन्तर्णीतण्यर्थात् रमतेः 'राशदिभ्यां त्रिप् (उ० ४, ६७)'—इति बाहुलकात् त्रिप्प्रत्ययो मकारस्याकारश्च रातेर्वा त्रिप्प्रत्ययो यथाप्राप्त। प्ररमयन्ति भूतानि नक्तचारीणि, उपरमयन्ति दिवाचराणि स्वव्यापारेभ्य., प्रदीयन्तेऽस्यामवश्यायाः सूक्ष्मेन। "आ रात्रि पार्थिवं रजः (य० वा० स० ३४, ३२)" ॥

(२४) अरण्यानी। अपपूर्वात् रियातेर्गतिकर्मणो नञ्-पूर्वाद्रमतेर्वा अघ्न्यादित्वात् (उ० ४, ११८) ?त्प्रत्यये रूपसिद्धिर्निपात्यते। अपार्णमपगतं ग्रामाद्वि अरमणं वा, न हि तद्रमयति अरण्यं वनम्। अरण्यपालयित्री अधिदेवता काचित् नैरुक्ताः। महदरण्यमिति वैयाकरणा.। 'हिमारण्ययोर्महत्त्वे (४, १, ४९, वा० १)'—इति विधीयते। "अरण्यान्यरण्यानि (ऋ० स० ८, ८, ४, १)" ॥

(२५) श्रद्धा। श्रत् सत्यम्, तस्मिन् धीयते। तथाच मन्त्रः "श्रद्धामनृते दधात्‌न श्रद्धां सत्ये प्रजापतिः"—इति। 'आतश्चोपसर्गे (३, ३, १०६)'—इत्यङ्। 'श्रच्छब्दस्योपसङ्ख्यानम्' इत्युपसर्गसंज्ञा।' धर्मार्थसुखापवर्गेषु यथाशास्त्रमधिकृतः पुरुषस्य कर्मानुष्ठानहेतुभावप्रख्यानात् बुद्ध्यधिदेवता श्रद्धा। "श्रद्धयाग्निः समिध्यते (ऋ० स० ८, ८, ९, १)" ॥

(२६) पृथिवी। 'प्रथ प्रख्याने (भू० आ०)'। 'प्रथेः षिवन् सम्प्रसारणञ्च (उ० १, १४९)'। 'षिद्गौरादिभ्यश्च (४, १, ४१)'। पृथ्वीत्यर्थः। "स्योना पृथिवि भव (ऋ० स० १, २, ६, ५)" ॥

(२७) अप्वा। व्याख्यातं नैगमे संनिगमम् ॥

(२८) अग्नायी। अग्नेः पत्नी। 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः (४, १, ३७)'—इत्यैकारादेशः, पुंयोगलक्षणादीष्। "अग्नायीं सोमपीतये (ऋ० सं० १, २, ६, २)"॥

(२९) उलूखलमुसले। उलूखलं व्याख्यातम्। मुहुःशब्दोपपदात् सर्तेः 'पुरूलोरलमुसलकुवल'—इत्यादिना अलप्रत्ययो टिलोपो मुहुःशब्दस्य मुसभावश्च निपात्यते। उत्क्षिप्योत्क्षिप्य निपातनात् मुहुः सरणं मुसलं द्विवचनम्। "आयजी वाजसातमा (ऋ० सं० १, २, २६, २)"। अवैधवत् श्रुतिरसत्यपि लिङ्गयोगे॥

(३०) हविर्धाने। सोमलक्षणानि हवींषि विधीयन्ते ययोः। "आ वामुपस्थमद्रुहा (ऋ० सं० २, ८, १०, ६)"। पूर्ववदुदाहरणत्वम्॥

(३१) द्यावापृथिवी। दिवो द्युत्यर्थात् 'दिवेर्डिविः'—इति डिविप्रत्ययः। द्योतत इति द्यौः। पृथिवी व्याख्याता (८ पृ०)। द्यौश्च पृथिवी च 'दिवोद्यावा (६, ३, २९)'—इति द्यावादेशः। 'वाच्छन्दसि (६, १, १०६)'—इति पूर्वसवर्णः। "द्यावा नः पृथिवी इमम् (ऋ० सं० २, ८, १०, ५)॥

(३२) विपाट्छुतुद्रौ। 'पट गतौ (दि० आ०)' 'पश बाधनस्पर्शनयोः (चु० प०)' विपूर्वः। आप्लृ व्याप्तौ (स्वा० प०)' विप्रपूर्वः। णिजन्तात् 'क्विब्वचि (३,२,१७८,वा० १)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशादिष्टसिद्धिः'—इत्युक्ते क्विपि प्रशब्दस्य रेफलोपादि। विविधं कूलपाटनात्, विपाशनात्। अपुत्रस्योद्भूतमोहत्तेर्मुमूर्षोर्वसिष्ठस्य कण्ठे शिलाबन्धने साधनभूताः पाशा अस्याम्। विविधदेशप्रापणाद्वोदकस्यापनत्वात् विपाट्। शुतुद्री शुद्राविणीत्यर्थः। आशुतुन-

द्राविर्भीमन्देभ्यो वा। आशुतुन्नं प्रतोदे द्रवतीति शतुद्री। विपाट् च शुतुद्री च विपाट्छुतुद्री पूर्वसवर्णः। "विपाट्छुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"।

(३३) आर्त्नी। अर्त्तेः रिपतेर्वा 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नि. (उ०।४, ५१)'—इति बाहुलकात् निप्रत्ययो धातोरार्त्तभावश्च। 'कृदिकारात् (४,१,४५, वा० १)'—इति ङीप्। गते ज्यया कृष्यमाणे सङ्गच्छेते हिंसासाधने वा भवत.। "आर्त्नी इमे विस्फुरन्ती अमित्रान् (ऋ० सं० ५, १, १८, ४)"॥

(३४) शुनासीरौ। शुशब्दार्थविशिष्टात् 'शुन गतौ (तु० प०)'—इत्यस्मात् इगुपधलक्षण. कः (३, १, १३५)। क्षिप्रं शच्छत्यन्तरिक्षमिति शुनो वायु। यद्वा, शुशब्दोपपदान्नयतेर्गतिकर्मणः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति ड। भाष्ये तु शु एतदर्थतो निर्वचनं प्रायेण। सर्त्तेः 'डिण्डीरवानीरगभीरगम्भीरकुम्भीरशोरकाश्मीरजम्बीरकीरतीरादय'—इति ईरन्प्रत्ययष्टिलोपश्च निपात्यते। सदा सरणात् शीर आदित्यः। शुनश्च शीरश्च 'देवताद्वन्द्वे च (६, ३, २६)'—इत्यङ्। "शुनासीराविमां वाचं जुषेथाम् (ऋ० सं ३, ८, ८, ५)"॥

(३५) देवीजोष्ट्री। देवशब्दः पचाद्यजन्तः। देवडिति पाठात् 'टिड्ढाणञ् (४, १, १५)'—इति ङीप्। जुषतेष्ट्रन् प्रत्ययः (उ० ४, १५४)। षित्त्वात् ङीष् (४, १, ४१)। देव्यौ जोषयित्र्यौ। पूर्वसवर्णः। द्यावापृथिव्यौ, अहोरात्रे वाभिधेये। सस्यसमे इति कात्थक्य। सस्यं व्रीहि, समा संवत्सरः। "देवी जोष्ट्री वसुधिती ययो". (निरु० ८, ४२)"।

(३६) देवी ऊर्जाहुती। ऊर्क् शब्दो व्याख्यातोऽन्ननामसु

(१०४ पृ०)। आह्वयते: लिचि 'वचिस्वपि (६, १, १५)'— इति सम्प्रसारणम्, 'हल: (६, ४, २)'—इति दीर्घाभावो ब्यत्ययेन। ऊर्क्शब्दात् हेतौ तृतीया। ऊर्जा हेतुभूतया आह्वातव्ये। ऊर्क् इत्यत्र 'सावेकाच: (६, १, १६८)'—इति विभक्तेरुदात्तत्वम्, आहुतिशब्दोऽपि 'तादौ च निति, कृत्यत्तौ (६, २, ५०)'—इति आद्युदात्तः, 'एकादेश उदात्तेनोदात्तः (८, २, ५)'। "देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् (य० वा० सं० २१, ५२)" ॥

इति पृथिवीस्थानदेवताः ॥ १ ॥

वायुः(१)। वरुणः(२)। रुद्रः(३)। इन्द्रः(४)। पर्जन्यः(५)। बृहस्पतिः(६)। ब्रह्मणस्पतिः(७)। क्षेत्रस्य पतिः(८)। वास्तोष्पतिः(९)। वाचस्पतिः(१०)। अपान्नपात्(११)। यमः(१२)। मित्रः(१३)। कः (१४)। सरस्वान् (१५)। विश्वकर्मा (१६)। तार्क्ष्यः (१७)। मन्युः (१८)। दधिक्राः (१९)। सविता (२०)। त्वष्टा (२१)। वातः (२२)। अग्निः (२३)। वेनः (२४)। असुनीतिः (२५)। ऋतः (२६)। इन्दुः (२७)। प्रजापतिः (२८)। अहिः (२९)। अहिर्बुध्न्यः (३०)। सुपर्णः (३१)। पुरूरवाः (३२)। इति द्वात्रिंशत् पदानि ॥ ४ ॥

(१) वायु। 'वा गतिगन्धनयोः (अदा० प०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)'। 'आतो युक् चिण्कृतोः (७, ३, ३३)'। यद्वा, वेतेर्गतिकर्मणो बाहुलकादुण

यद्वा, 'छन्दसीणः (उ० १, २)'—इत्युणि वकारोपजनः । गच्छ-त्यन्तरिक्षे । वायवा याहि दर्शतेमे (ऋ० सं० १, १, ३, १)" ॥

(२) वरुणः । 'वृञ् वरणे (स्वा० उ०)' । कृवृदारिभ्य उनन् (उ० ३, ५०) । अन्तरिक्षे उदकमावृणोतीति । "नीचीनबारं वरुणः कबन्धम् (ऋ० सं० ४, ४, ३२, ३)" ॥

(३) रुद्रः । रौतेः क्विपि । रुत्शब्दं करोति । 'आतोऽनुपसर्गे कः (३, २, ३)' । यो रुवन् एति, रौतीति वा । शब्दं ग्रयति । रोरूयमाणोऽत्यर्थं शब्दं कुर्वन् मेघोदरस्थो द्रवतीति, रोरूयमाणशब्दपूर्वाद् द्रवतेर्वा 'रोदेर्णिलुक् च (उ० २, २०)'—इति रक् । स हि शत्रुकालवाणि रोदयति रुदेरेव वा णिजन्तात् बाहुलकाद्रक् । 'इन्द्रः किं पितरं प्रजापतिमिथुना चिच्छेद तमनुशोचन्नरुदद् यदरुदत्तद्रुद्रस्य रुद्रत्वम् (ह० आ० ३, ८, ४)'—इति काठकम् । 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्'—इति हारिद्रवकम् । "इमा रुद्राय स्थिरधन्वने गिरः (ऋ० सं० ५, ४, १३, १)" ॥

(४) इन्द्रः । इराशब्द उपपदे दृणातेर्दधातेर्दारयतेर्वा 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २, २७)'—इति रक्प्रत्ययान्तो निपात्यते । निपातनाद्रूपसिद्धिरवगन्तव्या । इरा अन्नमनेन सम्बन्धाद्वा तद्धेतुभूतक वस्तु लक्ष्यते । तेन वलक्षितलक्षणया तदाधारभूतो मेघः । इरां मेघं धारात्मना दृणाति विदारयति । बीजं व्रीह्यादि तथासौ वृष्टिप्रदानेन विदारयति । अङ्कुरोद्भेदेनाभिकामस्य विदारणम् । इरामन्नं तद्ददाति वा । इरा दधाति धारयति वा । इन्द्वायुपपदे द्रवतेः रमतेर्वा निपातनम् । इन्दवे द्रवति गच्छति सोमं पातुमित्यर्थः । इन्दौ रमतेऽतिप्रियत्वात् नान्यत्र । इन्धेर्वा निपातनम् ।

इन्धे दीपयति शरीरमध्यवर्त्ती पञ्चवृत्तिः प्राणो वायुः। शरीरभूतादि इध्यते वा प्राणैः। शरीरमध्यवर्त्ती प्राणभावेन चेतनसम्बन्धकः। प्राणैर्योगादिभिर्योगबलेन वा सम्यगाभिमुख्येन दीपयति आत्मोपासकाः। इदमुत्पादीकरोति पश्यति वा इन्द्रः। इदं कृत्स्नं जगद् वृष्टिप्रदानद्वारेण करोति लोकपालत्वात्, अस्य सर्वस्य शुभाशुभकर्मणो द्रष्टा वा। इदुपपदे दारयतेर्द्रावयतेर्वा इन्द्रपदम्। इताश्च शत्रूणां दारयिता द्रावयिता च। यद्वा, इताश्च यज्वनामादरयिता च। सर्वत्र निपातनाद्रूपसिद्धिः। "सुहान्तमिन्द्र पर्वतं वियद्वः (ऋ० सं० ४, १, ३२, १)" ॥

(५) पर्जन्यः। तृपेरन्तर्णीतण्यर्थात् क्विपि तर्पयतीति तृप्। जनहितो जन्यः हितार्थे यत्। तृप् चासौ जन्यश्चेति तृप्शब्दस्य परभावः। परशब्दोपपदात् जायतेर्जनयतेर्वा अन्नादित्वात् यत्, नुम्, परशब्दान्तो लोपश्च निपात्यते। परः प्रकृष्टो जेता जनयिता वा। प्रसशब्दोपपदादर्जयते वा अन्नादित्वान्निपातनत्वेन पर्जन्यः प्रकर्षेणोपार्जयिता सङ्ग्रहीता रसानाम्। "यत् पुर्जन्यः स्तुनयुन् हन्ति दुष्कृतः (ऋ० सं० ४, ४, २७, २)" ॥

(६) बृहस्पतिः। बृहच्छब्दो व्याख्यातो महन्नामसु (२४७ पृ०) पतिशब्दस्तु ईश्वरनामसु (२४० पृ०)। अत्र पिबतेरपि बाहुलकात् पतिः। बृहतः सोमरसस्य वाय्वात्मना पाता पालयिता रक्षिता वा। पिता रक्षयिता महतो जगतो वा। "बृहुस्पतिर्विरवेणा विकृत्य (ऋ० सं० ८, २, १८, २)" ॥

(७) ब्रह्मणस्पतिः।

(८) क्षेत्रस्य पतिः। 'क्षि निवासगत्योः (तु० प०)'। 'गुधृवीपचिवचियमिमनितनिसदिचदिभ्यस्त्रन् (उ० ४, १६२)'—

इति वनूप्रत्ययः। निवसन्ति हि येन च हेतुभूतेन, तस्य पाता। "चेर्वस्तु पतिना युयम् (ऋ० सं० ३, ८, ८, १)" ॥

(८) वास्तोष्पतिः। 'वस निवासे (भू० प०)' 'वसेस्तुन् णिच्च' इति। सामर्थ्यात्तच्च वास्त्वन्तरिक्षम्, तस्य पाता विभुत्वेन। "अमी वुहा वास्तोष्पते (ऋ० सं० ५, ४, २२, १)" ॥

(१०) वाचस्पतिः। प्राणात्मेन्द्रः। अतः प्राणस्य वायू-पतयाप्यवस्थानात् प्राणो वाचस्पतिरिति व्यपदिश्यते। "पुन-रेहि वाचस्पते (अथ० सं० १, १, २)" ॥

(११) अपान्नपात्। तनूनपात् व्याख्यातः (३७५पृ०)। "अपान्नपान्मधुमतीरुपोद्गाः ( ऋ० स० ७, ७, २४, ४)" ॥

(१२) यमः। मध्यस्थानो वायुः। यच्छति प्रयच्छति स्तोतृभ्यः कामानि। पचाद्यच्। "यमं राजानं हविषा दुवस्य (ऋ० सं० ७, ६, १४, १)" ॥

(१३) मित्रः। प्रमीतात्त्रणात् चायते। 'सुपि स्थः (३, २, ४)'—इत्यत्र- सुपीति योगविभागात् प्रमीतशब्दस्य मिद्भावः। यद्वा, 'डुमिञ् प्रक्षेपणे (स्वा० उ०)'। यद्वा, 'मिवि मिवि सेचने (भू० प०)'। सम्मिन्वानः सम्यक् दृष्टिं प्रक्षिपन् सम्यक् सिञ्चन् वा द्रवत्यन्तरिक्षे। मिन्वानशब्दस्य मिद्भावः, द्रवतेः डप्रत्ययान्तस्य त्रभाव.। 'ञि मिदा स्नेहने (भू० आ०)' अन्तर्णीतण्यर्थः। 'अमिचिमिमिदिशसिभ्य. क्त्रः (उ० ४, १५८)'—इति क्त्रप्रत्ययः। णिजन्ताद्वा बाहु-लकाद्रूपसिद्धिः। सर्वमस्यान्युदकेन स्नेहयति। "मित्रो जना-न्यातयति ब्रुवाणः (ऋ० सं० ३, ४, ५, १)"। 'ञिमिदा स्नेहने (भू० आ०)' अन्तर्णीतण्यर्थः ॥

(१४) कः। कमेः क्रमेर्वा 'अन्येष्वपि दृश्यते (१, २, १०१) —इति डप्रत्यये क्रमते रेफलोपो बाहुलकात्, 'प्रजापतिरका

मयत'—इति बहुकामत्वात् क प्रजापतिः। क्रमणो वा क्रमयत्यन्तरिक्षे। कमिति सुखनाम, सुखो वा दृष्टिप्रदानादिना। "कस्मै देवाय हविषा विधेम (ऋ० स० ८, ७, ३, १)" ॥

(१५) सरस्वान्। सर इत्युदक, तेन तद्वान्। "ये ते सरस्व ऊर्मयः (ऋ० स० ५, ६, २०, ५)"।

(१६) विश्वकर्मा। करोतेः कर्त्तरि मनिन्। मध्यमस्थानो वायुः। वृष्टिद्वारेण सर्वस्य कर्त्ता सर्वचेष्टानां तदधीनत्वात्। "विश्वकर्मा विमना आदिद्विहाया (ऋ० स० ८, ३, १७, २)" ॥

(१७) तार्क्ष्य। स्तीर्णशब्दे तूर्णशब्दे चोपपदे क्षियतिश्च वतिरक्षत्यश्नातिभ्योऽग्न्यादित्वात् (उ० ४, १८) यत्प्रत्ययादि निपात्यते। स्तीर्णे विस्तीर्णेऽन्तरिक्षे क्षियति चरति रक्षत्य- श्नाति, तूर्णं वार्थमुदकाद्य क्षियति चरति वा, अश्नुते वा तम। "स्वस्तये तार्क्ष्य मिहाहुवेम (ऋ० स० ८, ८, २६, १)" ॥

(१८) मन्यु। व्याख्यात क्रोधनामसु (१८६पृ०)। दीप्त क्रुद्धो वा। "त्वया मन्यो सरथमारुजन्तो (ऋ० स० ८, ३, १८, १)" ॥

(१९) दधिक्रा। व्याख्यातोऽश्वनामसु (१२१पृ०)। दधत्सारयद् इत्युदकमन्तरिक्षे क्रामति गच्छति, क्रन्दति स्तनयितुलक्षण शब्द करोति। "आ दधिक्रा शवसा पञ्च कृष्टी (ऋ० स० ३, ७, १२, ५)" ॥

(२०) सविता। 'षु प्रसवैश्वर्ययो (भू० प०)'। तृचि 'स्वरतिसूतिसूयतिधूञूदितो वा (७, २, ४४)'। सर्वकर्मणो

वृष्टिप्रदानादिना सविता, अभ्यनुज्ञाता। "सविता यन्त्रैः पृथिवीमरम्णात् (ऋ० सं० ८, ८, ७, १)"॥

(२१) त्वष्टा। व्याख्यात (२७७ पृ०)। "देवस्त्वष्टा सविता विश्वरूपः (ऋ० सं० ३, ३, ३१, ४)"॥

(२२) वातः। वातेः, 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् (उ० ३, ८३)'। वाति वातः। "वात आ वातु भेषजम् (ऋ० सं० ८, ८, ४४, १)"॥

(२३) अग्निः। व्याख्यात (२७४ पृ०)। इह मध्यमोऽभिधेयः। "मरुद्भिरग्न आ गहि (ऋ० सं० १, १, ३६, १)"॥

(२४) वेनः। वेनतेः कान्तिकर्मणो पचाद्यच् (३, १, १३४)। कान्तो दीप्तो मध्यमस्थान। "अयं वेनश्चोदयत् पृश्निगर्भाः (ऋ० सं० ८, ७, ७, १)"॥

(२५) असुनीतिः। असुशब्दे उपपदे नयतेः 'क्तिच्क्तौ च संज्ञायाम्' बहुलम् (३, ३, ११३)'—इति क्तिन्। असून् नयतीति असुनीतिः। स च मध्यमः प्राणः। प्राणश्च वायुः। स हि शरीरादुत्क्रामन्तोऽसून् नयति। विज्ञायते हि प्राणा उत्क्रामन्तं सर्वेऽनूत्क्रामन्ति। "असुनीते मनो अस्मासु धारय (ऋ० सं० ८, १, २२, ५)"॥

(२६) ऋतः। 'ऋ गतौ (भू० प०)'। गत्यर्थात् कर्त्तरि क्तः। अर्त्ता गन्ता अन्तरिक्षे। "ऋतस्य हि शुरुधः सन्ति पूर्वीः (ऋ० सं० ३, ६, १०, ३)"॥

(२७) इन्दुः। इन्देः, 'भृमृशीङ्चरित्सरितनि (उ० १, ७)'—इत्यादिना बाहुलकादुप्रत्ययो धकारस्य दकारश्च। उनत्तेर्वा 'उन्देरिच्चादेः' (उ० १, १२)'—इत्युप्रत्यय। दीप्यते उनत्ति वा वर्षेण। "प्र तद्वोचेयं भव्यायेन्दवे (ऋ० सं० २, १, १९, १)"॥

(२८) प्रजापतिः। प्रजानां पाता। "प्रजापते न त्वदेतान्यन्यः (ऋ॰ सं॰ ८, ७, ४, ५)"॥

(२९) अहिः। व्याख्यातो मेघनामसु (५७ पृ॰)। इह त्विन्द्रोऽभिधेयः। "प्रभ्रामुकथैरहिङ्गृणीषे (ऋ॰ सं॰ ५, ३, २६, ६)"॥

(३०) अहिर्बुध्न्यः। योऽहिः स एव बुध्न्यश्चेति समानाधिकरणत्वादहिर्बुध्न्यशब्दोऽसमस्तः। तथाच 'अहिना बुध्न्येन (३, १, १२ ऐ॰ ब्रा॰)'—इति श्रुतौ लिङ्गम्। "मनोऽहिर्बुध्न्यो रिषे धात् (ऋ॰ सं॰ ५, ३, २६, ७)"।

(३१) सुपर्णः। व्याख्यातो रश्मिनामसु (३१ पृ॰)। इह शोभनगमनत्वान्मध्यम उच्यते। "एकः सुपर्णः स समुद्रमाविवेश (ऋ॰ सं॰ ८, ६, १८, ४)"॥

(३२) पुरूरवाः। पुरुशब्दोपपदात् शब्दार्थविधिष्टात् रौतेरसुनि 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति पूर्वपदस्य दीर्घः। अनेकविधमित्यर्थः। स्तनयित्नुलक्षणं शब्दं करोति पुरूरवाः। विज्ञायते हि वाता प्राणा एव पुरूरवा इति "गृहे यस्त्वा पुरूरवो रणाय (ऋ॰ सं॰ ८, ५, १, २)"।

श्येनः (१)। सोमः (२)। चन्द्रमाः (३)। मृत्युः (४)। विश्वानरः (५)। धाता (६)। विधाता (७)। मरुतः (८)। रुद्राः (९)। ऋभवः (१०)। अङ्गिरसः (११)। पितरः (१२)। अथर्वाणः (१३)। भृगवः (१४)। आप्त्याः (१५)। अदितिः (१६)। सरमा (१७)। सरस्वती (१८)। वाक् (१९)। अनुमतिः (२०)। राका (२१)।

सिनीवाली (२२) । कुहूः (२३) । यमी (२४) । उर्वशी (२५)। पृथिवी (२६)। इन्द्राणी (२७) । गौरी (२८) । गौः (२९) । धेनुः (३०)। अघ्न्या (३१)। पथ्या (३२) । स्वस्तिः (३३)। उषाः (३४) । इळा (३५) । रोदसी (३६) । इति षट्त्रिंशत् पदानि ॥ ५ ॥

(१) श्येनः । श्येनोऽश्वनामसु व्याख्यातः (१२६पृ०)। इह मध्यमोऽभिधेयः। "आदाय श्येनो अभरत् सोमम् (ऋ० सं० ३, ६, १५, ७)" ।

(२) सोमः । 'षुञ् अभिषवे (स्वा० उ०)' । 'अर्त्तिस्तुसुहु-धृषि (उ० १, १३७)'—इति मन् । सूयते सोमः । "पवस्व सोम धारया (ऋ० सं० ६, ७, १६, १)" ॥

(३) चन्द्रमाः । चायनात् द्रमतेरसुन् । चायन्शब्दस्य चन्भावः। चायन् पश्यन् लोकपालत्वात् द्रमन् गच्छति । यद्वा, चन्द्रशब्दे उपपदे मातेश्च 'चन्द्रे मो डित् (उ० ४, २२२)'—इत्यसुन्। चन्द्रस्यासौ निर्माता। चन्द्रमानं निर्माणमाह्लनः कर्मणां वास्य। यद्वा, चान्द्र चन्द्रसम्बन्धि मानमस्य, चान्द्रमाः सन् ह्रस्वत्वेन चन्द्रमाः। यद्वा, चारुशब्दे उपपदे द्रवतेरसुनि बाहुलकाद्रूपसिद्धिः। चारु शोभनं द्रवति गच्छति मन्दगतित्वात् वा। चिरं द्रवति वा। "प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ० सं० ८, ३, २३, ४)"।

(४) मृत्युः। म्रियतेरन्तर्णीतण्यर्थात् 'भुजिमृङ्भ्यां युक्त्युकौ (उ०, ३, १८)'—इति त्युक्प्रत्ययः। मारयति प्राणिनः, मृतं च्यावयतीति वा। मृतमिति वर्त्तमानसामीप्ये भासय-

मृत्युं चरमोच्छ्वासकाले शरीरात् च्यावयति। अथवा, मत चीणायु संस्कार उच्यते, तम् मृतं मध्यमः प्राणः शरीरात् च्यावयतीति मृत्युः। मृतशब्दोपपदात् च्यावयतेः 'अन्ना-दयश्च (उ० ४, १०८)'—इति उप्रत्ययः, मृतान्तलोपः, च्याव-यतेस्तुभावश्च निपात्यते। "परं मृत्यो अनु परेहि पन्थाम्' (ऋ० सं० ७, ६, २६, १)"।

(५) विश्वानरः। 'अपि वा विश्वानर एवेति व्याख्यातम् (निरु० ७, २१)'। "अर्चा विश्वानराय विश्वाभुवे' (ऋ० सं० ४, १, ८, १)"।

(६) धाता। (७) विधाता। व्युपसर्गार्थविशिष्टात्तदुप पदाच्च धाजस्तृच्। यथकर्मणा सर्वं स वि दधाति। "धाता ददातु दाशुषे (अथ० सं० ७, १, ६, २)"। "धातुर्विधातः कलशां असश्चयम् (ऋ० सं० ८, ८, २५, ३)"।

(८) मरुत.। व्याख्याता. (२८०पृ०)। मितं रुवन्ति स्तनयित्नुलचण शब्दं कुर्वन्ति। अमितं वा बहुप्रकारं रुवन्ति। महद्दुर्द्रवन्ति, महदन्तरिच द्रवन्तीति वा मरुत'। "आ विद्युन्मद्भिर्मरुत. स्वर्कै (ऋ० सं० १, ६, १४, १)"।

(९) रुद्राः। रुद्रशब्दो व्याख्यात (२८३पृ०)। अत्र बहु-वचनम्। "आ रुद्रास इन्द्रवन्तः सजोषस (४, ३, २१, १)"॥

"ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे (ऋ० सं० ८, २, १, ५)" ॥

१. (१२) पितरः। 'पिता पाता वा (निरु० ४, २१)'—इत्यादिना व्याख्याताः। जस्। "उपहूताः पितरः सोम्यासः (ऋ० सं० ७, ६, १७, १)" ॥

(१३) अथर्वाणः। (१४) भृगवः। थर्वतिश्चरतिकर्मा नैरुक्त-धातुः। न थर्वणमथर्वणमगमनं ततो जसि अथर्वाणः सन्तः आथर्वणाः। यद्वा, थर्वतेः 'श्वन्नुक्षनपूषन् (उ० १, १५५)'—इत्यादिना कनिन्प्रत्ययान्तो निपात्यते। अथर्वाणोऽगतत्वात्। भृगवः। भृज्यमानाः सन्तस्तेजस्वित्वात्। 'भ्रस्ज पाके (तु० उ०)'। 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च (उ० १, २८)'—इत्युप्रत्ययः, न्यङ्क्वादित्वात् कुत्वम्। "अथर्वाणो भृगवः सोम्यासः (ऋ० सं० ७, ६, १४, १)" ॥

(१५) आप्त्याः। आप्नोतेः अघ्न्यादित्वात् (उ० ४, १०८) यत्प्रत्ययः तुगागमश्च निपात्यते। आप्नुवन्ति सर्वमाप्त्या मध्यमस्थाना इन्द्रसहचारिदेवगणाः। "इनतममाप्त्यानाम् (ऋ० सं० ८, ७, २, १)" ॥

(१६) अदितिः। 'सर्वास्त्रियो मध्यमस्थाना पुमान् वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति ह्यनुशासनम्'। अदिति-र्व्याख्याता नैगमे (१० ख०)। "दक्षस्य वादिते जन्मनि व्रते (ऋ० सं० ८, २, ६, ५)" ॥

(१७) सरमा। 'सृ गतौ (भ्वा० प०)'। 'कसिकर्यो-रमः (उ० ४, ८२)'—इति बाहुलकादमप्रत्ययः। पणि-भिरसुरैः गूढानि गा अन्वेष्टुं प्रहिता इन्द्रेण सरमा देव-शुनी। "किमिच्छन्ती सरमा प्रेदमानट् (ऋ० सं० ८, ६, ५, १)" ॥

(१८) सरस्वती। व्याख्याता वाङ्नामसु (६८ पृ०)। पावका नः सरस्वती (ऋ० सं० १, १, ६, ४)"॥

(१९) वाक्। व्याख्याता स्तनामसु (७७ पृ०)। "यद्वाग् वदन्त्यविचेतनानि (ऋ० सं० ६, ७, ५, ४)"॥

(२०) अनुमतिः। (२१)। राका। अनुपूर्वान्मन्यतेर्बाहुलकात् कर्त्तरि क्तिन्। अनुमन्यते यदनुमन्तव्यम्। 'रा दाने (अदा० प०) कृदाधारार्चिकलिभ्यः कः'—इति कप्रत्ययः। दीयते हि तस्यै देवेभ्यो हविः। मध्यमस्थाने 'देवपत्न्यौ (११, २८)'—इति नैरुक्ताः। पौर्णमास्याविति याज्ञिकाः। "अन्विदनुमते त्वम् (य० वा० सं० ३४, ८)"। "राकामहं सुहवां सुष्टुती हुवे (ऋ० सं० २, ७, १५, ४)"॥

(२२) सिनीवाली। देवपत्न्यावमावास्ये वा। सिनमन्ननामसु व्याख्यातम् (१७२ पृ०)। वाल पर्व। "सिनीवालि पृथुष्टुके (ऋ० सं० २, ७, १५, ६)"॥

(२३) कुहूः। 'गुहू संवरणे (भ्वा० उ०)' अस्मात्, कशब्दोपपदात् भवतेर्ह्वयतेर्वा 'नृतिशृध्योः कूः (उ० १, ८८)'—इति बाहुलकात् ऊप्रत्ययो गकारस्य ककारादि च। गुह्यः, दृश्यचन्द्रमा न भवति तस्यामत्यसत्त्वात्। क्व पुनरसाविति वितर्क्यश्च चन्द्रमा भवति। 'कुहूमहं सुवृतं विद्मनापसम् (तै० ब्रा० ३, ३, ११)"॥

(२४) यमी। यमेन व्याख्याता (३८९पृ०)। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्। 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीप्। "अन्यमू षु त्वं यम्यन्य उ त्वाम् (ऋ० सं० ७, ६, ७८, ४)"॥

(२५) उर्वशी। व्याख्याता (३३८पृ०)। उर्वश्य ते इत्यादि,

यथासम्भवं योज्यम्। "गोर्वशी तिरत दीर्घमायुः (ऋ० सं० ८, ५, २, ५)" ॥

(२६) पृथिवी। व्याख्याता (२२ पृ०)। इह मध्यमाभिधेया। "बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि (ऋ० सं० ४, ४, २८, १)" ॥

(२७) इन्द्राणी। 'इन्द्रवरुण (४, १, ४९)'—इति ङीषानुक् च। मध्यमस्थाना इन्द्रस्य पत्नी वा। "इन्द्राणीमासु नारिषु (ऋ० सं० ८, ४, ३, १)" ॥

(२८) गौरी। (२९) गौः। (३०) धेनुः। व्याख्याता वाङ्नामसु (६१, ६२, ७८ पृ०)। "गौरीर्मिमाय सलिलानि तक्षति ऋ० सं० २, ३, २२, १)"। गौरमीमेदनु वत्सं मिषन्तम् (ऋ० सं २, ३, २८, ३)"। "उप ह्वये सुदुघां धेनुमेताम् (ऋ० सं० २, ३, २८, १)" ॥

(३१) अघ्न्या। व्याख्याता गोनामसु (१८१ पृ०)। "शुचिं हर्णमघ्न्ये विश्वदानीम् (ऋ० सं० २. ३, २१, ५)" ॥

(३२) पथ्या। (३३) स्वस्ति। 'पन्थाः पततेः'—इत्यादिना पथिन्शब्दो व्याख्यातः (निरु० २, २८)। पथ्यत तत्स्थानिभिरिति पन्था अन्तरिक्षम्। तत्र भवा पथ्या 'भवे छन्दसि (४, ४, ११०)'—इति यत्, 'नस्तद्धिते (६, ४, १४४)'—इति टिलोपः। सुपूर्वादस्तेः क्तिन्, 'छन्दस्युभयथा (३, ४, ११७)'—इत्यमार्धधातुकत्वात् भूभावाभावः, आर्द्धधातुकत्वाच्छ्नसोरल्लोपो न भवति। शोभना अस्ति स्मवत्तया यस्याः स्वस्ति। शोभनत्वस्याविनाशित्वात्। 'पथ्यां स्वस्तिं प्रथमां प्रायणीये यजति'—इति दृष्टत्वात् द्विपदमेव समाम्नातम्। "स्वस्तिरिद्धि प्रपथे श्रेष्ठा (ऋ० सं० ८, २, ५, ६)" ॥

(३४) उषाः। उच्छतीति व्याख्याता (निरु० २, १८)।

सा ह्युदकादि विवासयति विवास्यते वा मेघात्। "अपोषा अनसः सरत् (ऋ० सं० ३, ६, २०, ५)" ॥

(२५) इला। व्याख्याता वाङ्नामसु (६१ पृ०)। "अभि न इला यूथस्य माता (ऋ० सं० ४, २, १६, ४)" ॥

(२६) रोदसी। व्याख्याता द्यावापृथिवीनामसु (३०४पृ०)। अत्र पुंयोगलक्षणो ङीप् (४, १, ४८)। रुद्रस्य मध्यमस्थानस्य पत्नी माध्यमिका वाक्। "सचा मरुत्सु रोदसी (ऋ० सं० ४, ३, २०, ३)" ॥

इति मध्यस्थानदेवता ॥ २ ॥

अश्विनौ (१)। उषाः (२)। सूर्या (३)। वृषाकपायी (४)। सरण्यूः (५)। त्वष्टा (६)। सविता (७)। भगः (८)। सूर्यः (९)। पूषा (१०)। विष्णुः (११)। विश्वानरः (१२)। वरुणः (१३)। केशी (१४)। केशिनः (१५)। वृषाकपिः (१६)। यमः (१७)। अज एकपात् (१८)। पृथिवी (१९)। समुद्रः (२०)। दध्यङ् (२१)। अथर्वा (२२)। मनुः (२३)। आदित्याः (२४)। सप्तऋषयः (२५)। देवाः (२६)। विश्वेदेवाः (२७)। साध्याः (२८)। वसवः (२९)। वाजिनः (३०)। देवपत्न्यः (३१)। देवपत्न्य इत्येकत्रिंशत्पदानि ॥ ६ ॥

इति निघण्टौ पञ्चमाध्यायः समाप्तः ॥५॥

(१) अश्विनौ । अश्वशब्दो व्याख्यातोऽश्वनामसु (१२७पृ०) । भासा सर्वं जगद् व्याप्नुतः । अवश्यायरसेन मध्यमः, तेजसोत्तमः । द्यावापृथिव्यावहोरात्रे सूर्याचन्द्रमसौ वाश्विशब्दाभिधेयौ । द्यौः ज्योतिषाश्नुते, पृथिवी रसेनान्नलक्षणेन । अहर्ज्योतिषा, रात्रिरवश्यायेन । सूर्यो ज्योतिषा चन्द्रमा रसेनाह्लादादिना वा । अश्वैस्तुरङ्गैस्तद्वन्तौ राजानौ पुण्यकृतावित्यौर्णवाभः । "कुदेदर्मश्विना युवम् (निरु० १२, २)" ॥ तयोः कालः ऊर्द्ध्वमर्द्धरात्रात् सूर्योदयपर्यन्तः । तस्मिन्नान्या देवता उपास्ते ॥

(२) उषाः । वष्टेर्वोच्छतेर्वा । "उषस्तच्चित्रमा भर (य० वा० सं० ३४, ३३)" ॥

(३) सूर्या । व्याख्याता वाङ्नामसु (६८ पृ०) । एषैवोषाः सूर्या सम्पद्यते । "आरोह सूर्ये अमृतस्य लोकम् (ऋ० सं० ८, ३, २३, ५)" ॥

(४) वृषाकपायी । वृषाकपेरादित्यस्य पत्नी । 'वृषाकप्यग्निकुसितकुसिद (४, १, ३७)'—इत्यैकारङीषौ । "वृषाकपायि रेवति (ऋ० सं० ८, ४, २, ३)" ।

(५) सरण्यूः । सैवोषा प्रभातऋतुदयायस्या सूर्यं प्रत्यासन्नं सरणेन नयति तदा सरण्यूरुच्यते । सर्त्तेः 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)' । सरेण सरणेन नयति 'मृतिकृटिकुदिभ्यः'—इति बाहुलकाश्रयतेरुकप्रत्ययः, 'परनेकाचोऽसंयोगपूर्वस्य (६, ४, ८२)' । "अजहादुदा मिथुना सरण्यूः (ऋ० सं० ७, ६, २१, २)" ॥

(६) त्वष्टा । (७) सविता । व्याख्याते (३७७पृ०, ३८० पृ०) तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति । "विनाकमख्यत् सविता वरेण्यः (य० वा० सं० १२, ३)" ॥

(८) भग.। व्याख्यातो धननामसु (१८७ पृ०)। भजनीयो भूतानां स्वकार्यं प्रयुक्तानाम्। त्वष्टकालानन्तरेतिज्योतिर्विशेषो भगाख्यः। प्रागुत्सर्पणादनाविर्भूतमण्डल इत्यर्थः। "प्रातर्जितं भगमुग्रं हुवेम (ऋ० सं० ५, ४, ८, २)" ॥

(९) सूर्य.। व्याख्यात. सूर्यशब्देन (६८ पृ०) प्रागवस्थानः। सरति कर्मसु जगत् प्रेरयति वायुना घटाम्। सुष्ठु सर्वदेवोदयासमयी प्रति ईयते। "दृशे विश्वाय सूर्यम् (ऋ० सं० १, ४, ७, १)" ॥

(१०) पूषा। 'पुष पुष्टौ (क्रा० प०)'। 'श्वन्नुचन् (उ० १, १५५)'—इति कनिन्प्रत्यये उपधादीर्घत्वं निपात्यते। यदा रश्मिभिः परिपुष्टो भवति तदा पूषा। "भद्रा ते पूषन्निह रातिरस्तु (ऋ० सं० ४, ८, २४, १)" ॥

(११) विष्णुः। व्याख्यातो यज्ञनामसु (२८५ पृ०)। तीव्ररश्मिद्वारेण सर्वत्र व्याविशति। विशेर्बाहुलकानुप्रत्ययादि। विश्वं रश्मिभिर्व्यश्नुते वा। "इदं विष्णुर्विचक्रमे (ऋ० सं० १, २, ७, २)" ॥

(१२) विश्वानरः। व्याख्यातः (३७४ पृ०)। इह उत्तमोऽभिधेयः। "विश्वानरस्य वस्पतिम् (ऋ० सं० ६, ५, १, ४)" ॥

(१३) वरुणः। व्याख्यातः (३८७पृ०)। "त्वं वरुण पश्यसि (ऋ० सं० १, ४, ७, ५)" ॥

(१४) केशी। (१५) केशिनः। केशा रश्मयः। प्रशंसायामिनिः। प्रकृष्टैः केशैस्तद्वान् 'काशृ दीप्तौ (भू० आ०)' काशनं काशः, तद्वान् काशी स एव केशी। सकललोकव्यापक आदित्य उच्यते। "केश्य१ग्निं केशी विषम् (ऋ० सं० ८, ७, २४, १)" ॥

(१६) वृषाकपिः। 'वृष सेचने (भू० प०)'। 'कनिन्यु-

हृपि (उ० १, १५४)'—इत्यादिना कनिन्। 'कपि चलने (भू० चा०)'। 'कुण्डिकम्पयोर्नलोपश्च (उ० ४, १३८)'—इतो प्रत्ययः णिजन्तो वा। अथैष मेचयिता, अवश्यायादीन् कम्पयश्च चरति, दिवा चारीणि भूतानि भयात् कम्पयतीति वा। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इति बहुलवचनादलुक्। "पुनरेहि वृषाकपे (ऋ० सं० ८, ४, ४, ३)" ॥

(१७) यमः। व्याख्यातः ( पृ०)। संयच्छति रश्मिभिरिति अस्तमयावस्थ आदित्य उच्यते। "टं वैः मृप्यिर्वते यमः (ऋ० सं० ८, ७, २३, १)" ॥

(१८) अजएकपात्। अस्तभावस्थ आदित्य उच्यते। द्विपदं चैतत्। अजतः पचाद्यचि बाहुलकात् वीभावाभावः। एकश्च पादः यस्य ब्रह्मणः। कुत एतत् विज्ञायते हि अग्निः पादः, वायुः पादः, आदित्यः पादः, दिशः पादः, इति। तेनाजश्चासावेकपाच्चेति। 'संख्यासुपूर्वस्य (५, ४, १४०)—इत्यबहुव्रीहावपि पादस्याकारलोपः। एकेन पादेनांशेन सर्वमिदं जगत् ज्योतिरात्मना प्रविशन् भाति, एकेनांशेन उदकं सर्वस्य जगतः पिबति, क्विपि तकारोपजनः। एकोऽस्य पाद इत्ययथाप्राप्तः पादान्त्यलोपः। "पावीरवीतन्यतुरेकपादजः (ऋ० सं० ८, २, ११, ३)" ॥

(१९) पृथिवी। व्याख्यातः (२२ पृ०)। इह द्यौरुच्यते। "यदिन्द्राग्नी परमस्यां पृथिव्याम् (ऋ० सं० १, ७, २७, ३)" ॥

(२०) समुद्रः। व्याख्यातोऽन्तरिक्षनामसु (२४पृ०)। निर्वचनेषु योज्यम्। उत्तमोऽभिधेयः। "मुञ्चः समुद्रं वरुणस्तिरोदधे (ऋ० सं० ०, २, २८, ३)" ॥

(२१) दध्यङ्। ध्यानं प्रानं लोककृत्याकृत्यविषयं लोकपा-

न्त्वात् । ध्यानं प्रतिगतं प्रत्यक्तमस्मिन् ध्यानमिति वा। ध्यानशब्दोपपदात् अञ्चतेः क्विनि पृषोदरादित्वात् ध्यान-शब्दस्य दृभिभावः, 'क्विन्प्रत्ययस्य कुः (८, २, ६२)' ॥

(२२) अथर्वा । व्याख्यातोऽथर्वाण इत्यत्र (२८५ पृ०) । इह तु उत्तमो वाच्यः । न ह्ययं स्वाधिकारं व्यभिचरति, रसा-दानादिकं नित्यमनुतिष्ठतीत्यर्थः ॥

(२३) मनुः । मन्यतेर्मननार्थादर्चतिकर्मणो वा 'शृस्वृस्नि-हित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ० १, १०)'—इत्यु-प्रत्ययः । मननात् स्वाधिकारादेः, अर्च्यते इति वा मनुरा-दित्यः । "याम॑थ॒र्वा मनु॑ष्पि॒ता द॒ध्यङ् धियमत्न॑त (ऋ० सं० १, ५, २१, ६)" ॥

(२४) आदित्याः । आङ्पूर्वात् दातेर्दीप्यतेर्वा अघ्न्यादि-त्वात् (उ० ४, १०८) यत्प्रत्ययः । आकारैकारयोरिकार', दाञस्तुक् दीप्यतेः पकारस्य तकारश्च निपात्यते । भुवो रसं रश्मिभिरादत्ते । ज्योतिषां चन्द्रनक्षत्रप्रहादीनां भासमादत्ते वा, तदुदयेऽतद्दानादानव्यपदेश । आदीप्तः ज्योतिरन्तरापे-क्षया हि स्वभासा । अदितेः पुत्रा वा आदित्याः 'दित्यदित्या-दित्य (४, १, ८५)'—इति ण्यः । तथा च 'अदितेः पुत्रकाम्'— इत्यादि ब्राह्मणम् । जपि आदित्याः मित्रादयः । "इ॒मा गिर॑ आ॒दि॒त्येभ्यो॑ घृ॒तस्नूः॑ (ऋ० सं० २, ७, ६, १)" ॥

(२५) सप्त ऋषयः । व्याख्याताः (१० पृ०) । रश्मयः । षडिन्द्रियाणि वा मनःषष्ठानि विद्यासप्तमानि । "स॒प्त ऋष॑यः॒ प्रति॑हिताः॒ शरी॑रे (य० वा० सं० ३४, ५५)" ॥

(२६) देवाः । दिव्यतिर्दीप्त्यर्थो दीप्यतेर्वा । पचाद्यच् (३, १, १३४) । दातारोऽभिमतानां भक्तेभ्यः । तैजसत्वाद् दीप्ता वा । द्युतेर्वापि बाहुलकाद्रूपसिद्धिः । अर्थः समानः ।

# अथ निरुक्तद्वितीयभागस्य प्रथमादि-
# षष्ठाध्यायानां सूचीपत्रम् ।

—०※०—

## अथ अकारादिवर्णक्रमेण निरुक्तद्वितीयभागस्य प्रथमादिचतुरध्यायानां खण्ड-प्रतीक-सूचीपत्रम् ।

—००—

| खण्डप्रतीका | अ॰ | पा॰ | ख॰ | पृ॰ |
|---|---|---|---|---|
| कतरा पूर्वा कतरापरा | २ | ४ | ५ | ७२२ |
| कनीनकेव विद्रधे नवे | ४ | २ | ७ | ७६१ |
| कर्मनामान्युत्तराणि | ३ | १ | १ | ६२८ |
| कायमानो वना त्वम् | ४ | २ | ६ | ७६० |
| कुह स्विद्दोषा कुह वस्तो | ३ | ३ | ३ | ६७९ |
| को नु मर्या अमिथित | ४ | १ | २ | ७२० |
| क्रोडन्तौ पुत्रैर्नप्तृभिरिति | १ | ५ | २ | ५०७ |
| गौरत्व पुरुषो हस्तीति | १ | १ | २ | ४२८ |
| चतुरश्चिद्दमानात | ३ | ३ | ४ | ६८४ |
| चिदित्येषोऽनेककर्मा | १ | २ | २ | ४५१ |
| जुष्टो दमूना अतिथि | ४ | १ | ५ | ७४१ |
| तत्सूर्यस्य देवत्वम् | ४ | २ | ३ | ७५७ |
| तदद्य वाच प्रथम मसीय | ३ | २ | २ | ६४९ |
| तत्र चतुष्ट्व नोपपद्यते | १ | १ | २ | ४२८ |
| तनुत्यजेव तस्करा | ३ | ३ | २ | ६७० |
| ता वा वास्तून्युश्मसि | २ | २ | ३ | ५७० |
| तितउ परिपवन भवति | ४ | २ | १ | ७५० |
| त्वया वय सुवृधा ब्रह्मणस्पते | ३ | २ | ५ | ६६५ |
| दशावनिभ्यो दश कक्ष्येभ्य | ३ | २ | ३ | ६५४ |
| दासपत्नीरहिगोपा | २ | ५ | ३ | ६०१ |
| देवाना माने प्रथमा अतिष्ठन् | २ | ६ | ५ | ६११ |
| दैवा नो यथामदसित् | ४ | ३ | ३ | ७८४ |
| द्यौर्मे पिता जनिता | ४ | ३ | ५ | ७९८ |
| द्विता उत्तराणि नामानि | ३ | ४ | ३ | ७ ३ |
| न जामये तान्वो रिक्थमारैक् | ३ | १ | ६ | ६४७ |

—

## अथ अकारादिवर्णक्रमेण निरुक्तद्वितीयभागस्य पञ्चमषष्ठयोरध्याययोः सूचीपत्रम् ।

—०*०—

| खण्डप्रतीकाः | अ॰ | पा॰ | खं॰ | पृ॰ |
|---|---|---|---|---|
| प्र वोऽच्छा जुजुषाणासो | ६ | ३ | ७ | १००० |
| प्रोणीतामश्वान् हितं जयाय | ५ | ४ | ८ | ९३० |
| वतो वतासि यम | ६ | ५ | ५ | १०४३ |
| मा त्वा सोमस्य गल्दया | ६ | ५ | २ | १०३५ |
| मा नः समस्य दूढ्यः | ५ | ४ | ५ | ९२२ |
| य इन्द्राग्नी सुतेषु | ५ | ४ | ४ | ९१८ |
| यदा ते मर्त्तो अनु | ६ | २ | ५ | ९७७ |
| यवं वृकेणाश्विना वपन्तेषं | ६ | ५ | ३ | १०३८ |
| यो अस्मै घ्रंस उत वा | ६ | ४ | ४ | १ १६ |
| वराहो मेघो भवति | ५ | १ | ४ | ८५२ |
| वामं वामं त आदुरे | ६ | ६ | ३ | १०५४ |
| वृकश्चन्द्रमा भवति | ५ | ४ | १ | ९११ |
| श्रायन्त इव सूर्यं | ६ | २ | ४ | ९७४ |
| स इत्तमोऽवयुनं ततन्वत् | ५ | ३ | ३ | ८९६ |
| सस्निमविन्दच्चरणे नदीनाम् | ५ | १ | १ | ८२९ |
| सुगुरसत् सुहिरण्यः | ५ | ३ | ७ | ९११ |
| सुदेवो असि वरुण | ५ | ४ | ९ | ९३३ |
| सृपः सर्पणादिदमपीतरत् | ६ | ४ | १ | १००६ |
| सोमानं स्वरणं कृणुहि | ६ | ३ | १ | ९८२ |
| स्त्रिया आपो भवन्ति | ६ | ४ | २ | १०१० |
| स्थूरं राधः शताश्वं | ७ | ४ | ८ | १०२९ |
| स्वसराण्यहानि भवन्ति | ५ | १ | ५ | ८५६ |
| स्वविता जारो अपां | ५ | ४ | ६ | ९१९ |
| हिनोता नो अध्वरं | ६ | ४ | ७ | १०२५ |
| हिमेनाग्निं घ्रंसमवारयेथां | ६ | ६ | ८ | १०६४ |

# निरुक्तम् (निघण्टुभाष्यम्)।

## अथ वृत्ति-भूमिका।

आदित' पाणिनीयन्तु शिक्षा ज्योतिस्ततश्छन्दः।
पञ्चाध्यायी-निघण्टोश्च निरुक्तमुपरि स्थितम्॥
प्रणम्य तत् प्रवक्ष्यामि रुद्रायामिततेजसे।
स मे दिशतु सुप्रीतो वाग्धियो' शिष्टसम्मतिम्॥

अथ किमर्थं वेदो वेदाङ्गानि च प्रवृत्तानि? सर्वकाम-*प्राप्त्यादिभिरनन्त' पुरुषार्थो वक्तव्य इति वेद' प्रवृत्त। तत्-*परिज्ञानाय वेदाङ्गानि प्रवृत्तानि। तानि पुनरमूनि प्रतिनियतार्थविषयत्वाद्वेदमास्कन्दन्ति। तद्यथा—

शिक्षा तावत् "आत्मा बुद्ध्या समेत्यार्थान्"—इत्येवमादिना क्रमेण स्वरव्यञ्जनाभिव्यक्तिलक्षणम्, पूर्वाह्णमध्यन्दिनापराह्णेषु यथाध्येयम्, अधीतस्य च स्वरसौष्ठवयुक्तस्य यज्ञकर्मणि प्रयोगः,—इत्येवमादि अर्थजातं निरुवाच। तथा ह्यधीतः प्रयुज्यमानश्चापूर्वाङ्गभावाय नान्यथेत्येवमर्थवत्ता शिक्षाया। एवं ह्याह—"मन्त्रो हीन स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" (शि॰ ५०)—इति। वेदाध्ययनानुपयुक्तत्वेतिहासपुराणशास्त्राणां लौकिकानां ग्रन्थविस्तररचनानाम्। अतएवाध्ययनपरिज्ञानं शिक्षाऽधिगताध्ययनविधेः॥

वेदस्याक्षरकौशपादव्यवस्थालक्षणपरिज्ञाने छन्दोविचिति-
...। इयताक्षरकोशेनेयद्भि' पादैर्गायत्री, इयद्भिस्त्रिष्टुप्,
...तच्छन्दसा प्रयुज्यमानो मन्त्र कर्मण्यार्थक:
... एवं ह्याह—"यो–इवा अविदितार्षेयच्छन्दोदैवत-

ब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति"—इति। अतोऽनुषङ्गतो ब्रह्मादिलक्षण-परिज्ञानं लोकेऽत्र लौकिकमिति ह्याह॥

सम्यगधीतस्य परिज्ञातच्छन्दसोऽमुष्मिन् कर्मणि विनियोग इति कल्प आद्रियते। यद्यथा। इषेत्वेतिच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति। न हि कल्पानभिज्ञः प्रयोगान् विजानीयादिति॥

श्रुतिचोदितकर्माङ्गभूतकालपरिज्ञानाय ज्योतिषम्। अनुषङ्गतश्चातो प्राणिना शुभाशुभकर्मफलविपाककालपरिज्ञानम्॥

व्याकरणाद्विभक्त्यादिपरिज्ञानम्। एवं ह्याह—"मयाजाः सविभक्तिकाः कर्त्तव्या."। तथाचेदं दर्शयति—"संख्यादयो न विवर्द्धन्ते"—इति। न च व्याकरणानभिज्ञो विभक्तीर्जानीयादूहितुं वा मन्त्रान्। तत एव चानुषङ्गतो लोके लौकिकलक्षणपरिज्ञानमेवं छन्दस्येवं भाषायामिति प्रविभागो नान्तरीयकोऽनन्तरेण व्यवस्थितः॥

अत उक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्माङ्गभूतकालस्योपदर्शितलक्षणस्यैतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते। प्रधानञ्चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात्। अर्थो हि प्रधानम्। तद्गुणः शब्दः। स चेतरेषु व्याकरणादिषु चिन्त्यते। कल्पे खल्वपि विनियोगश्चिन्त्यते। स च पुनरर्थाभिधानवशेन मन्त्राणाम्। यो यमर्थमभिधानेन संस्कर्तुं समर्थो मन्त्रः, स तत्र विनियुज्यते। तदुक्तं—"अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् (२, २, १)"—इति। न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा वाक्यं शास्त्रमस्ति, तात्पर्येण

यदशेषान् शब्दान् निर्ब्रूयात् । यदपि च क्वचित् क्वचिदन्य शास्त्रे शब्दनिर्वचनम्, अतएव तदित्युपलक्ष्यम् । यथा शब्द-लक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात्, एवं शब्दार्थनिर्वचन परिज्ञानं निरुक्तात् । वस्तुमात्रमेव हि इतरेषु शास्त्रेषु स्वाभिमतवुद्धिविषयमेव किञ्चिच्चिन्त्यते ब्राह्मणमपि च विध्यर्थवादरूपमशेषमन्त्रार्थशेषभूतमेव । मन्त्रब्राह्मणार्थ परिज्ञानवज्ञस्याध्यात्माधिदैवाधिभूतपरिज्ञानद्वारेण धर्मार्थकाममोक्षाख्योऽखिलपुरुषार्थ । न चानिरुक्तो मन्त्रार्थो व्याख्यातव्य इति । तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमित्युपपन्नम् । अथास्यैवमखिलपुरुषार्थोपकारवृत्ति-समर्थस्य सग्रह ।

तद्यथा,—नामाख्यातोपसर्गनिपातलक्षणम्(१), भावविकारलक्षणम्(२), नामान्याख्यातजानि सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणम्(३), सर्वाण्याख्यातजानि कानिचिदेवानेकधातुजान्यपीति मन्त्राणामर्थवत्त्वानर्थवत्त्वे विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्त्वावधारणम्(४), पदविभागपरिज्ञानप्रतिष्ठानबोधावलम्बिप्रदर्शनाय आदिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु मन्त्रेषु याज्ञिकपरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा(५), अर्थज्ञप्रशंसा(६), अनर्थज्ञावधारणम्(७), वेदवेदाङ्गव्यूह (८), सप्रयोजननिघण्टुसमाम्नायविरचनम्(९), प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्रविभागलक्षणम्(१०), निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेश (११), अर्थप्राधान्यात् लोपोपधाविकारवर्णलोपविपर्ययोपदेशेन सामर्थ्योपप्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोपविपर्ययाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरणचिन्ता(१२), अन्तस्थान्तर्धातुनिमित्तेन सम्प्रसार्यासम्प्रसार्योभयप्रकृतिधातुनिर्वचनो-

पदेश (१३), भाषिकप्रायोद्वृत्तिभ्यो नैगमशब्दार्थप्रसिद्धि (१४), नैगमप्रायोद्वृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धि (१५), देशव्यवस्थया शब्दरूपव्यपदेश (१६), तद्धितसमासनामनिर्वचनलक्षणम्(१७) शिष्यलक्षणम्(१८), विशेषेण व्याख्यया सन्दिग्धोदाहरणान्निर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम्(१९), अनेकार्थानवगतसंस्कारानुक्रमणम्(२०), परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम्(२१), स्तुत्याशी:शपथाभिशापाभिख्यापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेश (२२), निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम्(२३), इतरेतरजन्मत्वम्(२४), स्थानत्रयभेदश तिसृणामिकैकस्या माहाभाग्यकृतोऽनेकनामधेयप्रतिलम्भ (२५), पृथगभिधानन्तूत्पत्तिसम्बन्धाद्वा(२६), देवतानामाकारचिन्तनम् (२७) भक्तिसाहचर्य्यसंस्तवकर्मसूक्तभाक्हविर्भाक्व्यञ्जनभाक्तानि(२८)—(३३), पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणम्(३४), तन्निर्वचनविचारोपपत्त्यवधारणानुक्रमेण व्याख्याय दैवतप्रकरणनिर्णय (३५), विद्यापारम्पर्य्यपायोदेश (३६), मन्त्रार्थनिर्वचनद्वारेण देवताभिधाननिर्वचनफल देवतातादात्म्यम्(३७)।—इत्येष समासतो निरुक्तशास्त्रचिन्ताविषय ॥

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्घ। सा च पुनरपि साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुकिवृक्षया वाक्यार्थसामर्थ्यादभिधेयानुवीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता। सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथायथाप्रशस्तागोर्मोधर्मा इति ॥

# पूर्वषट्कः ।

अथ प्रथमाध्यायस्य

प्रथमपादः ।

॥ ॐ ॥ समाम्नायः समाम्नातः स व्याख्यात-व्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते निघण्टवः कस्मान्निगमा इमे भवन्ति छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवोऽपि वा हननादेव स्युः समाहता भवन्ति । यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति-पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति सत्त्वानामुपदेशः ॥१॥

पदेश (१३), भाषिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धि (१४), नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धि (१५), देशव्यवस्थया शब्दरूपव्यपदेश (१६), तद्धितसमासनामनिर्वचनलक्षणम्(१७), शिष्यलक्षणम्(१८), विशेषेण व्याख्यया तत्त्वपर्यायभेदसङ्ख्या सन्दिग्धोदाहरणादिनिर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम्(१९), अनेकार्थानवगतसंस्कारानुक्रमणम्(२०), परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम्(२१), स्तुत्याशी शपथाभिशापाभिख्यापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेश (२२), निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम्(२३), इतरेतरजन्मत्वम्(२४), स्थानत्रयभेदश तिसृणामेकैकस्या माहाभाग्यकृतोऽनेकनामधेयप्रतिलम्भ (२५), पृथगभिधानन्तूत्पत्तिसम्बन्धाद्या(२६), देवतानामाकारचिन्तनम् (२७) भक्तिसाहचर्यसंस्तवकर्मसूक्तभाक्हविर्भाक्व्यञ्जनभाक्तानि(२८)—(३३), पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणम(३४), तन्निर्वचनविचारोपपत्त्यवधारणानुक्रमेण व्याख्याय देवतप्रकरणनिर्णय (३५), विद्यापारम्पर्य्योपायोदेश (३६), मन्त्रार्थनिर्वचनद्वारेण देवताभिधाननिर्वचनफल देवतामाहात्म्यम्(३७)।—इत्येष समासतो निरुक्तशास्त्रचिन्ताविषय ॥

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्घ । सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाक्यार्थसामर्थ्यादभिधेयानुमीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता। सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथायथापवस्तागोर्गोधर्मा इति ॥

# पूर्वषट्कः ।



अथ प्रथमाध्यायस्य

प्रथमपादः ।

॥ ॐ ॥ समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते निघण्टवः कस्मान्निगमा इमे भवन्ति छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवोऽपि वा हननादेव स्युः समाहता भवन्ति । यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति-पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति सत्त्वानामुपदेशः ॥१॥

अयञ्च तस्या द्वादशाध्यायी भाष्यविस्तरः। तस्य इद-मादिवाक्यम्—"समाम्नायः समाम्नातः"—इति। गवादिर्देवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते। समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः। समभ्यस्यते मर्यादयाऽयमिति समाम्नायः। स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायी शास्त्रसंग्रहभावेन एकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः।

तस्य किमिति? "स व्याख्यातव्यः"। स च यो समाम्नातः छन्दस्येवावस्थितो गवादिभिर्ग्रन्थैर्वा निरुक्तैर्यः समाम्नातः। अयञ्च एतस्मिन्निरुक्ते स एष उभयलक्षणोऽपि व्याख्यातव्यः॥ आह, कथमेतद्गम्यते असमाम्नातव्याख्यानमप्यत्राभिप्रेतमिति? समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति? उच्यते—निर्वचनलक्षणोपदेशात्। निर्वचनप्रसङ्गानाञ्च मृगकर्णदक्षिणालक्ष्मीनिघण्टुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशात् ज्ञायतेऽसमाम्नातव्याख्यानमप्यत्राभिमतमिति। यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति। अत्र ब्रूमः,—न हि समाम्नानार्हाणामन्तोऽस्ति, तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात्, अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत। शक्यश्च तावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमवायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगार्थच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु शब्दसमुदायः समाम्नातः। तस्मादुपपन्नमसमाम्नातव्याख्यानमप्यत्राभिमतमिति। असमाम्नानञ्च सर्वेषां शास्त्रातिगौरवभयादिति। "व्याख्यातव्यः" विभज्य इमान्यत्र नामानि, इमान्याख्यातानि, उपसर्गा इमे, निपाता इमे, इदं नामाख-

लक्षणम्, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगतसंस्काराणि, इदमभिधानम्, इदमभिधेयम्, इदमभिधानस्य निर्वचनमित्येवंविधया मर्य्यादया परिपाट्या यथासमाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ॥

"तमिमं समाम्नायं निघण्टव इत्याचक्षते"। तं च योऽसमाम्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा निरुक्तैः समाम्नातः, तमिमं च निघण्टव इत्याचक्षते। अन्येऽप्याचार्या इति वाक्यशेषः। निरूढा हीयमेतस्मिञ्छन्दःसमुदाये सञ्ज्ञेत्यभिप्राय. ॥

"निघण्टवः कस्मात्"—इति। निघण्टुशब्दव्युत्पिपादयिषया प्रश्नः ॥

निर्विवचयेदमाह—"निगमा इमे भवन्ति"। येष्वभिधाननिर्वचनप्रारम्भकेष्वाचार्य. अथ यास्को निरुक्तकारः कस्माच्छब्दमुत्तरत्र न कुर्यात्, तेष्वपि व्याख्याकाले कस्मादिति प्रश्नः समुत्पाद्यः। तथाहि व्याख्यासाफल्यं भवति। निगमा इमे भवन्ति। निश्चयेनाधिकं वा निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति ततो निगमसञ्ज्ञा निघण्टव एव इमे भवन्ति ॥

आह,—कः पुनरेतेषु विशेषो येनैत एव ज्ञापयन्तीति। उच्यते,—यस्मादेते गवादय. "छन्दोभ्य. समाहृत्य समाहृत्य समाम्नाता."। छन्दांसि मन्त्राः तेभ्य उपलक्षितसामर्थ्या. समाहृत्य ग्रन्थीकृता इत्यर्थः। आह,—कस्मात् पुनरेतावन्त एव ग्रन्थीकृता इति। उच्यते,—इतो यस्मादेतैरेव छन्दस्यवस्थितैरभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनियोगार्षच्छन्दोदैवतनिदानविदामपि सतां मन्त्रार्थपरिज्ञानायोद्यमभङ्गः क्रियते, दुष्परिज्ञानत्वात् तेषाम्, एतेषु परिज्ञातेषु अप्रतिबन्धेन शक्यते मन्त्रार्थः परिज्ञातुमिति

अयञ्च तस्या द्वादशाध्यायी भाष्यविस्तरः। तस्य इदमादिवाक्यम्—"समाम्नायः समाम्नातः"—इति। गवादिदेवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते। समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः। समभ्यस्यते मर्य्यादयाऽयमिति समाम्नायः। स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायो शास्त्रसंग्रहभावेन एकस्मिन्नाम्नाये पर्य्योकृत इत्यर्थः।

तस्य किमिति? "स व्याख्यातव्यः"। स च यो समाम्नातः छन्दस्येवावस्थितो गवादिभिरन्यैर्वा निरुक्तैर्यः समाम्नातः। अयञ्च एतस्मिन्निरुक्ते स एष उभयलक्षणोऽपि व्याख्यातव्यः॥ आह, कथमेतद्गम्यते असमाम्नातव्याख्यानमप्यत्राभिप्रेतमिति? समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति? उच्यते—निर्वचनलक्षणोपदेशात्। निर्वचनप्रसङ्गानाञ्च मृगकर्णदक्षिणालक्ष्मीनिघण्टुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशात् गम्यतेऽसमानव्याख्यानमप्यत्राभिमतमिति। यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति। अत्र ब्रूमः,—न हि समाम्नानार्हाणामन्तोऽस्ति, तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात्, अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत। शक्यश्च तावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमवायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगार्थच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु शब्दसमुदायः समाम्नातः। तस्मादुपपन्नमसमाम्नातव्याख्यानमप्यत्राभिमतमिति। असमाम्नानञ्च सर्वेषां शास्त्रातिगौरवभयादिति। "व्याख्यातव्य." विभज्य इमान्यत्र नामानि, इमान्याख्यातानि, उपसर्गा इमे, निपाता इमे, इदं नामाख्

लक्षणम्, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगतसंस्काराणि, इदमभिधानम्, इदमभिधेयम्, इदमभिधानस्य निर्वचनमित्येवंविधया मर्यादया परिपाट्या यथासमाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ॥

"तमिमं समाम्नायं निघण्टव इत्याचक्षते"। तं च योऽसमाम्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा निरुक्तैः समाम्नातः, तमिमं च निघण्टव इत्याचक्षते। अन्येऽप्याचार्या इति वाक्यशेषः। निरुक्ताध्यायमेतस्मिञ्छन्द समुदाये सम्यञ्चेत्यभिप्रायः॥

"निघण्टवः कस्मात्"—इति। निघण्टुशब्दव्युत्पित्सादविषया प्रश्नः॥

निर्विवचयिषुराह—"निगमा इमे भवन्ति"। येष्वभिधाननिर्वचनप्रारम्भकेष्वाचार्यः अथ यास्को निरुक्तकारः कस्माच्छब्दमुत्तरत्र न कुर्यात्, तेष्वपि व्याख्याकाले कस्मादिति शब्दः समुत्पाद्यः। तथाहि व्याख्यासाफल्यं भवति। निगमा इमे भवन्ति। निश्चयेनाधिकं वा निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति ततो निगमसञ्ज्ञा निघण्टव एव इमे भवन्ति॥

आह,—कः पुनरेतेषु विशेषो येनैत एव ज्ञापयन्तीति। उच्यते,—यस्मादेते गवादय "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः"। छन्दांसि मन्त्राः तेभ्य उपलक्षितसामर्थ्या समाहृत्य ग्रन्थीकृता इत्यर्थः। आह,—कस्मात् पुनरेतावन्त एव ग्रन्थीकृता इति। उच्यते,—इतो यस्मादेतैरेव छन्दस्यवस्थितैरभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनियोगार्थच्छन्दोदैवतनिदानविदामपि सतां मन्त्रार्थपरिज्ञानायोद्यमभङ्गः क्रियते, दुःपरिज्ञानत्वात् तेषाम्, एतेषु परिज्ञातेषु अप्रतिबन्धेन शक्यते मन्त्रार्थं परिज्ञातुमिति

अत उच्यते त एव ज्ञापका भवन्तीति। अतश्चैत एवैतेऽत-सामर्थ्यात् समाहृत्य समाम्नाता इति।

समाम्नानमात्रमेव दर्शयति। प्रकरणगताश्च निघण्टव एवैत इति गम्यते। "ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः"। उदाहृताः समाम्नाताः निर्वचनप्रसङ्गतो निरुच्यन्ते। य एते समाम्नाता गवादयः त एते मन्त्रार्थनिगमयितृत्वादुभयेऽपि निगन्तवः सन्तो निगमनाद्धेतोर्निघण्टव उच्यन्त इत्यौपमन्यवः। इत्येवमर्थनिगमयितृत्वान्निगन्तव एते सम्पन्नाः सन्तोऽतिपरोक्षवृत्तिना शब्देन गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं कृत्वा वर्णव्यापत्त्यादिलक्षणम्। अथाप्यादिविपर्यय इत्येवमादि तदेतत्परोक्षातिपरोक्षवृत्तिषु यथासम्भवं द्रष्टव्यम्। त्रिविधा हि शब्दव्यवस्था,—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च। तत्रोक्तक्रियाः प्रत्यक्षवृत्तयः, अन्तर्लीनक्रियाः परोक्षवृत्तयः, अतिपरोक्षवृत्तिषु शब्देषु निर्वचनाभ्युपायः। तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः। तद्यथा,—निघण्टव इत्यतिपरोक्षवृत्तिः, निगन्तव इति परोक्षवृत्तिः, निगमयितार इति प्रत्यक्षवृत्तिः। यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते। उक्तञ्च,—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्"। वक्ष्यति चायमपि,—वर्णविपर्ययवर्णव्यापत्तिलक्षणम्। त एते निगन्तवः सन्तो *निघण्टव उच्यन्ते। इत्येवमतिपरोक्षवृत्तयो निर्वक्तव्याः।* प्रायेण चोणादिषु परोक्षवृत्तयः शब्दाश्चिन्त्यन्ते। तत्र तेषां लक्षणमुपचितव्यम्। येषामपि लक्षणं नास्ति, तेषामपि तत्र कल्पम्। अपरिसमाप्ता ह्युणादय इति लक्षणविदः प्रतिजानते,

प्राधान्यम्। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति। तस्मादुपपन्नं भवति प्राधान्यान्नामाख्यातयोः पूर्वमभिधानम्, अप्राधान्याच्च पश्चादुपसर्गनिपातानामिति। नामाख्याते इतीतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः समासेनाभिधानम्। कथमितरेतराकाङ्क्षित्वमिति? यज्ञदत्त इति हि नामशब्दस्तावदेव साकाङ्क्षो भवति, यावत् पचति पठति इत्याद्याख्यातशब्देन निराकाङ्क्षीक्रियत इति, तथा पचतीत्याख्यातशब्दस्तावदेव साकाङ्क्षो भवति, यावन्न यज्ञदत्तशब्दः। पचति यज्ञदत्त ओदनमिति, इतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः, समानकार्य्यत्वं चैतयोर्लक्ष्यते। वाच्येनार्थेनार्थवत्त्वमित्यतः समस्येते नामाख्याते इति। नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात्। नामपदवाच्यार्थाश्रयक्रियोपलक्षणत्वाच्चाख्यातस्य पश्चान्निपातः उपसर्गनिपाता इति। उभयेषामुपसर्गनिपातानां नामाख्यातयोरर्थविशेषद्योतकत्वात् समानकार्य्यत्वमित्यतः समस्यन्ते। आख्यातसहयोगित्वादुपसर्गाणामाख्यातानन्तरं पाठः, परिशेषाणां निपातानां पश्चात् अपरिमिताश्च निपाता इति॥

"तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति"। तत्र तस्मिन्, लोकवेदप्रसिद्धे पदचतुष्टये निघण्टुशब्दसमानसञ्ज्ञोपलक्षिते, ये तावन्नामाख्याते तयोस्तावदेतल्लक्षणं प्रदिशन्ति। कतमत्? यदेतद्वक्ष्यमाणमित्यभिप्रायः। प्रदिशन्ति प्रविभज्येद नाम्न लक्षणमिदमाख्यातस्येत्येवं दिशन्ति उपदिशन्त्याचार्या इति वाक्यशेषः। आह, लक्षणोपदेशः कस्मात्? अनुक्रमणेनैव सिद्धत्वात्। अनुक्रमणेनैव हि वक्ष्यति "इमानि पृथिवीनामधेयान्येकविंशति (२, २, १०)" "हिरण्यनामान्युत्तराणि पञ्चदश (२, ३, १)" कान्तिकर्माण उत्तरे धात-

वोऽस्टादय (३, २, १०)", गतिकर्मण उत्तरे धातवो द्वाविंश
शतम (३, २, १०)"—इति। तत एव विज्ञास्याम इमानि
नामानीमान्याख्यातानीति। तस्मादयमनर्थको लक्षणोपदेश ?
नानर्थक । कस्मात् ? अथापि हि लक्षण समाम्नातान्यसमा-
म्नातानि च व्याप्य वर्त्तते। यत्पुनरेतदुक्तमनुक्रमणादेव विज्ञा-
स्याम इति। अत्र ब्रूम',—निर्देशोऽसौ न हि लक्षणम्, निर्दे-
शश्च परिच्छिन्नविषय । स तर्हि किमर्थ इति ? शास्त्रे रूपस्व-
भावोपप्रदर्शनार्थ । तस्मादसमाम्नातार्थोऽयमादितो लक्षणा-
पदेशो युक्त इत्युपपन्नम् ॥

आह,—तात्पर्य्येणैवेदमन्तरेण समाम्नातवदसमाम्नातानि
कस्मान्नोपदिश्यन्ते, अपि च तथा सूपदिष्टानि भवन्तीति ?
उच्यते,—तथाह्युपदेशगौरव भवति, ग्रहणशक्तिहानश्च ।
अपिचोक्तम्। "ऋषयो ह्युपदेशस्य नान्त यान्ति पृथक्त्वश ।
लक्षणेन तु सिद्धानामन्त यान्ति विपश्चित: ॥"—इति। तस्मा-
दुपदेशगौरवभयाद् ग्रहणशक्तिहानदोषाच्च समानलक्षणोप-
देश क्रियत इति।

आह,—किं पुनस्तल्लक्षणमिति ? उच्यते,—"भावप्रधान-
माख्यात, सत्त्वप्रधानानि नामानि"। नामपदवाच्यार्थाश्रय
क्रियाव्यङ्ग्यो भाव । पाकरागत्यागाख्य । स यत्र प्रधान,
गुणभूता क्रिया, तदिद भावप्रधानम्। किं पुनस्तदिति।
आख्यातम्। आख्यायतेऽनेन गुणभावेन वर्त्तमाना अनेक-
कारकप्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखी-
भूता क्रिया। तस्याश्च प्राधान्येन प्रवर्त्तमानो भाव स्वात्म-
लाभप्रधान इत्याख्यात ।

आह,—कथ पुनर्गुणभूता क्रियेति ? उच्यते,—तदर्थत्वात्।
तदर्था हि सा। भावार्था भावसिद्ध्यर्थमात्मलाभमनुभूय

कारकेषु तण्डुलादौ पाकाख्यं भावमभिनिष्पाद्यावसितप्रयोजनेकदेश एव तिरोभवति। यस्य च यदर्थं आत्मलाभस्तत्तद्गुणभूतं भवति। भावसिद्धर्थञ्च क्रियाया आत्मलाभस्तस्माद् गुणभूतेति गम्यते। भावसिद्धेरेव चानुमीयते क्रिया परोक्षापि सती॥

आह,—कथं पुनः परोक्षा क्रियेति? उच्यते,—न हि सेन्द्रियाणामन्यतमेन स्वरूपस्था सती कदाचिदपि सन्निकृष्यते। किं तर्हि? तदवसाने योऽभिनिष्पद्यते भावः, तेन लिङ्ग्यते। नूनमभिनिर्वृत्ता क्रिया यया भावोऽयमभिनिष्पादित इति नाभिनिर्वृत्ता चेदभविष्यद् यथैव सा क्रियानिर्वृत्तेर्नाभवदयं भावः, एवं साम्प्रतमपि नाभविष्यत्, अस्ति चायम्। तस्मादभिनिर्वृत्ता क्रियेत्येवमनुमीयते। तदेतदाख्यातं क्रियावाचकमपि सद्भावार्थत्वात् क्रियाया भावं प्रधानमुच्यत इति एवमेके मन्यन्ते। एके पुनर्भावप्रधानमाख्यातमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते। प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादय इति। भावः, कर्म, क्रिया, धात्वर्थः, इत्यर्थान्तरम्। स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम्। किं पुनस्तत्? आख्यातम्। आख्यायन्ते स्त्रीपुंनपुंसकानि क्रियागुणभावेन वर्त्तमानान्यनेन क्रिया च तेषामुपरि प्राधान्येन वर्त्तमानेत्याख्यातम्॥

आह,—कथं पुनरत्र क्रियायाः प्राधान्यमिति? उच्यते,—सा ह्यत्र शब्दवाच्या। अर्थगृहीतानि तत्साधनानीति। अतः प्राधान्यमत्र क्रियायाः। इतश्च प्राधान्यम्। कुतः? विशेषप्रत्ययाधानात्। पचतीति प्रथमपुरुषैकवचनान्त आख्यातशब्दो वर्त्तमानकालकर्तृविषयो यत्किञ्चिदविवक्षितविशेषमेव पक्त्रादिसाधनमात्मन आश्रयभावेनोपलक्षयन्नेकाक्रियाः

ग्रह्मिमत्यपि पक्कादौ साधने पचिक्रियायामेव विशेषप्रत्ययमादधाति, नान्यासु क्रियासु, नापि विशिष्टे पक्कादौ साधने। यत्र यस्मिन्नर्थे विशेषेण वर्त्तते शब्दः, स एव तस्य प्रधानम्। विशेषेण च क्रियायामाख्यातशब्दो वर्त्तते, गुणभावेन कारके। तस्माद्विशेषप्रत्ययाधानाद्भावप्रधानमाख्यातमित्युपपन्नम्। अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः— 'किं करोति देवदत्त'? क्रियाख्यानपरतयैव प्रत्याचष्टे— 'पचतीति'। न त्वोदनमिति पूर्वमुक्त्वा ततः पचतीति ब्रवीति ॥

अथ कथमुच्यते भावप्रधानमाख्यातमिति? शृणु,— अमूर्त्ता हि क्रिया निरुपाख्या, सा हि कारकैरभिव्यज्यमाना कारकशरीरे च सती शक्यते निर्दिष्टुम्। इतरथा हि अशरीरा सती सा न गृह्यते, अग्रहणे च सति कथमिव निर्दिश्येत। तथैवं सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन् साधने विशिष्टमात्मीयं कार्य्यमारभते पाकाख्यं तदभिधानशब्दोपपदैव साक्षाद् ग्रहणासम्भवान्निर्दिश्यते। न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद् ग्रहणासम्भवः। तस्मादोदनकर्मकार्य्या देवदत्तकर्तृकौदनशब्दोपपदैव निर्दिश्यते,—ओदनं पचति देवदत्त इति। तत्राविवक्षितस्वार्थ ओदन शब्दः। अपि च क्रियाव्यापारपिपृच्छिषयैव पृष्ट —किं करोतीति, क्रियाव्यापारमात्रमेव प्रत्याचष्टे— पचतीति। तत, किमिति पर्य्यनुयुक्तो शब्दान्तरेणापाकरोति देवदत्त ओदन मिति। तस्माच्छब्दान्तरवाच्यत्वात् साधनस्य पचतीत्यत्र क्रियैव प्रधानमित्युपपन्नम्। यत् पुनरेतदुक्तमोदनमिति पूर्वमुक्त्वेति, तत्र ब्रूमः,—स हि पर्य्यनुयुयुत्सां साधनगतां भाविनीमाशङ्कमानः पर्य्यनुयोगमात्मनो बुद्ध्यस्थं

कृत्वा तदपाकरणार्थमोदनमिति पूर्वं ब्रवोत्येवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्य्यनुयोगोऽनुक्तो द्रष्टव्यः। तस्मात् पचतीति शब्दसाध्यत्वादत्र क्रियायाः शब्दान्तरवाच्यत्वात् द्रव्यस्य क्रियैव प्रधानमिति। इतश्च न द्रव्यप्रधानमाख्यातम्। एकस्मिन् वाक्ये द्वयोराख्यातयोरसमवायात्। पचतिपठतीत्युभयोः प्राधान्यादितरेतरेण समवायो नास्ति। न ह्येतरः शब्द इतरत्र गुणो भवति। द्रव्यशब्दे च समवायात्, समवैति द्रव्यशब्देनाख्यातशब्दः। पचति देवदत्त इत्युक्ते पचिक्रियागुणभूतो लक्ष्यते देवदत्तः। तस्मादुपपन्नं भावप्रधानमाख्यातमिति। अपिचोक्तम्। "क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते। त्रीनत्र पुरुषान् विद्यात् कालतस्तु विशिष्यते"—इति। तत् पुनरेतच्चतुःप्रभेदमाख्यातं भवति। कर्त्तरि, भावे, कर्म्मणि, कर्मकर्त्तरि चेति। पचतीति कर्त्तरि। भूयते, पच्यते इति भावकर्म्मणोः। पच्यते स्वयमेवेति कर्मकर्त्तरि। चतुर्ष्वप्यवयवार्थानि द्रव्याण्यप्रधानानीति क्रिया एव प्रधानम्। तामभिदधत् तथैव लक्ष्यमाणं आख्यातसञ्ज्ञो भवतीत्युक्तम्। आख्यातलक्षणस्य प्रतिज्ञाक्रमं भित्त्वा पूर्वमाख्यातलक्षणमुक्तम्, पश्चान्नामलक्षणमुच्यते। किं पुनस्तत्? सत्वप्रधानानि नामानि। लिङ्गसङ्ख्ययोरत्र सद्भाव इति सत्त्वम्। तथा लक्षणोपपत्तेः। तत्रेषु प्रधानं गुणभूता क्रिया नामान्येव तानि। नमन्त्याख्यातशब्दे गुणभावेन, नमन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि। यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमानापि क्रिया अविवक्षिता। द्रव्यपरत्वात्सत्त्वशब्दस्य तद्धिक्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्त्तते॥

आह,—कथं पुनर्नाम्नि क्रिया विद्यत इति, विद्यमानापि वा विवक्षितेति ? उच्यते । प्रकृतिः, प्रत्ययः, विभक्तिरिति त्रेधा विभज्यमानमेतावदेवैतन्नाम । तत्र प्रकृतिर्धातुरित्येकोऽर्थः । धातुश्च पुनः क्रियावचनः, स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम् । यथानश्च यत्रार्थस्तत्र तदभिधायकः शब्दः, यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति । सम्बद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्यमिति । एवं तावत् क्रिया विद्यते यत् पुनरेतदुक्तं—विद्यमानापि क्रिया कथमविवक्षितेति ? अत्र ब्रूमः,—नाम्नि यो धातुः सकृत् प्रयोजयति तेन प्रातिपदिकेनाभिभूतक्रियाभिधानशक्तिः प्रातिपदिकान्तर्लीनशक्तिरेव स्वमर्थमुच्चारयितुमशक्नुवन् प्रातिपदिकार्थमेवानुवर्त्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया । सा तु विद्यमानापि विगृह्यमाणे नाम्नि प्रातिपदिकनिबन्धनादुन्मुच्यमाना द्रव्यगतमर्थं प्रकाशयति, न प्राक्विग्रहादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते । तथाचोक्तम् । "शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते । तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥"—इति । पुनश्चोक्तम् । "अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः । तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ निर्देशः कर्म करणं प्रदानमपकर्षणम् । स्वाम्यर्थोऽप्यधिकरणं विभक्त्यर्थाः प्रकीर्त्तिताः ॥"—इति । स्त्रीपुन्नपुंसकभेदं निपातोपसर्गाणामपि वा कांश्चिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति । अपरे पुनर्भावकालकारकसङ्ख्याश्चत्वार एतेऽर्था आख्यातस्य । तेषां भावप्रधानता भवति । अतो भावप्रधानमाख्यातमित्युक्तम् । नाम्नोऽपि सत्ता द्रव्यं सङ्ख्या लिङ्गमित्येतेऽर्थाः । तेषां द्रव्यं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तम् ॥

एवमेके मन्यन्ते,—"तद्यत्रोभे भावप्रधाने भवतः"। एवं तावदनयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वपदार्थोक्तावेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम्। अथ पुनर्यत्रैते उभे भवतः। क्व च पुनरेते उभे भवतः? वाक्ये। तत्र कस्य प्रधानमर्थः, कस्य गुणभूत इति? शृणु,—भावप्रधाने भवतः, तस्य चिकीर्षितत्वात्। वाक्ये ह्याख्यातं प्रधानं, तदर्थत्वात् गुणभूतं नाम। तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात्। एवं तावदाख्यातं वाक्ये प्रधानम्॥

अथ पुनः कथमभिनिर्वर्त्त्यमानो भाव आख्यातेनोच्यते? किं वा तदाख्यात मिति? यतो लोकप्रसिद्धेरेवोदाहरति। तत् प्रसिद्धत्वाच्छब्दार्थसम्बन्धस्य। "पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्"। अपूर्वमनपरं सत्त्वमेकत्वात् पूर्वापरीभूतं पूर्वापरमिव पौर्वापर्यव्यावस्थितमेकमनेकासु क्रियासु आश्रितमुपानद्धिनहनपूर्वोत्तरपदविहरणपथिभोजनशयनासनोदकपानाद्यास्वाश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्त्तमानं कस्मैचित् पृच्छते किं करोति? अन्य आचष्टे व्रजतीति। अविभक्तकर्तृकं द्वितीयमिति उदाहरणद्वयं भावद्वयोपप्रदर्शनार्थम्। उपक्रमप्रभृतीति। उपक्रम आरम्भस्तस्मादारभ्यापवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः॥

आह,—अन्त्याप्रविधो भावनिर्वृत्तिदर्शनादन्त्ययैव निर्वर्त्त्यत इति? शृणु, पूर्वासामभावे अन्त्यैव न स्यात्, पूर्वापेक्षं हि तस्या अन्त्यात्वम्। अपि च। प्राप्तिफलो हि व्रजतिर्नचैकया क्रिययाऽभिमतदेशान्तरे प्राप्तिरस्ति। तस्मादुपक्रमाद्याभिः क्रियाभिरेवदभिनिष्पाद्यमानो भावोऽन्त्यायामभिसज्जिहते। ततः सन्निकर्षे गृह्यते न त्वसावन्त्ययैव निर्वृत्त

द्धव्यन्ते गृहीतः। अपि च, प्रसिद्धमेतदुपक्रमादारभ्य यच्च व्रजितं, यच्च व्रज्यते, व्रजिष्यमाणं, तत्सर्वमेतीकृत्य वक्तारो भवन्ति व्रजति देवदत्त इति। न प्रसिद्धिस्तपरोद्धुं न्याय्या। यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव शास्त्रेण क्रियते, नोत्पाद्यन्ते शब्दा, नाप्यर्थेषु विधीयन्ते। तस्मात् प्रसिद्धशास्त्रसमयोऽपि लौकिकप्रसिद्धैव पूर्वापरीभूतं भावमाख्यातेनाचष्टे, व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्। तस्मादुपपन्नमनेकक्रियाभिर्निर्वर्त्यमानो भाव आख्यातेनोच्यत इति। आह च। "क्रियासु बह्वीष्वभिमश्रितो यः पूर्वापरीभूत इवैक एव। क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः।"—इति॥

"मूर्त्तं सत्त्वभूतं सत्त्वनामभिः"। कदाचित् तु तमेव भावं तथैवोपक्रमप्रभृत्यभिनिर्वर्त्तमानमपवर्गपर्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वरूपेण लिङ्गसङ्ख्यायुक्तैः सत्त्वनामभिराचष्टे॥

कथम्? "व्रज्या पक्तिरिति"। तत्रोक्तो विशेषः। कृदभिहितो भावो द्रव्यवद्भवति सोऽयं प्रयुक्तस्य लक्षणस्य प्रयोगमपेक्ष्य क्वचिदपवादः। आह च। "क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात्। सङ्ख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्ये॥"—इति॥

आह,—कस्मात् पुनरेक एव भावस्तिङन्तेन कृदन्तेन चान्ययोच्यत इति? उच्यते,—शब्दस्वाभाव्यादेते नान्यदत्र प्रयोजकमस्ति। अपि चोक्तमस्माभिर्व्यवस्थितानामेव शब्दानामभिधानाभिधेयसम्बन्धेनाभिसम्बन्धानामेव नित्यमन्वाख्यानमात्रमेव क्रियते। नोत्पाद्यन्तेऽर्थेषु वा विधीयन्ते शब्दा इति। व्रज्यापक्तिरित्युदाहरणद्वयमुक्तप्रयोजनम्॥

"अद इति सत्त्वानामुपदेशः" इति। भावोऽधिकृतः। स

च पुनः सत्वभूतो नेतर, यतस्तत्समस्थेनैव नाम्नो
च्यते तदुच्यते । किं पुनस्तत् सामान्यविशेषवाचित्वम् ?
इति सत्त्वानामुपदेश. । सामान्यत इति वाक्यशेष. ।
मयि सत्त्वानामध्ययने प्राप्ते ।
हृतमुपप्रदर्शनार्थम् ॥ १ ॥

आह,—विशेषोपदेश कथमिति ? उच्यते खण्डसूत्रम्,—

गौरश्वः पुरुषो हस्तीति भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीतीन्द्रियनित्यं वचनमौदुम्बरायणस्तत्र चतुष्ट्वं नोपपद्यते युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः शास्त्रकृतो योगश्च व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके तेषां मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे ॥ २ ॥

"गौरश्वपुरुषो हस्तीति"। सत्त्वाना विशेषोपदेश इति वाक्यशेष । सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम्। सामान्यवृत्त्या विशेषवृत्त्या चोभयया शब्द प्रवर्त्तत इत्युभयमुपदर्शितम् ॥

"भवतीति भावस्य"। सामान्येनोपदेश । अत्र हि सर्वथा सत्तावाचिनामध्ययने प्राप्ते भवतिरवैक उदाहरणार्थं परिगृहीत । विद्यमानत्वमवानुभवन्त सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसम्बध्यन्ते । तस्माद्भवतीति सर्वक्रियाप्रसववीजभूतमस्तित्वमात्रमेव निरुपपदेन भव

तिशब्देनोच्यत इत्युपपन्नं भवति। सामान्यवाचित्वं विशेषनिर्देशः ॥

कथमिति ? उच्यते,—"आस्ते शेते व्रजति तिष्ठतीति"। सकर्मकाकर्मकोपदर्शनार्थमुभयेषामुदाहरणम् ॥

"इन्द्रियनित्यं वचनमौदुम्बरायणस्तत्र चतुष्टं नोपपद्यते"। आह,—इह तावदुक्तं पदचतुष्टयम्। भाववचनता, द्रव्यवचनता, गुणभावः, प्रधानभावः, पूर्वापरीभावः, सामान्यवाचित्वं, विशेषवाचित्वमिति। नोपपद्यते। कस्मात् ? वचनानित्यत्वात्। कः पुनरेवमाहाऽनित्यं वचनमिति ? उच्यते,—इन्द्रियनित्यं वचनमिति। इन्द्र आत्मा, स येन ईयते निह्नूयते अनुमीयते चास्यसावात्मा कर्त्ता, यस्येदं करणम्, नाकर्त्तृकं करणमस्तीति, तदिन्द्रियम्। तस्मिन्नित्यमिन्द्रियनित्यम्। किं पुनस्तत् ? वचनम्। उच्यते अनेनेति वचनं वाक्यमित्यर्थः। कतमत् ? यदेतन्नामाख्यातोपसर्गनिपातात्मकम्। औदुम्बरायण आचार्य्या मन्यत इति वाक्यशेषः। उदुम्बरस्यापत्यमौदुम्बरिः, तस्यापत्यमौदुम्बरायणः ॥

आह,—ततः किमिति ? उच्यते,—तत्र तस्मिन् वाक्य एव मिन्द्रियनित्ये सति यदेतत् पदचतुष्टमुक्तमेतन्नोपपद्यते। कस्मात् ? शृणु,—यावदेव वक्तुर्वागिन्द्रिये वचनम्, तावदेव तदस्तीति शक्यते वक्तुं, प्रच्युतं च नास्ति। अपि च। वाक्यमपि वाक्यं समस्तमुद्धूतं तदिन्द्रियेणावतिष्ठते। यदवयवभूतानि पदान्यवस्थितानि परिसङ्ख्यातुम्। न च विनष्टाविनष्टयोः पदयोः सह परिसंख्यानमस्ति। तस्माद्वचनानित्यत्वात् पदचतुष्टानुपपत्तिरित्युपपन्नम् ॥

किं चान्यत्,—"अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः"। वाशब्दः समुच्चयार्थो "वा विकल्पोपमानद्वन्द्व-

श्रोत्रद्वारेणानुप्रविश्य प्रख्याप्य बुद्धिं सर्वार्थरूपां सर्वाभिधा-नरूपां व्याप्नोतीत्येवं व्याप्तिमान् शब्दः। आह,—ततः किं यदि व्याप्तिमाञ्छब्दः ? उच्यते,—यदि नित्यो यदा नित्यः पद-चतुष्टादि सर्वमुपपद्यत एव। किं कारणम् ? न ह्यसंव्याप्य पुरु-षस्य बुद्धावस्वसमर्थप्रत्ययमादधीत, न चानवस्थितौ व्याप्नुयात्। ततश्च किम् ? स शब्दः स्वमर्थमभिदधत् स्वक्रियाप्रवेशोपज-नितेनाभिधानेनाख्यातमित्येवमादिना स्वमाख्यानमभिसम्बध्य तिरोभवितुमुपक्रमते, विनाशञ्चोपैति। तस्य स्वदेशोपजनि-तैराख्यातादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यान-मुपपद्यत एव। तस्मात्सम्यगेवोक्तम्। यत् पुनरेतदुक्तं न हि विनष्टाविनष्टयोः परिसङ्ख्यानमस्तीति। अत्र ब्रूमः,—पुरुष-प्रयत्नोपजनितादङ्गाभिघातात् परस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते, न तु शब्दाकृतयः। तास्तु तयाभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्य. स्थिता एव भवन्ति। तासु साक्षात्पदपरिसङ्ख्यानं वर्त्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्य्यते। तस्माद् व्याप्तिमत्त्वा-च्छब्दस्य पदचतुष्टादि सर्वमुपपद्यत एव। व्याप्तिमत्त्वादित्य-नेनैवेतरेतरोपदेशः प्रत्युक्तः। शास्त्रकृतो योगश्च। नामा-ख्यातपदरूपवुद्धित्वे सत्त्वक्रियाविषये गुणप्रधानभावेनाति-ष्ठेत्। तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्य्यते। तथाच धातुरूपा बुद्धिस्तदर्थया संयुज्यते। बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण संस्क्रियते। तस्यां संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते। तदभिधाय-कत्वाच्छब्दस्य। तत्र यदुक्तं वचनानित्यत्वादितरेतरोपदेशः, शास्त्रकृतस्य योगो नोपपद्यत इत्येतदयुक्तमिति। नित्यत्व-पक्षेऽपि युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्ना-

स्तीति यदुक्तम्, अनैकान्तिकोऽसौ दृष्टान्तः । दृष्टौ हि युगपदुत्पन्नयोः एककाले राजपुत्रामात्यपुत्रयोर्गुणप्रधानभावः । तत्र यदुक्तं युगपदुत्पन्नानामितरेतरोपदेशो न प्राप्नोतीत्येतदयुक्तं, व्याप्तिमत्त्वाच्छब्दस्य सर्वमुपपद्यत इति, तदेव सम्यगिति ॥

अपरो व्याख्यामार्गः।—इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिस्तदाश्रयस्य च सर्वस्येत्येवमाचिते परिहारपक्षेऽयेदमवताय्यते । युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेश इति । अत्र समच्चये एव वाशब्दः । कथम् ? अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा नित्यानां वा अनित्यानां वेत्यर्थः । इतरेतरोपदेशः । इतरस्येत्याख्यातस्य क्रियावचने शब्देऽभिधानत्वेनोपदेशः, इतरस्य च नामशब्दस्य सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः । यास्ककृतो योगश्च । लक्षणशास्त्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते । तस्मादुपपद्यते पदचतुष्टमिति ॥

आह,—आगमनमात्र मेतत् । हेतुरुच्यतां, कथं विनष्टाविनष्टयोः सह परिसङ्ख्यानम्, अवस्थितयोर्वा गुणप्रधानभाव इति ? उच्यते,—व्याप्तिमत्त्वात् तु शब्दस्य । हेत्वर्थः समान पूर्वेण ॥

सम्पत्तिः, फलसम्पन्नमेव कर्म भविष्यतीत्येवमर्थं वेदे मन्त्र- समाम्नात इति वाक्यशेषः । इतरथा हि पुरुषेषु विज्ञानस्यानि- त्यत्वाद्यथार्थं नाभिदधते देवान्नामाख्यातोपसर्गनिपातैरनि- श्चितत्वान्मन्दनिश्चितत्वाद्व्याकरणशीलत्वाद्वा देवानामपराध्ये यथावत् प्रयुञ्जानाः नामाख्यातोपसर्गनिपातान् । ततश्च सर्वा र्थप्रत्यक्षदृश्यो देवाः स्वल्पमप्ययथावदभिधानं न मर्षयन्ति । विगुणमेतदिति विद्याऽनित्यत्वात्तदभावेनेषुः कर्मणि । ततश्च देवताद्वेषे कर्मफलं सम्पद्यते । न च केवलं फलासम्पत्तिः । किं तर्हि दुरिष्टहेतुको दोषोऽपि स्यात् । तस्मादेत एव नामाख्यातोपसर्गनिपाताः प्रयोगानुपरिपाटीविनियमार्थं मन्त्रेषु वेदे समाम्नाताः । नहि नामाख्यातोपसर्गनिपातान् परित्यज्य मन्त्राः सन्ति । एतदेव चतुर्विधं पदजातं प्रयोगा- नुपरिपाट्या कयाचिदवस्थितं मन्त्रा इत्युच्यन्ते ।

आह,—कथमनित्यत्वं विद्यायाः पुरुषेष्विति ? उच्यते,— इह तु न वाक्यविरचनानुक्रमेण अर्थवस्त्वनुप्रेप्यते, मनुष्य एव- मेत ब्रूयात्—'त्वं गन्तुं देवदत्तमिति' । स तेनैव वाक्यविर- चनानुक्रमेण वदमपि स्वमर्थं न शक्नोति प्रतिपादयितुम् । एवं नित्यत्वं विद्यायाः पुरुषेषु । तद्दोषं वा मनुष्यान् प्रति, एष मनुष्याणामनित्यत्वाद्विद्यायाः । अयमपि हि क्यानुक्रमेण वक्ति मनुष्य. कश्चिदर्थं, न तेनैव स्वा मं वक्तुम् । तत्र यदुक्तं—किमर्थं मन्त्रो वेदे समाम्नात इदं न युक्तम् । पुरुषविद्यानित्यत्वात्कर्मफलसम्पत्त्यर्थं वेदे समाम्नात इति । नन्वविचारितमेव विज्ञायते । अत ह । पदचतुष्टमाश्रित्य पञ्चप्रतिपक्षयो विचार्य अवधारि- विषयायामेवप्रसङ्गेनैवास्य परिक्लिप्ताः । देवमनुष्यव्यव- हारार्थमेतदिति । तदेतत्सर्वमपि चोदकवशेन प्रसक्तानु-

एवोच्यते । किं तर्हि ? अपेक्षाकृतं शून्यत्वमिति । भावशब्द एवासोपपदत्वेन युक्त इति चेत्, न, प्रयोगाप्रसिद्धेः । न हि अभावे भाव इति प्रसिद्धः प्रयोग. । न च प्रयुज्यमानोऽपि भावशब्दो भावशब्द एवोपपदत्वेन प्रधानादिशब्दवत् कञ्चिद्विशेषप्रत्ययमादधाति । तस्मात् सर्वोपपदहीनस्य भवतेरात्मभावेनेदं जगन्नित्यम्, इतरैस्तु भावविकारैः परमाण्वादिभिर्भावविकारात्मभिरनित्यम् । कस्मात् ? विकारात्मकत्वादेव । ...ारो ह्यनित्य, तमेव भवनमात्राभिसम्बन्धेन प्रहीनसर्वविकारम् । एतत्सद्भावविदोऽवधृतवेदान्तरहस्यममन्द...रावरविदो मेधाविन आप्तवेदविदो न कृत्स्नकारितया युक्ताधिकारबन्धना एतत्परिज्ञानादेवोपक्षीणकर्मोपभोगसन्ताना सन्त आत्मकामा प्रतिपद्यन्ते । नेतरे प्रधानादिविद । वेदानुशासनैकदेशानीश्वरपुरुषप्रधानादीननित्यान् भावविकारान् स्वमतिकल्पनाहेतुव्यवहितान् मत्वा स्थिरीकृत्यानेन प्रतिपद्यन्ते भवनमात्राभिसम्बन्धेन तदेतमादात्मन उद्दिजन्त आत्मप्रकाशकान्तर्यामिस्थय चित्सन्तानमिव मन्यमाना । केचिच्च शक्तिहानादसम्बाधनादेव । स एष इह वेदाङ्गैर्वेदार्थनिर्वचनाभिनिवेशशब्दाना सामान्यविशेषहस्य पदेशप्रसङ्गे प्रवर्त्तमाने भवते कृदन्तीभूतस्य भवनमात्रमेव वस्तु सामर्थ्यम, नेतरान् भावविकारान् विद्यमानानपीति । एतेन प्रसङ्गेनात्र मसूचितो वेदरहस्यो ब्राह्मणे ॥ २ ॥

तत्र विस्तरेणाय विधीयते,—

**षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति जायत इति पूर्वभावस्यादिमाचष्टे**

नापरभावमाचष्टे न प्रतिषे
सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य
तत्त्वाद्विकारं वर्द्धत इति स्वाङ्गाभ्युच्चयं सांयोगि-
कानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरी-
रेणेति वाऽपक्षीयत इत्येतेनैव व्याख्यातः ।
लोमं विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्व-
भावमाचष्टे न प्रतिषेधति ॥ ३ ॥

"षड् भावविकारा भवन्तीति"। अपि च लक्षणविदो विगृह्णन्ति भावशब्दं भवतेः, स्वपदार्थे भवनं भाव इति। "सन्मात्रं भावलिङ्गं स्यात्"—इति पठन्ति। तस्य विकाराः भावविकाराः, भवन्तीति सामान्यादात्मनः प्रस्कन्दा इव ... स्वेन वैशेषिकेण भावविकारात्मलाभाय भवन्ति। इतिपरः प्रयुज्यमानः शब्दपदार्थकः।

क एवमाह "षड् भावविकाराः"—इति? उच्यते, "वार्ष्यायणिः"—इति। तिकादिपाठात् फिञ्। इति वाक्यशेषः॥ निर्देश उपलक्षणं ... सुखार्थम्। अतोऽन्ये भावविकारा एतेषामेव भावविकारा भवन्तीति॥

आह,—कतमत्तदिति? उच्यते,—"जायतेऽस्ति विपरिण-मते वर्द्धतेऽपक्षीयते विनश्यतीति"॥

आह,—एतेषां जन्यादीनां भावविकारशब्दानां कः कस्यां विकारावस्थायामवस्थितं भावमाचष्टे, कं वा विद्य-मानमपि नाचष्टे, कं वा न प्रतिषेधतीति? उच्यते,—

"जायत इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति"। जनिः पूर्वो भावः, तस्य पूर्वभावस्य षणां भावविकाराणां यदि वाच्यो यः पूर्वो भावविकारः, तस्य जायत इत्यनेन शब्देनादिमाचष्टे ॥

आह,—किमादिमेव? नेत्युच्यते। उक्तमुपक्रमप्रभृत्यपवर्गपर्यन्तमिति। स एव पूर्वापरीभूतो भावस्तावदेव जायत इत्युच्यते। यावत्तिष्ठाशब्दवाच्य. संवृत्तो जात इति। नापरभावमाचष्टे, न प्रतिषेधति। नेति प्रतिषेधे, न परो भावः, अपरभावः॥

आह,—कस्मादपरः? पौर्वापर्यं हि देशकालकृतम् उच्यते,—जनिशब्दवाच्यो भावविकार. पूर्वः, तस्मादपरकालोऽस्तिशब्दवाच्यः। तत्रैव सति जनिशब्दवाच्ये भावविकारे स्तोरप्यर्थोऽस्ति विद्यमानता। किं कारणम्? न ह्यविद्यमानो जायते। अपि च कारणात्मनि भावे सर्वे एते भावविकाराः सन्ति। सर्वार्थप्रसवशक्तित्वात्तस्य। यथा पृथिव्यां घटादयो भावविकाराः। ते तु द्वारद्वारिभावेन विशेषात्मलाभं प्रपद्यन्ति। तद्यथा। जनिद्वारेणास्तिः। अस्तिद्वारेण विपरिणमतिः। किं कारणम्? न ह्यजातोऽस्तीत्युच्यते। नाप्यविद्यमानो विपरिणमत इति। तत्रैवं सति जायत इत्येष शब्दो जन्मैव केवल ब्रवीत्यविवक्षितेतरभावविशेषम्। किं कारणम्? एकार्थवृत्तित्वाच्छब्दस्य। अस्तिशब्दवाच्यस्य भावविकारस्यासम्पूर्णत्वात्। अनवधृतरूपं हि तस्यामवस्थाया तद्भवत्यनुमानगम्य किमपि जायत इति। तस्माज्जायत इत्येष शब्दो जायमानावस्थाया मस्तित्वं विद्यमानमपि नाचष्टे॥

आह,—यदि नाचष्टेऽर्थादापन्नं भवति प्रतिषेधतीति। उच्यते,—"न प्रतिषेधति"—इति। अस्तित्वस्य न प्रतिषेधं

नापरभावमाचष्टे न प्रतिषे[illegible]

सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं वर्द्धत इति स्वाङ्गाभ्युच्चय सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वाऽपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ ३ ॥

"षड् भावविकारा भवन्तीति"। अपि च लक्षणविदो विगृह्णन्ति भावशब्द भवते, स्वपदार्थे भवन भाव इति। "सम्भाव भावलिङ्ग स्यात्"—इति पठन्ति। तस्य विकारा भावविकारा, भवन्तीति सामान्यादात्मनः प्रस्कन्दा इव मन्तव्येन वैशेषिकेण भावविकारात्मलाभाय भवन्ति। इतिपर प्रयुज्यमान शब्दपदार्थक।

क एवमाह "षड् भावविकारा"—इति? उच्यते,—"वार्ष्यायणि"—इति। तिकादिपाठात् फिञ्। आचार्य्य इति वाक्यशेष॥ निर्देशत उपलब्धाना षडित्यवधारण सुखार्थम्। अतोऽन्ये भावविकारा एतेषामेव भावविकारा भवन्तीति।

आह,—कथमेतदिति? उच्यते,—"जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति"।

आह,—एतेषां जन्यादीनां भावविकारशब्दानां क कस्यां विकारावस्थायामवस्थित भावमाचष्टे, क वा विद्यमानमपि नाचष्टे, क वा न प्रतिषेधतीति? उच्यते,—

न प्रतिषेधति"। विनाश एवापरभावस्तस्यादिमाचष्टे। किमादिमेव ? न इत्युच्यते। उपक्रमप्रभृत्यपवर्गपर्यन्तमित्युक्तं, यावद्विनष्ट इति। स च विनाशं ब्रुवन् अपूर्वभावमाचष्टेऽप क्षीयतेरर्थं विज्ञातमपि तस्मिन विनाशे कथं युगपदपक्षीयते रर्थो विनाशेऽस्तीति ? उच्यते,—न ह्यनपक्षीयमाणो विनश्येत् ॥ ३ ॥

**अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथावचनमभ्यूहितव्या न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तन्नामाख्यातयोरर्थविकरणम् ॥ ४ ॥**

आह,—एतेभ्यो भावविकारेभ्य किमन्येऽपि व्यतिरिक्ता सन्ति भावविकारा न वा ? इत्युच्यते,—"अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह"। अतो भावविकारषट्काद्येऽन्यत्वेन भावविकारा लक्ष्यन्ते, ते पृथक् पृथगत्यन्तभिन्ना सन्ति। किन्तर्हि ? एतेषामेव विकारा भवन्ति। तद्यथा—जनिशब्दवाच्यो भावविकारोऽनेकप्रभेदभिन्नोऽनेक पर्य्यायशब्दवचनो निष्पद्यतेऽभिव्यज्यते उत्तिष्ठतीत्येवमाद्युपेक्षितव्यम्। तथा अस्तिशब्दवाच्योऽनेकप्रभेदभिन्नोऽनेक पर्य्यायवचनश्च, अस्ति, विद्यते, भवतीत्येवमादि। तथा विपरिणमतिशब्दवाच्यो विपरिणमते, जीर्य्यति, भावान्तरमापद्यते इत्येवमादि। तथा वर्द्धतिशब्दवाच्यो वर्द्धते, पुष्यति,

"समित्येकीभावम्" अर्थमाह। सङ्गच्छतीति॥

"व्यपेत्येतस्य प्रातिलोम्यम्" आहतु। विगच्छतीति विप-रीतार्थो विगच्छति, अपगच्छतीति॥

"अन्विति सादृश्यापरभावम्" आह। अनुरूपमस्येद मिति सादृश्यम्। अनुगच्छतीत्यपरभावः॥

"अपीति संसर्गम्" आह। सर्पिषोऽपि स्यात्। मधुनो ऽपि स्यात॥

"उपेत्युपजनम्"। उपजायते॥

"परीति सर्वतोभावम्" आह। परिधावतीति॥

"अधीत्युपरिभावम्" आह। "ऐश्वर्यं वा"। अधिति ष्ठति, अधिपतिरिति॥

आह,—नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीत्युक्तम्। अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येव न गृह्यते। "उपसर्गाः क्रियायोगे (पा० १, ४, ५८)"—इति प्रसिद्धो ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना। उपसर्गा हि क्रियाद्वारेणैव नामान्यास्कन्दन्तीति॥ ५॥

इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां षष्ठस्याध्यायस्य [प्रथमाध्यायस्य] प्रथम पादः॥ १॥

---

द्वितीयपादः॥

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणा-

स्तेषामेते चत्वार उपमार्थे भवन्तीवेति भाषायाञ्चान्वध्यायञ्चाग्निरिवेन्द्र इवेति नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायन्नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत् प्रतिषेधति दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते ॥ १ ॥

"अथ निपाताः"। उक्तमुपसर्गलक्षणं सामान्यम् (४४२ पृ०),—"नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति"—इति, विशेषलक्षणमपि (४४५ पृ०),—"आ इत्यर्वागर्थे" इत्येवमादि। अत्रा इति कृत्वा च ते प्रत्येकं समाम्नाताः। अधुना सामान्यलक्षणानुषक्तं प्रतिज्ञाप्रसक्तमिव निपातलक्षणं वर्णयिष्यामः। तदधिकारोऽयमथशब्दः॥

"उच्चावचेष्वर्थेषु निपतन्ति"। उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः॥

आह,—कतमे पुनस्ते? उच्यते,—"अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः"। उपमैवार्थ उपमार्थः, तस्मिन्नुपमार्थे। उपमा नाम,—कस्मिंश्चिदर्थे यः प्रसिद्धो गुणः, तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं क्रियते सोपमा। कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थः, तस्मिन् कर्मोपसंग्रहार्थे। अर्थोपसंग्रहार्थे इत्यर्थः। कर्मशब्दो हि प्रायेणार्थपर्यायवचन एतस्मिञ्छास्त्रे। "गतिकर्माण उत्तरे धातवः (२, २, ३)", गत्यर्था इति गम्यते।

पदमेव पूरयितव्यं, येषामयं, ते पदपूरणा.। तदेतत् विधात्वमर्थभेदकृतं निपातानां समासेन॥

आह,—किमविशेषेण सर्वे एतस्मिन्नर्थे निपतन्ति? नेत्युच्यते। "तेषामेते चत्वार उपमार्थे भवन्ति"। तेषां सर्वेषां मध्ये एते एव चत्वारः—इव, न, चित्, नु च प्रायोदृष्ट्या उपमार्थे भवन्ति॥

अधुनैव सुखा भाषाच्छन्दःप्रविभागेनोदाहरणमेकैकं दर्शयति। समासविस्तराभ्यां हि शास्त्राणि प्रतीयन्ते। तत्र तावत्,—"इवेति भाषायां च" उपमार्थीयः। "अन्वध्यायञ्च" छन्दसि चेत्यर्थः। कश्चित् छन्दस्येव भवति, न भाषायाम् कश्चिद्भाषायामेव, न छन्दसि, कश्चिदुभयत्र, इत्यतो विभागो प्रदर्श्यते॥

आह,—किमुदाहरणमिवेत्यस्योपमार्थीयस्य? का चो भागश्ब्दस्य व्युत्पत्तिरिति? उच्यते,—उपगम्यातथागुणैर्मीयत इत्युपमा। "अग्निरिवेन्द्र इवेति"—इत्येतदस्योदाहरणम्। तपसः पुत्रो मन्युर्नाम, तस्येयमार्षम्॥

आह,—ननु सर्व एवायमृग्यजुःसामाथर्वात्मको ब्रह्मादिस्तम्बपर्यन्तपुरुषस्य भगवतो हिरण्यगर्भप्राणस्यार्षमेतद्यके रहस्यब्राह्मणे "शतर्चिनो मध्यमा."—इत्येवमाद्युपक्रम्य पुनः पर्याहृत्य "एतमेव सन्तं शतर्चिन इत्याचक्षते एतमेव सन्तं गृत्समद इत्याचक्षते"—इत्येवमादिना क्रमो

ह्येकस्मादात्मनः परिमयमाणश्चेष सन् शौनकः कुर्य्यात्, पश्यतो ह्युभावपि। तेन चैवमावुभावपि मन्त्राभिव्यक्तौ व्याप्तौ। बुद्धिदेवतात्वेन हिरण्यगर्भः क्षेत्रज्ञोऽवस्थितः, सर्वभूतानां कर्मविपाकानुरूप्येण। यमर्थं शब्दं वा दर्शयति। तदितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यति। तत्रैवं सति वसिष्ठादिर्मन्त्रदृक् क्षेत्रज्ञः। तेनैवोपदर्शितं मन्त्रं पश्यतीत्युभयमुपपद्यते। एवं सत्युभावपि याथात्म्यतस्तावदनुसन्धेयौ मन्त्रप्रयोगकाले उभयोरर्थवत्त्वाय॥ यत् पुनरेतदुक्तं भवति, श्रुतिस्मृत्योर्विरोधे श्रुतिरनपेक्ष्येति। न हि विरोधोऽस्त्युभयोरपि सन्धीयमानयोः। अपि च श्रुतिपूर्वकमेवेदं स्मरणं, न स्वतन्त्रम्। ताण्डके हि रहस्यब्राह्मणं दर्शयति,—"यत् सामास्तोष्यन् स्यात्, तत्सामोपधावेत्। यस्यामृचि तामृचम्। यदार्षं तमृषिम्"—इति। तत्र यदुक्तं स्मृतिरियमिति, तदयुक्तम्। तस्माद्वक्तव्यमेव विशिष्यार्षमिति॥

त्रिष्टुबेषा, मान्यवी, श्येनादिषु निष्केवल्ये शस्यते। "अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व।" (ऋ० सं० ८, ३, १८, २)। मन्युः पुनरिन्द्र एव, "मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः। (ऋ० सं० ८, ३, १९, २)। माहाभाग्यात् कर्मपृथक्त्वाच्च। अथवा देवतान्तरम्, पृथगभिधानस्तुत्यभिधानसम्बन्धात्॥

आह,—ननु मान्यवो मन्त्रो माहेन्द्रग्रहयाजिसन्निधौ निष्केवल्ये शस्यमानो महेन्द्रमभिहितसंस्कारेणासमर्थ एव वक्तुम्। अथ किमर्थमयं निष्केवल्ये शस्यते इति? उच्यते,—यस्मादेव हि स्तुत्यभिव्यक्तमपूर्वमारादुपकाराङ्गभूतं माहेन्द्रग्रहयाजिव्यक्तस्यापूर्वस्य। अपि वा स्तुतिसंयोगात् प्रकरणे

स्तौतिशंसती क्रियोत्पत्तिं विदधतामिति न्यायविदो याज्ञिका पठन्ति। वक्ष्यति चायमपि,—"इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः (७, ३, ६)"—इति। स एष मन्युस्तुतिभाक् एव। यथा—"यस्त्वा शूर (ऋ॰ सं॰ ५, २, २१, २)"—इति इन्द्र एव तस्मिन्निपातेनैकवस्त्वे, यथा "आपो हि ष्ठा (ऋ॰ सं॰ ७, ६, ५, १)"—इत्याप आग्निमारुते, सूर्यादय आश्विने, एवम्॥

हे 'मन्यो'। 'सहुरे' सहनशील। एतस्मिन् शत्रूणामभिभवनकाले मत्युपस्थिते 'हुत' आहूतः सन् अस्माभिः, 'सेनानी' सेनाप्रणेता 'नः' अस्माकम् 'एधि' भव। ततश्च 'अग्निरिव' 'त्विषितः' दीप्तस्त्वं तेजसा 'सहस्व' अभिभव तानस्मच्छत्रून्। 'हत्वाय' हत्वैव यदेतेषामस्मच्छत्रूणां वेदः' धनं तत् त्वमादाय तेषामस्मद्योधानाम् 'ओजः' बलं 'मिमानः' निर्माय यथावस्तु यथार्हं 'विभजस्व'। येऽपि च केचिद्धताः-वशिष्टाः 'मृध' मृधकारिणः अस्मद्द्विषः अशक्ताः प्रत्याजिगीर्षन्त्ये तद्धनम्, तेषामोजो मिमानः तुलयित्वा कियदवशिष्टबला एते न शक्ता प्रत्याहर्तुमित्येवं मिमानस्तावन्मात्रशेषबलान् कृत्वा त्वं 'विनुदस्व' एनान् दूरं प्रक्षिप अपुनरागमनाय॥

द्वितीयमुदाहरणमितस्यैव,—"इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः। इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय।" (ऋ॰ सं॰ ८, ८, ३१, २)। अनया चानुष्टुभा ध्रुव आङ्गिरसो राजानमभिषिषेच। 'इहैव' राष्ट्रे त्वम् 'एधि' भव। 'मा' पातस्त्वम् 'अप च्योष्ठाः'। 'पर्वत इव' 'अविचाचलिः' अविचलनशीलः। 'इन्द्र इव' च 'इह' 'ध्रुव' शाश्वतः 'तिष्ठ'। स्थित्वा च इदं 'राष्ट्रम्' 'इह' 'उ' एव विभूतियोगेन स्थितं 'धारय'-इत्याशीः॥

भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठितम्। अथवा एते एव। 'अग्निरिव तीक्ष्णः' 'इन्द्र इव विक्रान्तः'॥

"नेति प्रतिषेधार्थीयो भाषायाम्"। प्रसिद्धः। "उभयमन्वध्यायम्"। "नेन्द्रं देवममंसतेति (ऋ० म० ८, ३, २८, १)"। नेन्द्रं देवमात्मनो दीपयितारममन्यन्तादित्यर्थमय:॥

आह,—किं पुनर्लक्षणमिति? उच्यते,—"प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति"।

"दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति। येनार्थेनोपमेयमर्थमुपमिमीते। तद्यथा,—"दुर्मदासो न सुरायामिति"। "हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्। ऊधर्न नग्ना जरन्ते॥" (ऋ० म० ५, ७, १८, १)। काण्वो मेधातिथिराङ्गिरसश्च प्रियमेध इन्द्रं सूक्तं ददृशाते। तत्रैषा गायत्री। येषामपि विनियोगः क्वचिदन्यत्र नास्ति, तेऽपि याच.स्तोमे विनियुज्यन्ते। 'हृत्सु' 'पीतासः' पीताः सन्तो हृदयेष्ववसिताः सोमाः 'युध्यन्ते' सम्प्रहारमिव कुर्वन्ति। अत्र विशिष्ट इत्येव ग्रहमानाः। क इव? 'दुर्मदासो न' दुर्मदासः "आज्जसेरसुक् (पा० ७, १, ५०)" यथा कुत्सितमदाः केचित् पुरुषाः सुरायां पीतायां मत्ताः युध्येरन्, एवम्। किञ्च, तमेव यजमानं 'जरन्ते' स्तुवन्तीव आत्मनाभयरितुष्टाः। कथं जरन्ते? 'ऊधर्न' ऊधरिव रात्रिमिव 'नग्नाः' भूत्वा स्त्रियं सम्प्रयोच्यामह इत्येवमभिप्राया इव। "नग्नाः' स्तोतारः। ते च 'ऊधर्न' पयसा पूर्णं गवादे ऊध इव सोमपूर्णं त्वां 'जरन्ते' स्तुवन्ति।" इति सायणः॥ केचिद्विशिष्टाः पुरुषाः॥ १॥

चिद्दित्येषोऽनेककर्माऽऽचार्य्यश्चिदिदं ब्रूया-

'पृथक्त्वमह' पृथग्भाव एव 'विज्ञायते'। तद्यथा,—देवदत्त-यज्ञदत्तौ, देवदत्तश्च यज्ञदत्तश्चेति ॥

आह,—द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते, न तु तयोरौद्देशिकमिव पृथक्त्वमिति। यथा गा॰, अश्वान्, पुरुषान्, पशूनिति प्रत्यैकमुद्दिश्यमानानाम्। इह तु विग्रहेण च शब्दाग्रमाडे तत् पृथक्त्वमुपजायते। नानायहर्ण द्वयोर्बहूनामर्थानां विग्रहः स एव पृथक्त्वहेतोः पृथक्त्वेन निमित्तेनोपलक्ष्यमाणः, यस्माद् द्वावर्थौ बहून् वा गृहीत्वैकस्मिन् कर्मणि उपसमावेष्टयति। तद्यथा,—'देवदत्तयज्ञदत्तौ पचेते'—इत्येवम्। तस्मात 'कर्मोपसंग्रह'—इत्येतदाखैव तद्दयति। अथवा इहस्तिर्येत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिश्चेति ॥

कतमः पुनरसाविति? उच्यते,—"चेति" कदाचिदयमेव 'समुच्चयार्थे' 'उभाभ्याम्' अप्ययोभ्या विग्रहीताभ्यामेव संयुक्त 'प्रयुज्यते'। तथाच,—"अह च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ। अरातीवा चिद्द्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः।" (ऋ॰ सं॰ ६, ४, ४१, ५)। मेरपुत्र. प्रगाथोऽनया ऐन्द्र्या पङ्क्त्या इन्द्रस्य सख्यार्थी सन्नब्रवीत्। हे 'वृत्रहन्' इन्द्र! 'अह च' प्रगाथ 'त्व' च 'संयुज्याव'। एकस्मिन्नर्थे सति माभिलक्षणे युज्यावहै'आ सनिभ्य.' आप्राप्ते.। 'अरातीवा'—इत्यकं पदम् अत्रैवमावा संयुक्तौ दृष्ट्वा हे 'अद्रिव.'। 'अरातीवा चित्' अदानशीलोऽपि दानशीलतामुपेत्यास्मत्स्यत एवावयोर्दानम्। 'भद्रा' भन्दनीया 'इन्द्रस्य' 'रातयः' दानानीत्येव मन्यमानः। को हि नाम त्वत्संयुक्तानामस्माकं न दद्यादित्यभिप्रायः ॥

अथाप्याकारः "एतस्मिन्नेवार्थे" समुच्चयार्थे। "देवेभ्यश्च

पितृभ्य आ"—इति। अयमस्मिन्मन्त्रे आकारः। "यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः। प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ॥" (ऋ० सं०७,६,२२,१)। अनुष्टुप्, आग्नेयी, पितृयज्ञे विनियुक्ता। 'योऽग्निः' कव्यस्य वोढा, यस्यायमधिकारः, कव्यानि वोढव्यानीति, स इहास्माक पितृयज्ञे होतृत्वेन, स्थितः, 'पितॄन्' 'यक्षत्' पूजयत्वित्यर्थः। किंलक्षणान् 'ऋतावृधः' सत्यवृधो वा यज्ञवृधो वा। किञ्च। 'प्रेदु हव्यानि' वोचति, वोचतु च। प्रब्रवीत्वेतानि हवींष्यस्मत्प्रदत्तानि। कस्मै ? 'देवेभ्यश्च पितृभ्यश्च'—इति॥

"वेति" अयं "विचारणार्थे"। समुच्चयार्थीयप्रसङ्गेनोदाह्रियते। "हन्ताहं पृथिवीमिमां निदधानीह वेह वा। कुवित्सोमस्यापामिति॥" (ऋ० सं० ८, ६, २७, ३)। ऐन्द्री लवस्यार्षम्, गायत्री। 'हन्त' इदानीमिव 'अहम्' 'इमां पृथिवीम्' 'इह वा' अन्तरिक्षलोके, 'इह वा' द्युलोके। अथवा 'इह' दक्षिणे स्कन्धे, 'इह वा' सव्ये 'निदधानि' अवस्थापयामि। अतः स्थानादुद्धृत्य। अथ किमर्थं ब्रूते ? 'कुवित्सोमस्य' बहुं सोमम् 'अपाम्' पीतवानिति। अस्य मे सोमपानस्यानुरूपमेव वीर्यमस्तीत्यभिप्रायः॥

"अथापि" "वेति" अयं "समुच्चयार्थे भवति"। "वायुर्वा त्वा मनुर्वा त्वे ति"। "*वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः। ते अग्ने अश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः* (य० सं० ८, ७)"। अनुष्टुवेषा। वाजपेयेऽश्वयोजने विनियुक्ता। हे अश्व ! वायुश्च त्वा मनुश्च त्वा, गन्धर्वा एते सप्तविंशतिर्युञ्जन्ति त्वामस्मिन् रथे। ते हि विदुर्यथा त्वं योक्तव्यः। एवञ्च पृथग्भ्यर्थं युञ्जन्तो देवानामृषीणां च। त एव च तास्मिन्

वयमादधुं पाहितवन्तो यस्मादतो ब्रवीमि ममापि चाग्ने ।
तमश्च त एव पुष्यन्तु, जव चाग्निमादधत्विति ॥ ३ ॥

अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं न करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति सत्यमु ते वदन्तीत्यथापि पदपूरण इदमु तदु हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे कथं हि करिष्यतीत्यनुपृष्टे कथं हि व्याकरिष्यतीत्यसूयायां किलेति विद्याप्रकर्षे एवं किलेत्यथापि न ननु इत्येताभ्यां सम्प्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवमिति प्रतिषेधे मा कार्षीर्मा हार्षीरिति च खल्विति च खलु कृत्वा खलु कृतमथापि पदपूरण एवं खलु तद्बभूवेति शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे ॥ ४ ॥

इति प्रथमाध्यायस्य द्वितीयः पादः ॥ १, २ ॥

"अह इति च, ह इति च" द्वावप्येतौ "विनिग्रहार्थीयौ"। तयोः पुनरेतयोरेतत् प्रयोगस्वाभाव्यम्। द्वयोरर्थयोरेककान्ते प्रकृतयोः "पूर्वेण" पूर्ववाक्यगतेनार्थेन संयुक्तौ "प्रयुज्येते"। तद्यथा,—"अयमहेदं करोत्वयमिदम्"। अयमह, यज्ञदत्तो गाः पाययतु, अयं देवदत्तो भुङ्क्तामिति॥

हकारस्योदाहरणम् "इदं ह करिष्यतीति"। यज्ञदत्त इदं ह करिष्यति। "इदं न करिष्यतीति"। ओदनं न पक्ष्यतीति॥

*"अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण"। विनिग्रहार्थे* भवति। स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तो प्रयुज्यते। तद्यथा,—"मृषेमे" वृषलाः "वदन्ति"। "सत्यमु ते" ब्राह्मणाः "वदन्तीति"। विनिग्रहो नाम, विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयोरेकस्मिन् यज्ञदत्तेऽभिमतस्वगोपायनस्य नियमेन ग्रहणं यत् स विनिग्रहः। तदर्थो विनिग्रहार्थः, विनिग्रहार्थ एव विनिग्रहार्थीयः॥

"अथापि" उकारः "पदपूरणः" भवति। "इ॒दमु॒ त्यत् पु॑रु॒तमं॑ पु॒रस्ता॒ज्ज्योति॒स्तम॑सो व॒युना॑वदस्थात्। नू॒नं दि॒वो दु॑हि॒तरो॑ विभा॒तीर्गा॒तुं कृ॑णवन्नु॒षसो॒ जना॑य॥" (ऋ॰ स॰ ३, ८, २, १)। वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव। प्रातरनुवाकाश्विनयोः शस्यते। 'इदं' तत् 'ज्योतिः' यत् जनाः कथयन्ति। उकारः पदपूरणः। एतत् 'पुरुतमं' बहुतमम्। कुतः? पुरुतमम्। 'तमसः' यदभिभूय शार्वरं तमः समालानमभिव्यनक्ति। अत एव तद् बहुतमम्। 'पुरस्तात्' प्राच्यां दिशि ज्योतिः 'वयुनवत्' प्रज्ञानवद्दृत्तिष्ठति। 'नूनं' निश्चयेन एताः 'उषसः' दिवो दुहितरः। रूपसामान्यात् दुहितृत्वात्। 'विभातीः' विभासमानाः 'गातुं'

गमनमपि कृतार्थं जनाना 'कृणवत्' कुर्वन्त्य आगच्छन्ति। यथेयमनुरज्यते प्राची दिक्, विध्वस्यते च तम । एकस्या एव पूजनार्थं बहुवचनम् ॥

"तदु प्रयक्षतम मस्य कर्म दस्मस्य चारुतम मस्ति दंस। उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्य १ श्चतस्र.।" (ऋ० स० १, ५, २, १)। द्वितीयमुदाहरणमस्यैव। गौतमो नोधायानया त्रिष्टुभेन्द्रमस्तौत्। प्रवर्ग्ये विनियुक्ता। 'तत्' प्रकर्षेण 'यक्षतम' पूज्यतमम्। उ इति पदपूरण एव। 'अस्य' इन्द्रस्य 'दस्मस्य' दासयितुर्दर्शनीयस्य वा 'चारुतम, शोभनतममन्यदपि तस्य 'अस्ति' 'दंस' कर्म किमपि बहुप्रकारम्। तत् चार्वेव पूज्यमेव। इदमेव तु चारुतम च पूज्यतमञ्च। तत् किम्? 'उपह्वरे यत् उपरा अपिन्वत्'। उपस्थानमर्हन्ति यस्मिन् देशेऽवस्थिता सहाया, स उपह्वरो देश, जनैरनाकीर्णो यस्मिन्नेकाकी 'यत्' 'उपर मेघपूरिताः 'मध्वर्णस' मधूदका 'चतस्र' 'नद्य' नदी 'अपिन्वत्' अपातयत् असारयत्। वर्षकारेण यज्ञादि प्रावर्त्तयत्--इत्यत। एतदेवास्य चारुतमत्वम् पूज्यतमत्वञ्चेत्यभिप्राय ॥

"हीत्येषोऽनेककर्मा"। तद्यथा,--"इद हि करिष्यतीति हेत्वपदेशे। कथ हि करिष्यतीत्यनुपृष्टे। कथ हि व्याकरिष्यतीत्यसूयायाम्"। कथमयं व्याकरिष्यतीत्यकृतप्रयत्नोऽयमित्यभिप्रायः। अमर्षादसाधाच्छब्दपूर्वकोऽभिप्राय परिवादोऽसूयेत्युच्यते। परगुणानभिज्ञेत्यर्थ ॥

"किलेति विद्याप्रकर्षे" विज्ञानातिशय इत्यर्थं ॥ अन्यत उपश्रुत्यातिशय इत्यर्थ। अन्यत उपश्रुत्यातिशयेनावधार्य्याचष्टे कश्चित्--"एव किल" एतदाश्चर्यमिति ॥

"अथापि न ननु इत्येताभ्यां" संयुक्त. किलेत्ययं प्रयुज्यते। "अनुपृष्टे" अर्थे। अन्यत उपश्रुत्य कश्चिदर्थं नायमेवमिति, ततस्तमेवार्थमन्यमनुपृच्छति। अथेतरमश्रद्दधतपूर्वस्य। "न किलैवम्"—इति। "ननु किलैवम्"—इति॥

"मेति" अयं "प्रतिषेधे"। तद्यथा,—"मा कार्षीर्मा हार्षीरिति च"। अयञ्च प्रतिषेधार्थीय एव।

"खल्विति च"। तद्यथा,—"खलु कृत्वा"। अकृत्वेत्यर्थः। देशभाषाव्यवस्थयेवन्नातीयानामुपेक्षितव्यः क्वचित् प्रयोगः॥

"अथापि" खल्वित्ययं "पदपूरणो" भवति। तद्यथा,— एवं खलु तद्बभूवेति। अन्वीक्ष्यः प्रयोगः क्वचित्पादवृत्तेषु॥

"शश्वदिति विचिकित्सार्थीयो भाषायाम्"। छन्दसि पुनरन्येष्वप्यर्थेषु भवति। यथासम्भवं द्रष्टव्यः। इयं चास्य शैली अर्थमपेक्ष्य। एवं शब्दस्य पुरस्तात् प्रयोगो वा भवति, उपरिष्टाद्वा। तद्यथा,—"शश्वदेवमित्यनुष्टष्ट एवं शश्वदित्यवयं पृष्टे" अर्थे-इति वाक्यशेषः॥

"नूनमिति विचिकित्सार्थीयो भाषायाम्"। विचिकित्सा नाम विवेकपूर्वकोऽवधारणाभिप्रायः। तत्रायं भाषायां भवति। "उभयम् अन्वध्यायम्"। पुनरयमर्थद्वये भवति— "विचिकित्सार्थीयश्च पदपूरणश्च"॥

उदाहरणमत्र निर्विवक्षुर्निदानमेवाह,—"अगस्त्य इन्द्राय" —इत्यादि। निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्, तेन ह्यतितरामर्थमुच्यमान. प्रकाशते। ततः पदानि। ततोऽर्थः। ततः प्रत्येकं विग्रहेण निर्वचनम्। एष हि व्याख्याक्रमः। अगः कुम्भ, तत्र स्त्यानः संहत इत्यगस्त्यः। सः "इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्सां चकार"। सम्प्रदातु-

मैच्छदित्यर्थः। "स इन्द्र एव परिदेवयाचक्रे"। परिदेवना नाम मन्युपूर्वको विलाप ॥ ४ ॥

इति निरुक्तवृत्तौ षष्ठाध्यायस्य द्वितीय पाद ॥ ६, २ ॥

——

तृतीय पाद ॥

न नूनमस्ति नो श्वः कस्तद्वे॑द यदद्भु॑तम्। अन्यस्य॑ चित्तम॒भि सं॑चरे॒ण्य॑मु॒ताधी॑तं॒ वि न॑श्यति ॥ न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन् द्यवि द्युरित्यह्नो नामधेयं द्योतत इति सतः श्व उपाशंसनीयः कालो ह्यो ही॑नः कालः कस्तद्वे॑द यदद्भु॑तम् कस्तद्वेद यदभूतमिदमपीतरदद्भुतमभूतमिवान्यस्य चित्तमभिसञ्चरेण्यमभिसञ्चार्य्यन्यो नानेयश्चित्तं चेतयितेत्युताधीतं विनश्यतीत्याध्यातमभिप्रेतमथापि पदपूरणः ॥ १ ॥

"न नूनमस्ति (ऋ० सं०२, ४, १०, १)"—इति। विचार्य्यमेतन्मैतत्तावत्,—अद्यतन हविर्मम नास्तीति। नकार इहाद्यतनशब्दोऽध्याहृत आचार्य्येण। प्रतिषेधे हि सति प्रतिषेध्येनाव्यश्य भवितव्यमिति। एते च मन्त्रैकदेशा एव मन्त्रोऽध्याहारा, पदातिरिक्तादध्ययनकालेनाधीयन्ते। ते त्वर्थनिर्वचनकाले प्रकाशयितव्या। अथापि स्यात् श्वस्तन भविष्यतीति। 'नो श्व' इद तावदस्मदर्थमेव निरुक्त पदकारो

ध्याप नूनमद्य श्वस्तनं का प्रत्याशा। किङ्कारण? 'कस्तद्वेद यदद्भुतम्'। को हि नाम तद्वेद जानाति यदद्भुत मनुत्पन्न कस्य भविष्यतीति मम वा अन्यस्य वा इति। कस्मात् पुनर्न विज्ञायत इति? अत, यस्मात् 'अन्यस्य चित्तमभि सञ्चरेण्यम्' सञ्चरणशीलमनवस्थितमित्यभिप्राय। 'उत' अपि, अथेति छन्दसि समानार्था। एतदद्यतन हवि 'आधीतम्' आध्यातमभिप्रेतं सत् मया ममेदमित्येव तथापि 'वि नश्यति' एवान्यस्मै प्रदीयते। तत्रैव सति श्वस्तनमस्माक भविष्यतीति कुत एतदिति समस्तार्थ ॥

अथैकपदनिरुक्तम्।—"अस्मिन् हवि,—द्युरित्यस्तो नामधेयम्,। द्योतत इति सत"। द्यततेर्द्युरिति। द्योतत इति कर्तृकारकम्। घदिति यत्र ब्रूयात्, तत्रोच्चारित एव कारक नियमो द्रष्टव्य, अन्यत्र यथेष्ट योज्यम्। "श्व उपाशसनीय" उपगम्य, सचेतसा आशास्तव्यो भवति, अनागतत्वात्। "ह्यो हीन काल" अतिक्रान्तो हि स भवति॥ श्व सम्ब न्धात ह्य शब्दोऽविमानोऽपि निरुक्त,—"अद्भुतम् अभूतम्"। "इदमपीतरदद्भुतम्"—शोणितवर्षादि, "अभूतमिव" कादा चित्कत्वात्। शब्दसारूप्यप्रसङ्गेनेद निरुक्तम्। "अन्यो नानेय." नानात्वेन व्यवस्थितस्यापत्यमसत्कुलजस्येत्यर्थ। अथवा न सतामानेय। "चित्तश्चेतते" चेतत्यनेनार्थानिति चित्तम। "इत्याधीत चिनश्यतीत्याध्यातमभिप्रेतम्"—इति पर्यायवचनम् ॥

"अथापि" अयमस्मिन्मन्त्रे "पदपूरण" भवति—॥१॥

नूनं सा ते प्रति वरं जरित्रे दुहीय-
दिन्द्र दक्षिणा मघोनी। शिक्षा स्तोतृभ्यः

माति धुग् भगो नो बृहद्वदेम विदथे सुवीराः ॥ सा ते प्रति दुग्धां वरं जरित्रे वरो वरयितव्यो भवति जरिता गरिता दक्षिणा मघोनी मघवती मघमिति धननामधेयं मंहतेर्दानकर्मणो दक्षिणा दक्षतेः समर्द्धयतिकर्मणो व्यृद्धं समर्द्धयतीत्यपि वा प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने देहि स्तोटभ्यः कामान् मास्मानतिदंहीर्मास्मानतिहाय दा भगो नो अस्तु बृहद्वदेम स्वे वेदने भगो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा सीमिति परिग्रहार्थीयो वा पदपूरणो वा प्र सीमादित्यो असृजत् प्रासृजदिति वा प्रासृजत् सर्वत इति वा वि सीमतः सुरुचो वेन आवरिति च व्यवृणोत् सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनादपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्य्यादातः सीमा मर्य्यादा

**विमोव्यति देयाविति त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्द्धनामेत्येके ॥ २ ॥**

"नूनं सा ते (ऋ० सं० २, ६, ६, ६)"—इति । गृत्समदस्येयमार्षम् । पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीये शस्यते । 'नूनम्' इति पदपूरण एव । 'सा' 'दक्षिणा' 'ते' तव या पुत्रभावके कर्मणि । सा किं करोतु ? 'प्रति' दुग्धाम् । किम् ? 'वरम्' । कर्मणो दक्षिणागुणकात् फलप्राप्तिस्तथापि तु दक्षिणाया-मुपचर्य्यते । कस्मै ? 'जरित्रे' स्तुवते यजमानाय । किंलक्षणा ? 'मघोनी' मघवती हिरण्यधान्यादिधनेन संयुक्ता; दातृतीत्यर्थः । किञ्च, 'शिक्षा' देहि । कस्मै ? 'स्तोतृभ्य.' ऋत्विग्भ्योऽनुकामान् । किञ्च, 'माति धक्' माऽस्मानतिहाया-तीत्यान्येभ्यो देहीति मादा इत्यर्थः । अस्मभ्य' तावद्देहि, ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः । किञ्च, 'भगो न' धनं नोऽस्तु । येन किं कुर्य्याम ? 'बृहद्वदेम' महदूर्जितं वदेम दीयतां भुज्यतामिति । क्व ? 'विदथे' यज्ञे । अथवा क्वे गृहे । किञ्च, युष्मदनुग्रहाच्च सुवीराः' वीरवन्तो भवेम पुत्रवन्तः । यद्यपुत्रा', एवमयं मत्वर्थीयः सुः' अथ पुनः पुत्र-वन्त', एवं ततः कल्याणवीरा इति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—"वरो वरयितव्यो भवति" क्रियते स्तुमो । "जरिता गरिता" इति स्तुत्यर्थस्य । "मघमिति मंहतेर्दानकर्मणः" दीयते हि तत् । "दक्षिणा दक्षते." समर्द्धयत्यर्थस्य, यज्ञे हि यत्किञ्चिद्विगतर्द्धिकं भवति, तदियं समर्द्धयति, विशिष्ट यज्ञस्य साधनमेतदिति । "अपि वा प्रदक्षिणामगमनात्" दक्षिणा । दक्षिणां "दिशमभिप्रेत्य"—सा हि दक्षिणस्या वेदिश्रोण्यो, अग्रेण गार्हपत्यं, जघनेन सदः, दक्षि-

येनाग्नीध्रीय गत्वा अन्तर्वेदि स्थित्वा अन्तरेण चात्वालोत्करौ तमाग्नीध्र चोत्सृज्यमाना गच्छन्तीति "दिक्" पुनर्दक्षिणा। "हस्तप्रकृति" प्राङ्मुखस्य प्रजापतेर्दक्षिणो हस्तो बभूव, सा दक्षिणा दिगभवत्। अथ "दक्षिणो हस्त" कस्माद्दक्षिण इति? "दक्षते" उत्साहार्थस्य,—स ह्युत्साहवान् भवति कर्मसु, न तथा सव्य। "दाशतेर्वा स्यात्" दानार्थस्य, तेनैव हि प्रायेण दीयते। अथ "हस्त" कस्मात्? "हन्ते" —तेन हि हन्यते। न, अन्येनापि केनचिदङ्गेन हन्यते। एव यो हन्तव्यो भवति तस्य "हनने" अयमेव तु "प्राशु" शीघ्र इत्यर्थ.। "मृहदिति महतो नामधेयम्, परिवृढ भवति"—इति। "वीरो वीरयत्यमित्रान्" नानाप्रकार सार यतीत्यर्थ। "वेतेर्वा स्याद्गतिकर्मण" गत्यर्थ वर्त्तमानस्य, गच्छत्येवासावभिमुख शत्रून्। "वीरयतेर्वा" विक्रमार्थस्य, विक्रान्तो ह्यसौ भवति ॥

"सीमिति' अथ "परिग्रहार्थीयो वा पदपूरणो वा"। "प्र सीमादित्यो असृजत् (ऋ० स० २, ७, ८, ४)"। अस्या मेव तावदुभयमपि प्रदर्शयति। तत परिग्रहार्थीयत्वे द्वितीय मुदाहरण वक्ष्यति। गृत्समदस्य ततपुत्रस्य वा कूर्मस्येयमार्षम्, "प्र सीमादित्यो असृजद्वि धर्त्ता ऋत सिन्धवो वरुणस्य यन्ति। न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन ॥" त्रिष्टुप्, सौरी। सूर्य पुनरस्या वरुणनाम्ना स्तूयते। प्रासृजत्सूर्यो रश्मीन्। सीमिति पदपूरण एव कुतोऽपीत्य विवक्षितमेवैतत् पदपूरणपक्षे। अथ परिग्रहार्थीय सर्वमेव परिगृह्णाति,—"प्रासृजत् सर्वत इति वा"। 'विधर्त्ता' वि धारयिता, रसाना, रश्मीना वा, स्वराश्मजालान्तर्गतस्य वा, धर्त्ता सर्वस्य जगत। 'ऋतम्' उदकमादाय, पृथिवीलोका

द्यन्तरिक्षलोकाच। 'सिन्धवः' स्यन्दनाः सूर्य्यरश्मयः,—ते हि आदित्यमण्डलात् प्राञ्चो वर्त्तमानाः स्यन्दन्ते वर्षकाले, सूर्य्येण प्रसृष्टा उदकमादाय मार्वलौकिकं 'वरुणस्य', सूर्य्यस्य 'स्थानं मण्डलं 'यन्ति'। तदेतमप्यनियमुत्सर्गादाननक्षणं स्वकर्म कुर्वाणः 'न श्राम्यन्ति'। 'न' वा श्रान्ता अपि सन्तो विरागादप्येतत् कर्म 'विमुञ्चन्ति' एते। कथं पुनः पतन्तो न श्राम्यन्ति? किं शनकैः? न। 'वयो न' वय इव पक्षिण इव शीघ्रं 'पप्तु' पतन्तः 'रघुया' लघुया लघ्वा शीघ्रिकया गत्यापि 'परिज्मन्' परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगत श्राम्यन्ति न विमुञ्चन्त्येतत् कर्म॥ एतद्गुणयुक्तानामप्येतेषां सूर्य्य एव प्रतिसर्गे संयमे च ईश्वर इत्येव सूर्य्यस्य स्तुतिरेषा॥

"विसीमत सुरुचो वेन आवरिति च"। इदं द्वितीयमुदाहरणम्। ब्रह्मजज्ञानमिति। "ब्रह्म॑ जज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒न आ॑वः। स बु॒ध्न्या॑ उप॒मा अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि वः॥" य० वा० सं० १३, ३। सामवेदसंहितायामपि छ० आ० ४, १ ३, ८। वामदेवपुत्रो नकुलोऽनया त्रिष्टुभा आदित्यं तुष्टाव। प्रवर्ग्यविनियुक्ता रुक्मोपधाने चाग्निचयने। 'ब्रह्म' आदित्याख्यं 'जज्ञानं' जायमानं 'प्रथमम्' अनुत्पन्नेषु आदितः 'पुरस्तात्' प्राच्यां दिशि, तदुद्भवोपलक्षितमेव प्राच्याः प्राचीत्वम्। 'वि आवः' व्यवृणोत्, विवृतामकरोत्। 'सुरुचः' प्रशस्तरोचनान् रश्मीन् 'सीमतः' सर्वतः। किञ्च, 'सः' 'वेनः' मेधावी 'बुध्न्याः' बुध्नमन्तरिक्षं तदवयवभूताया दिशः, 'उपमाः' 'उपनिर्मात्राः', तासु ह्येतत्प्रतिष्ठितं सर्वमुपनिर्मीयते जगदित्येतत्,—तस्मात्ता एवोपनिर्मात्र्य उच्यन्ते। 'विष्ठाः' विस्थाः,—तासु ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः। 'सतश्च' अभिव्यक्तस्य स्थूलस्य 'असतश्च

अनभिव्यक्तस्य सूक्ष्मस्य 'योनि' 'विवः' व्यक्तयोरित्यर्थः। आदित्योदये शोवड्‌गयुता दिगोऽभिव्यज्यन्त इत्यभिप्रायः। अथवा बुध्ना आप आन्तरिक्षाद्या उपमा इत्येवमादि सर्वं योज्यम्॥

"अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्। सीम्नः सीमतः सीमातो मर्य्यादातः। सीमा मर्य्यादा विसीव्यति देशाविति"। विगतसन्तानौ देशौ करोतीति॥

"त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्" निपातत्वेनैतदपि सन्दिह्यते। वक्ष्यति हि "निपात इत्येके"—इति। अत. त्व इति पुन व निपातकाण्ड उदाह्रियते। संशयपरिशोधनाय त्व इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम्। किमु तत् सर्वनामविप्रतिपन्नस्वरत्वात् स्वरमप्यवधारयन् ग्रन्थानुदात्तमित्याह, कथ पुनर्विप्रतिपन्नस्वरमेतदिति ? उच्यते,—प्रातिपदिकस्यान्त उदात्त इत्यौत्सर्गिक लक्षणम् (फि॰ सू॰ १, १)—अन्यत्र चापवादात्,—लक्षणविदोऽपि चास्यापवाद पठन्ति,—"त्वत्वसमसिमेत्यनुच्चानि (फि॰ सू॰ ४, ८)"—इति।

"अर्द्धनामेत्येके"। अर्द्धस्यैतन्नामेत्येव मेके आचार्य्या मन्यन्ते। वक्ष्यति चायमपि "त्वो नेम इत्यर्द्धस्य (निरु॰ ३, ४, १)"—इति। तदेतत् प्रकरणोपपदाभ्यामध्यवसेयम्,—क्वार्द्धनाम ? क्व सर्वनाम ? इति॥ २॥

यथात्र सर्वनाम तथेयमुदाह्रियते'—

ऋचान्त्वः पोषमास्ते पुपुष्वान् गायत्रन्त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः॥ इत्यृत्विक्कर्मणां विनियोगमाचष्ट ऋचामेकः पोषमास्ते पुपुष्वान्

होतर्गर्चनी गायत्रमेको गायति शक्वरीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतो यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयत इति वापि वाधीयाने युरुपबन्धोऽध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इत्येके तत्कथमनुदात्तप्रकृति नाम स्याद्दृष्टव्ययन्तु भवति। उत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायामुतो त्वस्मै तन्वं विसस्र इति चतुर्थ्यामथापि प्रथमाबहुवचने —॥ ३ ॥

“ऋचाम्त्वः (ऋ० स० ८, २, २४, ५)”—इति। बृहस्पतेरार्षम्। ऋत्विक्कर्मणां विनियोगमनयर्चाऽऽचष्टे। “ऋचां त्वः पोषमिति”। य एते चत्वारो महर्त्विज, एतेषां ‘त्वः’ एक इत्यर्थः। किमेकः करोति? ‘ऋचां’ ‘पोष’ पुष्टिं ‘पुपुष्वान्’ पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानं मर्मस्थानकरणानुप्रदानवतीर्यथाकालमृचोऽधीयानः ‘आस्ते’—स हि तासां पोषः। कतमः? ‘एकः’ एतत्कर्म कुर्वन्नास्ते इति,—होता, एतत्तावदृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम्,

उक्तं च—"यदृचैव होत्र क्रियते"—इति (ऐ० ब्रा० ५, ५, ८)। 'गायत्र' त्व ? गायत्रमेको 'गायति' 'शक्करीषु' ऋक्षु। कतम ? उद्गाता, तस्मिन्नर्थेतत्सामगानकर्म विनियुक्तम्, उक्तञ्च—"साम्नौद्गात्रम"—इति (ऐ० ब्रा० ५, ५, ८)। "ब्रह्मा त्व" ब्रह्मा नाम एक ऋत्विक् 'जाते' प्रायश्चित्ते 'विद्या वदति'। विद्यावत्त्वहेतुत्वादात्मनो विद्या विज्ञान वदतीतरेभ्य ऋत्विग्भ्य, इदमत्र कुरुतेति। तत्रापि ह्येतत् कर्म विनियुक्तम्। स पुनरय सर्वविद्य सर्वविज्ञानस्तथाविधो ह्यसाव-धिकारी त्रयोविद्यासयुक्तो येनासौ सर्वमेव वेदितुमर्हति। न ह्यसर्ववित् तमधिकार शक्नुयान्निर्वर्त्तयितुम। उक्तञ्च—"अथ केन ब्रह्मत्व क्रियत इति ? त्रय्या विद्यया"—इति (ऐ० ब्रा० ५, ५, ८)। "यज्ञस्य मात्रा विमिमीत उ त्व। एक इति। मीयत इति मात्र कर्म, तन्मात्रेत्युच्यते। या काचिदितिकर्त्त-व्यता यज्ञस्य, ता विमिमीतेऽध्वर्यु, नानाप्रकार करोतीत्यर्थ ॥

अथैकपद निरुक्तम।—"गायत्र गायते" स्तुत्यर्थस्य,—स्तूयते ह्यनेन। "शक्वर्य्य ऋच शक्नोते"—इत्युक्त्वा शक्करी-शब्दे हेत्ति दर्शयति,—"तद्यदाभिर्वृत्रमशकद्धन्तु" "तत्" एव "शक्करीणा शक्करीत्वम"। तत् यद्यस्मादाभिरभिष्टुतै इन्द्रो वृत्रमशकद्धन्तु तच्छक्करीत्वम् "—इति विज्ञायते"। ऋचा शक्करीत्वमित्येव ब्राह्मणेऽपि शक्नोतेरेव शक्वर्य्य इति विज्ञायते। लिङ्गतोऽपि हि दर्शित भवति, आख्यातजानि नामानीति ॥

"ब्रह्मा परिवृढः श्रुतत" स हि त्रयीं विद्या वेद। शब्दसा-रूप्यप्रसक्तमुच्यते,—"ब्रह्म परिवृढ सर्वत । ऋगादिपर चोभय-मपि तत्परिवृढ सर्वासु दिक्षु। "अध्वर्युः अध्वरयु" एवमपि ऋगुक्तत इति। पुनरप्याह,—"अध्वर युनक्त्यध्वरस्य नेता"

प्रापयितेत्यर्थः,—स ह्यन्तं प्रापयत्यध्वरमेव। अथवा "अध्वरं कामयते" कर्त्तृम् "—इति" अध्वर्युः। एतस्मिन्निर्वचने युः, वसुयव इति यथा। अथवा "अधीयाने" तमध्वरं कस्मिंश्चिद् ब्राह्मणे अध्वर इतीयमेव सञ्ज्ञा भवति, मस्ताक्रोशनवत्। एतस्मिंश्च निर्वचने "युः" अयम् "उपबन्ध." नामकरणम्। अध्वरमधीते यः सोऽध्वर्युः। विग्रहप्रसङ्गस्याध्वरशब्दस्य तत्त्वमाचष्टे,—"अध्वरः—इति यज्ञनाम"। ध्वरः-इत्यधुना निर्वक्तव्यः,—"ध्वरतिर्हिंसाकर्मा"। ध्वरति धूर्वतीति हिंसार्थेषु पठितौ (२३१ पृ०), "तत्प्रतिषेध." अध्वरः अहिंस इत्यर्थ.॥

आह,—नन्वत्र हन्यन्ते पशवः, छिद्यन्ते वृणवनस्पतयः, तत् कथमहिंसः? उच्यते,—अभ्युदय एव हि स.। एवं हि श्रूयते—"न वा उ एतन्म्रियसे न रिष्यसि (य० वा० सं० २३, १६)"—इति। तथाच—"कुशलमिच्छन्ति तृणानि राजन्"—इति। तस्मादभ्युदययोगादहिंस इत्युपपद्यते॥

"निपात" अयम् "इत्येके" मन्यन्ते॥

एवमेकीयपक्षे निपातत्वमस्योक्त्वा अधुना चोदकपक्षे स्थित्वा परपक्षमाक्षिपन्नाह,—"तत् कथमनुदात्तप्रकृति नाम स्यात्"—इति। तदेतच्छब्दरूपमनुदात्तस्वभाव सत् कथं नाम स्यात्? ननु भवतैवोक्तम्—उच्चैर्गणेष्वान्तोदात्तानि प्रातिपदिकानि—इति (४६६पृ० १३ पं०)। उच्यते,—सत्यमुक्तम्। ननु तत्रैवेद मप्युक्तम्—अन्यत्र चापवादात्—इति (४६६ पृ० १४पं०)। स एषोऽपवादाश्च—त्वत्त्वनेममसिमित्यनुदात्तानीति (४६६पृ० १५पं०)। उत्सर्गादपवादो बलीयान्। तस्मान्निपातपक्षस्त्वरमपि एतत्त्वामेव। किञ्च "दृष्टव्यय तु भवति"। तुशब्दो हेत्वर्थः—हेतुसमुच्चयार्थो वा। अनुदात्तप्रकृतित्वेऽपि स तु

'दृष्टानुविधयश्छन्दसि'—इति दृष्टव्ययत्वान्नामेति तद्भवति। एवं चेत्वर्थः। अथवैतमन्यथाहेतुसमुच्चयार्थः, अपवादस्मरणात् —व्ययदर्शनाच्च अनुदात्त मपि सदेतन्नामैव भवति। निपाता आद्युदात्ता भवन्ति (फि॰ सू॰ ४, १२)। तस्मात् कृतापवादत्वाद्—दृष्टाव्ययत्वाच्च नामैवैतदित्युपपन्नम्॥

आह,—क्व पुनरस्य व्ययो दृष्टः? उच्यते,—"उत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायाम्" एकवचने। एवम् "उतो त्वस्मै तन्वं१ वि सस्रे इति चतुर्थ्याम्" एकवचने व्ययो दृष्टः। उपरिष्टाच्छेषः। "अथापि प्रथमाबहुवचने"—व्ययो दृष्ट इत्यध्याहारः॥२॥

अ॒क्ष॒ण्वन्तः॒ कर्ण॑वन्तः॒ सखा॑यो मनोज॒वेष्व॑समा बभूवुः। आ॒द॒घ्नास॑ उपक॒क्षास॑ उ त्वे॒ ह्र॒दा इ॑व॒ स्नात्वा॑ उ त्वे दद्दृश्रे। अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेरनक्तेरित्याग्रायणस्तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते कर्णः कृन्ततेर्निकृत्तद्वारो भवत्यृच्छतेरित्याग्रायण ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते मनसां प्रजवेष्वसमा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपरे आस्यमस्यतेरास्यन्दत एनदन्नमिति वा दघ्नं दघ्नतेः स्रवतिकर्मणो दस्यतेर्वा स्यादिदस्ततरं भवति प्रस्नेया ह्रदा इवैके प्रस्नेया दद्दृशिरे स्नानार्हा ह्रदो ह्रदतेः शब्द-

कर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणोऽथापि समुच्चयार्थे भवति ॥ ४ ॥

अक्षण्वन्त. कर्णवन्तः (ऋ० सं० ८, २, ३४, २)"—इत्येतस्यामृचि। बृहस्पतेरार्षं विद्यासूक्तं नाम। 'अक्षण्वन्तः' अक्षिसयुक्ताः, एवमपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः। अपि च, 'सखायः' समानख्यानाः सर्वे मनुष्याः। अथवा समानेषु शास्त्रेषु कृतश्रमाः। वैयाकरणा वैयाकरणानामेव समानख्यानाः, नैरुक्ता एव नैरुक्तानाम्। 'मनोजवेषु' मनोगम्येष्वर्थेषु 'असमा बभूवुः'। केचिदूहापोहनधारणवक्तृत्वसमर्थाः, केचिदक्षमः। कथमसामान्यमिति? यतो दृष्टान्तेन प्रतिपादयति।—"आदघ्नास उपकक्षास उ त्वे ह्रदा इव"। आदघ्ना एव आदघ्नासः। आस्य दघ्नह्रदपरिमाणाः, केचित् प्रज्ञया। उपकक्षासः कक्षसन्निकृष्टदेशतुल्योदका इव ह्रदाः। एके प्रज्ञया ह्रदाः 'स्नात्वा' अक्षोभ्याः अपरिमेयप्रज्ञानाः। 'ददृश्रे' ददृशिरे—दृश्यन्त इति समस्तार्थः॥

अथैकपदं निरुक्तम्। "अक्षि, चष्टेः" पश्यत्यर्थस्य,—दृश्यते ह्यनेन। "अनक्तेः" व्यक्त्यर्थस्य—"इत्याग्रायणः" मन्यते। वाक्यमपि चैतस्मिन्निर्वचने भवति। "तस्मादेते व्यक्ततरे इव भवतः"—इति। यस्मादिदमाग्नेति किमिति प्रकृतमपेक्ष्य। अथवा यस्मादेते तेजोऽवयवभूयिष्ठे, तस्मात्कारणादित्येव यच्छब्दमध्याहृत्य विद्यमानमविद्यमानं चोत्पद्य तस्माच्छब्दस्य सामर्थ्यमुत्पाद्यते। तथाहि स निराकाङ्क्षो भवति। सर्वत्र च साकाङ्क्षेषु शब्देष्वेवं व्याख्यानधर्मो द्रष्टव्यः। एते अक्षिणी इतरेभ्योऽङ्गेभ्यो व्यक्ततरे स्पष्टतरे प्रकाशतरे भवतः,—अस्य

कारेऽपि ह्येते प्रकाशेनैव नक्षत्रादीनां न तथेतराण्यङ्गानि। एव ब्राह्मणेऽपि "अनक्षिरेवाक्षिणी"—इति ह विज्ञायते"। "कर्णं कृन्ततेर्निकृत्तद्वारो भवति, ऋच्छतेरित्याग्रायण" मन्यते। ब्राह्मणमपि चैतस्मिन्निर्वचने भवति—"ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते"—इति। ऋच्छन्तौ वैतौ कर्णौ खेऽभिव्यक्ता सन्त शब्दा एतावपि च उदगन्ता प्रत्युद्गच्छत इव ग्रहणाय। विचार्यमाणे ज्ञायते खे कर्णाविति। "आस्यमस्यते" क्षेपार्थस्य,—क्षिप्यते ह्येतदाभिमुख्येनान्नम्। स्यन्दतेर्वा स्यादाङ्पूर्वस्यैव स्रवणार्थस्य,—शुष्केऽपि ह्येतदन्ने आगते स्रवत्येव श्लेष्माण, येन तदार्द्रीकृत ग्रसितु शक्यते। "दघ्न, दघ्यते" स्रवत्यर्थस्य। स्रुततरमिव तद्भवत्युत्तरात् परिमाणात्। "दस्यतेर्वा स्यात्" क्षयार्थस्य। "विदस्ततर" ह्युपक्षीणतर, तद्ध "भवति" उत्तरस्मात् परिमाणात। "प्रस्नेया" प्रकर्षेण स्नातु येषु योग्यम्, अगाधत्वात्, ते प्रस्नेया स्नानार्हा इत्यर्थं। "ह्रदो ह्रादते" शब्दार्थस्य,—शब्द ह्यसावभिहन्य मान करोति। "ह्लादतेर्वा स्यात्" शीतीभावार्थस्य,—ग्रीष्मेऽपि ह्यसौ शीतल एव भवति॥

"अथापि" अयमपरो निपातः "समुच्चयार्थे भवति" एकतमः—त्वत् इति॥ ४॥

किमुदाहरणम्?—

पर्य्याया इव त्वदाश्विनमाश्विनञ्च पर्य्यायाश्च त्वथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति। निष्क्कासश्चिदिन्नरो

भूरितोका वृकादिव। बिभ्यस्यन्तो ववाशिरे शिशिरञ्जीवनाय कम्। शिशिरञ्जीवनाय। शिशिरं शृणातेः शम्नातेर्वा। एमेनं सृजता सुते। आसृजतैनं सुते। तमिद्वर्धन्तु नो गिरः। तं वर्धयन्तु नो गिरः। स्तुतयो गिरो गृणातेः। अयमु ते समतसि। अयन्ते समत-सीवोऽपि दृश्यते ॥ ५ ॥

“पर्य्यायां इव त्वदाश्विनम् (ऋ० प्राति० १२,१०)”—इति। चाह, किमुक्तं भवति? उच्यते,—“आश्विनं च पर्य्यायाश्चेति”—एवं समुच्चयार्थे भवति। “अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति”। व्याख्याताः क अपि संग्रहार्थीयाः, तत्प्रसङ्गेन चौत्येवमादयो अन्यार्था अप्युक्ताः। प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान् वक्ष्यामः। तेषां सामान्यमेव तावल्लक्षणमुच्यते। तत्राधिकारार्थोऽयं अथशब्दोऽय ये प्रवृत्ते परिसमाप्ते अर्थे अन्यैरेव वाक्यगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणार्थास्त एव मिताक्षरेषु भवन्ति। उभयत्रापि तु ते अनर्थकाः अनर्थान्तरवाचकाः, प्राकृतादर्थात् न किञ्चिदर्थान्तरं द्योतयन्ति। पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि तेषामर्थो नान्यदर्थान्तरम्। उक्तं च,—

“क्रियावाचकमाख्यातमुपसर्गो विशेषवत्।
सत्वाभिधायकं नाम, निपातः पादपूरणः।”—इति।

कतमे पुनस्ते ? "कमीमिद्विति" एते चत्वारः । कम्, ईम्, इत्, उ,—इति ॥

आह,—ननु ये प्रवृत्तेऽर्थे इति पदे तदुपदिष्टं लक्षणमत एव विज्ञास्यामो येऽमिताक्षरेषु वाक्येषु पठितास्ते मिताक्षरेषु पदपूरणा भविष्यन्तीति ॥

अथ किमर्थमेते विशेषतः कमीमिदवो निर्दिश्यन्त इति ? उच्यते,—एते हि प्रायेण पदपूरणा एव। अन्ये पुन. इव-न-चि-न्वादयो अर्थवन्तोऽप्यर्थासम्भवे सति पदपूरणा भवन्ति,—लक्षण हि तानपि व्याप्नोति। एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थकाः इत्यतो विशेषतो निर्दिश्यन्ते ॥

आह,—एवमपि च उकारो न निर्देष्टव्यः। किं कारणम् ? स हि पुरस्तान्निर्दिष्ट एव (४५६पृ० ७ प०) "अथापि पदपूरण इदमुतदु"—इति। उच्यते,—सत्यं निर्दिष्ट.। प्रासङ्गिकस्तु स तस्य निर्देशोऽयमेवात्रोकारस्य पदपूरणत्वे मुख्यो निर्देशः, स्वप्रकरणत्वात्। तत्र तर्हि अकिञ्चित्कर इति ? न अकिञ्चित्करः। किं कारणम् ? शृणु,—यदि ह्ययमुकारः तत्र पूरणत्वेन नोच्यते, इहैवोच्येत, ततः पूर्वोक्तस्य विनियमार्थोयत्नस्तायमपवाद इति गम्येत। अथापि तत्रैव केवलमस्य पदपूरणत्वमुच्यते, नेह, तथापि पादपूरणेषु परिसंख्यायमानेषु नायमुक्त इति पदसंख्यया पदपूरणत्वमस्य बाध्येत। अनिष्टं चैतत्। तस्मादुभयत्राप्यधीत इति ॥

आह,—नन्वेव खलु-नूनमित्येतयोः पदपूरणत्वस्य बाधः प्राप्त इति ? उच्यते,—नैवम्। किं कारणम् ? उकारवत्तौ स्मृतावपि। यथैव ह्युकारोऽर्थवाचानर्थकश्च, एवं तावपि। तस्मादुकारग्रहणेनापि तावप्यत्र गृहीतौ द्रष्टव्यौ। न केवल-

सुभावेव, किन्तर्हि? अन्येऽपि तावन्त एव सन्ति। तद्यथा, —"आ घा ता गच्छानुत्तरा"—इति अत्र घकारः। तेऽपि चात्रावगन्तव्याः। उदाहरणमात्रप्रदर्शनार्थं ह्येते तावन्त एवोदाहृताः। त एते सर्वे एवार्थासम्भवे त्वनर्थका एव, सम्भवे त्वर्थवन्त इति। किं कारणम्?—न हि कस्मिंश्चिदर्थे तावत् सम्भवति अनर्थत्वकल्पना न्याय्या शब्दस्य,—अर्थप्रधानो हि शब्दः। स नाकस्मादभिधेयेनार्थेन विना वाक्ये संहन्येत। तस्माद्यावदन्त्यमेव तावदर्थः कल्पनीयः। यत् पुनरेतदुक्तम्—'वाक्यपूरणाः' इति (४७२पृ० २२पं०)। अगतिरेषा। तदेतत् सर्वथाप्यर्थासम्भवे सति अगतौ सत्यां भवति। त एते प्रायोवृत्त्या इव-न-चिन्नादयोऽर्थवन्तः। प्रायोवृत्त्या च कमीमिदवोऽनर्थका इति द्रष्टव्यम्॥

आह,—ननु आदौ च मध्ये च पूरणानामागमो दृष्टः, तद्यथा—"नूनं सा ते"—इति, अथ कथमुच्यते,—'ये प्रवृत्तेऽर्थे आगच्छन्ति, ते पदपूरणाः'—इति? उच्यते,—न ह्येतदध्ययनकालीनमानुपूर्व्यमक्षराणां पदानां व्याख्याकाले नियतमस्ति, अर्थप्रकाशनार्थनिर्वचनवशेनान्यपदानुपूर्व्यमुपलायते, समाख्याकाले। तच्चेवं सत्याख्यातपदम् प्रधानम्, तदनु नाम, तदनूपसर्गाः, तदनु निपाताः,—इत्येतामानुपूर्वीमपेक्ष्यैतदुक्तम्। तत्र ये प्रवृत्तेऽर्थे आगच्छन्ति, ते पदपूरणा भवन्ति। एतामानुपूर्वीमपेक्ष्य पूर्वमाख्यातलक्षणमुक्तम्, तदनु नामलक्षणम्। तस्मादादावपि निपातः, तन्मध्ये वा अतएव द्रष्टव्यः। लोकेऽपि हि दत्तानुयोगानां ब्राह्मणानामवस्थानक्रमोऽकिञ्चित्कर एव भवति। मध्येऽन्ते वावस्थितो यः प्रधानः, सोऽग्र इत्युच्यते। तस्मात् सम्यगेवोक्तं 'ये प्रवृत्तेऽर्थे'—इति॥

व्यत्ययं चाधिकृत्य श्लोकमप्युदाहरन्ति,—

"आदिमध्यान्तयुक्तानि प्रच्छन्नानि हितानि च।
प्रत्युत परिगृह्यर्थं वेदे व्यवहितानि च।"—इति।

अधुना एवमेतानुदाहृतान् कर्मोपदून् समासतः प्रत्येकमुदाहरणेदर्शयति,—"शिशिरं जीवनाय कम्"—इत्यत्र कमित्येष पदपूरणः। शिशिरं जीवनाय जीवनार्थमित्यर्थः। तत्र हि प्रायेण प्रचुराणि सस्यान्यानि भवन्ति। कमिति पदपूरण एव। "मुञ्चामि त्वा हविषा जीवनाय कम्"—इति (ऋ० स० ८, ८, १८, १)। अत्र सायण,—'किमर्थम्? "जीवनाय कम" जीवनार्थम्, इह लोके चिरकालावस्थानार्थमित्यर्थः। कमिति पूरकः।'—इति। शाखान्तरेषु शेषो द्रष्टव्यः।

केचिदेव छन्दोपमत्राधीयते,—

निष्टक्वासश्चिदिन्नरो भूरितोका वृकादिव।
बिभ्यस्यन्तो ववाशिरे शिशिरञ्जीवनाय कम॥"—इति।

निष्टक्वा एव 'निष्टक्वास:' निर्वसना इत्यर्थ। अपि च। 'भूरितोका' बहुपत्या इत्यर्थ। के पुनस्ते? दरिद्राः, 'केचिन्नरो' मनुष्या इत्यर्थ। किं तेषामिति? 'वृकादिव बिभ्यस्यन्त' पुनः पुनर्भयं वा बिभ्यतो वृकादिव हिमात् 'ववाशिरे' पुनः पुनर्भयं वा वश्यन्ते। किमिति ववाशिरे? शिशिरम्। अस्माकं जीवनाय जीवनार्थं मागच्छति,—इत्येव हेमन्ते ववाशिरे। अत्यन्तशीतं हि शिशिरं, सुखं तत्र जीविष्याम इत्यभिप्रायः।

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम्—"शिशिरं शृणाते:" हिंसार्थस्य "शम्नातेर्वा" हिंसार्थस्यैव, नार्थकृतो विशेषः। हिनस्ति तस्मिन् काले अप्रतिबध्यमानो अतिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन्॥

ईमित्यस्योदाहरणम्—"प्र ईमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये॥" ऋ० सं० १, १, १७, २। ऐन्द्रेयी गायत्री। मधुच्छन्दस आर्षम्। पृष्ठ्याभिप्लवस्तोमहद्धो प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे महाव्रते च द्व्यशीतिपु विनियुक्ता। 'आ सृजतैनम्' आभिमुख्येन सृजत। 'ईम्'—इति पदपूरण एव। उत्तीक्ष्यपात्रेण चमसेन सोमं हि, अध्वर्यव.! किमासृजत? योऽयमिन्द्रस्य 'सुते' अभिषुते सोमे स्थाय, उक्थपात्रचमसस्थः, एनमासृजत। 'मन्दिं' मन्दयितारम्। 'मन्दिने' इन्द्राय हर्षवते। 'चक्रिं' चक्रनवन्तं क्रमणवन्तं वा। अपि वा हविर्धानशकटचक्राभ्यां चक्रवन्तमपि। चक्रदिति कर्मनाम (१४० पृ०)। अतिविशिष्टवीर्यजनकैः संस्कारकर्मभिस्तद्दन्तं 'विश्वानि' सर्वाणि भूतानि वा। 'चक्रये' कृतवते इन्द्राय। सोमः प्रत्यक्ष, दातारश्च, परोक्षा त्विन्द्रस्य स्तुति। "अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि"—इति वक्ष्यति॥

"तमिद्वर्द्धन्तु नो गिर"—इति। इदित्यस्योदाहरणम्। "तमिद्वर्द्धन्तु नो गिरो वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदंसनि॥" (ऋ० सं० ७, १, २०, ५।) अमहीयोराङ्गिरसस्येय मार्षम्। गायत्री, सौमी। ग्रावस्तुतौ विनियुक्ता। 'तम्' वर्द्धयन्तु 'नः'। त सोमम्। 'इत्'—इति पदपूरण। वर्द्धयन्तूपजातवीर्यं कुर्वन्तु। देवस्तुतये। न एता अस्मद्'गिरः' स्तुतयः। कथ पुनर्वर्द्धयन्तु? 'वत्सं संशिश्वरीरिव'। वत्समिव, एकशिशुका बह्व्यो गावः, ता यथा पर्य्यायेण वत्समेकं स्तनवत्साः स्वैः स्वैः पयोभिर्वर्द्धनादिसमर्थं कुर्य्युः। एवमेवास्मद्गिरः एतं सोममुपजातवीर्यं देवतर्पणाय कुर्वन्तु वर्द्-

यन्तु। कतमः? 'यः' 'इन्द्रस्य' 'हृदं सनिः' हृदयसम्बद्धा, तमेनं वर्द्धयन्त्वित्यभिप्रायः॥

आह,—कस्मात् पुनरत्र केचिदुदाहरणमन्त्राः अशेषाः पठ्यन्ते, निरुच्यन्ते, केषाञ्चिदेकदेशाः? इति। उच्यते,—ये तावदशेषाः पठ्यन्ते, निरुच्यन्ते च, ते व्याख्याधर्मोपदेशनार्थम्। यदि पुनः सर्व एव पठ्येरन् निरुच्येरंश्च, अतिगुरु शास्त्रं सम्पद्येत। अथापि सर्वेषामप्युदाहरणमन्त्राणामेकदेशः पठ्येत निरुच्येत च, तथापि व्याख्याधर्मो न प्रदर्शितः स्यात्। तस्माद् व्याख्याधर्मोपदर्शनार्थं केचिदशेषाः पठ्यन्ते, निरुच्यन्ते च, केषाञ्चिदेकदेशाः, शास्त्रातिगौरवभयात्।—इति प्रतिमन्त्रमपि सकलार्द्धर्चपादाध्ययने शक्यते प्रयोजनमन्वेष्टुम्, तदेतत्समासेन ब्रूमः। यस्मिन् यस्मिन्मन्त्रे यद्यत्पदमेकार्थमनेकार्थमनवगतसंस्कारं वा निर्ब्रवीति, किञ्चिद्वान्यच्छब्दरूपमध्याहरति, अन्यद्वापोहति, अन्यथा वा कञ्चिद्विपरिणाम करोति, सन्दिग्धं वा निर्णयति, तदर्थमेव तं सकलमधीते। यस्मिन्वार्द्धर्चे पादे तावत् पदं भवति, यदभिमतं निर्वक्तुं तावन्मात्रमेवाधीते। तन्निर्विवक्षया तदेतदेव निपुणमन्वेष्टव्यं सर्वत्र॥

उकारस्योदाहरणम्—"अ॒यमु॑ ते॒ सम॑तसि क॒पोत॑ इव गर्भ॒धिम्। वच॒स्तच्चि॑न्न ओहसे॥" (ऋ० सं० १. २, २८, ४।) शुनःशेफो नियुक्त आत्मानं मोचयितुमिच्छन्निन्द्रं तया गायत्र्येन्द्रं तुष्टाव। 'अयम्' इति वर्त्तमानः सन् कर्मणि निर्दिशन्नाह। 'ते' तव युष्मदर्थं सोमः यं प्रति नित्यकालमेव 'समतसि' सम्पतसि। त्वं तासु क्रियास्वाहूयमानः समतसि सम्पतसि। कथं पुनर्यं प्रति समतसि? 'कपोत इव' कम्पतनः कपोतः, कुत्सितपतनः, स यथा 'गर्भधिं' गर्भधानीं कपोतिकाम्, अण्डाय्यं च

नीचं प्रति पुनः पुनः पतति, एवं यं प्रति नित्यकालमेव सम्पतसि त्वम्, स एवायमभिषुतः सोमः, एभिर्ऋत्विग्भिः । अथ किमस्माभिः करिष्यसि ? मोचय अस्मान् । किंवा 'वचः' एवेदं नः स्तुतिलक्षणं 'नोहसे' न वितर्कयसि रोरूयमाणानाम् ? केनाप्यभिप्रायेण वयमेतद् ब्रूमः,—वीर्यो युष्मद्गुणैर्न युक्तमेतदिति, यतो न मोचयस्यस्मानतो ब्रूमः। त्वं तदवबुध्याधमार्त्ततामस्माकमवधार्य्य कारुण्यान्मोचयास्मान् । किं तेऽस्माभिरयमेव तेऽत्यन्तः प्रति विशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः ॥

"इवोऽपि दृश्यते" । कदाचिदनर्थकः—इति वाक्यशेषः ॥५॥

किमुदाहरणम् ?—

सु विदुरिव सु विज्ञायेते इवाथापि नेत्येष इदित्येतेन सं प्रयुज्यते परिभये । हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् । शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकम्पताम्मेति । नरकं न्यरकं नीचैर्गमनं नास्मिन्नमणं स्थानमल्पमप्यस्तीति वाथापि न चेत्येष इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे न चेत् सुरां पिबन्तीति सुरा सुनोतेरेवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ६ ॥

इति प्रथमाध्यायस्य तृतीयः पादः ॥ २, ३ ॥

"सु विदुरिव, सु विज्ञायेते इव"—इत्येते उदाहरणे । सुष्ठु विदुरेनं ब्राह्मण इति, इवोऽनर्थक एव वाक्यपूरणः ।

सुहु विज्ञायेते यज्ञो नक्षत्रं ब्राह्मणेरिति, अत्रापीवोऽनर्थक एव।

व्याख्याताः पदपूरणाः, निपातसमाहारमधुना दर्शयति, तदधिकारार्थोऽयम् "अथ" शब्दः। इति सम्भावने। अयायमेव इदिति केवलः प्रयुज्यमानः पदपूरणो भवति। अपिचायमेव "न-इत्येतेन" "सं" युक्तः, "प्रयुज्यते परिभये" अर्थे। सर्वतो भयं परिभयम्। कथं प्रयोगः? "नेज्जिह्मायन्त्यो नरकं पताममिति"। सुगमः शेषः॥

केचित्त्वेतं कृत्स्नमेवाधीयन्ते,—

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम"
इति॥

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तॄन् प्रति तमनेन मन्त्रेण प्रत्यूचुः। 'एके' तावत् 'इतः' लोकात् 'हविर्भिः' पुरोडाशादिभिर्निमित्तभूतैः 'स्वः' 'सचन्ते' स्वर्गं लोकं प्राप्नुवन्ति स्म। अथ 'एके' 'सवनेषु' यज्ञेषु सोमान् सुन्वन्तः अभिषुण्वन्त, तेन कर्मणेत्यर्थः। 'शचीर्मदन्तः' अन्ये शच्या वाचा स्तुतिभिरेके देवान् मादयन्तः सन्तर्पयन्त इत्यर्थः। अथान्ये 'दक्षिणाभिः' स्वः सचन्ते इत्येतदेवानुवर्त्तते। तत्रैवं सति, तेन तेनाभ्युद्यतेषु प्राप्तेषु श्रेयः प्रति यदि वयमेतानपि भर्तॄन् सम्यक् परिचरेम। अन्येषां जपहोमादीनां कर्मणामसम्भवे सति। "न इत्" वयमेतेषामप्युप "जिह्मायन्त्यो" जिह्ममाचरन्त्यो भगवन् "नरकं पताम",—न ह्यन्यो भर्तृपरिस्यक्ताः स्त्रियाः कश्चनधर्मोऽस्तीत्यभिप्रायः॥

नरकशब्दं निर्ब्रवीति,—नीचैरस्मिन्नर्यन्ते गम्यत इति नरकमथवा नास्यस्मिन् रमणं रतिकरं स्थानमल्पमप्यस्तीति

नरकात् । अथाप्ययमपरो निपातसमाहारो नचेत्येव इदित्येतेनैव सम्प्रयुक्तः प्रयुज्यते। केनचिदनुपृष्टे सति प्रतिवचनं भवति। 'तद् यथा,—कश्चित् कश्चित् पृच्छति,—'तिष्ठन्ति वृषला' ? इति। ततः प्रत्याचष्टे, —'तिष्ठन्ति' इति । ततो 'यदि तिष्ठन्ति, किमर्थं नागच्छन्ति ?' इति पुनरनुपृष्टे ब्रवीति,—'न चेत् सुरां पिबन्त्यागमिष्यन्ति' इति, यदि सुरां न पिबन्तीत्यर्थः ॥

अथ "सुरा" कस्मात् ? "सुनोतेः",—सा ह्यभिपूयते अनेकैर्द्रव्यै. पिष्टादिभिः ।

"एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्या."। एवमनेन प्रकारेण उच्चावचेष्वर्थेषु बहुप्रकारेषु समाहृतास्यन्येऽप्येवं बहुप्रकारा निपतन्ति। प्रयुज्यमानास्ते लक्षणशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्य चानुप्रवेश्य, उपेक्षितव्या,—कः कस्मिन्नर्थे वर्त्तते ? इत्येव द्रष्टव्याः परीक्ष्या इत्यर्थः ॥ ६ ॥

इति निरुक्तवृत्तौ प्रथमाध्यायस्य तृतीयः पादः ॥ ६, ३ ॥

---

चतुर्थः पादः ॥

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः

यस्य तत्कर्म कुर्य्यात् सर्वं तत् सत्त्वं तथाऽऽचक्षीरन् यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्यत् किञ्चित् तृन्द्यात् तृणं तदथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १ ॥

"इति"—करणोऽधिकारपरिसमाप्त्यर्थः। "इमानि चत्वारि पदजातान्यनुक्रान्तानि, नामाख्याते चोपसर्गनिपाताश्च" इति। प्रतिज्ञाभ्यासो निगम इत्यर्थः। इतीमानि चत्वारि पदजातानीति व्याख्याय अनुक्रान्तानि,—पूर्वमाख्यातम्, ततो नामानि, तत उपसर्गाः, ततो निपाता इत्येव मानुपूर्व्येण क्रान्तानि वर्णितानि। व्याख्ययेति वाक्यशेषः। कतमानि पुनस्तानि? नामाख्याते चोपसर्गनिपाताश्च—इति। तदपि व्याख्यातमेव॥ यच्च तदुक्तं,—'नाम्नः किञ्चिदवशिष्यते, तच्चतुर्थेन पादेन वर्णयिष्यामः'—इति (४४२पृ० १६प०), तदिदमेवावसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते,—"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च"। तत्र तस्मिन्नेव पादचतुष्टये यानि नामानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येव शाकटायन आचार्य्यो ब्रवीतीति वाक्यशेषः। नैरुक्तानां चैव समयः सिद्धान्तः सर्वेषामविशेषेण गार्ग्यवर्ज्यम्॥

आह—क पुनरन्यथा ब्रवीति, येनैवमुच्यते,—शाकटायनो ब्रवीतीति? उच्यते,—"न सर्वाणीति गार्ग्य." ब्रवीति। किं गार्ग्य एव ब्रवीति? नेत्युच्यते,—"वैयाकरणानां चैके" व्याक-

रणमधीयन्ते ये, ते वैयाकरणाः, तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः ।

"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि"—इति । तदेतत् प्रपञ्चते गार्ग्यपक्षेण । यान्याख्यातजानि नामानि, यानि यावन्ति. एवं पर्य्यनुयुक्तस्तच्छन्दः । इह त्रिधा व्यवस्था नाम्नाम् । तद्यथा,—प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि । तत्र, प्रत्यक्षक्रियाणि,—कारको हारक इति । प्रकल्प्यक्रियाणि, तद्यथा,—गौरश्व इति । अविद्यमानक्रियाणि, तद्यथा,—डित्थो डवित्थ, अरविन्दोऽर्वाङ् चन्द्र इति । तत्रैव सति यत्र येष्वित्यर्थः । केषु नामसु स्वरसंस्कारौ, स्वरश्चोदात्तादिः, संस्कारश्च प्रकृतिप्रत्ययादिः, तौ स्वरसंस्कारौ । समर्थौ, समर्थता नामोपपत्तिरुच्यते, सङ्गतार्थौ, लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः । यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित., एवं संस्कारोऽपि । येष्वपि च प्रादेशिकेन, प्रदिश्यते द्रव्यमनयेति प्रदेश' क्रिया, या तस्मिन् द्रव्ये अवस्थिता यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिमत, तस्याः प्रदेशाख्यायाः क्रियायाः अभिधायको धातु' स गुण इत्युच्यते । अन्यत्र हि गुणशब्दो प्रधाने वर्त्तते । शेष', अङ्ग, गुणः इति समानार्था. । प्रधानन्तु तत्र क्रियाप्रदेशाख्या, तदभिधायको धातुः गुणाख्य., स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते । तेन धातुरूपेणान्वितावनुगतौ स्वरसंस्कारौ स्याता भवेताम् ।

येषामाह, किन्तेषामिति ? उच्यते,—संविज्ञातानि तानि । सम विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः । तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि नामानीति ।

तद्यथा,—कर्त्ता, कारकः, पक्ता, पाचक इति। न पुनर्यथा गौरश्वः पुरुषो हस्तीति। किङ्कारणम्? एतेषु प्रकल्प्यन्ते क्रियाः, न साक्षादुपलभ्यन्ते। अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते। तदिच्छादिषु पुनः कल्पयितुमपि शक्यन्ते। तस्मान्न सर्वाख्याख्यातजानि नामानीति। तत्र यदुक्तं 'सर्वाख्याख्यातजानि नामानि' इति तदयुक्तम्। रूढिशब्दे च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते, न वस्तुतोऽर्थक्रियास्वनुसहायभाव प्रति। तत्र शब्दस्य प्रच्युतानुपलचितेऽनुप्रवृत्तेऽभिधाने निर्वृत्तायां क्रियायामुपरतसाधनव्यापारं निरूप्य क्रियायाभभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते॥

अपरो व्याख्यामार्गः। "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्"। यत्र यस्मिन्नाम्नि स्वरसंस्कारौ, समर्थौ अष्टाध्यायीलक्षणोपपत्त्या युक्तौ, प्रादेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितौ अनुगतौ, स्यातां न्यायवत्कार्मनामिकसंयुक्तेन संस्कारेण। तद्यथा,—कर्त्ता, कारकः, पक्ता, पाचक इत्येवमादि। तदाख्यातजं गुणकृतमिति मतीम इति वाक्यशेषः। येषु पुनरष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावननुगतौ, न च न्याय्यकार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण। किं तेषामिति? उच्यते,—"संविज्ञातानि तानि"। संविज्ञानपदमितीह शास्त्रे रूढ़िशब्दस्येयं मञ्ज्ञा। वक्ष्यति हि, अग्निरिन्द्र इत्येवमादीनां संविज्ञानपदत्वम्,—"यत्तु संविज्ञानभूतं स्यात्" इति। तथा वृत्रहा पुरन्दर इत्येवमादीनां गुणपदत्वम्। स एवमिहापि विभागो द्रष्टव्यः। तत्र गुणपदानि,—कारकपाचकादीनि। संविज्ञानपदानि तानि "यथा,—गौरश्वः

पुरुषो हस्ती” इत्येवमादीनि,—न ह्येषां गवादीनाम् अष्टाध्याया व्युत्पत्तिलक्षणमस्ति, तस्माद्रूढिशब्दा एवैत इति ॥

अन्ये तु प्रदेशो व्याकरणमिति व्याचक्षते। तत्र हि शब्दानां लक्षणानि प्रदिश्यन्ते। तत्र कुतः? कश्चिल्लक्षणानुग्रहलक्षणावयवो वा गुण इत्युच्यते,—प्रसिद्धो हि गुणशब्दोऽनुग्रहेऽवयवे च। तद्यथा,—‘गुणे ममायं वर्त्तते’ इत्युक्तेऽनुग्रहे वर्त्तते इति गम्यते, अवयवेऽपि,—‘द्विगुणा रज्जुः’, ‘त्रिगुणा’ इति चोक्ते द्व्यवयवा त्र्यवयवेति गम्यते। शेषं समानमेव पूर्वाभ्यामर्थाभ्याम् ॥

अथवा सुविज्ञानानि तानि, सुविज्ञातानि तानि चेत्युभावपि पाठौ। तस्मादुभयथाऽपि व्याख्यातम्,—अस्य प्रदेश इति। केचिदङ्गभूता क्रिया गुण इति व्याचक्षते ॥

किं चान्यत्? “अथ चेत् सर्वाण्याख्यातजानि नामानि स्युः”। तथाप्ययमपरो दोषः प्रसज्येत। आह, कतम इति? “यः कश्च तत् कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः कश्चाध्वानमश्नुवीत, अश्वः स वचनीयः स्यात् यत् किञ्चित् तृन्द्यात् तृणं तत्”—इति। यः कश्चाविशेषेण प्राणी तत् कर्म कुर्यात्, यत् किञ्चिदनेकप्राख्यायमेकवदभिप्रेत्योच्यते,—तत्कर्म कुर्य्यादिति। सर्वमेव तं प्राणिनं तेनैवैकेन नाम्ना आचक्षीरन्। तद्यथा। यः कश्चाध्वानमविशेषेणान्योऽप्यश्नुवीत, अश्व इत्येव स वचनीयः स्यात्। कस्माद्धाश्व एवाश्व इत्युच्यते, अन्योऽप्यश्नुवन्नपि नोच्यते? इति विशेषहेतुर्नास्तीति। तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते, किं तर्हि? शब्दव्यवहार एवायमप्रत्यायनाय द्रष्टव्यः क्रियानिरपेक्षः। एवमेव, यत् किञ्चित् तृन्द्यादविशेषेण तत्सर्वं तर्दनक्रियायोगात् तृणमित्येवमुच्यते।

अभिव्याहरणमभिव्याहारः, तस्मिन्नभिव्याहारे, तत पश्चादा भिमुख्येन स्थित्वा तस्याभिधानस्य, ततो विचारयन्ति ।

कतमस्य धातोरेव रूपमिति ? आह,—प्रथनात्पृथिवी त्याहु ते शाकटायनादय ।

आह,—तत किमिति ? उच्यते,—तत्र वय पृच्छामस्ता वत, यदीय स्वभावत एव पृथिवी नाम अभविष्यत्, तत क पुनामपृथिवी सतीमप्रथयिष्यत ? कोऽस्याः प्रथनमकरिष्य दित्यभिप्राय ॥

अथापि कश्चिदस्या अपृथिव्या सत्या प्रथनकर्त्ताभ्युपग म्येत, ततोऽपि च वयमिदमपर पृच्छामः,—"किमाधारय इति"। चशब्द समुच्चयार्थ,—सर्वस्य हि प्राणिजातस्येय मेवाधार प्रतिष्ठा, अथ पुनर्यदेयमप्रथितासीत्, तदा योऽस्या प्रथयिता स किमाधार आसीत् ?—न ह्यनाधारेणाप्रतिष्ठितेन शक्येय प्रथयितुम, स आधारो नास्तीति प्रथनक्रियाभावः, प्रथनक्रियाभावे च सति क्रियाजान्येवमादीनि नामानीत्येत दयुक्तम। तस्मान्न सर्वाण्याख्यातजानि नामानीति ॥

"अथ" अपि इदमपरमप्राप्त शाकटायनः कृतवान्।

आह,—किमिति ? उच्यते,—"अनन्वितेऽर्थे" इत्येवमादि दोष ।

आह,—वेदाङ्गानामेकैकमनेकप्रभेदम। तद्यथा,—निरुक्त चतुर्दशप्रभेदम्। व्याकरणमष्टप्रभेदम्। तत्र, केषाञ्चिन्नैरु क्ताना कैश्चिद्वैयाकरणै साक केषाञ्चिच्छन्दस्येककमत्य केषा ञ्चिद्वैमत्यम्। तत्र, शाकटायनो नैरुक्तश्च शास्त्रवर्ज्ञ कानि चिदभिधानान्यनेकैर्धातुभिरनुविदधाति, कानिचिदेकेनैव। कि कारणम् ? प्रतिनियतो हि स्वेषु स्वेषु व्याकरणेषु शब्दा नुविधानसमय । तद्यथा,—पाणिनीया भू इति प्रकृति

सुपादाय लडित्येत प्रत्ययमुपाददते। ततः कृत्वा सानुबन्धलोपस्य लस्य स्थाने तिबादीनादिशन्ति, तथाहि ते तं शब्दमनुविधातुं शक्नुवन्ति। स हि तेषां शब्दानुविधानोपायः पाणिनिना परिक्लृप्तः। सैषा शब्दानुविधाने तन्त्रशैलीत्येतदेतैकं प्रयोजनमुक्ता नान्यत् प्रयोजनमस्ति लडादीनामध्ययने लोपे च। अपरे पुनर्वैयाकरणा लटमकृत्वैव तिबादीनेवोपाददते। तेषामपि हि शब्दानुविधाने सा तन्त्रशैली। एवं प्रतिनियतया स्वया स्वया तन्त्रशैल्या भवतीत्येवमादि समानमेव शब्दरूपं साधयन्ति। तत्रैव शब्दानुविधानोपायविप्रतिपत्तौ सत्यां शाकटायन आचार्य्योऽनेकैश्च धातुभिरेकमभिधानमनुविहितवान्, एकेन चैकमेव। तत्र यदनेकैरनुविहितवान्, तदितरैर्गार्ग्यपाणिन्यादिभिर्न स्मर्य्यते। किं कारणम्? अप्रसिद्धो हि स तेषां शब्दानुविधानमार्गः। धातुसमुदायमात्रमेव नामेति। अतस्ते शाकटायनमाचिचिक्षन्त आहुः—"अयानन्वितेऽर्थे" इति। अनन्वितेऽर्थे अननुगते शब्देनार्थे, यत्र संस्कार्य्यमाणोऽपि शब्दोऽयमनुगन्तुं न शक्नोति। एवं धातुरसमर्थो भवति।

"अप्रादेशिके विकारे" च। यया हि क्रियया तद्द्रव्यं प्रदिश्यते, तदभिधायको यो धातुः, स तदभिधानं विकृष्यमाणं विकर्तुं न शक्नोति यत्र।

तत्र हीयमानप्रतिज्ञः शाकटायनः सर्वाण्याख्यातजानि नामान्युपपादयिष्यन्नसम्भवे सति काशकुशावलम्बनमिव कुर्वन् किमकरोदिति? "पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः"। पदेभ्यः आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय पदेतरार्द्धान् अन्यान् अन्यांश्च इतरेतराण्यान् पदावयवैरन्यैरन्यैरन्यदर्द्धं नाम्नः संस्कृतवान्॥

- तद्यथा,—'सत्यम्'—इत्येतदभिधानं संस्कार। कथम्? "एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादि च"। एतेः 'इण् गतौ (अ० प०)'—इत्यस्य कारितं ण्यन्तं रूपं कृत्वा ततो यकारमन्तमादाय यकारान्तं कृत्वा सत्यशब्दस्यान्तमर्द्धं संस्कार, ततो 'यम्'—इति भवति। अस्तेः शुद्धञ्च। 'अस् भुवि (अ० प०)'—इत्येतस्य शुद्धमेव रूपं कृत्वा तकारान्तमित्यर्थः। ततः सकारादिशब्दरूपं गृहीत्वा 'सत्'—इत्येतत्, 'सत्यम्'—इत्येतस्य शब्दस्य आदिमकरोदाद्यमर्थं संस्कार, तत्सदिति भवति। अत्र योऽयमस्तेस्तकार, स यकारमधिरोहति। एवमेतदेकमभिधानं द्वयोर्धात्वोः संस्कार सत्यमिति भवति॥

अथ कोऽर्थः? सन्तमर्थं मापयति प्रत्यापयति गमयतीति सत्यम्। कारितं च यकारादिञ्च शुद्धञ्च सकारादि चेति इतरस्य चेतरं चार्द्धमिति समुच्चयार्थाश्चकाराः। एवं पदेभ्यः पदेतरार्द्धान् संस्कार शाकटायनः, तदेतदन्याय्यं कृतवान्,—को हि नाम पदं विभज्यानेकधातुजं कुर्यात्। तदेतदकृतपूर्वमन्यैर्विद्वद्भिः शाकटायनोऽतिपाण्डित्याभिमानादकरोत्,—यदभिनत् पदानि॥

अपि चोपजायते नः शङ्का,—यथासौ प्रवृत्तो नाम्नी पदेषु स्थास्यति, अपि चासौ वर्णानपि भेत्स्यति, अनेकार्थाश्च कल्पयिष्यति। यो हि पदान्यभिनत्, तस्य वर्णभेदे विशेषहेतुः को भविष्यति? तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि नामानि, नापि सर्वाण्याख्यातजानि नामानीति॥

"अथापि" अयमपरो दोषः प्रसज्येत। कतमः? "सत्त्वपूर्वो भाव इत्याहु" अभियुक्तास्तद्विदः। सत्त्व पूर्वमस्मात्सोऽयं सत्त्वपूर्वः। किं कारणम्? सत्त्वाश्रय एव ह्यसौ। तत्रैव सति,

"अपरस्माद्भावात्" अपरकालीनेन भावेन क्रियया "पूर्वस्य" पूर्वोत्पन्नस्य "प्रदेशः" प्रदेशनं सञ्ज्ञा प्रतिलम्भो "नोपपद्यते"। किं कारणम्? उत्पत्तिसहभूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसम्बद्धमेव द्रव्यमुत्पद्यते,—नित्यसम्बद्धौ हि शब्दार्थौ। "इति तदेतत्" सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं "नोपपद्यते"। तदनुपपत्तावस्मत्पक्षसिद्धिः,—कानिचिदाख्यातजानि नामानि, कानिचिदनाख्यातजानीति। अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयतामिति परिसमाप्तो गार्ग्यपक्षः॥ २॥

शाकटायनपक्षेणेदानीमेतान् दोषान् प्रतिसमाधास्यामस्तदर्थमिदमारभ्यते,—

यो हि नु वा एतत्तद्वच स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति · यो एतद्वः कश्च तत्कर्म कुर्य्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इत्येतेनैवोत्तरः प्रत्युक्तः यो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूनाजाट्य आट्णारो जागरूको दर्विहोमीति यो एतन्निष्पन्नेऽभिव्या-

ह्वारेऽभिविचारयन्तीति भवति हि निघन्ने ऽ-भिव्याहारे योगपरीष्टि: प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेत्यथ वै दर्श-नेन पृथुरप्रथिता चेदप्यन्यैः ॥ ३ ॥

"यथो हि नु वा एतत्" इति। यथेति वाक्योपादाने, यथा येन प्रकारेण। उकारोऽवधारणार्थः। व्याख्यातमेतत्,— "अथाप्युकार एतस्मिन्नेवार्थे (५६पृ०)"। इतरेण येनैव प्रकारेण प्रसिद्धमाचार्येणाख्यातजत्वं प्रतिषिद्ध नाम्न, तेनैव प्रकारेण प्रत्यनुभाष्यामीति। हि—इत्यसूयायाम्। काय हि व्याकरिष्य-तीति। नु—इत्येष हेत्वपदेशे। वै—इत्यय यथोक्तपूर्वपचो-पदेशार्थे। येनैव प्रकारेणासमर्था हेतव उक्ता, तेनैव प्रकारेण प्रत्यनुभाष्य प्रतिवक्तृधर्मेण समीकरिष्याम ॥

यथेलदुक्तं किमिति? "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादे-शिकेन गुणेनान्वितौ स्याताम्" इति। आह तच किमिति? उच्यते,—तदेतत् प्रत्युच्यत इत्यपयुक्तास्तच्छब्दः॥

आह,—केन पुन. प्रकारेण प्रत्युच्यत इति? उच्यते,— "सर्वं प्रादेशिकमित्येव सत्यनुपालम्भ एष भवति"। सर्वमेव प्रादेशिक सर्वमेव क्रियाज नाम। आह,—ततः किम्? इत्येव सत्यनुपालम्भ एष भवति। आह,—कथम्? शृणु। प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ याव-द्रूप्यमनुविधेया,—विभ्रौ हि लक्षणगतिर्नैष शब्दापराधो नाप्यस्माकम्। भवत एवाय मपराधो मन्दशिक्षितत्वात्,— येनानुविधातु स्वरसंस्कारौ विद्यमानावपि प्रदेशवाचिनि धातौ न शक्नोषि, स त्व तावत् पुन पुनः शिक्षस्वान्यदा-

करण यावच्छक्तिस्तदानुविधातुमिति। व्याकरणेऽप्यष्टधाभिन्ने लक्षणैरेकदेशो विचित्रः। कचित् सोनो धातुः, कचित् तुशब्द-चशब्दवाशब्दातिरिक्ताध्याहारविभागादिगम्यः। तद् यथा। मतान्तरेष्वप्यभिन्नेषु कश्चित् क्वचिद्विधिरुच्यते। ते च सर्व एव प्रयोगमिच्छता प्रयोगकाल उपसंहर्त्तव्याः। एवमिहापि सर्वाण्येव लक्षणशास्त्राण्यपेक्ष्याणि अखिलस्वरसंस्कारसिद्धये। —इति स त्वं तावत् शिक्षस्वानिर्विण्णः, यावदखिलशब्दानां स्वरसंस्कारावनुविधातुमुपजातं सामर्थ्यमिति॥

"यच्चो एतत्" यत् पुनरेतदुक्तम्,—"यः कश्च तत् कर्म कुर्यात्, सर्वं तत् सत्त्वं तथाऽऽचक्षीरन्निति"। अनेकेषा-मेकक्रियायोगादेकनामता प्रसज्येतेति॥

अत्र ब्रूमः,—न हि प्रसज्यते। त्वमपि पश्यसि, वयमपि च "पश्यामः समानकर्मणां" तुल्यकर्मणां अपि सतां कर्मकृतां "नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति"। तक्षन् कश्चित् तक्षेत्युच्यते। अन्यः तक्षन्नपि न तक्षेत्युच्यते। आह,—कोऽत्र हेतुरिति? शृणु,—लोकमेव पृच्छ, तमेवोपालभस्व, न मयैष नियमः कृत इति। अथ च तद्यथा,—समानमीहमानानां कश्चिदेवार्थेन संयुज्यते, कश्चिन्न, वेदादीनाम्, एकार्थेन संयुज्यत इति अन्यै-रपि संयुक्तः, सत्यमेकेन चालब्धम्। स्वभावतो हि शब्दाना क्रियाजत्वेऽपि सति काश्चिदेव क्रियामङ्गीकृत्यावस्थितिर्भ-वतीति। अथवा क्रियातिशयकृतो नियमः स्यात्,—यो हि यदतिशयेन करोति, तस्यानेकक्रियावत्त्वेऽपि सति तद्धेतुक एव नामधेयप्रतिलम्भो भवति॥

अयं समाधिः,—अथवा न ब्रूमो यो यत्र यदा च तक्षति, स एव तक्षेति। किन्तर्हि? यो यदा यत्र तक्षा भवति, स

एव तच्चेति। तदेतल्लक्षणमनियतं, काममन्येष्वप्यस्तु कदाचित् क्वचित् तेषामप्यन्याः क्रिया नियततराः सन्ति, यदेतुक्तो नामधेयप्रतिलम्भ इति। तेषां तु तच्चा नियमतः तचतीति विशेषः। जीवन इक्षुरसः, शाकजातिर्वा। भूमिजोऽङ्गारकः।

"एतेनैवोत्तरः प्रत्युक्तः"। आह,—कतमः? यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यादित्येषः। पश्यामोऽनेकक्रियायुक्तानामपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति। तद्यथा,—तक्षा, परिव्राजक इत्येतान्येवोदाहरणानि। तक्षा ह्यन्यान्यपि कर्माणि करोति। न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति। तत्र, यदुक्तमेकस्यानेकक्रियायोगादनेकनामता प्रसज्येतेति। एतदयुक्तम्। न हि प्रसज्येत। यदि चोक्तमनेकेषामेकनामता, एकस्य चानेकनामता प्राप्नोति,—ततश्च व्यवहाराप्रसिद्धिरिति, न हि तदुभयमस्ति। अनेकेषामेकक्रियायोगे हि सति एकस्य चानेकक्रियायोगेऽपि हि सति व्यवस्थित एव शब्दनियमः स्वभावत एव लोके। तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति। तत्र, यदुक्तं व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीति, एतदयुक्तम्॥

"यथो एतत्" यत् पुनरेतदुक्तम्—"यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति"। अत्र ब्रूमः,—शब्दस्वाभाव्यमेतत्—यत् तथा सर्वाण्याख्यायन्ते, यथा यथा प्रतीतार्थानि भवन्ति, न तत्राहमपराध्ये भवत, नापि शास्त्रम्। यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमे[illegible] वाचि[illegible] नाहं शब्दानां कर्ता, न एषां प्रयोक्ता[illegible] प्रसान्य[illegible] देवराज्ञः वा यदि शक्तोऽपि॥

आह,—कस्मात् पुनः कानिचिदाख्यायन्ते लोके ? तदभिधाने स्वाभाव्यमेव,—कानिचित् प्रतीतार्थानि, कानिचिदप्रतीतार्थानि, तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्त्तव्यानि, एतदेव शास्त्रस्य शास्त्रत्वम्,—यदप्रतीतार्थान्यपि प्रकृत्यादिना प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति आख्यायन्त एव कानिचित्, कानिचिच्छास्त्रेण प्रतीतार्थानि क्रियन्ते । रूढ्यनुविधायित्वाल्लक्षणस्य, गुणतस्तेषु लक्षणम् । अपि च । "सन्ति" एव "अल्पप्रयोगाः" प्रतीतार्थक्रियाः केचित् "कृतः" कृत्प्रत्ययान्ताः शब्दाः "अपि" "एकपदिकाः" एकपदप्रकरणान्तर्वर्त्तिनस्तंद्धर्माणः । तत् "यथा,—व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति" । व्रततिर्ह्यातिर्वल्ली । दमूना दममनाः वैल्वेवमादि, अग्निरतिथिर्वा । जाट्यः जटावान् । आट्णारो अटनशीलः । जागरूको जागरणशीलः । दर्विहोमीति दर्व्या जुहोतीत्येवं प्रतीतार्थान्यपि शाकटायनाभिप्रायः । तत्र यदुक्तं —'न सर्वाख्यातजानि नामानीति' तद् युक्तम् ॥

"यथो एतत्"—यत् पुनरेतदुक्तम्,—"निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति" । अत्र ब्रूमः,—युक्तं ते कुर्वन्ति—"भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः" । योगपरीष्टिर्नाम योगस्य परीक्षणम् ।

मप्रथयिष्यत् किमाधारश्च ?' एतद् युक्तम्, अन्यथा हि धातवो नोपपद्यन्त एव। तत्रैव मति, यथा न विरोत्स्यते, तथा निर्वक्ष्यामः। तस्मादविरुद्धः शाकटायनाभिप्रायः ॥-३॥

अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते यथो एतत्पदेभ्यः पदेतरार्द्धान् सञ्चस्कारेति योऽनन्वितेऽर्थे सञ्चस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा यथो एतदपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति बिल्वं भरणाद्वा भेदनाद्वा ॥ ४ ॥

इति प्रथमाध्यायस्य चतुर्थः पादः ॥ १, ४.

"अथ"। "अपि" च, यदि दृष्टेऽप्यस्याः पृथुत्वे न वयमुपलभ्यामहे। ननु "एव" सति, "सर्व एव दृष्टप्रवादा उपालभ्यन्ते" न केवलमदृष्टमेव। योऽयं दृष्ट्वा ब्रवीति, स तत्र दोष एव। तथा सति, दृष्टहानं प्रसज्येत, अनिष्टञ्चैतत्। तस्मात् पृथुदर्शनात् पृथिवीत्युच्यते।

"यथो एतत्" यत् पुनरेतदुक्तम्—"पदेभ्यः पदेतरार्द्धान् सञ्चस्कारेति" अत्र ब्रूमः,—"योऽनन्विते" शब्देनानभिधेये "अर्थे" अननुगतमसम्बद्धं "सञ्चस्कार, स तेन" सम्बद्धेन संस्कारेण "गर्ह्यः" गर्हणीयः। पुनराचार्यो योऽनुगतधातुभिरनेकैरेकाभिधानगतानर्थांस्ततः सञ्चस्कार, नैव सौऽयं न। "सैषा" तदभिप्रायापरिज्ञानात् "पुरुषगर्हा" पुरुषो हि कश्चित्

अणिचिन्त्वादिकधातुजमपि न जानाति, किमुत बहुधातुजम्। अपि च, सन्ति लोके तादृशाः पुरुषाः, ये कारककारकादीन्यपि प्रकटक्रियाणि सन्ति, कतमेभ्यो धातुभ्य एतान्यभिनिष्पाद्यन्त इति न जानते, एष पुरुषदोषो न शास्त्रदोषः,—यदनुगमयितुं शब्दैरर्थो न शक्यते। तत्र,—'यद्-क्रम, अननुगत एवार्थे सञ्चस्कार शाकटायनः, मन्त्रमेव स्वार्थमाययति गमयतीति' सत्यम्। तस्मादुपपद्यत एव शाकटायनमतम्।

अपि च, रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते। यथा लक्षण, तथा लक्ष्य प्रवर्त्तितुमर्हति,—इतरथा हि कस्य लक्षणं स्यात्। यदसर्पत् तत्सर्पिरिति मन्त्रः, यन्नवनीतमभवदिति मन्त्र। अपि च, ब्राह्मणेनाप्यनेकधातुजान्येव कृत्वा निरुच्यन्ते। तत्र सन्त्याभिधानानि यत्परिज्ञाने च फलमुपपद्यते। आह,—"तदेतत् त्र्यक्षरं हृदयमिति, हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वायान्ये च य एव वेद, द इत्येकमक्षरं ददत्यस्मै स्वायान्ये च य एव वेद, यमित्येकमक्षरमेति स्वर्गं लोकं य एव वेद (श० ब्रा० १४, ८, ४, १)"—इति। एव हरतेर्ददातेरेतेर्हृदयशब्दः। तदर्थफलोपदर्शनार्थं ब्राह्मणेनैवं निरुक्तः। तस्य न. परं प्रमाणम्। तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्,—यदनेकधातुभिरेकमभिधानं निरुक्तवानिति।

"यथो एतत्" यत् पुनरेतदुक्तम्,—"अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः" अत्र ब्रूमः,—"पूर्वोत्पन्नानां सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भम्"। अपरस्मादपि सतो भावात्। "एकेषाम् ? न एकेषाम्"। तत् "यथा"–"बिल्वादो लम्बचूडक इति"। पश्चात्कालीनधाधि

चूडालम्बनक्रियया, भविष्यता योगेन विल्वादनक्रियया च, पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः। स चान्यत्र नोपपद्यते। तत्र यदुक्तमपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यते, इत्यं तदनेकत्वादयुक्तम्। उपपद्यत एव हि केषाञ्चिदिति ॥

"बिल्व भरणाद्वा भेदनाद्वा"। भृत हि तद् भवति बीजानाम्, बिभर्त्ति वा। दुर्भिक्षादौ भक्ष्यमाणं जनम्, भेदनाद्वा भिद्यते हि तदवश्यं भक्षणायेति ।

आह,—किमिदमतिमध्विव किमपि पूर्वोत्तरपक्षमन्वह नामाख्यातजलमधिकृत्योक्तमिति ? उच्यते,—शिष्यवुद्धिहृद्यार्थमेतदुक्तम्, कथं नाम व्युत्पन्नवुद्धि शिष्योऽप्रतिबुध्यमानः सर्वतोमुखानेव लौकिकवैदिकान्छब्दान्निर्ब्रूयादिति। सर्वाण्येव हि व्याकरणानि निरुक्तानि च वेदाङ्गत्वाविशेषात् प्रमाणानि। तेषामेव फलमिदं माध्विल्येतदशक्य तदुक्तमिति ॥ ४ ॥

इति निरुक्तवृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

पञ्चमः पादः ।

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सोऽनर्थका हि मन्त्रास्तदेतेनोपेक्षितव्यं नियतवाचो युक्तयो नियतानुपूर्व्या भव-

न्यथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते। उरु प्रथस्वेति प्रथयति। प्रोहाणीति प्रोहत्यथाप्यनुपपन्नार्था भवन्ति। ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह हिंसन्नथापि विप्रतिषिद्धार्था भवन्ति। एक एव रुद्रोऽवतस्थे न द्वितीयः। असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। अशत्रुरिन्द्र जज्ञिषे शतं सेना अजयत्साकमिन्द्र इत्यथापि जानन्तं सम्प्रेष्यत्यग्नये समिध्यमानायानु ब्रूहीत्यथाप्याहादितिः सर्वमिति। अदितिर्द्यौरदितिरन्तरिक्षमिति। तदुपरिष्टाद्व्याख्यास्यामोऽथाप्यविस्पष्टार्था भवन्त्यम्यग्यादृश्मिञ्जारयायिकाणुकेत्यर्थवन्तः शब्दसामान्यादेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम्॥ १॥

एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानामेतल्लक्षणं परिज्ञायते—“अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते”। अथशब्दोऽधिकारार्थः। द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोतीति। अपीति सम्भावने। अपि पदेषु विभागेनावस्थितेषु लोके वेदे वा, अपि मन्त्रेषु वाक्यभावेनावस्थितेषु, यः समस्तार्थस्तस्मिन् प्रत्ययो विशेषावधारणं न विद्यते, न भवतीत्यर्थः। अपीदं शास्त्रमन्तरेण पदार्थप्रत्ययो नास्ति। अपि वाक्यार्थ, इत्यभिप्रायः।

आह,—कः पुनः पदार्थवाक्यार्थयोर्विशेष इति? उच्यते,—साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः। तद्यथा,—गौरित्युक्ते किमित्याकाङ्क्षा भवति, ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति, तथा गच्छतीत्युक्ते क इति साकाङ्क्षं भवति, तथा गौरित्युक्ते निराकाङ्क्षं भवति। अथेदानीं गौर्गच्छतीत्युक्ते गौर्वाहदोहादिभ्यो व्यावृत्य गमनेऽवतिष्ठते, गमनं चान्येभ्यो व्यावृत्य गव्येवावतिष्ठते। एष वाक्यार्थः। स एष प्रकरणाविरोधी वाक्यार्थः पदार्थं नियमेन लक्षयति, पदार्थश्च पदलक्षणम्। पदार्थनवियोगेन हि व्याकरणे पदानां प्रकृतिप्रत्ययादीनि लक्षणानि व्यादिश्यन्ते॥

यत एवमतः "अयमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः"। अर्थमप्रतियतोऽप्रतिपाद्यमानस्यावद्वतार्थस्येत्यर्थः। "नात्यन्तम्"। नैकान्तिकेन, एकान्तं नाम नियमोऽनियमेनेत्यर्थः। किम्? 'स्वरसंस्कारोद्देशः'। स्वरोद्देशश्च संस्कारोद्देशश्च, स्वरावधारणं संस्कारावधारणं नास्तीति वाक्यशेषः। किं कारणम्? न ह्यनवद्वतार्थः स्वरसंस्कारावधारयितुं शक्नुयात्,—अर्थवशेन हि स्वरसंस्कारावतिष्ठते।

"तदिदम्" एव कृत्वा निरुक्तशास्त्रं "विद्यास्थानम्" एतदधीनत्वादर्थपरिज्ञानस्य। अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं "व्याकरणस्य कार्त्स्न्यं" कृत्स्नभावं करोतीति वाक्यशेषः। व्याकरणेन हि स्वरसंस्कारौ चिन्त्येते। तस्मादपरिसमाप्तमेव तावद् व्याकरणं यावत् निरुक्तं नाधिगतमिति,—न हि अनेरुक्तोऽर्थमवधारयितुमलम्,—नानवद्वतार्थः स्वरसंस्कारतत्त्वं विजानीयादिति॥

आह,—ननु व्याकरणस्य कार्त्स्न्यमेतत् करोतीत्युक्ते तच्छेषमेवैतत्, गुणादिवत्, ततश्च विद्यास्थानत्वमस्य विरुध्यत

इति ? नेत्युच्यते,—"स्वार्थसाधकञ्च"। स्वार्थाजहद्‌वृत्त्या श्चैतदनुषङ्गतो व्याकरणस्य स्वतन्त्रतां करोति। यथा लोके स्वार्थमपरिहाय कश्चित् परानुग्रहं करोत्येवम्। यत पुनर तदुक्तं गुणादिवदिति। ते हि तन्त्रान्तर्भूता एव "उणादयो बहुलम (पा ३, ३, १)"—इत्युक्तम, न पुनर्निघण्टवो बहुल मिति। तस्मात स्वतन्त्रमेवेद विद्यास्थानमर्थनिर्वचनम, व्याकरणन्तु लक्षणप्रधानमिति विशेष ॥

आह,—"यदिमन्त्रार्थप्रत्ययाय" एतदारभ्यते, हन्त, तदेव मर्थमारभ्यमाणम् "अनर्थकम्" एव "भवतीति"। आह,—क एवमाहेति ? उच्यते,—"कौत्स"। किं कारणम् ? "अनर्थका हि मन्त्रा"। न हि मन्त्राणामर्थोऽस्ति वाच्यवाचकत्वेन। तदर्थनिर्वचनायारभ्यमाणमिदमप्यनर्थकमेव भवति। तस्मा न्नारब्धव्यमित्येव कौत्सो मन्यते॥ "तत्" एतदेवमुच्य मान कौत्सम् "एतेन" अनेन नैरुक्तेन "न" "उपेक्षितव्यम्"। उपगम्य वेद शास्त्रञ्च ईक्षितव्यम्, किमसौ सत्यमाचष्ट इथेति वा परीक्ष्यम। अर्थवत्त्वे मन्त्राणा यद्धेतुजातं वक्ष्य माण तदुपगम्यार्थवत्त्व मन्त्राणामीक्षितव्यमिति केचि दाहु।

कया पुनरुपपत्त्या कौत्सो मन्त्राणामानर्थक्यमाहेति ? उच्यते,—"नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति"—इति। नियतवाचो युक्तय ,निरूढवाचो युक्तय ,—अभिधाननियता हि

२ ३ १ २ ३ १ २

ते भवन्ति।—"अग्न आ याहि वीतये (सा० वे० स० १,१,१,१)" —इति मन्त्रेण पुनर्विभावमो। आगच्छ पातायेति। नियता नुपूर्व्या नियतनिष्ठानुपूर्वी पदप्रयोगस्य। तद्यथा,—'अग्न आयाहि' इति न पुनर्भवति 'आयाह्यग्ने' इति। इह

लोकेऽर्थवतां शब्दानामनियमेन पर्य्यायवचनता दृष्टा गवादिप्रयोगे, तथा न पौर्वापर्य्यं दृष्टम्। तद्यथा,—'गोणीमभ्याज' 'अभ्याज गोणीम्' 'आहर पात्रम्' 'पात्रमाहर' इति। न च तथा मन्त्रेषु। ततोऽर्थवच्छब्दवैधर्म्यात् पश्यामोऽनर्थका मन्त्रा इति ॥

अथाप्ययमपरो हेतुरानर्थक्ये मन्त्राणाम्। आह,— कतमः ? इति, उच्यते,—"ब्राह्मणेन" ते "रूपसम्पन्नाः" अपि सन्तो "विधीयन्ते" एव। यदि ह्येते अर्थवन्तोऽभविष्यन्, रूपेणैव लिङ्गेन स्वमात्मानमेते विनियोक्तुं समर्था इति कृत्वा न ब्राह्मणेन तेषु तेषु कर्मसु व्यधास्यन्त, विहिताश्च। तद् यथा,—"उरु प्रथस्वेति प्रथयति (श० ब्रा० १, १, ६, ८) प्रथनलिङ्गो मन्त्रो विहितः प्रथनकर्मणि, तथा च,—"उरु प्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् (य० वा० सं० १, २२)"। यजुरिदम्, पुरोडाशं प्रत्युच्यते। पुरोडाश ! त्वं विस्तीर्णप्रथनः सन् विस्तारप्रथाः, स्वात्मानं ते तव यज्ञपतिश्चायं यजमानः प्रजापशुहिरण्यादिभिर्लोके प्रथतां विस्तीर्य्यतामिति। तथा,—"प्रोह्णामीति प्रोहति"—इति ब्राह्मण द्रोणकलशप्रोहणविधावपि। "इदमहमात्मानं प्रोहामि"—प्राञ्चं प्रेरयामि इति प्रोहामीति प्रोहति, प्रोहणलिङ्गो विहितः प्रोहणकर्मणि। तस्माल्लिङ्गसम्पन्नविधानात् पश्यामो ब्राह्मणेनानर्थकस्वरूपमेव सन्तं मन्त्रं नियुक्तम्। एवं सति, मन्त्र मन्त्र पुनर्विदधत् ब्राह्मणमर्थवत्। अनर्थका मन्त्राः—न ह्यर्थवन्त सन्तो दासवद्ब्राह्मणेन विधीयेरन्, विहिताश्च। तस्मादनर्थका मन्त्रा इति पश्यामः। अपि च,—ब्राह्मणस्यानर्थक्योपगम्ये देशकालकर्तृदक्षिणादिकर्माङ्गभूतं कुत उपलभ्येत ? तथाच ब्राह्मणस्यानर्थक्येऽभ्युपगम्यमाने वेदैक-

देशस्य मन्त्रस्यात्यन्तमेवानर्थकत्वमभ्युपगतं स्यात्,—न हि ब्राह्मणस्य विधिस्तुत्यर्थाद्यतिरर्थवत्तास्ति, मन्त्राणां पुनर्वाच्य वाचकत्वेनानर्थकानामपि सतां विनियोगमात्रेणार्थवत्ता स्यात्। एतस्माच्च कारणमनर्थका मन्त्राः वाच्यवाचकत्वेन मन्त्रो विनियोगमात्रेणैवार्थवन्तो विधेयत्वात् विधायकत्वाच्च ब्राह्मणमर्थवदस्त्विति ॥

"अथापि" अयमपरो हेतुरनर्थकत्वे मन्त्राणाम्। आह,—कतम ? इति, उच्यते,—'अनुपपन्नार्था" हि एते "भवन्ति" य एतेष्वर्थो लभ्यते,—'अयमेवंरूपः स्यादिति' नासावुपपद्यते। तद्यथा,—"ओषधे त्रायस्व (य० वा० स० ४, १, ६, १५) एनम्'—इत्यादि। न चौषधिरात्मानमपि त्रातुं समर्था, किं पुनरन्यम्। तथा,—"स्वधिते मैनं हिंसीः (य० वा० स० ४, १, ६, १५) इत्यादि" आत्मनैव 'हिंसन्'। को हि नाम एवमुक्तः स्वयमेव हिंस्यात् ? हिनस्ति च। लोके यान्येव विधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकान्युच्यन्ते, तथैवेमानि। तस्मादिमान्यप्यनर्थकानीत्युपपद्यते॥

"अथापि" अयमपरो हेतुरानर्थक्ये मन्त्राणाम्। आह, —कतम ? इति, उच्यते,—"विप्रतिषिद्धार्था भवन्ति" इति। अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधो विप्रतिषेध, इतरेतरव्याघात इत्यर्थः। तद्यथा,—"एक एव रुद्रोऽवतस्थे न द्वितीयः" "असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् (य० वा० स० १६, ५४)" "अशत्रुरिन्द्र जज्ञिषे (ऋ० स० ८, ७, २१ २)" "शतं सेना अजयत् साकमिन्द्रः (ऋ० स० ८, ५, २२, १)—इति"। एतान्युदाहरणानि। "एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन् एतनासु शत्रून्। संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान् सञ्चुकोचान्तकाले॥" 'एक एवा-

वतस्थे रुद्रः' स्थितवान्, 'रणे' रणाय रणार्थम्, 'न' भन्यो 'द्वितीयः' कश्चिदस्ति । इति रुद्रबहुत्वप्रतिषेधः । कथमवतस्थे ? 'नि' निश्चयेन 'घ्नन्' 'पृतनासु' स्पर्द्धनीयेषु संग्रामेषु 'शत्रून्' । किञ्च, स एकः 'संसृज्य' सृष्ट्वा, 'विश्वा' विश्वानि भुवनानि 'गोपा' रक्षिता, सृष्ट्वा च सर्गकालानन्तरमेव पालयिता च स्थितिकाले । 'प्रत्यङ्' प्रातिलोम्येन 'जनान्' 'सञ्चुकोच' सङ्कोचयति, 'अन्तकाले' प्रलयकाले । य एवं गुणयुक्तो रुद्रस्तं वयं स्तुमः । "असंख्याता०—०भूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि" (य० वा० सं० १६, ५४) । एषा शतरुद्रियेऽनुष्टुप् । अनेन चाग्निचयनेऽर्कपर्णेनाजाक्षीरमिश्रा गवेधुकाः सप्तकृत्वो ह्रयन्ते उत्तरस्यां श्रोणावन्त्यायामिष्टकायाम् । प्रजापतेरार्षम् । 'असंख्याता' असंख्यातानि 'सहस्राणि' बहूनीति यावदुक्तं स्यात्, केषाम् ? 'ये रुद्राः' 'भूम्याम्' 'अधि' उपरि 'तेषां' 'सहस्रयोजने' अध्वनि अवस्थितानामिव 'अव' 'तन्मसि' तनुमः 'धन्वानि' धनूंषि । अप्राप्तानामिवास्मान् प्रतीत्यभिप्रायः । तावदेतानभिहृष्मो यावत्ततानि तानि धनूंषि । "त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् । अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥" (ऋ० स० ८, ७, २१, २) । एतया प्रतिच्छन्दसा इन्द्रं तुष्टाव सुदाः पैजवनः । षोडशिनि शस्ये विनियुक्ता । हे 'इन्द्र !' 'त्वम्' 'अवासृजः' 'सिन्धून्' स्यन्दनात् एतान् माध्यमिकान् उदकसङ्घातान् । कथं पुनरवासृजः ? 'अधराचः' तानधिगमनात् कृत्वा सर्वानेवावासृज, नित्यकालम् 'अहन् अहिम्' घ्नन् मेघम् । 'अशत्रुः' अशातयितव्यः 'जज्ञिषे' जायसे नित्यकाल भवसि, तस्मिन् हते मेघे । किञ्च, त्वमेतेन प्रकारेण

नेवधकर्मणा 'विश्वं' सर्वं 'पुष्यसि' पुष्णासि 'वार्यं' वारिभवं व्रीह्यादिकम्। 'तं' 'त्वा' त्वाम् एवङ्गुणसंयुक्तं वयं 'परिष्वजामहे' सर्वतः स्वजामहे। 'नभन्तां' मा भूवन् 'अन्यकेषाम्', अन्येषाम् 'ज्याका' ज्या 'अधिधन्वसु' अधिधनुःषु। किमु-तान्ये केचनाभ्युद्यमाना एते स्म द्विषः अवततज्य धनुषो हत-सर्वोद्यमाः सन्त्विव्यतस्त्वां परिष्वजामहे इत्यभिप्रायः। "आशुः शिशानः"—इत्येषा अप्रतिरथेन विष्टु वह्निप्रणयने विनियुक्ता। अप्रतिरथस्यैन्द्रपुत्रस्यार्षम्। 'आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः॥" (ऋ० सं० ८, ५, २२, १)। 'आशुः' व्यापकः क्षिप्रो वा, 'शिशानः' शिश्यानः तीक्ष्णीकुर्वन् आयुधम्, प्रशस्तीतायुधः, 'वृषभो न' वृषभ इव पुष्टो योद्धा, 'घनाघनः' जहिजहीत्येवं शब्दकारी, 'क्षोभणः' केषाम्? 'चर्षणीनाम्' प्रत्यनीकावस्थितानामसुरादीनाम्, 'सङ्क्रन्दनः' समाह्वाता शत्रूणाम्, आहूय च 'अनिमिषः' आदरवान् जयं प्रति, 'एकवीरः' एक एव विक्रान्तः अप्रतिद्वन्द्वः सङ्ग्रामेषु, 'शतं सेनाः' बह्वीः शत्रुसेनाः 'साकम्' अवस्थिताः 'अजयत्' एक इन्द्रो यः, तं वयं स्तुमः। एवमितरेतरप्रतिषिद्धान्येतानि मन्त्रवाक्यानि। यद्येको रुद्रः, नासङ्ख्यातानि सहस्राणि, अथासङ्ख्यातानि, नैकः। यद्यशत्रुः, कथं शतं सेना अजयत्? अथ शतं सेना अजयत्, कथमशत्रुः? लोके हि यान्येवञ्च-णानि वाक्यानि उन्मत्तादीनाम्, तान्यनर्थकानीति॥

"अथापि" अयमपरो हेतुर्मन्त्राणामानर्थक्ये। कतमः? इति, उच्यते,—"जानन्तं सम्प्रेष्यति" अध्वर्युर्होतारम्। कथम्? 'अग्नये समिध्यमानायानुब्रूहीति' "तदु हैक आहुः। अग्नये समिध्यमानाय होतरनुब्रवीति।" (श० ब्रा०

१, ३, २, ३)। हीता हि विविधञ एव भवति,—नह्यविद्वान् विहितोऽस्तीति स विजानात्येवामुमिवत्रवधाविद मयानुष्ठातव्यमिति। तदेतद्विज्ञातार्थस्य सत. सम्प्रेषणमनर्थकमेव भवति। यदेतदनर्थकमेवमन्येऽपि मन्त्रा इति ॥

"अथापि" अयमपरो हेतुर्मन्त्राणामानर्थक्ये। आह,—कतम ? इति, उच्यते,—"आह" मन्त्रनिगमः "अदितिः सर्वमिति"। आह,—किमुदाहरणम् ? 'अदितिर्द्यौरदितिरन्तरिक्षमिति' "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र। विश्वेदेवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम॥" (ऋ० म० १, ६, १६, ५)। "तत्" एतदुदाहरणम् "उपरिष्टाद् व्याख्यास्यामः"। इह त्वेवमर्थमियमुदाहृता,—कथ यैव द्यौ, सा अन्तरिक्षम् ? यैव माता, स एव पुत्र, स एव पितेत्येवमादि किमपि बहुत्र परस्परासम्बद्धमुच्यते ? तदर्थवत्त्वे सत्युपपादयितुमशक्यम्। तस्मादनर्थका मन्त्रा इति ॥

"अथापि" अयमपरो हेतुरानर्थक्ये मन्त्राणाम्। आह,—कतम. ? इति, उच्यते,—"अविस्पष्टार्था" अपि हि केचित् "भवन्ति"। तद्यथा,—"अम्यग्, यादृश्मिन्, जारयायि, काणुका,—इति" एवमादय। न ह्येषां विस्पष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम्,—न च केचिदर्थवन्त केचिदनर्थका इति न्याय्यमभ्युपगन्तुम्, अर्द्धवैशस हि स्यात्। तस्मात् सर्व एवानर्थका इति। परिसमाप्तः पूर्वपक्ष. ॥

स्वपक्षनिदान स्थापयिष्याम., तदर्थमिदमारभ्यते,—"अर्थवन्तः शब्दसामान्यात्" इति। अर्थवन्त एव मन्त्रा इति प्रतिज्ञा। हेतुरुच्यते,—शब्दसामान्यादिति। समान एव हि शब्दो लोके मन्त्रे च। तथा च, य एव गोशब्दो लोके सास्न-

स्कारयुक्त., स एव मन्त्रेष्वपि। तथैव सति, स एवार्थवान् लोके स एव चानर्थको मन्त्रेष्विति विशेषहेतुर्नास्ति, असति च विशेषहेतावर्थवन्त एव मन्त्रा शब्दसामान्यादित्युपपद्यते। तत्पुनरेतदुक्तम्,—प्रयोगानियमाल्लोकेऽर्थवत्त्वं प्रयोगनियमाच्च मन्त्राणामानर्थक्यमिति, तत् प्रति वक्ष्याम एतत् लोकेऽपि हि प्रयोगनियमो दृष्ट.। तद्यथा,—पितापुत्राविति ॥

किञ्चान्यत्,—"एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम्। एतदेव हि यज्ञकर्मणः समृद्धम्। तत् किम्? इति, उच्यते,—'यद्रूपसमृद्धम्' मन्त्रलिङ्गैरभिधीयते, तदेव हि समस्तद्धया युक्त भवति, नेतरत्। एतदेव सुतरा स्पष्टीकरोति,—'यत् कर्म क्रियमाण मृग्यजुर्वाभिवदतीति च ब्राह्मणमिति'। शब्दसामान्याद् ब्राह्मणप्रामाण्याच्चेति। चशब्दो ब्राह्मणमपि च मन्त्राणामर्थवत्त्वमेव दर्शयति। अनर्थका हि सन्त. कथ कर्माभिवदेयु? कथ वाऽनभिवदन्त. समर्द्धयेयु? अर्थवाच वाभ्युपगत भवता ब्राह्मणस्य? यद्यपि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते इति अत्र ब्राह्मणेन सिद्धमेवार्थवत्त्वमुक्त मन्त्राणाम्। तदेतदुपदर्शित मस्माभिस्तस्मादर्थवन्त एव मन्त्रा इति ॥ १ ॥

मौलन्तौ पुत्रैर्नप्तृभिरिति यथो एतन्नियतवाचो युक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति यथो एतद् ब्राह्मणेन रूपसम्पन्ना विधीयन्त इत्युदितानुवादः स भवति यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत यथो एतद् विप्रतिषि-

द्वार्था भवन्तीति लौकिकेष्वप्येतद्यथाऽसपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति यथो एतज्ज्ञानन्तं संप्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राह यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ २ ॥

## प्रथमाध्यायस्य पञ्चमपादः ॥ १, ५ ॥

किं पुनः सम्पन्नरूपत्वे मन्त्राणामुदाहरणम्? उच्यते,—"क्रीळन्तौ"—इति। "इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्। क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥" (ऋ० सं० ८, ३, २८, २)। सूर्याया आर्षम्। विवाहे विनियुक्ता। अनुष्टुप्। 'इहैव' 'स्त' भवतं युवां, 'स्वे गृहे' 'मोदमानौ' हर्षमाणौ 'मा वि यौष्टम्' मा च वियुज्येताम्। 'विश्व' सर्वम् 'आयुः' व्यश्नुतं क्रीळन्तौ 'पुत्रैः' 'नप्तृभिः' पौत्रैश्च सहेत्याशीः। स्थापितमर्थवत्त्वं मन्त्राणाम्॥

अधुना परपक्षे हेतवो निराकर्त्तव्याः, तदर्थमिदमाह,—"यथो एतत्" इति। यत् पुनरेतदुक्तम्। "नियतवाचो युक्तयः, नियतानुपूर्व्या भवन्ति इति"। अत्र ब्रूमः,—"लौकिकेष्वपि" इत्यर्थवत्सु शब्देषु नियतवाचो युक्तित्वं नियतानुपूर्व्यत्वञ्च दृष्ट-

"एतद्यथा,—इन्द्राग्नी पितापुत्राविति" च। तत्र, नियतवाचो युक्तित्वान्नियतानुपूर्व्यत्वाच्चानर्थका मन्त्रा एतदयुक्तम्। लौकिकेष्वपि हि नियतप्रयोगाः सन्तः केचिदर्थवन्तो दृष्टाः, यथेन्द्राग्नी पितापुत्राविति। स प्रयोगनियमादनर्थका मन्त्रा इत्यनैकान्तिको हेतुः। ...नादर्थवन्त एवेति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—"ब्राह्मणेन रूपसम्पन्ना विधीयन्त इति"। अत्र ब्रूमः,—"उदितानुवादः स भवति"। न समर्थ आत्मानमेव स्वेन रूपेण विधातुमित्यतो ब्राह्मणेन विधीयते किन्तर्हि आत्मनियोगाश्रयमुक्तमेव सन्तं मन्त्रेणार्थं ब्राह्मणमनुवक्ति विस्तरेण प्रकृतार्थसन्तुष्टूषया, न ह्यनुक्तं स्तोतुं शक्यते, सोऽयमेवमुदितानुवाद एव भवति, उक्तानुवाद इत्यर्थः। अपि चानेकेऽपि समानलिङ्गाः प्रकरणे मन्त्रा भवन्ति, ते च्छहम्पूर्विकया एकं प्रयोगं प्रति 'खले कपोत'वत् सम्पतन्ति, तेषां समुच्चये विकल्पे च प्राप्ते सति अभिमत एको नियमार्थं ब्राह्मणेन विधीयते। एवमुभयोरर्थवत्त्वं मन्त्रब्राह्मणयोः। तत्र यदुक्तं रूपसम्पन्नविधानान्मन्त्रानर्थक्यम, मन्त्रार्थवत्त्वे वा ब्राह्मणानर्थक्यमिति, एतदयुक्तम्। तस्मादुभयमर्थवत्—मन्त्राश्च ब्राह्मणञ्चेति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—'ओषधे त्रायस्वैनम्, स्वधिते मैनꣳ हिꣳसीः,—इत्यादयः अनुपपन्नार्थाः भवन्ति। अत्र ब्रूमः,—ओषध्यधिदेवतोच्यते, हे ओषधे! त्रायस्वैनम्, त्वत्पूर्वको ह्येष वृश्चिछद्यमानः सम्यक् छिन्नो भविष्यति, ततश्च यज्ञे विनियुक्तः। प्रतिविशिष्टमुक्तार्थमेतस्याः स्थावरत्वात् प्राप्नत इत्येतत् त्राणमभिप्रेत्योक्तमोषधे त्रायस्वैनमिति, न छेदनं प्रतिपत्स्यतेऽस्यमित्यनेनाभिप्रायेण। तस्मा-

दुपपन्नार्थ एवायम्। तत्र यदुक्तमनुपपन्नार्था इत्येवमादयो मन्त्रा इति, एतदयुक्तम् ॥

यदपि चोक्तम्,—'स्वधिते मैनं हिंसीरित्याह हिंसन्निति'। तत्र ब्रूमः,—"आम्नायवचनादहिंसा" एषा "प्रतीयेत"। आह,—कथमहिंसा? प्रत्यक्षतो हि छिद्यते वृक्षः। शृणु,—इयमहिंसा, इयं हिंसा,—इत्यागमादेतत् प्रतीयते। अतिविशिष्टश्चायमेव वैदिक आम्नाय आगमः, एतत्पूर्वकत्वादन्येषामागमानाम्। स एष कृत्स्नस्य जगतः अतिविशिष्टाय श्रेयसेऽभ्युद्यतः सन् हिंसाया कर्त्तारं विनियोज्यत इति। कुत एतत् पुनरियमहिंसैव? यतोऽस्मान् नियुनक्ति कर्त्तारम्। तदेतदागमप्रत्यक्षमेव यथेयमहिंसेति। अपि चेतदोषधिवनस्पतिपशुमृगपक्षिसरीसृपाः सम्यगुपयुक्ता, सन्तो यज्ञे परमुत्कर्षं प्राप्नुवन्ति। सोऽयमभ्युदय एव सम्पद्यते, न हिंसा। तत्र, यदुक्तमेनं हिंसीरित्याह हिंसन्निति, न ह्यसौ हिनस्ति। किन्तर्हि? अनुगृह्णाति यज्ञ, विनियोगार्थं विधानतश्छिन्दन्। तस्मादुपपन्नार्थमेवमपि। तत्र यदुक्तमनुपपन्नार्थत्वादनर्थका मन्त्रा इति, एतदयुक्तम् ॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—"विप्रतिषिद्धार्था भवन्तीति"। अत्र ब्रूमः,—नैष विप्रतिषिद्धोऽर्थः,—"एक एव रुद्रोऽवतस्थे" "असंख्याता सहस्राणि"—इति,—देवता हि महाभाग्ययोगादेकापि सत्यनेकधा भवति, अनेकापि चैकधा, तदुपरिष्टाद् व्याख्यास्यामः "माहाभाग्याद्देवताया (दै॰ का॰ ७, १, ४)" इत्यत्र ॥

यत् पुनरेतदुक्तम्,—"अशत्रुरिन्द्र जज्ञिषे" "शतं सेना अजयत् साकमिन्द्रः"—इति। अत्र ब्रूमः,—"लौकिकेष्वपि" अर्थवत्सु शब्देषु "एतत्" एवमेवोच्यमानं दृष्टम्। तद् यथा,—

असपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति" । न हि कश्चिदसपत्नोऽस्ति लोके । उक्तं हि,—'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रव.'—इति । तथापि स्वल्पसपत्नं दृष्ट्वा केचिदेवं वक्तारो भवन्ति,—'असपत्नोऽयं ब्राह्मणः' इति । एवमेव कश्चिद्यदितिप्रवृद्धे भृशं पातिते मघेऽन्यं पामसारतामभिप्रेत्येदमुक्तं स्यात्,—'असनुरिन्द्र जज्ञिषे यस्त्वामेतमेवमतिप्रवृद्धमहन्ताहम्'—इति । यत् पुनरेतदुक्तम्,—'शतं सेना अजयत्'—इति । अत्र ब्रूमः,—कुतो हि सेनाः, या इन्द्रो जेष्यति ?—न हि देवानां शत्रवः सन्ति, ये जेतव्या इति । किङ्कारणम् ? विभवो देवा वशिनः अधिकारणधर्माय परेण महिम्ना युक्ताः । आह,—कथन्तर्हि 'शत सेना अजयत्' इत्येतदुक्तम् ? उच्यते,—रूपकल्पनयैवैषा युद्धप्रवादात् स्तुतिः, वक्ष्यति च "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति (नैग० का० २, ५, २)"—इति तदेतद् भवता न सम्यग् दृश्यते, सम्यगन्विष्यतां देवतातत्त्वं नैरुक्तेभ्यः, ततो मन्त्रार्थोनाविरोधेन सम्यगवभोत्स्यसे । नैवमवाक्यतत्त्वज्ञेन मन्त्रार्थों विगाहितुं शक्यः । गभीरपदार्था हि वेदः, कथमवभोत्स्यते ? वेदार्थ विबाधविभ्रान्ता एव हि प्रवादिनः स्वबुद्धिलाघवमाविर्भावयन्तो ब्राह्मणाः मन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे । यदुक्तं, विप्रतिपिद्धार्थत्वादनर्थका मन्त्रा इति । एतदयुक्तम् । न ह्येमे विप्रतिषिद्धार्थाः,—भवत एव मतिविभ्रमो मन्दयिस्थितत्वात् । तस्मादर्थवन्त एव मन्त्रा इति ॥

"यथो एतत्" यत् पुनरुक्तम्,—'जानन्तं सम्प्रेष्यतीति" । अत्र ब्रूमः,—लौकिकेष्वर्थवत्सु शब्देषु एतदेव स्वाभाव्यं दृष्टम् ।

"जानन्तम्" गुरुम् "अभिवादयते" स्वगोत्रमभिवदन्। तथा च "जानते मधुपर्क प्राह" विर्मधुपर्को मधुपर्क इति। तदे तदर्थवत्स्वपि शब्देषु विहितार्थख्यापनार्थशब्दसामान्यादर्थवन्तो मन्त्रा इति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—अथाप्याह "अदिति सर्वमिति"। अत्र ब्रूम,—द्विविधा हि शब्दप्रवृत्ति, मुख्यार्था गौणी च। तत्रैव सति यत्र मुख्यासम्भवस्तत्र गौण्याश्रीयते। स एष भक्तिवादोऽदिति, यथा कश्चिद् ब्रूयात् कश्चिदनेकोप कारे प्रवृत्तम्—'त्वमेव मे माता, त्वं मे पिता' एवमेतदपि द्रष्टव्यम्। "लौकिकेष्वपि" चार्थवत्सु शब्देषु "एतत्" उच्यमान दृष्टम्, "यथा,—सर्वरसा अनुप्राप्ता पानीयमिति"। ततो हि तेषां प्रभव इत्यनया गुणवृत्त्या एवमुच्यते, मिहापि गुणवृत्त्या कयाचिददिति सर्वत्वमुच्यते। यदुक्तमितरेतरविरुद्ध किमपि बहवी ति, एतदयुक्तम्। सर्वमेतदुपपद्यत एव गुणवृत्त्या। तस्मादर्थवन्त एव सर्वमन्त्रा इति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—अथापि "अविस्पष्टार्था भवन्तीति"। अत्र ब्रूम,—"नैष स्थाणोरपराध" इति। न ह्यत्र स्थाणुरपराध्यति "यदेन" स्थाणुम् "अन्धो न पश्यति" यदत्रासावभिहन्यते। किन्तर्हि? "पुरुषापराध स भवति" पुरुष एवापराधो तत्र, यदसावचक्षुष्मान्। एवमिहापि नैव मन्त्राणामपराधो यदशिक्षितेन भवता न विज्ञायन्ते, भवत एवापराधोऽस्ति, भो भवान् सर्वमात्मीयमपराध मन्त्रेष्वस्मासु वा संयोजयितुमिच्छति, न तव प्रज्ञास्ति किञ्चित्॥

"यथा,—जानपदीषु" कासुचित् प्रवृत्तिषु इतिकर्तव्यतासु कौशलविद्याकृत "विद्यात पुरुषविशेषो भवति"।

पुरुषाणां विशेषः। एवमिहापि मन्त्रार्थविचारेऽभ्यूहकृत पुरुषाणां विशेषो भवत्येव। तत्रैवं सति, केचित् पुरुषा येषु विस्पष्टानपि मन्त्रान् न शक्नुवन्ति निर्वक्तुम्, अपरे पुनरविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्त्तुम्। तदुक्तम् "उत त्वः (ऋ० म० ८, २, २३, ४। नैघ० का० १, ६, ३)"— इत्यत्र ॥

तत्रैव सति, "पारोवर्य्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति"—इति। य एते पारोवर्य्यविदो ब्राह्मणा, पारोवर्य्येण विजानन्ति आचार्य्यपरम्परया, ते पारोवर्य्यविदः, न साक्षात्कृतधर्माण इत्यभिप्रायः। तेषां किम्? तेषां य एव भूयोविद्यो भवति बहुश्रुतः कश्चित् स एव प्रशस्यते। य एव मन्त्रार्थविज्ञाता प्रशस्यो भवति, नेतरो मन्दबुद्धिरशिक्षितः, स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न क्वचित् प्रतिबध्यते, न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति। तस्माद्धेतोः म त्वं बहु शृणु, ततः सम्यगवभोत्स्यसे मन्त्रार्थान्। तत्र यदवोचः 'अविस्पष्टार्था मन्त्राः' न हि ते अविस्पष्टार्था, तानेषोपरिष्टात् स्पष्टीकृत्य व्याख्यास्यामहे। तत्रैव सति भ्रमयति सम्मोहः। तस्मादर्थवन्त एव मन्त्रा इति सिद्धम्। तस्माच्चेतदपि शास्त्रं मन्त्रार्थप्रत्ययायारभ्यमाणमर्थवदेव भवतीति सिद्धः शास्त्रारम्भः। तत्र, यदुक्तं 'यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति' एतदयुक्तम्। इति प्रभिन्नेषु परस्य हेतुषु स्वपक्षसिद्धावुत्थिते च कारणे अवस्थिता मन्त्रगणस्य सार्थता, तदर्थमेतत् खलु शास्त्रमर्थवदिति ॥ २ ॥

इति निरुक्तवृत्तौ प्रथमाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

षष्ठः पादः ।

अथापीदमन्तरेण पदविभागो न विद्यते । अवसाय पद्वते रुद्र मृळेति । पद्वदवसङ्गवः पथ्यदनमवतेर्गत्यर्थस्यासौ नामकरणस्तस्मान्नावगृह्णन्ति । अवसायाश्वानिति । स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति । दूतो निर्ऋत्या इदमाजगामेति । पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वा: कारान्तम् । परो निर्ऋत्या आचक्ष्वेति । चतुर्थ्यर्थप्रेक्षै कारान्तम्परः सन्निकर्षः संहिता पदप्रकृतिः संहिता पदप्रकृतीनि सर्वचरणानां पार्षदान्यथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यं ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । इन्द्रं न त्वा शवसा देवता वायुं पृणन्तीति । वायुलिङ्गं चेन्द्रलिङ्गञ्चाग्नेये मन्त्रेऽग्निरिव मन्यो त्विषितः सहस्वेति तथाऽग्निर्मान्यवे मन्त्रे त्विषितो ज्वलितस्त्विषिरित्यप्यस्य दीप्तिर्नाम भवत्यथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥ १ ॥

"अथापीदमन्तरेण पदविभागो न विद्यते" । शास्त्रारम्भप्रयोजनाधिकारे वर्त्तमाने अपीदमन्तरेण मन्त्रेष्वर्थावधारण नास्तीत्युक्ते यदि म [illegible] ।दिनान [illegible]

'उपपादिते निरुक्तशास्त्रस्य, कौत्सेन मन्त्राणामर्थवत्तां स्थापयित्वा परपक्षहेतवः प्रत्युक्ताः । तेषु स्थितमर्थवत्त्वं मन्त्राणाम् । तेषामर्थ-निर्वचनायेदमारभ्य-माणमर्थवदित्युप-पन्नमर्थवत्त्वं निरुक्तशास्त्रस्य । तदेतत् सर्वमपि चोदकशास्त्रकारव्याजेन प्रसक्तानुप्रसक्तमुक्तं प्रज्ञाया विवृद्धये शिष्यस्य । कथन्नामा ना विवृद्धप्रज्ञः ? शब्दार्थन्यायसङ्करेषु हेतुसमयानभिज्ञः परैः प्रतिबध्यमानोऽपि पदार्थान् वाक्यार्थांश्चासम्मोहेन निर्ब्रूयादिति । एवन्तावत्, एतदन्तरेण मन्त्रार्थप्रत्ययो नास्ति । अथेदमपरमारम्भप्रयोजनमित्येवं विशेषाधिकारार्थोऽयमथशब्दः । अपि मन्त्रार्थप्रत्यय इदमन्तरेण नास्ति, नाप्यस्ति यदिदं वक्ष्यमाणम्, इत्यपिशब्दः एव सम्भावने ।

आह,—किम्पुनस्तद् वक्ष्यमाणम् ? इति, उच्यते,—'पदविभागः' । 'एवं पदानि वक्तव्यानि'—इत्येतद् विभागपरिज्ञानं नास्तीत्यर्थः । किं कारणम् ? अर्थवशेन हि पदान्यवतिष्ठन्ते, न चेदमन्तरेणार्थपरिज्ञानमस्ति । तस्मादत एव पदविभागप्रसिद्धिरिति । इदमर्थवत्त्व मन्त्राणामन्तरेण पदविभागोऽप्यकिञ्चित्करः । प्रसिद्धश्चैष सर्वशाखासु । तस्मात् पदविभागार्थवत्त्वाय चार्थवन्तो मन्त्रा इति केचिद् वर्णयन्ति ॥

एव प्रतिज्ञाय समानसंहितेषु ग्रन्थेष्वर्थहेतुकं पदविभागविशेष दर्शयति, तद्यथा,—"अवसाय पद्वते रुद्रमृळेति" । "पद्वत्" पादवत् पादसंयुक्तम् । "अवस गाव पथ्यदनम्" इति निगमप्रसक्तस्य पर्यायवचनम् । "अवतेर्गत्यर्थस्यासौ नामकरणः" प्रत्ययः । "तस्मात्" असमासत्वादस्य "नावगृह्णन्ति" एततपदकारा इति शेषः । "मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववु-

साय पद्वते रुद्र मृळ ॥ (ऋ॰ सं॰ ८,८,२७, १)। शबरो नाम गौतमः स मयोभूरित्यस्यास्त्रिष्टुभः पूर्वैस्त्रिभिः पादैः गवामाशिषमाशास्योत्तमेन तासामेव च रुद्रात् सुखमयाचत। गवामुपस्थाने विनियुक्ता। 'मयोभूः' मयोभावयिता पाश्चात्यः 'वातः', एताः 'उस्राः' 'अभिवातु' आभिमुख्येन वातु। किञ्च, तेन सुखभुवा वातेनानुद्वेजनीयेन स्पृश्यमानाः 'ऊर्जस्वतीः' प्रभूतरसाः 'ओषधीः' 'आरिशन्ताम्' आस्वादयन्तु। आस्वाद्यास्वाद्य च सलवणस्वादमात्माभिप्रेते काले उदकं 'पिबन्तु'। तच्च पीतमोषधिसहितमासां तथा कोष्ठे विपच्यतां रसशोणितमांसमेदोमज्जाऽस्थिक्रमेण यथैताः पीवस्वत्यो भवेयुः। 'पीवस्वतीः' पीवगुणयुक्ताः स्थूला बलवत्यो बहुपयस्काः सति च बहुपयस्त्वे 'जीवधन्याः' जीवधनिन्यो रोगदुष्टमातृकाः। हे 'रुद्र!' वयम् एतासां गवाम् एताम् आशिषम् आशास्महे। त्वमप्यस्मै गोलक्षणाय 'पद्वते' 'अवसाय' पथ्यदनाय 'मृळ' सुखीभव। मैना हिंसीस्त्वमासामीश्वर इत्यभिप्रायः॥

"अवसायाश्वानिति"। इदमपरमुदाहरणम्। अस्मिन् पूर्वेण रूपेण सरूपमेव पदमर्थकृताद् विशेषादवगृह्णाति। द्वयोः पदयोः बहूनां वा पदविच्छेदेनोच्चारणं स समासः। तयोरिवार्थविभागोपदर्शनार्थमवच्छेदेन ग्रहणमवग्रहः। तदेतदवगृह्यते पदम्,—"स्यति." दातुः "विमोचने" अर्थे वर्त्तते, स पुनः "उपसृष्ट." उपसर्गेणावेत्यनेनोपसृष्टः संयुक्त इत्यर्थः। यतो धातूपसर्गविभागोपप्रदर्शनार्थमेव तत् पदमवगृह्यते अवसायेत्येतत्। "यो नि॒ष्ट इ॑न्द्र नि॒षदे॑ अकारि॒ तमा नि षी॑द स्वा॒नो नार्वा॑। वि॒मुच्या॒ वयो॑ऽव॒साया॑श्वान् दो॒षा वस्तो॒र्वही॑यसः प्रपि॒त्वे ॥ (ऋ॰ सं॰ १, ७, १८, १)। एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव। "यो नि॒ष्टे"। हे 'इन्द्र'! 'यो नि॒ः'

स्थानं 'ते' तव यदिदं 'निषदे' निषदनाय, मया 'अकारि' कृतम्, 'तं' योनिं तत् स्थानम् 'आ निषीद' एत्य निषद्येन सीद। कथं पुनर्निषीद ? 'स्वानो न' स्वन्यमान इव 'अर्वा' अश्व। संशब्द्यमान इवाश्ववन्नाश्वः स यथा स्वे स्थाने निषीदेदेव मया त्वमपि शब्द्यमानस्तुतिभिरेतस्मिन् मया संस्कृते स्वास्तीर्णे बर्हिषि स्थाने निषीद। कथम्पुनर्निषीद ? 'विमुच्य' एतान् 'वय. अश्वान्'। कुत. ? रथात्। पुनरपि च एतान् 'अवसाय' वियोज्य रश्मिभ्योऽश्वान् लब्धोदकयव-मान् कृत्वा 'दोषावस्तोर्वहीयस' अहनि च रात्रौ च ये केचिद् वहन्ति, तेभ्योऽपि वहीयस. शीघ्रतमेन जवेन वोढृत-मान् ततस्त्वं स्वस्थो भूत्वा निषीद। एतस्मिन् योनौ एत-स्मिन् संस्कृते बर्हिषि 'प्रपित्वे' प्राप्ते अस्माकं त्वद्यजनकाले मा नो विघ्नं कार्षीरित्यभिप्रायः॥ एवन्तावदिदमवगृह्य-मिदमनवगृह्यमित्यर्थपरिज्ञानद्वारेण "तस्मात्" एतन्निरुक्त-शास्त्रात् विज्ञायते॥

यान्यपि च स्वल्पनवगृह्याणि पदानि समानसंहितानि, तेषामप्यर्थज्ञतमेव विभागवैशेष्यं भवति। तद्यथा,—"दूता निर्ऋत्या इदमाजगामेति पञ्चम्यर्थप्रेक्षा वा" अस्मिन् पदे पञ्चम्यर्थ दर्शन वेत्यर्थ', पञ्चम्यर्थोऽत्र दृश्यते ? "षष्ठ्यर्थप्रेक्षा वा" षष्ठ्यर्थ दर्शन वेत्यर्थ', षष्ठ्यर्थोऽत्र दृश्यते ? अत एतत् "आ कारान्तम्" पद निर्ऋत्या इति। "देवा. कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम। तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे॥" (ऋ० सं० ८, ८, २३, १)। प्रचेता नामाङ्गिरस, तेनेय कपोतसूक्ते दृष्टा। कपोतनिलयनशान्त्यै कपोतपदहरण एतत् सूक्तम्। विष्टुवेया। हे 'देवा ।' 'कपोतः' 'इषित.' प्रेषितः 'निर्ऋत्या.

सम्भूत, तयैवानुप्रविश इत्येव पक्षार्थः । अथवा निर्ऋत्याः सकाशादित्येवं पक्षस्यार्थः । 'यत्' कर्तुम् 'इच्छन्' 'इदम्' अस्मद्गृहम् 'आजगाम' । यश्च नः पापस्य च पापकर्मणो जन्मान्तरकृतस्य पतत् कपोतस्य इह निलयनं तत्पददर्शनं च कुद्यादिषु विपाकलिङ्गम् । 'तस्मै' कर्मणे तदर्थं युष्मानेव 'अर्चाम' । समर्था यूयमेतत् पापकर्म विपच्यमानमस्माकमप-हर्तुमृजु विपाकं वा कर्तुं वयमपि च तस्मै पापकर्मणे 'क्षयाम' 'निष्कृतिम्' निष्क्रमणं निर्यजनम्, तपसा एतद्भूतानु-रूपेण । यतो ब्रूमः,—'शं नः' सुखं न. 'अस्तु' 'द्विपदे चतुष्पदे' युष्मत्प्रसादेन ... खेन तपसेत्यभिप्रायः ।

"परो निर्ऋत्या आचक्ष्व" । एतस्मिन् पदे "चतुर्थ-र्थ" चतुर्थं दर्शनम् । अत एतत् पद ... "ऐकात्म्यम्" । "अपेहि मनसस्पतेऽपक्राम परश्चर । परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः ॥" (ऋ० सं० ८, ८, २२, १) । अत्रे वेता नाम आङ्गिरस एतामनुष्टुभमपश्यत् । दुःस्वप्नदर्शने विनि-युक्ता । मन इति विज्ञानमुच्यते, बुद्ध्यादि, तस्य पतिः मन-सस्पतिरात्मा, इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः । उभावपि अकृतकर्मापेक्षया प्राणिना बुद्ध्यादिविज्ञानापसंहारस्येशाते । तयोरन्यतरः सम्बोध्यते,—हे 'मनसस्पते' 'अपेहि' अप-गच्छ । अस्मत्तो गत्वा च त्वमीषदपगम्य अस्मत्त., समीप एव मा स्था अस्माकम् । किन्तर्हि ? 'अपक्राम' दूरमपेत्य क्राम । अपक्रम्य च 'पर' परत., अन्यत्रास्मत्त. 'चर' अपुन-रावर्त्तमानोऽस्मान् प्रति । किञ्च 'परः' परागत्य, यस्याः त्वं दूत' निर्ऋत्या', तस्यै 'निर्ऋत्यै' 'आचक्ष्व' । किमिति ? 'बहुधा जीवतो मन.' । अथवा 'पर' प्रकृष्टम् आसन्नं तस्यां निर्ऋत्या.' दूतो म,। प्राम.। अविज्ञातमरणकाल एशाति

समीहतो ब्रवीमि। तस्मै 'निरूत्य' गत्वा 'बहुधा' अनेकप्रकारम् 'आचक्ष्व' कथय। "'जीवतः' यादृशं मनः भवति, तादृशं मम 'मनः' बुद्धादिकरणज्ञानदिनकरकिरणस्पष्टवृत्तित्वेन तावत् स मुमूर्षुरित्यै तदाचक्ष्व। मुमूर्षोर्हि उपक्षीणकर्मणा नातिस्पष्टा इन्द्रियवृत्तयो भवन्ति, न च मम तथेत्यभिप्रायः॥ एवं समानसंहितानामपि पदानामर्थभेदकृतं विभागवैलक्षण्यम्। स चार्थं इदमन्तरेण न विज्ञायते। अत इदमुक्तम्,—'अथापीदमन्तरेण पदविभागो न विद्यते' इति॥

पदविभागप्रसक्तमधुना संहितालक्षणमाह,—"परः सन्निकर्षः संहिता (पा० १, ४, १०८)"—इति। परः प्रकृष्टो यः सन्निकर्षः संश्लेषः, परस्परेण स्वराणां स्वराधिरूढानाञ्च व्यञ्जनानां सा संहितेत्युच्यते। सा च पुनरियं "पदप्रकृतिः संहिता (ऋ० प्राति० २, १)"। अत्र द्विविधा वर्णयन्ति। पदानां या प्रकृतिः, सेयं पदप्रकृतिः संहिता। किं कारणम्? संहितातो हि पदानि प्रक्रियन्ते, तस्मात् संहितैव प्रकृतिः, विकारः पदानीत्येवमेके मन्यन्ते। अपरे पुनः,-पदप्रकृतिः संहितेति पदानि प्रकृतिर्यस्याः सेयं पदप्रकृतिरिति। किं कारणम्? पदान्येव हि संश्लिष्यमाणानि संहिता भवति, तस्मात् पदान्येव प्रकृतिः, विकारः संहितेति॥

एवञ्च कृत्वा "पदप्रकृतीनि सर्वचरणानां पार्षदानि"। सर्वेषां चरणानां सर्वशाखान्तराणामित्यर्थः। किम्? पार्षदानि, स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहप्रगृह्यक्रमसंहितास्वरलक्षणमुच्यते। तानीमानि "पार्षदानि" प्रातिशाख्यानीत्यर्थः। आह,—किं तेषाम्? इति। उच्यते,—तानि पदप्रकृतीनि। पदं येषु संहितायाः प्रकृतित्वेन

चिन्त्यते, तानीमानि पदप्रकृतीनि। तेषामपि स एव समय, इत्यभिप्रायः।

आह,—किम्पुनरत्र साधीयः,—पदानां प्रकृतित्वम्, संहितायाः विकारत्वम्? उत वा विकारत्वं पदानाम्, प्रकृतित्वं संहितायाः? इति। उच्यते,—संहितायाः प्रकृतित्वं न्याय्यं। आह,—किं कारणम्? उच्यते,—मन्त्रोऽह्यभिव्यज्यमानः पूर्वं ऋषेर्मन्त्रदृशः संहितयैवाभिव्यज्यते, न पदैः, अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणाः, अधीयते चाध्येतारः, पदैरेव विन्ययोज्यन्ते मन्त्राः कर्मसु। न त्वेतत् सर्वमस्ति। तस्मादेतैर्विशेषहेतुभिः संहितैव प्रकृतिर्न पदानीति पश्यामः, समयमात्रमितरत् स्वशास्त्रनियतमेव। यदुक्तं पदप्रकृतीनि सर्वचरणानां पार्षदानि, तेष्वेव हि व्याख्यायमानेषु पदानां प्रकृतित्वं भवति, न सर्वत्रैव। तस्मात् संहितैव प्रकृतिरित्येतदसाधीय इति।

"अथापि याज्ञे दैवते न बहवः प्रदेशा भवन्ति"। अथेदमपरमारभ्यप्रयोजनमस्य शास्त्रस्येत्येव विशेषाधिकारार्थोऽयमथशब्दः। अपीदं वक्ष्यमाणमपि यान्युक्तानीत्येव अपिशब्दः सम्भावने। आह,—किम्पुनस्तत्? इति। उच्यते,—यज्ञे कर्मणि प्रवर्त्तमाने दैवतेन बहवः प्रदेशा भवन्ति दैवतेन लिङ्गेन बहवो विधिषु देशा भवन्ति। तद्यथा,—उपतिष्ठते व्युच्छन्त्यामैन्द्र्यासद, आग्नेय्याग्नीध्रवैष्णव्या हविर्धानमित्येवमादि। न्यायविदः खल्वपि याज्ञिकाः पठन्ति—लिङ्गतो मन्त्राणां शेषभावमधिकृत्य, लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानमित्यधिकारे,—एवञ्च मन्त्रविधेरतदाख्येयेषु शिष्टत्वादिति चैवमादि।

तत्रैवं सति "ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति"। ते यद्य

ष्यत ब्रूथ, किमिति ? लिङ्गज्ञाः, लिङ्गज्ञातारो वयमत्र एतस्मिन्नाम्नाये लिङ्गतो वयमत्र यद्यस्मिन् देवतायां तत्र विजानीमः। विज्ञाय च तद्दैवत एव कर्मणि विनियुञ्ज्महे त मन्त्रम्। एवञ्च सति न नो निरुक्तशास्त्रेण प्रयोजनमस्तीति लिङ्गमस्माकं ज्ञापकमिति केचिद्द वर्णयन्ति।

एवं ब्रुवतो वक्तव्याः,—यदि यूयं लिङ्गतो मन्त्रदेवता विजानीध्वे, "इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति (ऋ० सं० ४, ५, ६, २)"—इत्येतस्मिन् मन्त्रे का देवता ? इति।

आह,—केन पुनरभिप्रायेणास्मिन् मन्त्रे देवता पृच्छ्यते ? इति। उच्यते,—"वायुलिङ्गं चेन्द्रलिङ्ग चाग्नेये मन्त्रे"। अथ तावदयमाग्नेयो मन्त्र, अथ च तावदेतस्मिन् मन्त्रे इन्द्रवायू अपि ब्रूवेते, तदेतद् दुःपरिज्ञानं लिङ्गमात्रेण, कतमदत्र प्रधानं देवताभिधानम् ? कतमदत्र नैघण्टुकम् ? इति। ते चेद् याज्ञिका लिङ्गमात्रान्निरुक्तमुपेक्ष्य मन्त्रान् कर्मसु विनियुञ्जाना गुणप्रधानभावमजानन्तो देवताभिधानानामेकमन्त्रगतानामन्यदैवतमन्त्रमन्यदैवते कर्मणि विनियुञ्जीरन्, ततश्चायथाकरणात् कर्मासमृद्धिः स्यात्। न च केवलं कर्मासमृद्धिरेव। किन्तर्हि ? अपध्वंसोऽपि स्यादेव दुरिष्टहेतुकः। तस्मात् परिज्ञेयं निरुक्तम्। तेन हि गुणप्रधानभावः शक्यते विज्ञातुमेकमन्त्रगतानां देवताभिधानानामिति। तदेतदेवं देवतापरिज्ञानद्वारेण पुरुषस्य प्रति विशिष्टोपकारकारि। तस्माद् युज्यते प्रारब्धुमिति॥

"त्वा हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने। इन्द्रं न त्वा शवसा देवता वायुम्पृणन्ति राधसा नृतमाः॥" (ऋ० सं० ४, ५, ६, २)। भरद्वाजस्यार्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोर्विनियोगः। हे 'अग्ने !' 'त्वा हि' त्वामिव

'मन्द्रतमं' मृदुतमं सुखाराध्यतमम्, त्वं हि देवेषु सर्वेषु मृदुः हृदयतमो यतः, अतस्त्वामेव 'वद्महे' सम्भजामहे। केन? अर्कशोकैः। एकपदमेतत्। अर्चनैर्मन्त्रैः शोकैर्दीप्तैः यशोक-ब्रह्मचर्य्यजनितवीर्य्यैः। स 'नः' त्वं भज्यमानः तैः मन्त्रैः संसेव्यमानः 'महि' महत् स्तोत्रं तैरेव मन्त्रैर्युष्मद्गुणानुस्मृतिसन्तानगर्भैरुपग्रथितं 'श्रोषि' शृणु। किञ्च, एवं त्वं महती देवता, येन 'त्वा' त्वामेवैकं 'देवताः' अपि सर्वा 'इन्द्र न' इन्द्रमिव च 'वायुम्' इव च 'शवसा' बलेन बलाक्रान्तिभिः अभ्यर्चन्ति। किम्पुनः स्वैः कर्मभिः? येऽपि च केचिदन्ये त्रिलोके नृणां मध्ये बलधनयुतैः 'नृतमाः' तेऽपि च त्वामेव 'पृणन्ति' पालयन्ति पूरयन्ति वा। 'राधसा' हविर्लक्षणेन धनेन। एवं सदेवमनुष्यस्य जगतः पूज्यस्त्वं न केवलमस्माकमिति।

एवमयमाग्नेयो मन्त्रः, स एव लिङ्गमात्रदर्शनेनाविज्ञातप्रधानदेवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्मणि कर्त्तुरभिप्रेतफलसिद्धे नालं स्यात्, कर्मवैगुण्याच्च कर्त्तुरपध्वंसाय स्यात्। तस्माद् विज्ञेय मन्त्रदेवतानिश्चयज्ञानाय निरुक्तमिति।

"अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नदस्वेति" (ऋ० सं० ८, ३, १८, २)। यथा पूर्वस्मिन्नाग्नेये वायुलिङ्गमिन्द्रलिङ्गं च, "तथा" एतस्मिन्नपि "मान्यवे मन्त्रे"। "अग्निः" अग्निलिङ्गं नैघण्टुकम्। एवमनेकदेवतालिङ्गसङ्कटेषु दुरवधारं देवतातत्त्वमनैरुक्तेनाप्रसिद्धमन्त्रव्याख्यानसमयेन।

यदुक्तं लिङ्गज्ञातारो वयमत्र लिङ्गत एव मन्त्रान् कर्मसु

विनियोक्ष्यामहे, न नो निरुक्तेन प्रयोजनमस्तीत्येतदयुक्तमिति। "त्विषिरित्यप्यस्य दीप्तिर्नाम भवति" अपठितमपि दीप्तिनामसु न केवलं यान्येव पठितानि, अन्यान्यपीति॥

"अथापि" इदमपरमारम्भप्रयोजनमस्याः। आह,—किम्? इति। उच्यते,—"ज्ञानप्रशंसामवत्यज्ञाननिन्दा च" ज्ञानञ्च प्रशस्यते, अज्ञानञ्च निन्द्यते। तत्रैवं सति वयमनिन्द्याः स्याम: प्रशस्याश्चेति ज्ञेय निरुक्तम्। अतो हि आध्यात्माधिदैवताधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते, ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति। तदेवमखिलपुरुषार्थोपकारसमर्थशास्त्रमिति न्याय्यमारब्धुम्॥१॥

स्थाणुरयं भारहार: किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा। यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्। स्थाणुस्तिष्ठतेरर्थोऽर्त्तेररणस्थो वा॥२॥

क्व पुनर्ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यते? इति। उच्यते,—लोके, शास्त्रे च। लोके तावद् यः कश्चिद् विद्वान् भवति, स पूज्यते पुण्यफलैश्चाभिर्जनैः, तदेतत् प्रत्यक्षत एव दृष्टम्। शास्त्रेऽपि "स्थाणुरयं भारहार."—इत्यादि। स्थाणुर्वृक्षः, स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव युज्यते,—न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः। एवञ्च "किला-

सायधीत्यवेदं न विजानाति योऽर्थम्" तस्य वेदस्याध्ययनभारमात्रमेव ह्यसौ बिभर्त्ति। "योऽर्थज्ञ इत् सकलं भद्रमश्नुते" य एवार्थज्ञो भवति, न ग्रन्थमात्राध्येता, स एव सकलमनवखण्डितं भद्रम् अश्नुते, अर्थपरिज्ञानफलमश्नुते प्राप्नोति। किम्पुनस्तत्? इह लोके पूज्यतामुपेत्य शिष्टानाम्, इतो लोकादन्तकाले "नाकमेति" यत्रासुखं किञ्चिदपि नास्ति, आध्यात्मिकमाधिदैविकमाधिभौतिकं वा, "कमिति सुखनाम, तत् प्रतिषिद्धम्। प्रतिषिध्येत 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्। न वा अमुं लोकं गतवते किञ्च नासुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति"—इति नैग० का० २, ४, २। तत् स्थानमेति निरतिशयम्। कस्मात् पुनरसावीदृशं स्थानमेति? इति। उच्यते,—इतः। यस्मादसौ "ज्ञानविधूतपाप्मा"। ये हि नाकगमनप्रतिबन्धिनः पाप्मानः, ते तस्य ज्ञानेन विधूताः, अतोऽसावेति नाकम्। युक्तञ्चान्यत्रापि,—न हि ज्ञानेन सदृशं पवित्रमिह विद्यते इति।

अथवा स्थाणुर्दम्भः। स यथा चन्दनभारं वहत्येव, तदुपभोगेनाभिसम्बध्यते, एव मिलासौ यो ग्रन्थमात्राध्येता, नार्थज्ञः। एवं तावदस्मिन् ज्ञानं प्रशस्तम्।

अथैतस्मिन् पक्षानं निन्द्यते,—"यद् गृहीतमविज्ञातम्"—इति। यद् गृहीतं गुरुमुखात्, अविज्ञातं चार्थतः। किञ्च "निगदेनैव शब्द्यते" निगदमात्रेणैव नित्यकालं शब्द्यते उच्चार्यते, न पुनरर्थतो विचार्यते। आह,—किं तस्य? उच्यते,—"अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्"। शुष्क काष्ठमनग्नौ प्रदेशे नालं ज्वलनाय प्रकाशाय। एवं यो वेदार्थज्ञानभिज्ञोऽध्येता स वेदाध्ययनभारमात्रेणैव सम्बध्यते, न तु तदीयेन फलेन, परिज्ञानस्य श्रेयसा चाभ्युदयेन

च युनक्तीति। तस्मादेतत्परिज्ञानाय अवश्यं निरुक्तशास्त्रमारब्धव्यमिति ।

स्थाणुशब्दमर्थशब्दञ्च उदाहरणप्रसक्तौ निर्वक्ति,—"स्थाणुस्तिष्ठते." । स्थितो ह्यसौ नित्यकालमेव भवति, न कदाचिदप्यासीदिति । "अर्थोऽर्त्ते" गतिकर्मण, अर्य्यते ह्यसावर्थिभि । "अरणस्थो वा" यदास्य स्वामी अरति गच्छति इतो लोकादमुं लोकं तदायमिहैव तिष्ठति, नानेनैव सहामुं लोकं गच्छति दीनारादिरर्थः, तत्सामान्यादितरोऽपि शब्दार्थोऽर्थ उच्यते ।

एवं तावत् शिष्टानुगमस्मृतौ ज्ञानं प्रशस्यते, अज्ञानञ्च निन्द्यते ॥ २ ॥

उ॒त त्वः॒ पश्य॒न्न द॑दर्श॒ वाच॑मु॒त त्वः॑ शृ॒ण्वन्न शृ॑णोत्येनाम् । उ॒तो त्व॑स्मै त॒न्वं॑१॒॑ वि स॑स्रे जा॒येव॒ पत्य॑ उश॒ती सु॒वासाः॑ । अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धमप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु । यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा । तस्योत्तरा भूयसे निर्वचनाय ॥ ३ ॥

गाता । एव "स." एवैतां वाचं यथावत् "शृणोतीति" । यः पदशोऽवच्छिद्यैतां विगृह्य वाचं अस्या. पश्यति समस्तसेव-मस्याम्नायम् "अर्थं प्रशस्ता" ॥

अपीयमपरा ऋक् "तस्या." एव "उत्तरा" अस्यैवार्थस्य प्रकृतस्य ज्ञानप्रशसाख्यस्य फलाभिधानद्वारेण "भूयसे" बहुतराय अमुना फलेनाभिसम्बन्धात् प्रतिविशिष्टज्ञानमित्येव "निर्वचनाय"। निर्विविच्य निर्धार्य वचनं कथनं निर्वचनम्, तस्मै निर्वचनाय ॥ ३ ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् । अप्येकं वाक्सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वप्यधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान् दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान् भवत्यफलामपुष्पामित्यफलास्मा अपुष्पा वाग् भवतीति वा किञ्चित्पुष्पफलेति वार्थं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा ॥ ४ ॥

तद्यथा,—"उत त्वं सख्ये स्थिरपीतमाहु" (ऋ० म० ८, २, २४, ४)"—इति । "अप्येकम्" अपि बहून् विदुष

"सख्ये" सखिभावे, कतरस्मिन् "देवसख्ये" समानस्थानतायां देवसायुज्ये इत्यर्थः। वक्ष्यति हि,—"यां यां देवतां निराह, तस्यास्तस्यास्ताद्भाव्यमनुभवति (प० का० १३, १३)" —इति। अथवा, "देवसख्ये" रमणीये स्थाने। यस्मिन् देवानां सखिभावः, तद्देवसख्यं स्थानम्, तस्मिन् देवसख्ये 'रमणीये स्थाने, देवलोके' इत्यर्थः। किम्? इति 'स्थिरम्' अविचालितम् अप्रच्यवनधर्माणम्। कमेवमाहुः? "विपीतार्थम्", आपीतार्थं गृहीतार्थमित्यर्थः। क एवमाह? इयमेव "वाक्" ऋक्संहिता। किञ्च, "नैनं हिन्वन्त्यपि वाजिनेषु"। 'एनं' वागर्थज्ञं 'न हिन्वन्ति' नानुगन्तुं शक्नुवन्ति। केषु? 'वाजिनेषु' "वाग्ज्ञेयेषु" अर्थेषु "बलवत्सु "अपि" दुर्ज्ञेयेषु दुरवघटनीयेषु, समुद्रपिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्तव्येषु। स हि तान् व्याकर्तुं शक्नोति, नेतरे मन्दबुद्धयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान् व्याकर्तुम्, यानसौ व्याकरोति। अत एतदुक्तम्,—"नैनं हिन्वन्त्यपि वाजिनेषु"। अपि एवं तावदर्थज्ञः प्रशस्तः॥

अथेदानीमविद्वानुत्तरेणार्धर्चेन निन्द्यते,—"अधेन्वा चरति" "अधेन्वा हि एष चरति" न हि सा वाक् हिनोतीह न परत्र च, यस्या अर्थो न परिज्ञायते। तया गृहीतयैव तामधीयान इतश्चेतश्चरति, तत् प्रधान एव सर्वतः पर्यटतीत्यभिप्रायः। किञ्च, मायया चरति गृहीतया। यथा हि कश्चिन्मायया सुवर्णं बिभृयात्, एवमयं "वाचम्" एव एतां बिभर्त्ति। सा तादृशी भ्रियमाणा "वाक्"। किं करोति? "नास्मै कामान् दुग्धे"। कतमान्? ये तस्या वाचो दोग्धव्याः। क्व? "देवतास्थानेषु मनुष्यस्थानेषु" च। "य"। किं करोति? य एवं 'अश्रुवान्' "शुतवान् भवति"। कथम्?

"अफलामपुष्पामिति" एवं यः श्रुतवान् भवति, एभ्यः सकाशात् श्रुत्वा च दृढग्राहेण गृहीत्वावस्थितो भवति, अध्ययनादृते नान्यदस्ति वाचि किञ्चित् श्रव्यमिति। तस्मै किम्? इति "अफलेवास्मा अपुष्पा" च "वाग् भवतीति"। यथैव ह्यसौ पश्यति अफलेयमपुष्पा चेति तथैव भवतीत्यभिप्रायः। अथ "वा" "किञ्चित् पुष्पफलेति वा"। एतदुक्तं भवति,—अल्पफलामल्पपुष्पामिति। किङ्कारणम्? अस्ति ह्यध्ययनमात्रे किञ्चिदल्पं फलम्, नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः। आह,—किम्पुनर्वाचः पुष्पफलम्? इति। उच्यते,—"अर्थं वाचः पुष्पफलमाह" एतस्मिन् मन्त्रे मन्त्रदृगाह। कः पुनरसावर्थः? इति। याज्ञदैवतमध्यात्ममित्येव वाचः समासतोऽर्थः। स पुनरेव रूपकल्पनया पुष्पफलविभागेन द्विधा प्रविभज्यते,—"याज्ञदैवते" पुष्पफले "देवताध्यात्मे वा" इति। यज्ञपरिज्ञानं याज्ञम्, देवतापरिज्ञानं दैवतम्, आत्मन्यधि यद् वर्त्तते तदध्यात्मम्। स एष सर्वोऽपि मन्त्रब्राह्मणराशिरेवं त्रिधा विभक्तः। तत्रैवं सति,—यदा अभ्युदयलक्षणो धर्मोऽभिप्रेयते, तदा याज्ञपुष्पं दैवतफलम्। किं कारणम्? पूर्वं हि पुष्पं भवति फलार्थम्, याज्ञमपि पूर्वं तन्दते देवतार्थम्, इत्येतस्मात् सामान्याद् याज्ञं पुष्पम्, दैवतं फलम्। यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदोभे एव याज्ञदैवते पुष्पत्वमेव बिभृतः। दैवते हि याज्ञमन्तर्भूतमेव तदर्थत्वात्, अतो न पृथगुच्यते। यत् पुनरधिदैवतं सर्वमपि प्रतिविशिष्टध्यानेनोपासकेन मुमुक्षुणा निरूप्य चेतसा आत्मानमेव प्रतिसम्पाद्यते कार्य्यकारणाधिदैवताद्वारेण, सोऽयमेवमधिदैवतमधियज्ञं चोच्छिद्याध्यात्ममेवाभिसम्पादयति, तथा पुष्पभावमुच्छिद्य पुष्पं फलभावायेति। एवं सोऽय-

मात्मयाज्येवाभिमन्यते। तत्रैव सति,—अध्यात्मार्थत्वादधिदैवतस्य, अध्यात्मस्य च पुरुषार्थस्य निष्पन्नत्वात्, दैवतं मुख्यम्, अध्यात्म फलमित्युक्तम् ॥ ४ ॥

साक्षात्कृतधर्माण ऋषयो वभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च बिल्मं भिल्मं भासनमिति वैतावन्तः समानकर्माणो धातवो धातुर्दधातेरेतावन्त्यस्य सत्त्वस्य नामधेयान्येतावतामर्थानामिदमभिधानं नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् ॥ ५ ॥

आह,—कुत पुनरिदमायात निरुक्तशास्त्र प्रधानमितराणि चाङ्गानि ? इति। उच्यते,—"साक्षात्कृतधर्माण ऋषयो वभूवु"। साक्षात्कृतो यैर्धर्मः साक्षाद् दृष्टः प्रतिविशिष्टेन तपसा, त इमे साक्षात्कृतधर्माणः। के पुनस्ते ? इति। उच्यते,—ऋषयः। ऋषन्ति अमुष्मात् कर्मण एवमर्थवता मन्त्रेण प्रयुक्तादमुना प्रकारेणैवलक्षणः फलविपरिणामो भवतीत्यृषयः। "ऋषिर्दर्शनात् (नै० २, ११, २)"—इति वक्ष्यति। तदेतत् कर्मणः फलविपरिणामदर्शनमौपचारिकमित्युक्तम्—साक्षात्कृतधर्माण इति। न हि धर्मस्य दर्शनमस्ति, अत्यन्तापूर्वो हि धर्मः।

आह,—किन्तेषाम् ? इति। उच्यते,—"तेऽवरेभ्योऽसा-

च्चात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः”। ते ये साक्षात्कृतधर्माणस्तेऽवरेभ्यः अवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः। तेषां हि श्रुत्वा ततः पश्चादृषित्वमुपजायते, न यथा पूर्वेषां साक्षात्कृतधर्मणां श्रवणमन्तरेणैव। आह,— किं तेभ्य"? इति। उच्यते,—ते अवरेभ्य उपदेशेन शिष्योपाधिकया वृत्त्या मन्त्रान् ग्रन्थतोऽर्थतश्च सम्प्रादुः सम्प्रदत्तवन्तः, तेऽपि चोपदेशेनैव जगृहुः।

अथ तेऽपि “उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च”—इति। उपदेशाय उपदेशार्थम्। कथं नामोपदिश्यमानमर्थमेते गृह्णीयुरिति मत्वैतमधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वनुग्रहन्ति, तदनुकम्पया तेषामायुषः सङ्कोचमवेक्ष्य कालानुरूपाञ्च ग्रहणशक्तिम्। बिल्मग्रहणायेमं ग्रन्थं गवादि देवपत्न्यन्तं समाम्नातवन्तः। किमेतमेव? नेत्युच्यते,—वेदं वेदाङ्गानि च इतराणीति।

कथम्पुनः समाम्नासिषुः? इति, आह,—शृणु। वेदं तावदेकं सन्तमतिमहत्त्वाद् दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः, सुखग्रहणाय व्यासेन समाम्नातवन्तः। तद्यथा,— एकविंशतिधा बाह्वृच्यम्, एकशतधा आध्वर्य्यवम्, सहस्रधा सामवेदम्, नवधा आथर्वणम्। वेदाङ्गान्यपि। तद्यथा,— व्याकरणमष्टधा, निरुक्तं चतुर्दशधा इत्येवमादि। एवं समाम्नासिषुर्भेदेन ग्रहणार्थम्। कथं नाम? भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरिति शक्तिहीना अल्पायुषो मनुष्याः,—इत्येवमर्थं समाम्नासिषुरिति।

बिल्मग्रहणं भाष्यवाक्प्रसक्तं निर्ब्रवीति,—यदेतत् “बिल्मम्” इत्युक्तम्, एतद् “भिल्मम्” वेदानां भेदनम्। भेदो

व्याप्त इत्यर्थः। "भापणमिति वा"। अथ वा भासनमिव विल्म-शब्देनोच्यते। वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इति। अत इदमुक्तं बिल्ममिति। एवं भिदेर्भासतेर्वा बिल्म-शब्दः। एवमिदमृषिभ्यो निरुक्तशास्त्रमागतमितराणि चाङ्गानीति परिशोधित आगमः॥

अथेदानीं निघण्टुसमाम्नायविरचना वक्तव्या प्रकरणत्रय-विभागेन सुखव्याख्यानार्थमस्य शास्त्रस्य। सेयमुच्यते,— "एतावन्तः समानकर्माणो धातव"—"एतावन्त्यस्य सत्त्वस्य नामधेयानि" इति। स एष पदराशिर्नैघण्टुकं नाम प्रकरणम्। एतावन्त इति या चेषु धातुषु व्याख्यातपदेषु प्रतिनियता सङ्ख्या, साभिप्रेयते। तद्यथा,—"गतिकर्माण उत्तरे धातवो द्वाविंशशतम् (नै॰ का॰ १, २, १)" "कान्तिकर्माण उत्तरे धातवोऽष्टादश (नै॰ का॰ १, २, २)"—इत्येवमादि। एतावन्त्यस्य सत्त्वस्येति या नामसु प्रतिनियता सङ्ख्या, साभिप्रेयते। तद्यथा,—"पृथिवीनामधेयान्येकविंशतिः "हिरण्य-नामान्युत्तराणि पञ्चदश (नै॰ का॰ २, १, १)"—इत्येव-मादि। यत्रैतावदर्थो प्रायेण चिन्त्यते, प्रसङ्गतोऽन्यद् यत् किञ्चित्। एवलक्षणं, नैघण्टुक नाम प्रकरणम्। गवादि, प्राक् "जहा (नैग॰ का॰ ४, १, १)"—शब्दात्।

अथ पुनर्यत्र "एतावतामर्थानामिदमभिधानम्"—इत्यर्थः प्रायेण चिन्त्यते। तद्यथा,—"आदित्योऽप्यकूपार. समुद्रोऽप्य-कूपार. (नैग॰ का॰ ४, ३, २)"—इत्येवमादि। अनवगतसंस्काराश्च निगमाः जहादय प्रायेण चिन्त्यन्ते, प्रसङ्गतोऽन्यद् यत् किञ्चित्। अथ पुनर्यत्र "नैघण्टुक" "देवतानाम् अप्राधान्येन" अस्मिन् मन्त्रे "इदम्" अन्यदत्र प्राधान्येन वर्त्तत इत्ययं विभागः प्रायेण चिन्त्यते। तदेवलक्षणम् ऐकपदिक

नाम प्रकरणम्, जहादि, प्राक् अग्निशब्दात् (दै० का० १, ३, ६)।

दैवतं नाम प्रकरणम्, अग्निशब्दादि देवपत्न्यन्तम् (दै० का० १२, ४, १०)। तान्येतानि त्रीणि प्रकरणानि,—नैघण्टुकम्, ऐकपदिकम्, दैवतम् इति। अनेन प्रकरणत्रयविभागप्रपञ्चेनेदमवस्थितं निरुक्तशास्त्रमिति।

"तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्"। इदमुक्तं नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति, तत्र न ज्ञायते किमिदमुक्तं भवति, तदेतल्लक्षणत उपदिश्यत इति पर्य्युपयुक्तस्तच्छब्दः। यत् अभिधानम् अन्यदैवते, अन्या यस्मिन् प्रधानदेवता: सोऽयमन्यदैवतः, तस्मिन् अन्यदैवते मन्त्रे। यमर्थमन्यस्यां प्रधानायां मन्त्रदेवतायां निपतति निगमयति अभिप्रयुज्यमानमङ्गभावं गच्छति मन्त्रवाक्ये नैघण्टुकं तदित्युच्यते गुणभूतमित्यर्थः। संज्ञा हि तस्येयमस्मिञ्छास्त्रे॥ ५।

अश्वन्न त्वा वारवन्तम्। अश्वमिव त्वा वालवन्तं वाला दंशवारणार्था भवन्ति दंशो दशतेः। मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठा। मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व

पुनः ष्टणातेः प्रीणातेर्वाईसामपर्वं देवानश्विन् प्रीणन्तीति तत् प्रकृतोतरत्वन्विसामान्याभ्मेव- स्थायी मेधोऽपि गिरिरेतस्मादेव तद्यानि ना- मानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्या- चक्षते तदुपरिष्टाद् व्याख्यास्यामो नैघण्टुकानि नैगमानीह ह ॥ ६ ॥

तद्यथा,—"अश्वन्न त्वा वारवन्तं वन्दध्या अग्निन्नमोभिः। सम्राजन्तमध्वराणाम्॥" (ऋ० म० १, २, २२, १)। अस्या ऋचि अश्वो नैघण्टुक, अग्नि प्रधानम्। शुनःशेपस्यार्षम्। गायत्री। वारवन्तीयानुशंसने विनियुक्ता। माध्य वार वन्तीयस्य एषा योनि। 'अश्वं न त्वा' अश्वमिव त्वा हे अग्ने। 'अग्निम्' अग्रे नेतारं देवानां, 'वारवन्तं' वालवन्तं, उपायवम्। स हि अतितरा वालवान भवति। वन्द्यते परिचर्य्यते च। न तथान्ये। तमिव त्वा 'वन्दध्यै' वन्दामहे स्तुमः। 'नमोभिः' नमस्कारैः, अन्नैर्वा हविर्भिः स्यते। क पुनरवस्थितम? यत्र वा वन्दामहे? इति 'सम्राजन्तं' दीप्यमानम 'अध्वराणां' यज्ञानां मध्येऽवस्थितं सुत्तरवेद्यादिषु धिष्ण्येषु अभिप्रेतार्थसिद्धये वन्दामहे॥

वालशब्दस्य निगमप्रसक्तस्य निर्वचनम्,—"वाला दंशवारणार्था भवन्ति"। तैर्हि दंशादयो निवार्य्यन्ते। दंश शब्दस्य प्रसक्तस्य निर्वचनम्,—"दंशो दशतेः" इति। दशति ह्यसौ॥

द्वितीयमुदाहरणम,—"प्रतद्विष्णु स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु

त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।" (ऋ० स० २, २, २४, २)। किञ्च, "मृगो न भीमः कुचरो गिरिष्ठाः परावत, आजगन्थापरस्याः। सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि विमृधो नुदस्व ॥" (ऋ० स० ८, ८, ३८, २)। इति। गया नामैन्द्रपुत्रः, तस्येयमार्षम्। त्रिष्टुप्। वैमृधस्य हविषो याज्या (आ० सू० २, १०)। इन्द्रो ऽस्य प्रधानम्, मृगो नैघण्टुकः। 'मृगो न' मृग इव, व्याघ्रो वा सिंहो वा। 'भीमः' भीषणः। 'कुचरः' कुत्सितचरणः हिंस्र, प्राणिवधजीवनः। 'गिरिष्ठाः' पर्वताश्रयः। स यथा कश्चिदन्यं प्राणिविशेषं हन्ति। तैरनभिभूयमान इह कर्मणि हे 'इन्द्र!' एतदस्मदचः कुरु। 'सृकम्' यः शत्रुकार्येषु सर्तुं शक्नोति। 'परावत' परस्मात् अतिदूरस्थानात्, 'परस्याः' दिवः सकाशात्। 'आजगन्थ' आगच्छ। एतदयमागत्य च ते 'पविं' वज्रं 'संशाय' तीक्ष्णीकृत्य 'तिग्मं' छेदनार्थोत्साहवन्तं सुनिशितं कृत्वा ततो 'वि ताळ्हि' विताडय, एतानस्मच्छत्रून् ('शत्रून्') एकप्रहारवर्जितदेहान् कुरुष्व। यानपि च न हि छिनत्सि कथंचित् तानपि 'मृधः' हिंसकान् 'विनुदस्व' नानाप्रकारं प्रेरयस्व दूरमपुनरागमनाय ॥

"अथ चेद् देवताभिधानम्" एतत् कुचर इति, ततः "क्वाय न चरतीति" सर्वत्र चरतीति। "गिरिष्ठा मेघस्थायी" इति च। अनुपचीयमानत्वो हि विभक्तो वेदशब्दः सर्वान् पुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थाः न ब्रुवन्तो द्योतयन्तीन प्रदर्शितं भवतीत्यय चेद् देवताभिधानमिति ॥

मृगादिशब्दान् निगमप्रसक्तान् निर्ब्रवीतीति,—"मृगो मार्ष्टेर्गतिकर्मणः" नित्यं क्षामो गच्छति। "भीमो बिभ्यत-

स्मात्” सर्व एव ह्यस्माद् बिभेति। भीमशब्दं साहचर्यप्रसक्तं निराह,—“भीमोऽप्येतस्मादेव”. इति। “कुचर इति, चरति कर्म कुत्सितम्” चरति ह्यसौ कर्म कुत्सितम्, व्याघ्रो वा सिंहो वा। “क्वायं न चरतीति” देवताभिधानत्वे। “गिरिः पर्वतः”। “समुद्गीर्णो भवति” समस्तो ह्यनावृतोर्ण इव भूमौ भवति॥

पर्वतशब्दं पर्यायाख्यानप्रसक्तं निराह,—“पर्ववान् पर्वतः” इति। शिलाशिखरसन्धिभिरसौ तद्वान् भवति। पर्वशब्दं विग्रहप्रसक्तं निराह,—“पर्व पुनः पृणाते.” पूरणार्थस्य। पूरयन्ति हि ते शिलाशिखरसन्धयोऽखिलं पर्वतम्। “प्रीणातेर्वा” तर्पणार्थस्य। तत् पुनरेतत् “अर्द्धमासपर्व”। किं कारणम्? “देवान् अस्मिन्” हविर्भिः “प्रीणन्तीति”। “तत्प्रकृतीतरत्सन्धिसामान्यात्” कालसन्धिश्च शिलासन्धिश्च समानं सन्धित्वमिति देवताभिधानपक्षे “मेघस्थायी” गिरिस्थाः। “मेघोऽपि गिरिरेतस्मादेव” असावपि समुद्गीर्णो भवति अन्तरिक्षलोके॥

“तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां, तद्दैवतमित्याचक्षते। तत् उपरिष्टाद् व्याख्यास्यामः। नैघण्टुकानि नैगमानि इह इह”। तदेतदुच्यते,—सामान्यलक्षणोपलक्षितप्रकरणत्रयविभागेनावस्थितो गवादिर्देवपत्न्यन्तः समाम्नायोऽयमानुपूर्व्या व्याख्यास्यत इति पर्य्युपयुक्तः तच्छब्दः। यानि नामानि प्राधान्यस्तुतीनामग्न्यादीनाम्, प्रधानभावेन या. स्तूयन्ते निपातभाक्त्वेन ता एता प्राधान्यस्तुतयो देवता. तासां यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि, तानि सर्वाण्यपि समुदितानि सन्ति। एतयैकया सामान्यया प्रकरणसञ्ज्ञया आचक्षते आचार्याः। कतमया? उच्यते,—दैवतमित्येतया। निरुक्ता ह्येयमेतस्मिन् नैघण्टुकशब्दसमुदाये

मन्त्रेत्यभिप्रायः। तत् पुनरेतद् दैवत प्रकरणमुपरिष्टाद् व्याख्यास्यामोऽस्य शास्त्रस्य। आह,—किङ्कारणम् ? उच्यते,—गुणपदेषु व्याख्यातेषु प्रधानदेवतापदानि सुख व्याख्यास्यन्त इत्यनेनाभिप्रायेण। देवतापरिज्ञान तत्फलाभिधाननिष्ठ च कथ नामेद शास्त्र स्यात् ? इति,—यानि पुनर्नैघण्टुकानि गवादीनि, नैगमानि च जहादीनि, तानीह प्रकरणद्वये नैघण्टुके चैकपदिके च, व्याख्यास्याम इत्येतदेवानुवर्त्तते। त एते गवादयो देवपत्न्यन्ताः निघण्टवः, तदेकदेशो नैघण्टुक प्रकरणमिति निघण्टुसञ्ज्ञया व्यवहारो लोके,—'निघण्टुमधीमहे' 'निघण्टुमध्यामहे' इति। शास्त्रे खल्वपि नैघण्टुक प्रकरणमिति। नैगममित्यैकपदिकम्। नैघण्टुकानि नैगमानि पदानि चेह प्रकरणद्वये व्याख्यास्यामः॥

अध्यायपरिसमाप्तिलक्षणार्थं परितोषार्थो वा द्विरभ्याम इति ॥ ६ ॥

इति निरुक्तवृत्तौ षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥
इति निरुक्तटीकायां जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ षष्ठोऽध्यायः (प्रथमोऽध्यायः) समाप्तः ॥१॥

---

( [1]समाम्नायस्तत्र [2]चतुष्ट्वमतो[3]ऽन्येऽथ[4]निपाता-
[5]वायुर्वा[6]त्वा[7]नन्नूनंनूनं[8]सातश्च[9]चान्वोऽद्य[10]एवन्तोनिष्ट्व-
[11]क्रासो[12]हविर्भिरिति[13]मान्यश्चापि[14]योयया[15]योहिन्वयापी-

ते पुनरेते निर्वचनलक्षणमनुक्त्वा न शक्येते व्याख्यातुं यस्मात्, 'अथ' एतस्मात् कारणात् 'निर्वचनम्' लक्षणतो व्याख्यास्याम इति शेषः। अपि हि तस्यार्थस्य परोक्षवृत्तावतिपरोक्षवृत्तौ वा शब्दे निःकृष्य विगृह्य वचनं निर्वचनम्। स एष निर्वचनाभ्युपाय इत्युच्यते॥

इह द्विधा शब्दाः,—समर्थस्वरसंस्काराश्च असमर्थस्वरसंस्काराश्च। "तत्" तत्रैवं सति, "येषु" तावत् "पदेषु" "स्वरसंस्कारौ समर्थौ" अवैपरीत्येन "प्रादेशिकेन" च "गुणेनान्वितौ स्याताम्"। प्रदेशाभिधायिना धातुरूपेणान्वितौ सम्बन्धावनुगतावभिधेयस्य धातुरूपे स्याताम्॥

"तानि" तावत् "तथा" एव यथालक्षणमेवमेषु नैरुक्तो "निर्ब्रूयात्"। तन्मा भूदित्यत इदमुच्यते,—"येषु पदेषु स्वरसंस्कारौ समर्थौ स्यातां तथा तानि निर्ब्रूयात्" इति॥

"अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन"। अथ पुनरनन्वितेऽर्थे न्यायस्वरसंस्कारयुक्तेन शब्देन यत्र निपुणमप्यन्विष्यमाणः शब्दोऽर्थो कल्पयितुं न शक्यते, अन्यथैवार्थो व्यवतिष्ठते,—अन्यथैव शब्दः। प्रादेशिकेन विकारेण विक्रियमाणोऽपि यावौ शब्दो विपरिणम्यमानः अप्रादेशिक एव स्यादनन्वित एव। तां प्रदेशाख्यामभिधेयसत्त्वस्थां क्रियामनभिवदन्नाह। तत्र किं कर्त्तव्यम् ? इति। उच्यते,—तत्रैवं सति अर्थनित्यो भूत्वा, अर्थप्रधानः। तद्यथा,—मुद्गनित्यमेवास्य भोजनमित्युक्ते मुद्गप्रधानमिति गम्यते, एवमिहाप्यर्थनित्य इत्युक्ते अर्थप्रधान इति गम्यते, अर्थं प्राधान्येनावेक्ष्य स्वरसंस्कारौ परीक्षेत। ततस्तदभिधानं बुद्ध्वा केनचिदर्थवृत्तिसामान्येन क्रियागुणसामान्येनेत्यर्थः। कतमच्च तदित्यर्थसामान्यमवाप्नोति ?

तनमूर्कयित्वा सामान्य तेन निर्ब्रूयात् । अर्थो हि प्रधानम्, तद्गुणभूतं शब्द । तस्मात् अर्थसामान्यं बलीयः शब्दसामान्यात् ॥

अथ पुनरर्थवार्थसामान्यमपि नास्ति, तत्र? "अविद्यमाने-(ऽर्थ)सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्, न त्वेव न निर्ब्रूयात्, न संस्कारमाद्रियेत, विशयवत्यो हि वृत्तयो भवन्ति, यथार्थं विभक्तीः सन्नमयेत्"। अक्षरवर्णसामान्येनापि निर्ब्रूयादेव,—अमुष्मिन् धातावयं स्वरो वर्णो वा मया दृष्ट, स एव यस्मिन्नभिधाने लक्ष्यते इत्येवमुत्प्रेक्ष्य स धात्वर्थः सूत्रवद इव तस्मिन्नभिधाने आहृत्य स्फारीकृत्य तत्प्रकाशनपरतया। एवमविद्यमाने अर्थसामान्ये अक्षरवर्णसामान्यमात्रेणापि निर्ब्रूयादेव । न त्वेव निर्ब्रूयात्, इतरथा ह्यनर्थकमिव निरुक्तशास्त्रं स्यात् । तस्मा भूदित्यत इदमुच्यते लक्षणपराङ्मुखेषु शब्देषु न संस्कारमाद्रियेत ।

कस्तर्हि अर्थसामान्यमाद्रियेत, शब्दसामान्य वा? तद्यथा,—प्रवीणोदारनिम्नि प्रशब्दा उत्कृष्टस्वार्थाभिधेयसम्बन्धा सन्त क्रियागुण सामान्य हेतुमात्रमाश्रित्यान्येष्वेवार्थान्तरेषु वर्तन्ते ।

तद्यथा,—प्रकृष्टो वीणायां प्रवीणो गान्धर्वे, अत्र ह्यस्य मुख्या वृत्ति । स एव स्वमर्थमभिधेयमुत्सृज्यैव गान्धर्वमभ्यासपाटवमात्रसामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्त, यो हि यस्मिन् कृतयत्न उतपक्वकौशलो भवति, स तत्रोच्यते प्रवीण इति। तद्यथा,—'प्रवीणो व्याकरणे', 'प्रवीणो निरुक्ते' इति।

एवमेवोदार इति। प्राकारसन्निपातात् आकृतेनैव कारयिष्यो वक्ष्यमाणोऽनड्वान् वा स उद्भारत्वादुदार । तत्र हि

समञ्जसा वृत्तिरस्य शब्दस्य। स एव वस्तृत्वेव समर्थमाकूतानुविधायित्वमात्रमेव -सामान्यमाश्रित्य प्रवृत्तो यो हि कश्चित् कस्मैचिदाकूतं वर्त्तयित्वा प्रागेव प्रार्थनात् ददाति, स उदार इत्युच्यते।

एवमेव निस्त्रिंशः। त्रिभिः प्रदेशैर्द्वाभ्यां धाराभ्यामग्रेण च निशितः श्यतीति निस्त्रिंशः खड्गः, मुख्यग्रहणात्, तत्र ह्यस्य शब्दस्य समञ्जसा वृत्तिः। स एव छेदनसमानरूपं क्रौर्य्यसामान्यमाश्रित्य सर्वत्रैव प्रवृत्तः। यो हि लोके क्रूरो भवति, स निस्त्रिंश इत्युच्यते। एवमेते क्रियागुणसामान्यमात्रेण वर्त्तन्ते।

यथैते, एवमन्येऽप्यभ्यूहितव्याः। अभ्यूह्य च एवमर्थसामान्येन निर्वक्तव्याः। स्वरवर्णसामान्ये तु प्रचुराण्येवोदाहरणानि। सर्व एव हि नैगमाः शब्दा जहादयः स्वरवर्णसामान्यमात्रेणैव निरुच्यन्ते॥

न च निरुक्ते कारकहारकलावकादिशब्दा व्युत्पाद्यन्ते, सुबोधैव हि तेषां व्युत्पत्तिः प्रसिद्धैव च व्याकरणे इति। य एव दुर्बोधाः परोक्षातिपरोक्षवृत्तयः बिल्मकदरोदारवेतसपर्वशब्दादयः, त एव हि व्युत्पाद्य निरुच्यन्ते। तेषु हि विशेषेणादर्त्तव्ता निरुक्तस्य। तान्येव अर्थसामान्येन वा शब्दसामान्येन वा निर्ब्रूयात्, न तेषु संस्कारमाद्रियेतेति।

आह,—किं कारणम्? इति। उच्यते,—"विषयवत्यो हि वृत्तयो भवन्ति"। हिरयं हेत्वर्थे। तस्माद्विषयवत्यो बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवन्ति, नानाभावेनार्थेषु व्यवस्थिता प्रवृत्तिरिति एवं स्यादेवं स्यादिति विचारयन्तः सन्तः प्रतिपक्षसम्मोहाच्छेरत इवाक्षिन्निति विषयः संशय इति।

अत्र,—केचिदर्थसामान्येन क्वचिद्वर्त्तन्ते शब्दाः, केचित्

स्वरसामान्येन, केचिद्वर्णसामान्येन, यत एवम्, अतो विभक्तीरपि यथार्थमेव सन्नमयेत् विपरिणमयेत्, पूर्वोत्तरपदप्रकरणाविरोधेन। किं कारणम्? तासामपि हि व्यत्ययो भवत्येव, —सुपां स्थाने सुपो भवन्ति इति हि वैयाकरणा पठन्ति। दर्शयिष्यति चायमपि विभक्तिविपरिणामम्। तद्यथा,— "हृत्सु पीतो।—०हृदयानि पीतो: (दे० का० ८, ३, १२)"— इत्येवमादि।

अधुनैवमुक्ता विषयवत्यो भवन्तीति, अर्थवशेन व्याकरणेऽपि शब्दविपरिणामो भवतीत्येव दर्शयति,—"प्रत्तमवत्तमिति धात्वादी एव शिष्येते" इत्येवमादि। 'डु दाञ् दाने (जु० उ०)' तस्य प्रपूर्वस्य प्रत्तमिति। अत्र दकार आकारश्च धातु, परो निष्ठाप्रत्ययस्तकारः, तत्रैव सति 'दो दद् घो (पा० ७, ४, ४६)'—इति वर्त्तमाने 'अच उपसर्गात् तः (पा० ७, ४, ४७)'—इति आकारस्य तकारो भवति, 'झरो झरि सवर्णे (पा० ८, ४, ६५)'—इति धात्वन्तस्य तकारस्य लोपे कृते, 'खरि च (पा० ८, ४, ५५)'—इति तकारस्य चर्त्वे कृते 'परः सन्निकर्षः संहिता (पा० १, ४, १०९)'— इति धातुतकार प्रत्ययतकारेण संयोगतामुपैति 'हलोऽनन्तरा संयोग (पा० १, १, ७)'—इति, ततः प्रादिसमासे कृते 'प्रत्तम्'—इति भवति। एवमेव 'दो अवखण्डने (दि० प०)'— इत्यस्यावपूर्वस्य 'अवत्तम्'—इति। अत्रापि दकार ओकारश्च धातु, परो निष्ठातकारः। अत्र 'आदेच उपदेशेऽशिति (पा० ६, १, ४५)'—इत्योकारस्याकारे कृते तथावलोपचर्त्वपरगमनप्रादिसमासा पूर्ववदेव। एवमनयोर्धात्वोरादी एव शिष्येते। यथानयोरेवमन्येषामपि दृष्ट्वा यथासम्भवमनुविधेयम्॥ १॥

अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीत्यथाप्यन्तलोपो भवति गत्वा गतमित्यथाप्युपधालोपो भवति जग्मतुर्जग्मुरित्यथाप्युपधाविकारो भवति राजा दण्डीत्यथापि वर्णलोपो भवति तत्त्वा यामीत्यथापि द्विवर्णलोपस्तृच इत्यथाप्यादिविपर्य्ययो भवति ज्योतिर्घनो विन्दुर्वाट्य इत्यथाप्याद्यन्तविपर्य्ययो भवति स्तोका रज्जुः सिकतास्तर्कित्यथाप्यन्तव्यापत्तिर्भवति ॥ २ ॥

"अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति, स्त सन्तीति"। 'अस् भुवि (अदा० प०)'—इत्यस्य निवृत्तिस्थानेषु गुणवृद्धिनिवृत्तिस्थानेषु क्ङिति वर्त्तमाने 'श्नसोरल्लोप (पा० ६, ४, १११)'—इत्यादिलोपो भवति। योऽय धात्वादावकार एव लुप्यते, तस्मिन् लुप्ते प्रयोग स्त सन्तीति। एवमन्येष्वपि दृष्टानुविधेय यथासम्भवम् ॥

"अथाप्यन्तलोपो भवति, गत्वा गतमिति"। अत्र, गमे (भ्वा० प०) क्त्वाप्रत्यये, निष्ठाप्रत्यये च परतोऽनुनासिकलोपो भवति, अनुदात्तोपदेशेत्यधिकृत्य क्ङितीति। एवमन्येष्वपि द्रष्टव्यमनुविधेय च यथासम्भवम् ।

"अथाप्युपधालोपो भवति, जग्मतुर्जग्मुरिति"। अत्र, गमेः (भ्वा० प०) अलोप । 'अलोऽन्त्यात् पूर्व उपधा (पा० १, १, ६५)'—इत्युपधा सञ्ज्ञा, तस्य 'गमहनजनखनघसा (पा० ६,

४, ६८)'—इत्युपधालोपः। एवमन्येषामपि द्रष्टव्यमनुविधेयं यथासम्भवम् ॥

"अथाप्युपधाविकारो भवति, राजा दण्डीति"। राजन्, दण्डिन् इति स्थिते 'नोपधायाः (पा० ६, ४, ७)'—'सर्वनामस्थाने चासम्बुद्धौ (पा० ६, ४, ८)'—इति दीर्घत्वम्,—दण्डिन्नित्यत्रापि 'इन्हन्पूषार्यम्णां शौ (पा० ६, ४, १२)'—'सौ च (पा० ६, ४, १३)'—इति दीर्घत्वम्, 'नलोपः प्रातिपदिकान्तस्य (पा० ८, २, ७)'—इत्युभयोरपि नकारलोपे कृते राजा दण्डीति। एवमुपधाविकारो भवति ॥

"अथापि वर्णलोपो भवति, तत्त्वा यामीति"। अत्र चकारलोपः। याचामीत्येवमेतद् द्रष्टव्यम्। अयञ्च छान्दस एव। अत एव च छान्दसत्वादेवमेव याच्ञाकर्मस्वयं पठितः "यामि (२८८ पृ०)," "मन्महे (२८८ पृ०)" इति। भाषायां याचे इति भवति ॥

"तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑। अहे॑ळमानो वरुणे॒ह बो॒ध्युरु॑शंस॒ मा न॒ आयुः॒ प्रमो॑षीः॥" (ऋ० मं० १, २, १५, १)। किञ्च "तत्त्वा॑ यामि सु॒वीर्यं॒ तद् ब्रह्म॑ पू॒र्वचि॑त्तये। येना॒ यति॑भ्यो॒ भृग॑वे॒ धने॑ हि॒ते येन॒ प्रस्क॑ण्व॒माविथ॥" (ऋ० सं० ५, ७, २६, ४)। —इत्यनया त्रिष्टुभा उपाकृतः शुनःशेपो वरुणं तुष्टाव। आज्याहुतिरनया साग्निकेषु क्रतुषु समिष्टयजुष उत्तरकाले ह्रयते। चतुर्मास्येषु च वरुणप्रघासेषु वारुणस्य हविषो याज्या। हे 'वरुण!' 'तत्' अहं 'त्वा' त्वां 'यामि' याचे इत्यर्थः। किम्? यत् ममाभिप्रेतम्। कथं पुनर्याचे? 'ब्रह्मणा' ऋग्यजुःसामात्मकेन 'वन्दमानः' स्तुवन्। किञ्च यदेव त्वं मया याच्यसे, 'तत्' एव अयमपि 'यजमानः' 'हविर्भिः' संस्कृतैः

सावाय्यादिभिः 'आशास्ते'। तावावां भवन्तमिकमेवार्थे याचावहे, स्तुतिभिर्हविर्भिश्च । स त्वम् 'अहेलमानः' अक्रुध्यन् । सर्वो हि याचमानः क्रुध्यतीत्यत एवमुच्यते ॥ हे 'वरुण !' 'बोधि' बुध्यस्व । बुद्ध्वा चैतमावयोरभिप्रेतार्थं कुरु । उरुशंसेत्येकं पदं सम्बोधनञ्च । हे 'उरुशंस' बहुस्तुत्य ! वरुण ! 'मा' 'नः' अस्माकं याचमानानाम् 'आयुः' 'प्रमोषीः' । कुरु नोऽभिप्रायसिद्धिमित्यभिप्रायः ॥

"अथापि द्विवर्णलोपस्तृच इति" अत्र ऋवर्णरेफयोर्लोप । स लुप्यते ऋवर्णेन साकम् ॥

"अथाप्यादिविपर्ययो भवति, ज्योतिर्घनो विन्दुर्वाट्य इति"। 'द्युत दीप्तौ (भू० आ०)' तस्यादिव्यापत्त्या ज्योतिः । 'हन हिंसागत्योः (अदा० प०)' तस्य घन इति । 'भिदिर विदारणे (रु० उ०)' तस्य विन्दुः । 'भट भृतौ (भू० प०)'। तस्य वाट्य. ॥

"अथाप्याद्यन्तविपर्ययो भवति, स्तोका रज्जुः सिकतास्तर्कीति" । 'श्चुतिर् क्षरणे (भू० प०)' तस्याद्यन्तविपर्ययेण स्तोका । 'सृज विसर्गे (दि० आ०, तु० प०)' तस्य रज्जु । 'कस विकसने (भू० प०)' तस्य सिकता । 'कृती छेदने (तु० प०), तस्य तर्कु ॥

"अथाप्यन्तव्यापत्तिर्भवति" ॥ २ ॥

ओघो मेघो नाधो गाधो वधूर्मध्वित्यथापि वर्णोपजन आस्थद्वारो भरूजेति तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत्तत्राप्येकेऽल्पनिष्पत्तयो

भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारु-मित्यथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इत्यथापि नैगमेभ्यो भाषिका उष्णं घृतमित्यथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु ॥ २ ॥

"अघो मेघो नाधो गाधो वधूर्मध्विति"। 'वह प्रापणे (भू० प०)' तस्मात्त्व्यापत्त्या ओघः। 'मिह सेचने (भू० प०)' तस्य मेघ। 'णह बन्धने (दि० उ०)' तस्य नाध। 'गाहू विलोडने (भू० आ०)' तस्य गाध। 'वह प्रापणे (भू० उ०)' तस्य वधू। 'मद तृप्तौ (चु० आ०)' तस्य मधु॥

"अथापि वर्णोपजन, आस्थद्वारो भरूजेति"। 'असु क्षेपणे (दि० प०) तस्य आस्थत्। 'वृङ् सम्भक्तौ (क्र्या० आ०)' तस्य वार। 'भ्रस्ज पाके (तु० उ०)' तस्य भरूज॥

एव व्याकरणेऽपि लक्षणप्रधाने सति अर्थवशेन लोपागमौ विपरिणामश्च शब्दाना दृष्ट, किमुत निरुक्ते यदर्थप्रधान मेव। तस्मात् साधूक्तम्,—"अथानन्वितेऽर्थेऽप्रादेशिके विकारे ऽर्थनित्य परीक्षेत केनचिद् वृत्तिसामान्येनाविद्यमाने सामा न्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्" "विभक्ती" अपि "यथार्थ" "सन्नमयेत्" इति॥ एवमयमादिमध्यान्तलोप आदिम ध्यान्तविकारो वर्णलोपो द्विवर्णलोप आदिविपर्यय आद्य न्तविपर्ययो वर्णोपजनश्छन्दसि भाषायाञ्च द्रष्टव्या, द्रष्टा च यथासम्भवमनुविधेयम॥

अत पर सम्प्रसारणचिन्ता वर्त्तिष्यते, तदर्थमिदमार भ्यते,—"तत्रत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति," तद्दिप्र

कृतीनां स्थानमिति प्रदिशन्ति"।। सम्प्रसार्य्यप्रकृतयश्चासम्प्रसार्य्यप्रकृतयश्चोभयप्रकृतयश्च धातवः। तत्रैवं सत्युभयप्रकृतिषु शास्त्रविषयगतं यद्वक्तव्यं 'तत्' इदमुच्यत इति पर्य्युपयुक्तस्तच्छब्दः।

आह,—इदमेव तावदुच्यतामुभयप्रकृतीनां किंलक्षणम्? इति। उच्यते,—'यत्र' यस्मिन् धातौ 'स्वरात्' अकारादेः 'अनन्तरः' अनन्तर्हितः अन्येन व्यञ्जनेन परो वा पूर्वो वा 'अन्तस्था' यरलवानामन्यतमो वर्णः ''अन्तर्धातु' धातुमध्ये भवति। किं तत्र? 'तत्' एतदेव लक्षणं धातुरूपं हि 'द्विप्रकृतीनां' द्विस्वभावानां शब्दानां 'स्थानम्' आश्रयः 'इति' एवमाचार्य्याः 'प्रदिशन्ति' प्रविभागेनोपदिशन्ति।

तद्यथा,—'यज देवपूजासङ्गतिकरणदानेषु (भू० उ०)'—इति। अत्र द्वे शब्दप्रकृती भवत.। सम्प्रसारणपक्षे तावत्,—इष्टवान्, इष्टः, इष्ट्वा, एताः शब्दप्रकृतयो भवन्ति। असम्प्रसारणपक्षे पुनः,—यष्ट्वा, यष्टुं, यष्टव्यमित्येताः॥

"तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत्"। 'तत्र' एवं सति एकप्रकारेण 'सिद्धायाम्' अर्थसिद्धौ 'अनुपपद्यमानायाम्', 'इतरया' 'उपपिपादयिषेत्' उपपादयितुमिच्छेत्। अर्थे द्वयोः सम्प्रसारणासम्प्रसारणप्रकृत्योर्यथैवोपपद्यतेऽर्थस्तथैवोपपादयेत्। अथवोभयथाप्यनुपपद्यमानेऽर्थे स्वयमुत्पाद्य निर्द्धार्य्य यथा यथोपपद्येतार्थः तथा तथोपपादयेत्, अपि तल्लक्षणशास्त्रविहितेनार्थसाधनोपायेन, अर्थस्य प्रधानत्वात्॥

"तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति"। 'तत्रापि' एतस्मिन्नपि सम्प्रसारणलक्षणे सति "एके" धातवः 'अल्पनिष्पत्तयो

भवन्ति' अल्पेषु शब्दरूपेषु सम्प्रसारणप्रकृतिरभिनिष्पद्यते। तदप्युपेक्षितव्यम् ॥

"तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति"। 'तद्यथा' एतदुदाहरणजातम्,—ऊतिः, मृदुः, पृथुः, पृषतः, कुणारुम् इति। अवतेर्गत्यर्थस्य (भू० प०) क्तिप्रत्यये परतः "ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६, ४, २०)"—इत्यूठ्भावः क्रियते, ततः ऊतिरिति भवति। 'म्रद मर्दने (भू० आ०)', तस्य मृदुः, रेफे सम्प्रसार्यमाणे ऋकारो भवति। एवमेव 'प्रथ प्रख्याने (भू० आ०)', तस्य पृथुः। 'प्रुष दाहे (भू० प०)', तस्य पृषतः। 'क्वण शब्दार्थः (भू० प०)', कुणारुः ॥

एवमपि सम्प्रसार्यासम्प्रसार्यविशेषपरिज्ञेयशब्दान् निर्ब्रुवता पुनः "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते"। 'अथापि' इदमपरमुपेक्षितव्यमागमशब्दान् निर्ब्रुवता। आह,—किम्? इति। उच्यते,—'भाषिकेभ्यो धातुभ्यः' भाषाया ये प्रायेण प्रसिद्धप्रयोगास्ते भाषिकास्तेभ्यः। 'नैगमाः' छन्दोविषयाः। 'कृतः' कृत्प्रत्ययान्ताः शब्दाः। 'भाष्यन्ते' विक्रियन्ते निरुच्यन्त इत्यर्थः ॥

तद्यथा,—"दमूना क्षेत्रसाधा इति"। 'दमु उपशमे (दि० प०)' तस्य, भाषाया दाम्यति अनड्वान्, दमयति अनड्वाहम्, दान्तः अनड्वान् इत्येवमादयः प्रयोगा भवन्ति, छन्दसि पुनः दमूना अग्निरुच्यते स भाषासामान्येन केनचिन्निर्वक्तव्यः दममना इत्येवमादिना। एवमेव साध्यतेर्भाषाप्रायोवृत्तेः साधा इति। "मित्रं न क्षेत्रसाधसम् (ऋ० स० ६, २, ४०, ४)"—इत्येवमादयो मित्रमिव क्षेत्रसाधसमित्येवमादिना प्रकारेण निर्वक्तव्याः ॥

"यथापि नैगमेभ्यो भाषिकाः"। निगमे छन्दसि ये प्रायोवृत्त्या प्रसिद्धाः, तेभ्यः सामान्यं गृहीत्वा 'भाषिकाः' कृत्प्रत्ययान्ता भाष्यन्ते विवियन्ते।

तद्यथा,—"उष्णं घृतमिति"। 'घृ दाहे (भू० प०)' एष प्रायेण छन्दसि प्रसिद्धः,—"प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः (य० वा० सं० १, ७)"—इत्येवमादि। भाषायां पुनः उष्णमिति श्रूयते। स एषो नैगमशब्दसामान्येन निर्वक्तव्यः। एवमेव 'घृ क्षरणदीप्त्योः (भू० प०)' तस्य, छन्दसि "आ त्वा जिघर्मि (य० वा० सं० ११, २३)"—इत्यादिषु सिद्धः प्रयोगः, भाषायां पुनर्घृतमिति श्रूयते। स एवं जिघर्त्तेरेव छान्दसस्य सामान्येन निर्वक्तव्यः। एवं भाषाविषयेभ्यश्छन्दोविषया निर्वक्तव्याः, छन्दोविषयेभ्यश्च भाषाविषयाः॥

अथापीदमपरमुपेक्षितव्यमनेन शब्दान् निर्ब्रुवता। आह,—किम्? इति। उच्यते,—"अथापि प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एकेषु"। एकेषु प्रदेशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते, विकृतय एकेषु। धातोराख्यातपदभाविनः यः प्रयोगः, सा प्रकृतिः। नामीभूतस्य तस्यैव यः प्रयोगः, सा विकृतिः॥ २॥

शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते कम्बोजाः कम्बलभोजाः कमनीयभोजा वा कम्बलः कमनीयो भवति विकारमस्यार्य्येषु भाषन्ते शव इति दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येष्वेवमेकपदानि निर्ब्रूयादथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य

निर्ब्रूयाद् दण्ड्यः पुरुषो दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा दण्डो ददतेर्धारयति-कर्मणोऽक्रूरो ददते मणिमित्यभिभाषन्ते दम-नादित्यौपमन्यवो दण्डमस्याकर्षतेति गर्हा-याम् ॥ ४ ॥

"शवतिर्गतिकर्मा" गत्यर्थो धातुः। "कम्बोजेष्वेव भाष्यते" म्ले च्छेषु प्रकृत्या प्रयुज्यते, आख्यातपदभावेन। शवति गच्छ तीत्यर्थः। उदाहरणविशेषप्रसक्त कम्बोजशब्दो निरुच्यते,— "कम्बोजाः कम्बलभोजाः" ते हि प्रायेण कम्बलानुपभुञ्जन्ते, हिमप्रायत्वात्तस्य देशस्य। "कमनीयभोजा वा" कमनीयानि प्रार्थनीयानि चैते हि द्रव्याणि उपभुञ्जन्ते प्रचुररत्नो हि स देश इति। कम्बलशब्द विग्रहप्रसक्तं निर्ब्रवीति,—"कम्बलः कम-नीयो भवति" प्रार्थनीयो हि स शीतार्त्तै र्भवति। "विकारम-स्यार्य्येषु भाषन्ते शव इति" आर्य्येषु जनपदेषु अस्यैव शवते-र्विकारं भाषन्ते, मृतकनामधेयभूतमेवं प्रयुञ्जते, कथम् ? शव इति। एवमेकेष्वाख्यातस्य एव प्रयुज्यते, नामीभूत एकेषु,— इत्येतत् प्रकृतित्व विकारत्वं च। अथवा चेतनावत्स्वेकेषु गमनक्रियायोगिनि द्रव्ये प्रयुज्यते, एकेषु पुनश्चेतनारहित एव,—इत्येतत् प्रकृतित्वं विकारत्वञ्च॥

द्वितीयमुदाहरणम् ।—"दातिर्लवनार्थे प्राच्येषु"। दाति-र्धातुराख्यातस्थो लवनार्थे प्राच्येषु जनपदेषु प्रयुज्यते। तद्यथा, —व्रीहीन् दाति, यवान् दाति। अयमेव नामीभूतः "उदी-च्येषु" जनपदेषु प्रयुज्यते "दात्रम्" इति। दीयते अनेनेति दात्रम्, लूयत इत्यर्थः।

"एवमेकपदानि निर्ब्रूयात्" अनेन प्रकारेण एकपदानि निर्ब्रूयात्,—भाषानिगमव्यवस्थया, देशभाषाप्रसिद्धिविभागेन च ॥

आह,—एवं तावदतद्धितयुक्तेषु पदेषु असमासयुक्तेषु च निर्वचनम्। अथ पुनर्यानि तद्धितयुक्तानि समासयुक्तानि च पदानि, तानि कथं निर्वक्तव्यानि?—तानि किं तद्धितयुक्तेषु पदेषु पूर्वपदार्थो निर्वक्तव्यः उत तद्धितार्थसमासयुक्तेष्वपि? किं पदार्थः पूर्वम् उत समासार्थो वा पूर्वम्? इति। उच्यते —"अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्"। अथशब्दो विशेषाधिकारार्थः। 'तद्धिताः (पा० ४, १, ७६)'—इत्यधिकृत्य ये प्रत्यया विहिताः, ते तद्धिताः, 'समर्थः पदविधिः (पा० २, १, १)'—इत्यधिकृत्य ये विहिताः, ते समासाः। तेषूभयेष्वपि तद्धितसमासेषु अविशेषेण एकपर्वसु चानेकपर्वसु च एकपदेषु चानेकपदेषु च। तद्यथा,—दण्ड्य. इत्येकपदस्तद्धितः, वार्ष्यायणिरित्यनेकपदः। अनेकानि ह्येष पदानि स्वात्मन्यन्तर्णीय प्रवर्त्तते। तद्यथा,—वृषस्यापत्यं वार्ष्यः, वार्ष्यस्यापत्यं वार्ष्यायणः, तस्यापि वार्ष्यायणिरिति। एवं समासेष्वप्येकपदेषु चैवं निर्ब्रूयात्। यथा वक्ष्यामः,—एकशेषः एकपदः समासः। 'सरूपाणामेकशेष एकविभक्तौ (पा० १, २, ६४)'—इति। तद्यथा,—पुरुषश्च पुरुषश्च पुरुषौ, पुरुषश्च पुरुषश्च पुरुषश्च पुरुषाः इत्येवम्।

"द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः॥"

एतेऽनेकपदाः समासाः। पाणिनेः सूत्रम्,—'सङ्ख्यापूर्वो द्विगुः (पा० २, १, ५२)'। पञ्चमूली, पञ्चरथी, दशरथी इत्येवमादि। सूत्रम्,—'चार्थे द्वन्द्व (पा० २, १, २९)'। स

च पुनर्विभागयैकवद्भ भवति। तद्यथा,—प्लक्षन्यग्रोधौ, अहिनकुलम्, भीमार्जुनवासुदेवाः इत्यादि। उपसर्गनिपातपूर्वकोऽव्ययीभावः। तद्यथा,—उपमणिकम्, अनुसमुद्रम्, व्यभ्रम् इत्येवमादि। तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः कर्मधारय.। तद्यथा,—कृष्णमृगः, रक्तोऽश्वः, श्वेतपताका इत्येवमादि। एतेष्वेकपर्वसु चानेकपर्वसु च तद्धितसमासेषु पूर्वं पूर्वमेव निर्ब्रूयादपरमपरमेव प्रविभज्य विग्रहोत्पत्यैः। पूर्वं तद्धितार्थं निर्ब्रूयात्, पश्चात् पदार्थम्। समासेष्वपि,—पूर्वं समासार्थम्, पश्चात् पदार्थम्॥

तदेतत् उदाहरणैरेव दर्शयति, तद्यथा,—"दण्ड्यः पुरुषो दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा"। दण्ड्य इत्येष तद्धित., पुरुषशब्दविशेषणम्। पूर्वं तावत् तद्धितार्थं निर्वक्ति,—कश्चिद्यदपराधे दण्डमर्हतीति दण्ड्यः, दण्डेन वा कार्षापणादिना यः सम्पद्यते संयुज्यते स दण्ड्यः।

अधुना पदार्थनिर्वचनम्,—"दण्डो ददतेर्धारयतिकर्मण."। ददतेः धारयत्यर्थे वर्त्तमानस्य, धार्य्यते ह्येषोऽपराधेषु राजभिः।

आह,—दृष्टः पुनः क्वचित् ददतेः धारयत्यर्थे? इति। उच्यते,—दृष्टो वेदे लोके च। वेदे तावत्,—"विश्वे देवाः पुष्करे त्वा ददन्त (ऋ० सं० ५, ३, २४, १)"—इति। "अक्रूरो ददते मणिमित्यभिभाषन्ते"। तथा लोके,—'अक्रूरो ददते मणिम्'। अक्रूरो नाम राजा वृष्ण्यन्धकाधिपतिः, स ददते मणिं स्यमन्तकनामानं शिरसा। लोकेऽप्येव ददतिर्धारणार्थे भाष्यते।

"दमनादित्यौपमन्यव." आचार्यो मन्यते। तेन हि अदान्तो दम्यते राजभिः, तेनादान्तान् दमयेदित्युक्तम्, लोके

हि प्रसिद्धो यः कश्चिददान्तो भवति तमभिकृत्य वक्तारो भवन्ति।—"दण्डमस्याकर्षतेति गर्हायाम्"। दण्डमस्याकर्षत हे सभासदः! तेन सम्यक्क्षतामयं ततो दान्तो भविष्यति,—इत्येवमयं गर्हायां दृष्टः। एवं दमनाद् दण्ड', इत्यौपमन्यव आचार्यो मन्यते ॥ ४ ॥

कक्ष्या रज्जुरश्वस्य कक्षं सेवते कक्षो गाहतेः कष इति नामकरणः ख्यातेर्वानर्थकोऽभ्यासः किमस्मिन् ख्यानमिति कषतेर्वा तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य राज्ञः पुरुषो राजपुरुषो राजा राजतेः पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य। यस्मात् परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। इत्यपि निगमो भवति ॥ ५ ॥

तद्धितस्यैव द्वितीयमुदाहरणम्,—"कक्ष्या रज्जुरश्वस्य"—इति। कक्ष्या इत्येष तद्धितः। आह,—का पुनरियं कक्ष्या? इति। उच्यते,—या अश्वस्य सन्नाहरज्जुः सा कक्ष्येत्युच्यते।

एवं कक्ष्याशब्दस्य तत्त्वमुक्ताधुना तद्धितार्थं ब्रवीति,—"कक्षं सेवते"। सा हि कक्ष सेवते, कक्षसंयुक्ता भवति। कक्षे भवा वा कक्ष्या।

अधुना पदार्थं निर्ब्रवीति,—"कक्षो गाहतेः" विलोडनार्थस्य (भू० आ०)। कक्षयोरेव हि विलोडयति, द्रष्टव्यम्। अत्र

पुनः,— "कक्ष इति नामकरणः"। सर्वमन्यदाख्यातविपर्ययादि यथोपदर्शितं यथासम्भवं योज्यं तत्र तत्र। "ख्यातेर्वानर्थको-ऽभ्यासः" ककारः, कख्यः सन् कक्ष इत्युच्यते। अर्थवानेव वा ककारः। कथम् ? "किमस्मिन् ख्यानमिति"। एवं किमस्मिन् ख्यापनीयमस्ति ? न किञ्चिदपि, अदर्शनीयत्वात्, गूहनीयोऽयमित्यर्थः। स एष एवं कृत्वा किं ख्यः सन् कक्ष इत्युच्यते ? "कषतेर्वा (भू॰ प॰)" नित्यकालं ह्यसौ खेदशीलत्वात् कण्डूं ददाति, ततो नखैः कष्यते यतः, तस्मात् कषण-क्रियायोगात् कक्ष इत्युच्यते। "तत्सामान्यान्मनुष्यकक्षः"। स्त्रीकक्षस्य सामान्यात् मनुष्यकक्षोऽपि कक्ष इत्युच्यते। "बाहुमूलसामान्यादश्वस्य"। अश्वस्यापि यो बाहुमूलप्रदेशः, स कक्ष इत्युच्यते। तं सेवत इति कक्ष्या।

अन्ये तु ब्रुवते,—"पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्" पूर्वं पदं पूर्वमेव प्रविभज्य निर्ब्रूयात्, अपरं पदमपरमेवेति। एतस्मिन् अर्थे कल्प्यमाने पदानामेव पौर्वापर्ये निर्वचने तद्धितसमासयोस्त्वनियमः पूर्वं पश्चाद्वेति। पूर्व एव त्वर्थः साधीयान्॥ उक्तं तद्धितनिर्वचनलक्षणं सोदाहरणम्॥

अधुना समासोदाहरणमुच्यते,—"राज्ञः पुरुषो राज-पुरुषः"। राज्ञ इत्युक्ते सर्वं स्वं गम्यते, षष्ठीसामर्थ्यात्। तथा पुरुष इत्युक्ते सर्वः स्वामी गम्यते, निर्देशसामर्थ्यात्। अथेदानीं राजपुरुष इत्युक्ते, राजा पुरुषमन्येभ्यः स्वामिभ्यो विनिवर्त्य स्वात्मनि संयुनक्ति, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यो विनिवर्त्य स्वात्मना संयुनक्ति। ता उभावप्यन्योन्य-विमिश्रपदार्थकौ मिथः संसृष्टपदार्थौ समस्येते। अथेदानीं राजपुरुष आनीयतामित्युक्ते न राजानमानयन्ति, नापि पुरुषमात्रम्, नाप्युभयम्, किन्तु राजस्वामिकं पुरुषमान-

यन्ति । एवं समासार्थः । कुतः पुनरेतत् राजस्वामिकमिति ? प्रधानोपसर्जने हि सद्भूते विवक्षितमेकमर्थं ब्रूतः ॥

"राजा राजतेः" । राजतेर्दीप्त्यर्थस्य (भू० उ०) । दीप्यते ह्यसौ पञ्चानां लोकपालानां वपुषा । "पुरुष पुरिषादः" । पूः शरीरं बुद्धिर्वा, तयोरसौ विषयोपलब्ध्यर्थं सीदतीति पुरिषादः, पुरुषः । "पुरिशयः" अथवा तयोरसौ शेते विशेषेणास्ते इति पुरिशयः सन् पुरुष इत्युच्यते । "पूरयतेर्वा" पूर्णमनेन पुरुषेण सर्वगतत्वात् जगदिति पुरुषः । "पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य" । अन्तरित्यन्तरपुरुषाभिप्रायेणैवमुच्यते प्रासङ्गिकम् ।

निगमश्च भवति,—"यस्मात् परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" । यस्मात् परमपरं वा न किञ्चिदस्ति, यस्माच्च न किञ्चिदप्यणीयो नापि ज्यायोऽन्यदस्ति, स एव सर्वमित्यभिप्रायः । वृक्ष इव स्तब्धो नित्यसङ्कोचविकाशधर्मादिविद्योतनवति स्वात्मनि सर्वविभागेन तिष्ठति य, तेन पुरुषेणेदं पूर्णं सर्वं जगदिति ॥ ५ ॥

विश्वकद्राकर्षो वीति चकद्र इति श्वगतौ भाष्यते द्रातीति गतिकुत्सना कद्रातीति द्रातिकुत्सना चकद्रातीति कद्रातीति सतोऽनर्थकोऽभ्यासस्तदस्मिन्नस्तीति विश्वकद्रः कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपं कल्याणं कमनीयं भवति वर्णो वृणोते रूपं रोचतेरेवं तद्धितसमासान्निर्ब्रूयान्नैकपदानि निर्ब्रूयान्नावैयाकरणाय

नानुपसन्नायानिदंविदे वा नित्यं ह्यविज्ञातुर्वि-
ज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञा-
तुं स्यान्मेधाविने तपस्विने वा ॥ ६ ॥

समासस्यैव द्वितीयमुदाहरणम्,—"विश्वकद्राकर्ष." इति। विश्वकद्रमाकर्षतीति विश्वकद्राकर्षः।

आह,—क. पुनरयं विश्वकद्र इति? "वीति चकद्र इति श्वगतौ भाष्यते"। वीति चकद्र इति शब्दद्वय श्वगतौ भाष्यते। श्वभिः साक यो गच्छति मनुष्य, तस्मिन् भाष्यते। "द्रातीति गतिकुत्सना"। अत्र पुन' द्रातीति गति कुत्सना। 'द्रा कुत्सायाम् (अदा॰ प॰)'—इत्युक्तम्, इट हि तस्य कुत्सितगतित्वम्, यदस्य श्वभिः सह राति। "कद्रातीति द्रातिकुत्सना"। इदानीं कद्रातीति द्रातिकुत्सना कुत्सित-कुत्सनेत्यर्थः। इदमपरं कुत्सिततरम्, यद् गत्वा श्वभिः सह निहन्ति, तस्मात् कद्रातीति कुत्सितकुत्सनेत्युपपद्यते। "चक-द्राति कद्रातीति सतोऽनर्थकोऽभ्यासः"। अथेदानीं च इत्येष कद्रातीति एवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यास। यदेवोक्तं भवति कद्रातीति तदेव चकद्रातीति। "तदस्मिन्न-स्तीति विश्वकद्र."। तदस्मिन् द्वितयमप्यस्ति,—कुगतित्वं, कुत्सिततरगतित्वञ्च, नानाप्रकारमिति विश्वकद्र. श्वजीवन पुरुष। तमपराधे कस्मिंश्चित् वर्त्तमानमन्योन्य आकर्षति, स विश्वकद्राकर्ष।

अन्ये तु ब्रुवते,—श्वैव विश्वकद्र, अस्यैव हि स्वभावत एव द्विसत्वाद् गतिः कुत्सिता, स च पुनः पादविकल, अतस्तस्य कुत्सितकुत्सितत्वम्। वीत्युभयोरर्थयोर्मत्वर्थं, तमाकर्षति य पुरुष, स विश्वकद्राकर्षः।

अधुना रूपसमासं दर्शयति,—"कल्याणवर्णरूपः, कल्याणवर्णस्येवास्य रूपम्"। कल्याणवर्णं सुवर्णम्, तस्येव यस्य रूप स कल्याणवर्णरूपः। अग्निरन्यो वा कश्चित्।

कल्याणादिशब्दान् विग्रहप्रसक्तान् निर्ब्रवीति,—"कल्याण कमनीयं भवति"। प्रार्थ्यते तत् सर्वेणैव। "वर्णो वृणोतेः"। आवृणोति हि स आश्रयम्। "रूपं रोचतेः"। तद्धि रोचते, तद्धि रोचिष्णु भवति।

"एवं तद्धितसमासान्निर्ब्रूयात्"—इत्युपसंहारवचनम्॥

"नैकपदानि निर्ब्रूयात्" प्रकरणोपपदविहितानि सन्ति तानि, केवलान्येव परेणाभिप्रोहबुद्ध्या पृच्छमानानि न निर्ब्रूयात्, न निर्वक्तव्यानीति। किङ्कारणम्? तेषां प्रकरणादुपपदाद्वा अर्थः शक्यतेऽवधारयितुम्, सोऽसौ प्रकरणानभिज्ञोऽन्यथैव निर्ब्रूयात्, ततश्च प्रलवायेन योगादपहारश्च स्यात्। तद्यथा,—'जहा (२१७ पृ०)'—इत्येकं पदं प्रकरणोपपदरहितम्, न विज्ञायते, किं हन्तेः (अदा० प०) उत "ओहाक् त्यागे (जु० प०)'—इत्यस्य धातोः स्यात्? इति। तत् पुनरेतत्—"मा नु एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर भूरिषु॥ (ऋ० सं० ६, २, ४८, ४)"—इत्येतस्यामृचि यदेतन्मा वधीरिति पदम्, एतस्माद् गम्यते हन्तेः स्यादिति। किङ्कारणम्? विज्ञातप्रकरणोपपदस्य हि समञ्जसं ह्यर्थकरण न्याय्यमित्येवमनवगतसंस्काराणामेकपदानां प्रकरणादर्थावधारणमुपपदाद्वा शक्यते कर्त्तुम्। अत इदमुक्तम्,—"नैकपदानि निर्ब्रूयात्"—इति॥

नावैयाकरणायेति। उक्तं निर्वचनलक्षणम्, अधुना यस्मै निर्वक्तव्योऽयमुक्तनिर्वचनलक्षणः समाम्नायः, तस्य लक्षणं वक्तव्यमिति तदर्थमिदमारभ्यते,—"नावैयाकरणाय"।

यस्तावदवैयाकरणः, तस्मै न निर्वक्तव्योऽयं समाम्नायो न ह्यसावलक्षणज्ञत्वात् व्युत्पाद्य निरुच्यमानमेतद् बुध्येत, ततो व्यर्थ एव श्रम स्यादिति ।

किञ्च "नानुपसन्नाय"। किमिति महदद्भुतमनेन कृत यद् व्याकरणमधीतमिति,—एतावता गौरवेण वैयाकरणायापि न निर्ब्रूयात्, धर्मो हि सर्वथैवापरित्याज्य, तस्माद् वैयाकरणायापि सम्यगुपसन्नाय यदा शिष्यवृत्तिमास्थितायैव निर्ब्रूयात् ।

नैषमेव, किञ्च "अनिदंविदे वा"। अवैयाकरणोऽपि जडः कश्चिदसमर्थ एव वेदितु स्यात्, बहु वेदितव्यमत्रास्ति, देवतादि किञ्चित् तस्मै वैयाकरणायापि इद वेदितुमसमर्थाय अनिदंविदे नैव निर्ब्रूयात् । अथवा । इदमित्यात्मपर्य्यायवाचि । इदंविदे आत्मविदे, योगिने । स ह्यात्मज्ञानविधूतकल्मषोऽल्पेनैव यत्नेन बोद्धु सूक्ष्मानर्थान् शक्त इति इदंविदे निर्ब्रूयात् । अथवा । यत्किञ्चिच्छास्त्रमिदमिति निर्दिश्यते । येन ह्यन्यत् किञ्चिदश्रुत पूर्वंशास्त्रम, तस्मै न निर्ब्रूयादिद निरुक्तशास्त्रमनास्फालितहृदयकुड्मलाय ॥

किङ्कारणम् ? "नित्य ह्यविज्ञातुर्विज्ञानेऽसूया"। यो हि न विजानाति नावबुध्यते, तस्याविज्ञातुर्नित्यकालमेव विज्ञाने असूया, स ह्यनवबुध्यमान आत्मीय दोषमाचार्य्ये एवाव सृजति,—स्वयमेव तावदय न बुध्यते किमस्मान् बोधयिष्यतीति । एतस्मात् कारणादश्रुतपूर्वान्यशास्त्राय अखिन्नमनसे नेद निर्ब्रूयात् ।

"उपसन्नाय तु निर्ब्रूयात्, यो वाल विज्ञातु स्यान्मेधाविने तपस्विने वा"। य एव तु मेधावी स्यात्,—अन्यशास्त्रानुभावितया प्रज्ञया युक्तः, यो वा तपस्वी, काम ताभ्या

सवैयाकरणाभ्यामपि निर्ब्रूयादेव,—न हि तयोरसाध्य किञ्चिदस्ति,—तपसा हि स्वयमपि वेदार्थः प्रादुर्भवेदेव। पूर्वेषामधीषा मेधाव्यपि च स्वयमुत्प्रेक्षितुं शक्नुयात्, किमुतोच्यमानमवबोद्धुम्। यो वान्यः कश्चिदलं पर्य्याप्तो विज्ञातुमेतच्छास्त्रं भवेत्, दृढग्राही स्थिरबुद्धि, तस्मै निर्ब्रूयादेव सर्वथा। अनुपसन्नाय नैव निर्ब्रूयात्, यद्यपि तपस्वी, मेधावी, दृढग्राही वा।

उक्तं हि,—"यश्चान्यायेन निर्ब्रूयाद्यश्चान्यायेन पृच्छति। तयोरन्यतरो म्रियते विद्वेषं वाधिगच्छति" ॥ ६ ॥

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवेऽयताय न मा ब्रूया वीर्य्यवती तथा स्याम् ॥ य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन्। तं मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कतमच्चनाह ॥ अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम्। यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति निधिः शेवधिरिति ॥ ७ ॥

इति द्वितीयाध्यायस्य प्रथमः पादः ॥ २, १ ॥

एतमर्थमधिकृत्योदाहरन्ति,—"विद्या ह वै ब्राह्मणमाजगाम"—इति। विद्या किल कामरूपिणी भूत्वा विद्याधिदेवता संयतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणं प्रति कश्चिदाजगाम। तमेत्य प्रह्वीभूतोवाच,—किम्? इति। "गोपाय मा" रक्ष माम्। ततः "ते" "अहं" गुप्ता सती "शेवधिः" भविष्यामि, सुखनिधानमित्यर्थः। आह,—कुतः पुनस्त्वां रक्षामि? "असूयकायानृजवेऽयताय"। असूयकः, परापवादशीलः। अनृजुः, यस्य मनोवाग्देहेषु असमाः प्रवृत्तयः। अयतः, विप्रकीर्णेन्द्रियः,—यत्किञ्चन कायाशुचिः। एवंलक्षणाय "न मा ब्रूयाः" त्वम्। किन्तथा भविष्यति? "वीर्य्यवती तथा" अहं तव "स्यां" भवेयमित्यर्थः।

"य आतृणत्त्यवितथेन कर्णौ"। अधुना शिष्योपदेशमाह,—य आतृणत्ति, आभिनत्ति, अपिहिताविव सन्तौ कर्णौ विवृणोति। अवितथेन, सत्येन ब्रह्मणा। कथम्पुनरातृणत्ति? "अदुःखं कुर्वन्नमृतं सम्प्रयच्छन्"। यो हि किञ्चिदातृणत्ति, स दुःखयति, अयं पुनः सुखमातृणत्ति। किञ्च अमृतत्वप्राप्तिहेतुज्ञानं सम्प्रयच्छन्। य आतृणत्ति तस्मै किम्? इति। उच्यते,—"तं मन्येत पितरं मातरञ्च" नेतरौ मातापितराविव्यभिप्रायः। उक्तञ्च,—"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता। ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् (म० सं० २, १४६)"। "तस्मै" मातापितृभूताय गुरवे "न द्रुह्येत्"। "कतमच्चनाह"—कदाचिदपि आपद्यपि कष्टायामित्यभिप्रायः॥

अधुना इतरान् दुष्टशिष्यान् अभिशपन्ती विद्या इदमाह,—

"अध्यापिता ये गुरुं नाद्रियन्ते" इत्यादि। अध्यापिताः

सन्तो ये गुरुं प्रति नाद्रियन्ते, नादरं कुर्वन्ति। के पुनस्ते ? इति। उच्यते,—"विप्रा." मेधाविनः सन्तो गृहीतविद्या। कथम्पुनर्नाद्रियन्ते ? "वाचा मनसा कर्मणा वा"। आह,— किं तेषाम् ? इति। उच्यते,—"यथैव" "ते" तस्य "गुरो" "न" "भोजनीया." न भोज्या, न भोजनार्हा, "तथैव" "तान्" "तत्" "श्रुतम्" अपि "न भुनक्ति" न पालयन्ति, श्रुतफलेन न संयुनक्तीत्यर्थ.।

अधुना यस्मै वक्तव्या, तस्य लक्षणं ब्रवीति,—"यमेव" "विद्या." जानीयाः तम्। "शुचिमप्रमत्तम्" यमनियमेषु। "मेधाविन" च "ब्रह्मचर्योपपन्नम्"। किञ्च, यः ते न द्रुह्येत्" न द्रोहमुपगच्छेत्। "कतमच्चनाह" कदाचिदपि सर्वास्वप्यापत्सु "तस्मै मा ब्रूया." "त्वम्" "निधिपाय" गोप्त्रे "ब्रह्मन्।"॥

आह,—"निधिः" क ? इति। उच्यते,—"शेवधिः" इति। शेव इति सुखनाम, सुखनिधानमित्यर्थ.। ब्रह्म लोको हि निधिः सुखाना कृत्स्नस्य जगतो यन्नद्वारेण, अत इदमुक्त "निधि. शेवधिरिति" ॥ ७ ॥

इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ
निरुक्तव्याख्याया [द्वितीयाध्यायस्य] सप्तमस्याध्यायस्य
प्रथम पादः ॥ १ ॥

---

द्वितीय पादः।

अथातोऽनुक्रमिष्यामो गौरिति पृथिव्या नामधेयं यद् दूरङ्गता भवति यच्चास्याम्भूतानि गच्छन्ति गातेर्वौकारो नामकरणोऽथापि पशु-

नामेह भवत्येतस्मादेवाथाप्यस्यान्ताद्धितेन कृत्स्न वन्निगमा भवन्ति गोभिः श्रीणीत मत्सरमिति पयसो मत्सरः सोमो मन्दतेस्तृप्तिकर्मणो मत्सर इति लोभनामाभिमत्त एनेन धनं भवति पयः पिबतेर्वा प्यायतेर्वा क्षीरं क्षरतेर्घसेर्वेरो-नामकरण उशीरमिति यथा । अंशुं दुहन्तो अध्यासते गवीत्यधिषवणचर्मणोंऽशुः शमष्ट-मात्रो भवत्यननाय शम्भवतीति वा चर्म चरते-र्वोच्चृत्तं भवतीति वाथापि चर्म च श्लेष्मा च । गोभिः सन्नद्धो असि वीलयस्वेति रथस्तुताव-थापि स्नाव च श्लेष्मा च । गोभिः सन्नद्धा पतति प्रसूतेतीषुस्तुतौ । ज्यापि गौरुच्यते गव्या चेत्ताद्धितमथ चेन्न गव्या गमयतीषूनिति ॥ १ ॥

"समाम्नाय समाम्नात, स व्याख्यातव्य"—इति प्रतिज्ञातम (४१४ पृ०)। सा च पुनरियं व्याख्या सामान्या वैशेषिकी च। तत्र सामान्या,—सर्वेषां नाम्नामिदं सामान्यलक्षणम्, इदमाख्यातानाम्, इदमुपसर्गाणाम् इदं निपातानाम् इति। सोऽयमनयैव प्रकारया व्याख्यया कृत्स्न समाम्नायो व्याख्यात, तदनुपक्षाण्येव च शास्त्रारम्भप्रयोजनान्युक्तानि, भागमच परिशोधित, वेदो वेदाङ्गव्यूहश्च सप्रयोजन उक्त,

निघण्टुसमाम्नायविरचना चोपदिष्टा प्रकरणत्रयविभागेन, निर्वचनलक्षणञ्चानेकप्रपञ्चमुक्तम् ।

अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्य, तदधिकारार्थोऽयम् "अथ"शब्दः । "अतः"शब्दः क्रमे हेतौ वा । सामान्यव्याख्यानादनन्तरं विशेषव्याख्यानमेवावसरप्राप्तमित्येवं क्रमे । अथवा हेतौ । यस्मात् सामान्यतः समाम्नायो व्याख्यातः अत इदानीं विशेषतः "अनुक्रमिष्याम." आनुपूर्व्येण क्रमिष्यामो वर्णयिष्यामः, व्याख्यास्येति शेषः ।

आह,—किंलक्षणा पुनरसौ व्याख्या ? इति । उच्यते,—तत्त्वपर्य्यायभेदसङ्ख्यासन्दिग्धसन्दिग्धोदाहरणतन्निर्वचनविभागेन यदाख्यानं सा व्याख्या निघण्टुप्रकरणे । तद्यथा । तत्त्वम्,—"गौरिति पृथिव्या नामधेयम्"—इत्येवमादि । पर्य्यायवचनम्, प्रसिद्धेनाभिधानेनाप्रसिद्धस्यार्थस्य ख्यापनम्, तद्यथा,—पृथिव्या नामधेय गौरिति । भेदो व्युत्पत्तिरिति समानार्थः, तद्यथा,—"यद्दु दूरं गता भवति"—इत्येवमादि । सङ्ख्या, तद्यथा,—"पृथिवीनामधेयान्येकविंशतिः" । सन्दिग्धम्,—"तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या सन्दिह्यते"—इत्येवमादि । सन्दिग्धोदाहरणम्,—"य ईं चकार"—इत्येवमादि । तन्निर्वचनम्,—"बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः"—इत्येवमादि । एवम्प्रकारया व्याख्यया इदं नैघण्टुकप्रकरणं व्याख्यास्यते ॥

"गौरिति पृथिव्या नामधेयम्" । आह,—यस्मात् कारणात् द्रव्ये शब्दोनिवेशो नैरुक्तानां, तदुच्यतां कारणं, केन कारणेन गोशब्दः पृथिव्यां सन्निविष्टः ? इति । उच्यते,—"यत्" तस्मात् इयं "दूरम्" अध्वानं प्रति "गता भवति" न

यस्यां यत्र उपलभ्यते, "यत्" यस्मात् "च" "यस्यां भूतानि गच्छन्ति" आधारभूतायाम्। एवं कर्तृकारकमधिकरणं वा योज्यम्। "गातेर्वा" 'गाङ् गतौ (भू० आ०)'—इत्यस्य धातोः "ओकारो नामकरण." प्रत्ययः।

"अथापि" गौरित्येतत् "पशुनाम" "भवति" "इह" एव कारकद्वये, "एतस्मादेव" धातुद्वयाद् गमेर्गातेर्वा। "अथास्याम्" एव पशुगवि "ताद्धितेन" प्रयोगेनाकृतायां सत्यां "कृत्स्नवन्निगमा भवन्ति"। तद्यथा,—"गोभिः श्रीणीत मत्सरमिति" गोरेकदेशस्य "पयसः" कृत्स्नवत् प्रयोग.। तदेतच्छिष्यबुद्धिव्युत्पादनार्थमनेकप्रकारं शब्दवृत्तिविपर्योपप्रदर्शनं क्रियते, कथन्नामोपप्रदर्शितशब्दवृत्तिविपर्योऽसंमुह्य न मन्त्रार्थान् निर्ब्रूयादिति॥

"आधावत सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रीणीत मत्सरम्॥" (ऋ० सं० ७, १, ३, ४)। इमां गायत्रीमयास्य आङ्गिरसोऽपश्यन्। ग्रावस्तुतौ विनियुक्ता। हे अध्वर्यवः! एभिः ग्रावभिः संस्कृत एष सोमः। ते यूयं हे 'सुहस्त्य.' सुवर्णेनालङ्कृतहस्ताः किम्? 'आधावत'। 'गृभ्णीत' गृह्णीत, एतो 'शुक्रा' 'मन्थिना' ग्रहावनतिक्रान्तकालम्। किञ्च, 'गोभिः' गोभ्योऽभिनिष्पन्नेन रसेन 'श्रीणीत'-एनम् 'मत्सरं' मादयितारं सोमं मैत्रावरुणग्रहाणामुपगतम्। "शृतश्रीतेन तृतीयसवने या पूतभृत्याशिरेव ततोऽनतिक्रान्तकालं जुहुत" एवं मन्त्रविधानादशक्यत्वाच्च गोभिः सपणस्य गव्ये न पयसेति गम्यते॥

"मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः" तृप्यन्ति हि अनेन देवताः।

मन्दसामान्यप्रसङ्गप्रसक्तमुच्यते,—"मत्सर इति लोभना-

माभिमत्त एनेन धनं भवति"। तेन ह्याविष्टो धनाभिमुख्येन मत्तो भवति॥

पर्य्यायाख्यानप्रसक्तं निरुच्यते,—"पयः पिबतेर्वा पानार्थस्य (अदा० प०), पीयते हि तत्। "प्यायतेर्वा" वृद्ध्यर्थस्य (भू० आ०), तेन हि वर्द्धन्ते प्राणिनः॥

प्रसक्तानुप्रसक्तं निरुच्यते,—"क्षीरं क्षरतेः" क्षरणार्थस्य (भू० आ०), क्षरति हि तदूधसः। "घसेर्वेरो नामकरणः" घसेर्घस आदेशः क्रियते, अतस्तेनैव सिद्धरूपेण निर्दिश्यते। धात्वन्तरमिति वा केचित्। ज्ञापकञ्च ददाति,—"उशीरमिति यथा"। 'वश कान्तौ (अदा० प०)' तस्य कृतसम्प्रसारणस्य ईरप्रत्ययेनोशीरमिति भवति। तद्धि सौगन्ध्याक्रान्तं भवति॥

"अंशुं दुहन्तो अध्यासते गवीत्यधिषवणचर्मणः"। कृष्णवदभिधायकः। "ते सोमादो हरी इन्द्रस्य निंसतेऽंशुं दुहन्तो अध्यासते गवि। तेभिर्दुग्धं पपिवान् सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते॥" (ऋ० सं० ८, ४, २०, ४)। एषा जगती। अर्बुदो नाम काद्रवेय ऋषिः तस्यार्षम्। ग्रावस्तुतौ विनियुक्ता। 'ते' एते ग्रावाणः 'सोमादः' सोमभक्षयितारः यदाभिषवकर्मणि प्रवर्त्तन्ते, अथ तदा 'हरी इन्द्रस्य' अश्वौ, यज्ञागमनार्थमेतेषां शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ, रथे योगमिच्छन्तौ, आत्मना ऋजीषं भक्षयिष्यन्तौ, इन्द्रञ्च सोमं पाययिष्यन्तौ, स्वयमेव 'निंसते, नौचैर्नमेते मुर्खौ' आवाहे,—'इन्द्र! गच्छ यज्ञायतनं संस्कृतः सोमः' इति। तदैव ऋत्विजोऽपि त्वरमाणा इन्द्रो—स्वागमकालमभ्यर्णमन्वानाः 'अंशु' सोमाख्यम् अभिषुत्य 'दुहन्तो' प्रपूरयन्तः। 'गवि अधि' गौरुपरि गोऽवयवे अधिषवणचर्मणि। एतत् कर्

कुर्वाणा इदं प्रतीचमाणा 'आमते'। अथ स 'इन्द्रः' एव 'तेभिः दुग्धम्' ऋत्विग्भिः प्रचारितं 'पपिवान्' पीतवान् 'सोम्यं मधु' सोममय तेन हृष्ट। ततोऽनन्तरं 'वर्द्धते' वीर्य्येण। अथ तेन च शरीरेण 'प्रथते' विस्तीर्य्यते, विस्तीर्णेन स्वेन वीर्य्येण मेघ निदार्य 'हयायते' वर्षं प्रवर्त्तयते। तदिद सर्वमपि वर्षादि जगदनुग्राहकमैन्द्रं कर्म। अभिषवद्वारेण, सोमाभिषवो ग्रावाधीनमित्येव ग्रावस्तुतिः॥

निगमप्रसक्त निरुच्यते,—"अंशुः शमष्टमात्रो भवति"। व्याप्तमात्रो हि यजमानेन तस्यैव शं भवति, सुखी भवति। इदसोमो व्याप्तोऽस्मिति विगतमनोदुःखो भवति। "अननाय शं भवतीति वा"। अननाय जीवनाय शं सर्वेषां भूताना भवति, सुखी भवतीति वा। यज्ञो हि वर्षं प्रवृत्तिहेतुस्ततश्च सर्वभूतानि सुखं जीवन्ति॥

व्याख्यानप्रसक्तं निरुच्यते,—"चर्म चरतेर्वा" चरितं ह्रि तत्सर्वस्मिन् शरीरे गतमित्यर्थः। "उच्चृत्तं भवतीति वा" उच्चृत्तम् उत्कर्त्तितं शरीरादिति वा॥

"अथापि चर्म च श्लेष्मा च" गोशब्देनोच्यत इति शेषः। "गोभिः सन्नद्धो असि वीलयस्वेति रथस्तुतौ" "वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः सन्नद्धो असि वीलयस्वास्थाता ते जयतु जेत्वानि।" (ऋ० स० ४, ७, ३५, १)। (य० वा० स० २८, ५२)। (अथ० सं० ६, १२५, १)। स हि चर्मणावनद्धो भवति, श्लेष्मणा च तस्यारादयः संश्लेषिता भवन्ति॥

"अथापि स्नाव च श्लेष्मा च" गोशब्देनोच्यत इति शेषः। "गोभिः सन्नद्धा पतति प्रसूतेतीषुस्तुतौ" सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सञ्च

वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्। (ऋ॰ सं॰ ५, १, २१, १)। (य॰ वा॰ सं॰ २९, ४७)। सा हि स्नायुना वेष्टिता भवति, श्लेषणा च संश्लेपिता॥

"ज्यापि गौरुच्यते"। सा पुनः "चेत्" यदि "गव्या तादितम्" अभिधानम्, "अथ" पुनः "न चेत् गव्या, गमयतीषू-निति" गौरन्यद्द्रव्यमपि,—॥ १ ॥

वृक्षे वृक्षे नियतामीमयद्गौस्ततो वयः प्रपतान् पूरुषादः। वृक्षे वृक्षे धनुषि धनुषि वृक्षो व्रश्चनान्नियतामीमयद्गौः शब्दं करोति मीमयतिः शब्दकर्मा ततो वयः प्रपतन्ति पुरुषानदनाय विरिति शकुनिनाम वेतेर्गतिकर्मणोऽथापीषुनामेह भवत्येतस्मादेवादित्योऽपि गौरुच्यते। उतादः परुषे गवि। पर्ववति भास्वतीत्यौपमन्यवोऽथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति। सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति। सोऽपि गौरुच्यते। अत्राह गोरमन्वतेति तदुपरिष्टाद् व्याख्यास्यामः सर्वेऽपि रश्मयो गाव उच्यन्ते ॥ २ ॥

"वृक्षे वृक्षे नियतामीमयद् गौस्ततो वयः प्रपतान् पूरुषादः। अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत्।" (ऋ॰ स॰ ८, ७, १८, २)। वसुक्रस्येन्द्रपुत्रस्य द

मार्षम्। विष्टुबैन्द्री। महाव्रते मरुत्वतीये शस्यते। इन्द्रो भगवानैश्वर्ययोगात् संग्रामेष्वनेकबाहुभूतानेकानि धनूंषा-दत्ते, तानि मन्त्रदृष्टदृष्टेवमाह,—"हवे हवे" हवावयवे "धनुषि धनुषि" यावल्लोकेन गृहीतानि धनूंषि, तेषु सर्वेषु, प्रत्येकं "नियता" निबद्धा, "गौः" गव्या, गमयित्री वा शराणाम्, इन्द्रबाहाकृष्टा "षमीमयत्" मीमयति "शब्दं करोति"। जात्यभिप्रायेणैकवचनम्। "ततः" शब्दकरणानन्तरमेव "प्रपतान्" 'प्रपतन्ति' "वयः" अथवा 'ततः' ततो धनुषः 'वयः' पक्षावयवयचसम्बन्धात् इषवोऽपि 'वयः' पक्षिणः। अथवा "वेतेर्गतिकर्मणः। साक्षादेव इषवः 'वयः' न गुणवृत्त्या। ते 'प्रपतान्' प्रपतन्ति "पुरुषानदनाय" भक्षणाय, ते हि शत्रूणां प्राणान् भक्षयन्ति। अथ अयमेवमतिप्रभाव इन्द्र इति ज्ञात्वा 'विश्व' सर्वं 'भुवनं' भूतजातं यावत् किञ्चिदविकृत कर्मणि 'भयाते' बिभेति। अथ बिभ्यत् किं करोति? 'इन्द्राय' इन्द्रार्थं 'सुन्वत्' अभिषवम् उचिते काले कुर्वत् 'ऋषये च' ऋत्विजे 'शिक्षत्' दक्षिणा ददते। इन्द्रोऽस्य क्षमादरवदास्ते। सर्वमन्यत् परिहाय य एवम्प्रभाव इन्द्रः, त वयमभिप्रेतार्थसिद्धये स्तुमः॥

निगमप्रसक्तं निराह,—"हवी व्ययनात्" इति। स हि ह्वयते छियते इन्धनार्थम्।

अत्र व्याख्याने गतार्थत्वात् न शेषो विवियते। एवं तावदेकदेशे कृत्स्नवदभिधानं भवतीति प्रदर्शितम्॥

अथेदानीमन्येष्वर्थान्तरेषु गोशब्दोऽभिप्रवृत्तो बहुष्विव्यन्तत् प्रवृत्तो दर्शयति। एतदैकपदिके वक्ष्यमिह तु गोशब्दप्रसक्तमुच्यते,—"आदित्योऽपि गौरुच्यते" एतस्मिन् मन्त्रे।—
उतादः परुषे गवि सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः"

(ऋ० स० ४, ८, २२, ३)। भरद्वाजस्येयमार्षम्। गायत्री। पौष्णी। पूषा पुनरादित्यो नैरुक्ताना दृष्ट्या, अन्यत्र ह्य वै पूषेति भूमिरुच्यते। "उताद" 'उत' अपि, अथ इति छन्दसि समानार्थौ। अपि त्वक्रमीरय, अपि रसानादत्ते, आप तमास्यपहन्ति। 'अद' अमुष्मिन् आदित्यमण्डले पर्वणि' पर्वभिस्तद्दति। अथवा भासति, भासा तद्वतीति। अहो रात्रादि पर्व तद्वतीत्यौपमन्यव। 'गवि' गमनशीले मुहूर्त्त-मप्यनवस्थायिनि 'सूर' सूर्य्ये अवस्थित। पूषा आदित्य-मण्डलान्त पुरुष, तदेव पर्ववत् भास्वद् वा। 'चक्र' चकन क्रमण वा गमनशील मण्डल 'हिरण्यय' तेजोमय चक्र चक्राकृति। 'न्यैरयत्' नियतगमनवृत्तिना मार्गेण नित्य कालमीरयति। उदयास्तमयमध्यन्दिनकालोपलक्षणार्थम। अथवा अमुष्मिन् मण्डलेऽवस्थित., पर्ववति मण्डलान्त पुरुष सूर्य्यो भगवान्। 'चक्र' लवक्षणनिमेषत्रुटिमुहूर्त्ताहोरा-त्रार्द्धमासमासत्त्वयनसंवत्सरलक्षण काल चक्र सर्वभूतहारि हिरण्यय' हिरण्मय सर्वभूतविनाशस्थितिहेतु 'न्यैरयत' नित्यमीरयति। कीदृश पुन स सूर्य्याय ईरयति "रथी तम अन्येऽपि रथिन सन्ति, अयन्तु मुहूर्त्तमप्यनवस्थितत्वा दत्यतो रथीतम। स एवङ्गुणक पूषा, त वयमभिप्रेतार्थ सिद्धये स्तुम॥

"अथाप्यस्यैको रश्मिश्चन्द्रमस प्रति दीप्यते"। एको रश्मिरादित्यस्य सुषुमणो नाम, चन्द्रमस प्रत्यवस्थितो दीप्यते। "तदेतेन" मन्त्रार्थविदा मन्त्रानुपेत्य "ईचितव्यम" द्रष्टव्यम। सैयमस्य चन्द्रमसो "दीप्ति" ज्योत्स्ना प्रत्ययम "आदित्यत" आदित्यस्य अनुग्रहादेव "अस्य भवतीति"। "अस्मदुपरि यत्र

न्द्रमसो मण्डलं तत्तेजःसम्बन्धाद् दीप्तिमद् भवति, ततः सर्वा दिशः प्रकाशयति।

यथा चैतदेवं तथा "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" सोऽपि गौरुच्यते। "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा॥" (य० वा० स० १८, ४०)। अप्ययमध्यन्ये बहव इत्यपियम्ऽ. । 'सुषुम्ण.' सुष्ठुसुख इत्यर्थ.। सर्वाणि भूतानि नित्यमसौ ह्लादयति। कोऽसौ? इति। 'सूर्यरश्मि' सूर्यादिसत्व चन्द्रमस प्रति गत 'चन्द्रमाः'। 'गन्धर्व.' सति सुषुम्णगमने गोशब्दवाच्यता। 'तस्य' गन्धर्वस्य सतः चन्द्रो धारयिता गन्धर्वसहितस्य प्रतिष्ठा। 'स न इदं' सोऽस्माकमिदं 'ब्रह्म क्षत्रं च' 'पातु' रक्षतु। किञ्च 'तस्मै' सुषुम्णाय सूर्यरश्मये 'स्वाहा' सु शोभनमिदमाभिमुख्येनाह, हविराज्यलक्षणमस्तु। स चेद 'वाट्' वेत्तु पिबत्वित्यर्थ.।

"सोऽपि" सुषुम्णो रश्मिरेक एव "गौ"—इति "उच्यते" यथासौ गोस्तथेदमुदाहरणम्,—"अत्राह गोरमन्वतेति"। "तत्" पुनरेतत् "उपरिष्टात्" ऐकपदिके "व्याख्यास्याम"।

"सर्वेऽपि रश्मयो गाव उच्यन्ते"। यथैतदेव तथेयमुदाहरणम्,—॥ २॥

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि। तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो बहु-

शृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वाया-सोऽयनास्तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्द्धस्थमवभाति भूरि पादः पद्यते-स्तन्निधानात्पदं पशुपादप्रकृतिः प्रभागपादः प्रभागपादसामान्यादितराणि पदान्येवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते तानि चेत् समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानीतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या सन्दिह्यते तयोर्विभागस्तस्या एषा भवति ॥ ३ ॥

"ता वां वास्तूनि"—इति । दीर्घतमस आर्षम् । वैष्णवी । त्रिष्टुप् । यूपावधाने विनियुक्ता, सोमातिरेकग्रहे च । वामिति दम्पतीत्यभिप्रेत्य द्विवचनम् । 'ता' "तानि "वां" युवाभ्यामर्थाय "वास्तूनि" निवासस्थानानि 'उश्मसि' "कामयामहे" । 'गमध्यै' "गमनाय" "यत्र" येषु स्थानेषु । किम् ? "गावः" रश्मयः । 'भूरिशृङ्गाः' "बहुशृङ्गाः" बहुदीप्तयः 'अयासः' अयनाः मुहूर्त्तमप्यनवस्थायिनः । किञ्च, 'अत्राह' एषु स्थानेषु 'तत्' पदम् 'उरुगायस्य' उरुगमनस्य महात्मनः

भगवतो 'वृष्णः' "विष्णोः" 'परमं पदम्' आदित्यमण्डलं स्थानम्। स्थाने हि पदसञ्ज्ञा, पदस्थ इति लोकेऽपि वक्तारो भवन्ति। 'अवभाति' अर्वागिदं सर्वं कृत्वा भाति दीप्यते। भूरि बह्वित्यर्थ। इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"भूरीति" एतत् "बहुनो नामधेयम्"। "प्रभवति" हि तद् बहुधापि दीयमानम्। "शृङ्गं श्रयतेः" तदाश्रितं भवति शिरसि। "शृणातेर्वा" हिंसार्थस्य। तेन हि हिनस्ति। "शिरसो निर्गतमिति वा" शृङ्गं परमेऽर्द्धे-ऽश्रित पराद्ध्यस्थम्। अथवा परमद्वां युक्ते स्थाने स्थितं परा-र्द्धस्थम्। "पादः पद्यतेः" गत्यर्थस्य। पद्यते हि तेन। "तन्निधानात् पदम्" यदुत्पद्यते, तत् सरूपमेव पादो अन्यत्र वा तत् पदमित्युच्यते पशोर्मनुष्यस्य वा। "पशुपादप्रकृतिः" चतुर्भागसामान्यात्। "प्रभागपादः" दीनारादिपादः। "प्रभाग पादसामान्यादितराणि पदानि" ग्रन्थपदानि चेत्रपदानि वा। विभागो हि तेष्वपि समान एव। प्रसक्तानुप्रसक्तमिदमुक्तम्॥

अधुनोपसंहरति,—एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते" न केवल गोशब्दे पदशब्दे वा। तेषु हि त्वेतदौत्सर्गिकं निर्वचन लक्षण द्रष्टव्यम्,—"तानि" "चेत् समानकर्माणि" यदि सामान्यक्रियया युक्तानि, ततः "समाननिर्वचनानि" एव कर्त्तव्यानि। अथ पुनः "नानाकर्माणि" ततो "नानानिर्वचनानि"। एवं "यथार्थं निर्वक्तव्यानीति"।

अधुनैवमुक्तोदाहरणैरेव तत्र सन्देहपदान्यनुक्रम्य मन्त्रेष्वेव दर्शयन्नाह,—"इमान्येकविंशति. पृथिवीनामधेयान्यनुक्रान्तानि"। "तत्र निर्ऋतिर्निरमणादृच्छतेः. कृच्छ्रापत्तिरितरा"। लोके चोद सर्वभूतजातमन्तर्भूतं यदभिधानानि

यदाश्रयक्रियावचनाश्च शब्दा निघण्टव उच्यन्ते, तेषाञ्च पृथिवी प्रथमा, तस्मात् तत आरम्भः। एकविंशतिरिति संख्या (२१)। पृथिवीनामधेयानि, स्वार्थे धेयप्रत्ययः, नामैव नामधेयम्। अनुक्रान्तानि, आनुपूर्व्येण पठितानीत्यर्थः। एकविंशतिर्यान्यनुक्रान्तानि, एभ्योऽन्यान्यपि यानि कानिचित् स्युः, तान्युपलभ्य निर्वक्तव्यानि। तद्यथा,—ज्मा इत्येतदसमाम्नातम् पृथिव्या नामधेयम्। उक्तं हि,—'नाग्निश्चित्ररक यतति न सत्पुत्रो न कुमदः'—इति। तत्रैतस्मिन्नेकविंशके गणे "निर्ऋतिः" इत्येतदभिधानम्। "निरमणात्" निविष्टानि रमन्तेऽस्यां भूतानीति निर्ऋतिः पृथिवी। रमेर्धातोः (भू० आ०)। "ऋच्छतेः (तु० प०)" "इतरा" "कृच्छ्रापत्तिः" दुःखसञ्ज्ञका, निर्ऋतिः पापा। "सा" पुनरियं समाननामधेयत्वात् समानश्रुतित्वात् "पृथिव्या सन्दिह्यते"। "तयोः" समाननामधेयत्वेऽपि सति एष कर्मकृतो "विभागः"—एका निविष्टानां भूतानां रमयित्री, एका पुनः कृच्छ्रमापादयित्री। एवं नानाकर्माण्यभिधानानि निर्वक्तव्यानि॥

"तस्याः" कृच्छ्रापत्तेः पृथिव्या अपि "एषा" निर्वाचिका ऋग् "भवति"—॥ २॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्। स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश। बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजका वर्षकर्मेति नैरुक्ता य ईं चकारेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा न सो अस्य वेद मध्यमः स

एवास्य वेद मध्यमो यो ददर्शादित्योपहितं स मातुर्योनौ मातान्तरिक्षं निर्मीयन्तेऽस्मिन् भूतानि योनिरन्तरिक्षं महानवयवः परिवीतो वायुनायमपीतरो योनिरेतस्मादेव परिवृतो भवति बहुप्रजा भूमिमापद्यते वर्षकर्मणा शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति तस्मै देवतोभयलिङ्गा प्रादुर्बभूव तान्न। जज्ञे तां पप्रच्छ विविदिषाणि त्वेति सास्मा एतामृचमादिदेशैषा मद्देवतेति ॥ ४ ॥

"य ईं चकार"—इति। दीर्घतमस आर्षम्। त्रिष्टुप्। महाव्रते वैश्वदेवे शस्त्रे शस्यते। "अय स शिङ्क्ते"—इतीयमपि तथैव समानार्षविनियोगा। जगती। द्वे अप्येते अस्यवामीये। कश्चित् "बहुप्रजाः" बहुपत्यो दरिद्रः पुरुषः स दुष्पोषत्वादपत्यानां व्यापन्नत्वात् "कृच्छ्रे" दुःखम् "आपद्यते"। सा या तस्य कृच्छ्रापत्तिः, सैवैतस्यामृचि निर्ऋतिशब्देनोच्यते "इति" एष "परिव्राजकाः" परिव्राजकानामस्यामृचि सम्प्रत्ययोऽर्थः॥

स एष विस्तरेण प्रदर्श्यते।—'यः' 'चकार' करोति 'ईं' गर्भं 'न सः' 'अस्य' गर्भस्य तत्त्व 'वेद' केवलं त्वसौ कामार्त्तः पुत्रार्थी वा करोत्येव गर्भम्। 'यः ईं ददर्श' यश्चैनं पश्यति 'हिरुग्' अन्तर्हितमेतस्मिन् जठरे, एतस्मिन् वा शरीरे। 'ईं नु' जन्तुम्। 'तस्मात्' तस्यैव एष गर्भो याथात्म्यतः प्रत्यक्षो भवत्यध्यात्मशास्त्रदृष्ट्या, नेतरस्य गर्भकर्त्तुः। 'सः'

पुनरेषः गर्भो 'मातुर्योनौ' गर्भाशयस्थाने 'अन्तः' उदरे पुष्यति, स मातुरशितपीतलीढभक्षितेन चतुर्विधाहारपरिणामेन ततः 'परिवीतः' जरायुणा परिवेष्टितो यथाकालं जायते। अथैवं 'बहुप्रजाः' बहुशः प्रजायमानः स गर्भकर्त्ता गर्भतत्त्वमजानानः 'निर्ऋतिं' दुःखम् 'आविवेश' आविशतीत्यर्थः। एवं गर्भतत्त्वापरिज्ञानात् यो गर्भं करोति स दुःखमापद्यते, यस्तु अध्यात्मदृष्ट्या गर्भतत्त्वं वेद, स गर्भकर्मणो निवर्त्तते, स निर्ऋतिं नापद्यते। एवमस्यामृचि निर्ऋतिर्देवतेत्येष परिव्राजकार्थः॥

अन्ये तु ब्रुवते,—यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहुषु प्रजायमानो जन्ममरणसन्तानानुभवविशां निर्ऋतिमाविशति। यो रेतः सिञ्चति, तद्रूपी भूयो जन्मान्तरेषु बहुशः प्रजायमानो जन्ममरणसन्तानाननुभवतीत्युक्तम्।

"वर्षकर्मेति नैरुक्ताः" वर्षकर्मैतदुच्यते। निर्ऋतिश्चात्र भूमिरुच्यते। एवं नैरुक्ता मन्यन्ते। यः करोति वर्षं, यो वा किरति क्षिपति। कः पुनरसौ? मेघः। स हि वर्षस्य कर्त्ता विक्षेप्ता वा। मेघाद्धि वर्षं प्रवर्त्तते। किं तस्य? न सोऽस्य वर्षस्य तत्त्वं "वेद" यो ददर्श यः पश्यति "आदित्योपहितम्" आदित्यस्य रश्म्यन्तर्गतं वर्षमनभिव्यक्तम्। क्वासौ अन्तर्गतः? प्रावृट्काले वर्षभावेनाभिव्यक्तो बहुप्रजाः बहुशः प्रजायमाना निर्ऋतिं भूमिमाविशतीति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"करोतिकिरती सन्दिग्धौ" धातू "वर्षकर्मणा" सम्बध्येते। उभयथा ह्युपपद्यते,—यः करोति यो वा क्षिपति। "माताऽन्तरिक्षम्" एतस्मिन् हि "भूतानि" "निर्मीयन्ते"। एतद्दवकाशदानेन विशिष्टमुपकारं करोति। भूतानां जायमानानां "योनिरन्तरिक्षम्" आकाशस्यैष प्रदेश-

विशेषः कश्चित्। स वायुसंयुतः सन् उदकयोनिभावं पुष्णाति। तदेतत् "वायुना" तस्य सहवत्त्वं दृष्टोक्तम्,—"परिवीतः" भवति। इति शब्दसारूप्यप्रसक्तमुच्यते,—"अयमपीतरः" स्नीयोनिः "एतस्मादेव"। असावपि "परियुतः" एव "भवति" स्नावना मांसेन च॥

एवमेतस्मिन् मन्त्रे, नैरुक्तानां निरुक्तिसामर्थ्येन भूमिरुच्यते, परिव्राजकानां कृच्छ्रापत्तिः। तदेवं मन्त्रेषु शब्दगतिविभुत्वादुभयमप्युपपद्यत एव। तद्यथा,—"दधिक्राव्णो अकारिषम् (ऋ॰ सं॰ ३, ७, १३, ६)"—इत्येष मन्त्रः, अग्न्युपस्थाने अग्निहोत्रे, अयमेव चाग्निष्टोमे "दधिक्राव्णो अकारिषमित्याग्नीध्रे दधि भक्षयन्ति (आ॰ सू॰ ६, १२)"—इति दधिभक्षणे, तथाचाश्वमेधे "दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जपन्ति"—इत्यश्वसन्निधापितं पत्नी जपन्ति सहिष्यामुत्थितायाम्। तत्रैवं सति प्रतिविनियोगमस्यान्योऽर्थेन भवितव्यम्। त एते वक्तुरभिप्रायवशादन्यत्वमपि भजन्ते मन्त्राः, न हि एतेषु अर्थस्येयत्तावधारणमस्ति, महार्था ह्येते दु परिज्ञानाय। यथाश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति, एवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति।

तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिच्च आध्यात्माधिदैवाधियज्ञोपदर्शनार्थः। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्—आधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः, नात्रापराधोऽस्ति॥

एवमेव सन्देहाधिकारमुपजीवन्नाह—"शाकपूणिः सङ्कल्पयाञ्चक्रे,—सर्वा देवता जानामीति"। शाकानि यः पूणयति संहन्ति, स शाकपूणः, तस्यापत्यं शाकपूणिः आचार्यः। स

सङ्कल्पयाञ्चक्रे, सङ्कल्पं कृतवान्। किम्? इति। सर्वा देवता जानामीति। "तस्मै" सङ्कल्पमेवं कृतवते "देवतोभयलिङ्गा" स्त्रीपुंलिङ्गा, अथवा मध्यस्थानलिङ्गा द्युस्थानलिङ्गा च "प्रादुर्बभूव"। "तां" पुरतोऽवस्थितां सतीं "न जज्ञे" न ज्ञातवान्, —किमियं स्त्री स्यादथवा पुरुष इति, अथवा किमियं मध्यस्थाना अथवा द्युस्थानेति। "ताम्" अजानन् "पप्रच्छ" "विविदिषाणि त्वा"। वेदितुमिच्छामि त्वाम्,—किमसि पुरुषः अथवा स्त्री? इति, अथवा किमन्तरिक्षस्थाना अथवा द्युस्थाना? इति। "सा" एवं पृष्टा सती "अस्मै" शाकपूणये "एतामृचम्" "आदिदेश" आदिष्टवती। किम्? इति। "एषा मद्देवतेति", अस्यामृचि अहं देवतेति, तस्य नैरुक्तः मामेतस्या ऋचः सकाशादर्थावगत्यावधारयेति—॥४॥

अ॒यं स शि॑ङ्क्ते॒ येन॒ गौर॒भीवृ॑ता॒ मिमा॑ति मा॒युं ध्व॒सना॒वधि॑ श्रि॒ता। सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्यं॑ वि॒द्युद्भव॑न्ती॒ प्रति॑ व॒व्रिमौ॑हत॥ अयं स शब्दायते येन गौरभिवृत्ता मिमाति मायुं शब्दङ्करोति मायुमिवादित्यमिति वा वागेषा माध्यमिका ध्वंसने मेघेऽधिश्रिता सा चित्तिभिर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिं ववि्ररिति रूपनाम वृणोतीति सतो वर्षेण प्रच्छाद्य पृथिवीं तत् पुनरादत्ते ॥ ५ ॥

इति द्वितीयाध्यायस्य द्वितीयपादः ॥ २, २॥

विशेषः कश्चित्। स वायुसंयुतः सन् उदकयोनिभावं पुष्णाति। तदेतत् "वायुना" तस्य सहवन्तं दृष्टोक्तम्,—"परिवीतः" भवति। इति शब्दसामर्थ्यप्रसक्तमुच्यते,—"अयमपीतरः" स्त्रीयोनिः "एतस्मादेव"। असावपि "परियुतः" एव "भवति" स्नावना मांसेन च॥

एवमेतस्मिन् मन्त्रे, नैरुक्तानां निर्ऋतिशब्देन भूमिरुच्यते, परिव्राजकानां कृच्छ्रापत्तिः। तदेवं मन्त्रेषु शब्दगतिविपुलत्वादुभयमप्युपपद्यत एव। तद्यथा,—"दधिक्राव्णो अकारिषम् (ऋ० सं० ३, ७, १३, ६)"—इत्येष मन्त्रः, अग्न्युपस्थाने अग्निहोत्रे, अयमेव चाग्निष्टोमे "दधिक्राव्णो अकारिषमित्याग्नीध्रे दधि भक्षयन्ति (आ० सू० ६, १३)"—इति दधिभक्षणे, तथा चाश्वमेधे "दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जपन्ति"—इत्यश्वसन्निधावेनं पत्नी जपन्ति तद्विद्यासुत्थितायाम्। तत्रैवं सति प्रतिविनियोगमस्यान्येनार्थेन भवितव्यम्। न एते वक्तुरभिप्रायवशादन्यत्वमपि भजन्ते मन्त्राः, न हि एतेषु अर्थस्येयत्तावधारणमस्ति, महार्था ह्येते दुष्परिज्ञानाश्च। यथाश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति, एवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति।

तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिच्चाध्यात्माधिदैवाधियज्ञोपदर्शनार्थः। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्—आधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः, नात्रापराधोऽस्ति।

एवमेव मन्त्रेष्वधिकारमुपजीव्याह—"शाकपूणिः सङ्कल्पयाञ्चक्रे,—सर्वा देवता जानामीति"। शाकानि यः पूणयति संहन्ति, स शाकपूणः, तस्यापत्यं शाकपूणिः आचार्यः। स

सङ्कल्पयाञ्चक्रे, सङ्कल्पं कृतवान् । किम् ? इति । सर्वा देवता जानामीति । "तस्मै" सङ्कल्पमेवं कृतवते "देवतोभयलिङ्गा" स्त्रीपुलिङ्गा, अथवा मध्यस्थानलिङ्गा द्युस्थानलिङ्गा च "प्रादुर्बभूव" । "तां" पुरतोऽवस्थितां सतीं "न जज्ञे" न ज्ञातवान्, —किमियं स्त्री स्यादथवा पुरुष इति, अथवा किमियं मध्यस्थाना अथवा द्युस्थानेति । "ताम्" अजानन् "पप्रच्छ" "विविदिषाणि त्वा" । वेदितुमिच्छामि त्वाम्,—किमसि पुरुषः अथवा स्त्री ? इति, अथवा किमस्यन्तरिक्षस्थाना अथवा द्युस्थाना ? इति । "सा" एवं पृष्टा सती "अस्मै" शाकपूणये "एतामृचम्" "आदिदेश" आदिष्टवती । किम् ? इति । "एषा मद्देवतेति" अस्यामृचि अहं देवतेति, त्वञ्च नैरुक्तः मामेतस्या ऋचः सकाशादर्थावगत्यावधारयेति—॥४॥

अ॒यं स शि॑ङ्क्ते॒ येन॒ गौर॒भीवृ॑ता॒ मिमा॑ति मा॒युं॑ ध्व॒सना॒वधि॑श्रि॒ता । सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्यं॑ वि॒द्युद्भव॑न्ती॒ प्रति॑ व॒व्रिमौ॑हत ॥ अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुं शब्दङ्करोति मायुमिवादित्यमिति वा वागेषा माध्यमिका ध्वंसने मेघेऽधिश्रिता सा चित्तिभिर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिं वव्रिरिति रूपनाम वृणोतीति सतो वर्पेण प्रच्छाद्य पृथिवीं तत् पुनरादत्ते ॥ ५ ॥

इति द्वितीयाध्यायस्य द्वितीयपादः ॥ २, २ ॥

कतमा पुनरसावृग्? इति। उच्यते,—"अयं स शिङ्क्ते" —इति। "अयं स शब्दायते" स एव मेघः शब्दं करोति। येन मेघेन किं कृतम्? इति। 'येन गौरभीवृता' येन माध्यमिका वागभिप्रच्छादिता सती "मिमाति मायुं" निर्मिमीते निर्वर्त्तयति मायुम्, "शब्दं करोति" इत्यर्थः। "मायुः, काकुत्"—इति च वाङ्नामसु पठितम्। अथवा मायुरादित्यो भवति, सर्वभूतनिर्माता। तमिवात्मानं निर्मिमीते। क्वावस्थितः? "ध्वसने" उदकध्वंसने उदकस्रंसने मेघे "अधिश्रिता"। अत्र तावदेतयर्चा मेघान्तर्वर्त्तिन्या वाचो व्यक्तविद्युद्रूपाया अभिधायकः, मेघरूपत्वात् पुरुषत्वाभिप्रायः। अथवायमुत्तरस्त्रीत्वाभिप्रायः। यैवंलक्षणा वा कर्मस्वरूपा, मेघशरीरा वा। 'सा चित्तिभिः' चटचटाशब्दकर्मभिः 'नि हि चकार' नीचैः करोति 'मर्त्यं' मनुष्यम्। सर्वो हि बिभ्यत्तस्या आमीदति अवनमति च। कदा पुनर्निकरोति मर्त्यम्? इति, उच्यते—"विद्युद् भवन्ती" इति, विद्युदात्मना रूपात्स्वे नाभिनिर्वर्त्तमाना, तदा हि दारुणचटचटाशब्दो भवतीति विशेषेण भयङ्करम्, न तथा विद्युद्रहितः। सैवमात्मानमाविष्कृत्य विद्युद्रूपेण विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीम्। ततो वर्षव्युपरमे "प्रति" 'औहत' "ऊहते" "वव्रिम्" प्रत्युपसंहरति रूपमात्मीयमदृश्यं करोतीत्यर्थः। "वव्रिरिति रूपनाम" तद्व्याहृत्या समाश्रयं वर्त्तते। यस्मिंस्तु पक्षे मध्यस्थानलिङ्गा द्युस्थानलिङ्गा वेति तस्मिन् पक्षे मेघरूपत्वमविवक्षितम्, मेघवाचो विद्युद्रूपत्वञ्च। किन्तु एतावद् विवक्षितम्,—मेघाश्रया शब्दवती भूत्वा माध्यमिका वाक् विद्युदात्मना स्थिता वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकं पङ्कभूतं जलाशयेभ्य आदित्यात्मना स्थिता—पुनरादत्ते,

विद्युदात्मना मध्यस्थाने स्थित्वा वर्षति, आदित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः। वक्ष्यति हि,—"त्रेधाभावाय पृथिव्या मन्तरिक्षे दिवि (टी० १२, २, ८)"—इति ॥

सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा, मध्यस्थाना वाऽऽदित्यरूपा, इत्ययमेवंलक्षणो देवतातत्त्वसन्देह उपेक्षितव्यो मन्त्रदर्शनाच्च निर्वक्तव्य इत्ययं मन्त्रमन्त्रे पार्थः ॥

सा पृथिव्या सन्दिह्यत इत्यनेन सन्देहसामान्येनोदाहृतमिदमत्र मतं शाकपूणेरित्येवमादि ॥

अनुक्रमस्त्वधिकृतम्। तस्मिन् गोशब्दे एको निर्वकः प्रकारोपदर्शनार्थम्, इतराण्यभ्यूह्य निर्वक्तव्यानि। तद्यथा,—'ग्मा' गमनात्, यस्या गच्छन्ति भूतानि, 'ज्मा' जमनात्, जमन्ति गच्छन्ति यस्यां भूतानि,—इत्येवमादि ॥

नैघण्टुकांस्तु याञ्छब्दान् प्रत्यर्थगणसंस्थितान्।
छन्दोभ्योऽन्विष्य तत्त्वार्थान् निर्ब्रूयाद् योगतस्तु तान् ॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

तृतीयः पादः ।

हिरण्यनामान्युत्तराणि पञ्चदश हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृर्यतेर्वा स्यात् प्रेप्साकर्मणोऽन्तरिक्षनामान्युत्तराणि षोडशान्तरिक्षं कस्मादन्तरा क्षान्तं भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षयमिति

वा तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः सम्मोदन्तेऽस्मिन् भूतानि समुद्को भवति समुनत्तीति वा तयोर्विभागस्तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः स शन्तनुः कनीयानभिषेचयाञ्चक्रे · देवापिस्तपः प्रतिपेदे ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति स शन्तनुर्देवापिं शिशिक्ष राज्येन तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति ॥ १ ॥

"हिरण्यनामान्युत्तराणि पञ्चदश"। हिरण्यस्य नामान्युत्तराणि। कुत ? प्रकृतेभ्यः पृथिवीनामभ्यः, पृथिव्यामेव हिरण्यमुत्पद्यत इत्यतः पृथिव्यभिधानानन्तरं हिरण्यनामानि समाम्नातानि। कियन्ति पुनस्तानि ? पञ्चदश, पञ्च च दश च पञ्चदश। यानि समाम्नातानि। असमाम्नातान्यपि सन्ति,—हाटकसुवर्णचामीकरशातकुम्भादीनि। कतमानि पुनस्तानि समाम्नातानि ? इति। उच्यते,—"हेम, चन्द्रं, रुक्मम्"—इत्येवमादीनि। हित ममेदमिति सर्वं एवैतन्मन्यते, तस्माद्धेम। चन्द्रम्, चदते कान्तिकर्मणः, सर्वं एव ह्येतत्

कामयते । रुक्मम्, रोचतेर्ज्वलनार्थस्य, तद्धि रोचिष्णुर्भवतीति । एवमूहितव्यं सर्वत्र निर्वचनम् ॥

आह,—"हिरण्यं कस्मात्" ? उच्यते,—"ह्रियते आयम्यमानमिति वा"। आयम्यमानं ह्रियत एव शिल्पिभि, कटककचकस्वस्तिकादिभावेन विस्तीर्य्यमाणम्। "ह्रियते जनाज्जनमिति वा"। तेन हि व्यवहारः क्रियते। ततस्तैस्तैरावतिष्ठते, ह्रियत एव सर्वदा। "हिततरमणं भवतीति, वा"। यस्य हि तद् भवति, तस्य हितञ्च दुर्भिक्षादिषु, तद् भवति रमणञ्चेति। तेन गृहीतेन मूषिकोऽपि रमते, किमुत मनुष्यः। "हर्य्यतेर्वा स्यात् प्रेप्साकर्मण." तद्धि सर्वैरेव प्रार्थ्यते लोकानुक्रमेणैव ॥

"अन्तरिक्षनामान्युत्तराणि षोडश"। षट् च दश च षोडश कतमानि पुनस्तानि ? "अम्बरं, वियत्, व्योम"—इत्येवमादीनि। अम्बरमम्बुमद्भवति। नानाभावेन सर्वतो वियतमिति वियत्। नानाप्रकारमेतदयति भूतानीति व्योम्। एवमाद्यभ्यूहितव्यम्।

आह,—"अन्तरिक्षम्" एव तावत् "कस्मात्" ? उच्यते,—"अन्तरा" क्षीद द्यावापृथिव्योरवस्थितम, "चान्त" च "भवति" पृथिव्यन्तमित्यर्थः। अथ "वा" "अन्तरा" "इमे" द्यावापृथिव्यौ क्षियति निवसति "इति" अन्तरिक्षम्। अथ "वा" "शरीरेषु" एतदेव "अन्तर्" मध्येऽवस्थितम् "अक्षयम्"। इतराणि पृथिव्यादीनि भूतानि क्षीयन्ते तस्मादक्षयत्वादन्तरिक्षम् ॥

"तत्र" तस्मिन् षोडशके अन्तरिक्षनामसमुदाये "समुद्र इत्येतत्" अभिधानमुभयाभिधानम्। उभयाभिधायित्वात्

"पार्थिवेन समुद्रेण" एतेन जलाशयेन "सन्दिह्यते" एतदत्र सन्देहपदम्।

आह,—"समुद्रः कस्मात्"? इति। उच्यते,—"समुद्द्रवन्त्यस्मादापः" वीचितरङ्गशीकरादिभावेन। "समभिद्रवन्त्येनमापः" सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति, स हि निम्नो भवति। "सम्मोदन्तेऽस्मिन् भूतानि" संहृष्यन्ति जलचराणि सत्त्वानि, बहूदकत्वात्। "समुदको भवति"। उद इत्युदकनाम, तदस्मिन् संहतमिति समुद्रः। "समुनत्तीति वा" सङ्क्लेदयतीत्यर्थः। अतो हि प्रसृतैरम्भोभिः सर्वमिदं सङ्क्लिद्यते। "तयोर्विभागः"।

यस्मिन्नुदाहरणे लभ्यते, "तत्र" "इतिहासमाचक्षते" आचार्य्याः। निदानभूतः 'इति हैवमासीत्'—इति य उच्यते स इतिहासः। कतमः पुनरसौ? इति। उच्यते,— "देवापिश्चार्ष्टिषेणः" इत्येवमादीनि। देवापिश्चार्ष्टिषेणः, "शन्तनुश्च" आर्ष्टिषेण एव "कौरव्यौ" कुरुवंशप्रभवौ "भ्रातरौ बभूवतुः"। तयोरेको यः "कनीयान्" "शन्तनुः" नाम, "स" आत्मानम् "अभिषेचयाञ्चक्रे" अभिषेचितवानित्यर्थः। सोऽभिषिक्तः सन् राजा बभूव, इतरः पुनर्ज्येष्ठः "देवापिस्तपः प्रतिपेदे"। स किल तीव्रेण तपसा ब्राह्मण्यमापेदे, विश्वामित्रवत्। "ततः" तेनापचारेण ज्येष्ठातिक्रमजेन "शन्तनोः" "राज्ये" राष्ट्रे "द्वादश वर्षाणि देवो न ववर्ष"। अवर्षति देवे "तं" शन्तनुम् "ऊचुः" उक्तवन्तः "ब्राह्मणाः"—"अधर्मस्त्वया चरितः"—"ज्येष्ठं भ्रातरम्" "अन्तरित्य" अतिक्रम्य "अभिषेचितम्"। अभिषेक आत्मनः कारितो यतस्त्वया, "तस्मात्" तेन मर्य्यादातिक्रमेण "ते" तव राज्ये "देवो न

वर्षति" प्राप्तकालं प्रतिपद्यस्व—"इति"। "स." एवमुक्तः "शन्तनुः" "देवापिं" "शिशिच" पुनः पुनः प्रशास अभिगमितवानित्यर्थः। कथम्? "राज्येन" अभ्युद्यतेन। अर्थ्यमानः "देवापिरुवाच" काममहं "पुरोहितस्ते" "असानि" भवानि "याजयानि च" "त्वा" त्वां वार्षिकेण कर्मणा। न च राजा भविष्यामि, भवानेवास्तु राजेत्यभिप्रायः॥

"तस्य" देवापेः "एतद् वर्षकामसूक्तम्" प्राविरभूत्। तत्र. "तस्य" समुद्राभिधानसन्दिग्धस्य प्रविभागोपदर्शनाय "एषा" निर्वाचिका ऋग् "भवति" ॥ १ ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्। स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि। आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा सेना सेश्वरा समानगतिर्वा पुत्रः पुरु त्रायते निपरणाद्वा पुं नरकं ततस्त्रायत इति वा होत्रमृषिर्निषीदन्नृषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च देवसुमतिं देवानां कल्याणीं मतिं चिकित्वांश्चेतनावान्। स उत्तरस्मादधरं समुद्रमुत्तर उद्गततरो भवत्यधरोऽ-

धोरोऽधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा। तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

"आर्ष्टिषेणः ऋष्टिषेणस्य पुत्र, इषितसेनस्येति वा"। अन्यकल्पान्तरीणोऽन्यकल्पान्तरीणस्यैव शन्तनोर्वर्षार्थेऽये कर्मणि होतृत्वे वृतः 'होत्रं' कर्म प्रति 'निषीदन्' उपविष्टवान्। ततोऽपि "देवापि." नाम नाम्ना "देवसुमतिं" देवानां कल्याणीं मतिमुदकसम्प्रदानाभिमुखीं कर्त्तुं "चिकित्वान्" जानानः। स हि तथाऽस्तौत्, यथा देवानामुदकसम्प्रदानाभिमुखी मतिरभूत्। ततः परितुष्टेषु देवेषु 'सः' देवापिः 'उत्तरस्मात्' अन्तरिक्षात् समुद्रात् 'अधरं' समुद्रं पार्थिवं प्रति। एष विभागः समुद्रयोः। 'अपो दिव्याः' प्रशस्ताः शस्यसम्पत्करीः 'अस्रुजत्' अचारयत्। किंलक्षणाः? 'वर्ष्या.' वर्षभूताः 'अभि' सर्वभूतानामुपरि। स देवाप्यधिकारे वर्त्तमान एतदकरोत्। अन्यस्मिन् कल्पेऽपि देवापिसंमाख्येतद्देवास्विल्येव वर्त्तमानेनाभिसम्बध्यत इति समस्तार्थः।

अथैकपदनिरुक्तम्।—ऋष्टिरायुधविशेषः, तद्बहुला सेना यस्य, सोऽयमृष्टिषेणः। इषितसेनो वा नित्यमेव प्रेषितसेनः शत्रून् प्रति। "सेना, सेश्वरा"। इनेनेश्वरनाम, तेन हि सा नित्यमेव संयुक्ता भवति। "समानगतिर्वा" समानमेकमर्थमुद्दिश्य जयाद्यमेतीति सेना। "पुत्र, पुरु त्रायते" बह्वपि यत् पित्रा पापं कृतं भवति, ततोऽयं त्रायते पुत्रः। "निपरणाद्वा" निपृणाति निददाति स्वामी पिण्डान् पितृभ्य इति पुत्रः। अथवा "पुम्" इति "नरक" नरकस्थानमुच्यते, "ततस्त्रायत इति वा" पुत्रः। "ऋषिर्दर्शनात्" पश्यति

असौ सूक्ष्मानर्थान्। "स्तोमान् ददर्शौपमन्यव"। मन्त्रा स्तोमा, तानसौ तारकेण ज्ञानेन पश्यतीति "औपमन्यव" आचार्यो मन्यते। ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति,— "तद्यदेनांस्तपस्यमानान् ब्रह्म०" इत्यादि। 'तत्' एतत। उच्यते,—यत्तृतमृषीणामृषित्वम्। 'यत्' यस्मात् 'एनान' तपस्यमानान् तप्यमानान् 'ब्रह्म' ऋग्यजुःसामाख्य 'स्वयम्भु' अकृतकम् अभ्यागच्छत्, अनधीतमेव तत्त्वतो ददृश तपोविशेषेण। 'तदृषीणामृषित्वम्'—इत्येव ब्राह्मणोऽपि "वि" विचार्यमाण "ज्ञायते"। "देवापि, देवानामाप्त्या" स हि स्तुतिभिर्देवानाप्नोति, हविःसम्प्रदानेन च। "उत्तर, उद्गततर उद्गततरो भवति" उपरिष्टादवस्थानात्। "अधर" अधोर."। किमुक्तं भवति? अध एवासौ चरति। "अध" पुन "न धावति"। तस्य ह्यधोगतित्वादेव "ऊर्ध्वगति प्रतिषिद्धा"॥

"तस्योत्तरा भूयसे निर्वचनाय"। किमुक्तं भवति? 'तस्य' एवार्थस्य प्रकृतस्य यथोत्तरस्मात् समुद्राद् वृष्टिमयाचत देवेभ्यो देवापि, यथा च पौरोहित्यमकरोत्, यथा वा अयाजयच्छन्तनुं वर्षार्थी, येन कर्मणा। 'भूयसे' बहुतराय 'निर्वचनाय' 'उत्तरा' एषा—॥ २॥

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्। देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्॥ शन्तनुः शं तनोऽस्त्विति वा शमस्मै तन्वा अस्त्विति वा पुरोहितः पुर एनं दधति होत्राय

वृतः कृपायमाणोऽन्वध्यायद्द्देवश्रुतं देवा एनं शृण्वन्ति वृष्टियाचिनं रराणो रातिरभ्यस्तो बृहस्पतिर्ब्रह्मासीत् सोऽस्मै वाचमयच्छद्द् बृहदुपव्याख्यातम् ॥ ३ ॥

इति द्वितीयाध्यायस्य तृतीयः पादः ॥२, ३॥

यद् देवापिरिति । 'यत्' यस्मात् 'देवापिः' 'शन्तनवे' राज्ञे "पुरोहितः" पुरोहितो ह्यावग्निकर्मणि व्याप्रियते, स पुरोहितः सन् देवापिः "होत्राय" होतृकर्मणे वर्षार्थाये कर्मणि "वृतः" सन् 'कृपयन्' "कृपायमाणः" राज्ञः 'अदीधेत्' "अन्वध्यायत्" वृष्टिर्भवेदिति । तं "देवश्रुतं" देवापिमेनं 'वृष्टिवनि' "वृष्टियाचिनं" "रराणः" अददत् । "बृहस्पतिः" तस्मिन्नेव कर्मणि "ब्रह्मा आसीत्" ब्रह्मत्वेऽवस्थितः । "सः" "अस्मै" वर्षसाधिकां "वाचम्" "अयच्छत्" अददित्यर्थः । तया वाचा तदनुगृहीतया देवान् स्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः ।

अथैकपदनिरुक्तम् ।—"शन्तनुः" कस्मात् ? इति । उच्यते, —स हि कञ्चिद्रोगार्त्तं दृष्ट्वा ब्रवीति हि "तनोः शं" तव "अस्तु इति" ततोऽसावगदो भवति । अथ "वा" "शमस्मै तन्वा अस्त्विति" एवमसावायास्ते । शमिति सुखनाम । तनुः शरीरं तदस्मै नित्यं शरीरायायास्ते । "पुरोहितः" शान्तिकपौष्टिकाभिचारिकेषु कर्मसु "पुर एनं दधति" राजानः पुरस्कुर्वन्तीत्यर्थः । "देवश्रुतं" "देवाः" हि "एनं" स्तुतीरुच्चारयन्तं "शृण्वन्ति" इति देवश्रुत्, तं देवश्रुतम् । "रराणः" इति "रातिः" दानार्थः "अभ्यस्तः" ।

"बृहदुपव्याख्यातम्"। "बृहदिति महतो नामधेयम्, परिवृढं भवति" इति। मन्त्रनिदानद्वारेण धर्मोऽयमत्र दर्शितः। ज्येष्ठे तिष्ठति कनीयसो राज्यप्राप्तिर्धर्मातिक्रमः। धर्मातिक्रमे च देवो न वर्षतीति। निरुक्तपक्षे,—ऋष्टिषेणो मध्यमः, तदपत्यमयमग्निः पार्थिव आर्ष्टिषेणो देवापिः, स शन्तनवे सर्वस्मै यजमानायेति योज्यम्। बृहस्पतिरिति मध्यमः। स्तनयित्नुलक्षणां वाचमित्यर्थः॥ २॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य तृतीयः पादः॥ ३॥

---

॥ चतुर्थः पादः॥

साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्याम आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वादितेः पुत्र इति वाल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्य्यमादितेयमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येत्यथापि मित्रावरुणयोः। आदित्या दानुनस्पती दानुपती। अथापि मित्रस्यैकस्य। प्र स मित्र मर्त्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेनेत्यपि निगमो भवत्यथापि वरुणस्यैकस्य। अथा वय-

मादित्य उच्यते तत्र । व्रतमिति कर्मनाम वृणोतीति सत इदमपीतरद् व्रतमेतस्मादेव निवृत्तिकर्म वारयतीति सतोऽन्नमपि व्रतमुच्यते यदावृणोति शरीरम् ॥ १ ॥

लोकाभिधानाधिकारेणेदमुच्यते,—"साधारणान्युत्तराणि षट्, दिवश्चादित्यस्य च" इति। समान धियन्ते इति 'साधारणानि' नामानीत्यधिकारो वर्त्तते। अतएव 'उत्तराणि' प्रकृतमपेक्ष्य। किन्तत्र प्रकृतम्? अन्तरिक्षनामानि (१८ पृ०)। तेभ्य इमान्युत्तराणि (२५ पृ०)। कियन्ति पुनस्तानि? 'षट्' (६)। कयो पुन साधारणानि? 'दिवश्चादित्यस्य च'। कतमानि पुनस्तानि? "स्व, पृश्नि, नाक"—इत्येवमादीनि। "यानि त्वस्य" आदित्यस्य "प्राधान्येन" वर्त्तन्ते प्रधानस्तुतिभाञ्जि नामानि,—"सविता" भग, सूर्य्य, पूषा"—इत्येवमादीनि (३८८ पृ०), "तानि उपरिष्टात् (दै० का० ६, २, १—३, ६) व्याख्यास्याम" सप्तदशेऽध्याये। इमानि तु नैघण्टुकानि सस्पृष्टरूपाणि च युनामभि. साक मित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते ।

आह,—"आदित्य" एव तावत् "कस्मात्?" इति। उच्यते,—शृणु। "आदत्ते" असौ "रसान्" रश्मिभिरित्यादित्यः। "आदत्ते भास ज्योतिषाम्" तदुदये हि चन्द्रादीना प्रभानाशो भवत्येव, यद्यपिचमेतत्। "आदीप्तो भासेति वा" सर्वतो होष भाषा आदीप्त आहतो भवति। "अदितेः पुत्र इति वा" अदितिर्देवमाता, तस्या पुत्र, सोऽयमादित्यः अतादित्य इत्युच्यते।

"अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्यमादितेयम्" इति। 'अल्पप्रयोगम्' अल्पविषयम्। 'तु' शब्दो विशेषणार्थः, एतदेवाल्पप्रयोगविषयम्, इतराणि सविढभगपूषादीनि बहुप्रयोगविषयाणि 'अस्य' आदित्यस्य। क्वाल्पप्रयोगविषयम्? 'आर्चाभ्याम्नाये' ऋचो यस्मिन्नभ्युपर्युपर्याम्नाताः, सोऽयमार्चाभ्याम्नायो दाशतयः, तस्मिन्नल्पप्रयोगविषयम्। एतदादितेः पुत्रत्वाभिप्रायमभिधानम्। आदितेय इति 'सूक्तभाक्', एव चैतदभिधानम्, न हविर्भाक्, न ह्यादितेय इत्यनेन नाम्ना हविराध्वर्यवे चोदितपूर्वमस्ति। यथा त्वेतत् सूक्तमेव नैघण्टुकत्वया भजते, तथेदमुदाहरणम्,—'सूर्यमादितेयम्' इति "युदेदेमु मर्दयुर्निर्यासः (ऋ० सं० ८, ४, १२, १)"—इत्यस्यामृचि। अन्ये तु मन्यन्ते,—आदित्य इत्येतदेवाल्पप्रयोगमिति। तत्र त्वेतद् विरुध्यते,—सूक्तभागिति। हविरपि ह्यनेनाभिधानेन चोद्यते,—"आदित्यं चरुरूपमालभत" —इति। "तत्र च पश्चोरेतत् पलर्वमादित्यो देव उदगात् पुरस्तात्"—इति। अथ चैवमन्यथा वाक्यद्वयविभागेन स्यात्, —अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये आदित्य इति हविर्भाक्, न सूक्तभाक्, अल्पं हविः, सूक्तभाग्विषयमित्यर्थः। इदमन्यत्,—सूक्तमेव नैघण्टुकत्वया भजते, कदाचिदपि हविः। तद्यथा—"सूर्यमादितेयम् (ऋ० सं० ८, ४, १२, १)"—इति।

आदित्यशब्दप्रसङ्गमाह,—एवम् "अन्यासामपि देवतानाम्" इति। देवता यद्यसपर्ये दसुध्यते,—"आदित्याभिधानप्रवादाः स्तुतयो भवन्ति"। "तद्यथा एतत्" उदाहरणजातम्,—"मित्रस्य वरुणस्यार्यमणो दक्षस्य भगस्यांशस्य इति"।

इमा गिरं आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि। शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः।" (ऋ० सं० २, ७, ६, १)।—इत्यस्यामृचि, सर्व एवादित्यप्रवादाः स्तुत्याः स्तूयन्ते।

"अथापि मित्रावरुणयोः" आदित्यप्रवादाः स्तुतयो भवन्ति। तद्यथा,—"आदित्या दानुनस्पती। दानपती"। "ता सम्राजा घृतासुती आदित्या दानुनस्पती। सचेते अनवह्वरम्॥" (ऋ० सं० २, ८, ८, १)। गायत्रीयं गृत्समदेन दृष्टा। अभिप्लवस्य षडहस्य द्वितीयेऽहनि प्रउग नाम शस्त्रम्, तत्र "अयं वां मित्रावरुणा सुतः सोमः (ऋ० सं० २, ८, ७, ४)"—इत्येष तृचः शस्यते, तस्योत्तमा एषा। 'ता सम्राजा' तौ सन्दीप्तौ "घृतासुती" तौ हि घृतमुदकमासुषाते, वर्षकर्मणा जनयतः। 'आदित्या' अदितेः पुत्रौ 'दानुनस्पती' दानानामीशाते तौ यजमानैः सम्यक् स्तुतिभिर्हविर्भिश्च ससेवितौ सन्तौ 'सचेते' प्रतिसंसेवेते यजमानमभिमतैर्दानैः। 'अनवह्वरम्' अनवह्वयमानाविस्यर्थः। यजमानविशेषणं वा युक्तम्। न क्षतघ्नौ, मत्तौ च दातुमित्येवं मित्रावरुणावत्र स्तूयेते॥

"अथापि मित्रस्यैकस्य" आदित्यप्रवादा स्तुतिर्भवति। तद्यथा,—"प्र स मित्र मर्त्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन। न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्॥" (ऋ० सं० ३, ४, ५, २)। अयमप्यन्ये दश्वो निगमा इत्यपिशब्दः। प्र स मित्रेति विश्वामित्र-दृष्टा, त्रिष्टुप्। मैत्रस्य चरोः पुरोऽनुवाक्या। 'प्र अस्तु' प्रकर्षयात्तु भवतु। हे 'मित्र।' 'आदित्य' अदितेः पुत्र। 'स मर्त्तः' स मनुष्यः 'प्रयस्वान्' अन्नवान्। यः किं करोति?

'यः' 'ते' तुभ्यं 'शिक्षति' ददाति 'व्रतेन' कर्मणा, निर्वपण-प्रोक्षणादिना संस्कृत्येदं हविर्लक्षणम्। किञ्च, एवमति-प्रभावस्त्वं येन स मर्त्तो यस्तव यष्टा 'त्वोतः' त्वयाऽभिरक्षितः वर्त्तमानः, त्वया रक्षितः 'न' केनचित् प्रत्यनीकभूतेनातिबले-नापि शत्रुणा 'हन्यते' हिंस्यते। 'न' चाहतोऽपि स च 'जीयते' वशीक्रियते केनचित्। न च केवलं शत्रूणामना-धृष्यः? 'न' 'एनं' त्वोतं सन्तम् 'अंहः' अपि पापमपि 'अश्नोति' व्याप्नोति यत् 'अन्तितः' 'अन्तिकात्' समीपात्, यत् स्वशरीरादेव वाङ्मनश्चेष्टानिमित्तमुत्पद्यते पापम्, तदु-त्पत्तिसमकालमेव त्वदनुग्रहादपध्वस्यते, ततस्त्वेनं न व्याप्नो-ति। न च केवलं यदन्तिके उत्पद्यते, तदेवेन न व्याप्नोति, किन्तर्हि? यदपि 'दूरात्' पुत्रभ्रातृजायादिद्वारेणैवमास्क-न्दति, तदपि 'न' एनम् अभिव्याप्तुं शक्नोति त्वोतं सन्तम्। एवं महानुभावस्त्वम्, ततस्त्वां स्तुमः इत्यभिप्रायः।

"अथापि वरुणस्यैकस्य" आदित्यप्रवादा स्तुतिर्भवति। तद्यथा,—"अथा वयमादित्य व्रते तव" इति। "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो, अदितये स्याम॥" (ऋ० सं० १, २, १५,५।) अनया विष्टुभोपाकृतः शुनःशेपो वरुणं स्तुतवान्, आत्मान मोचयिष्यन्। वरुणप्रघासेष्ववभृथेष्टौ वारुण्यामिक्षायां हविषः पुरोऽनुवाक्येयम्। हे 'वरुण!' त्रिषु स्थानेषु—अधो मध्ये उपरिष्टाच, 'वयम्' आबद्धाः स्वैः पाशैर्यतोऽतो ब्रूमः।—स्तुत्या हविषा चोपसन्नस्त्वमस्माभिस्तावत् 'उत्तमं' 'पाशम्' उपरिष्टादवस्थितम् 'अस्मत्' अस्मत्तः 'उत् श्रथाय' ऊर्ध्वं श्रथय। उत्कृत्य च विमुञ्चास्मानयोऽडयत्। योऽपि चायं 'अधमः' ते पाशः अधस्तात् वर्त्तते, एनम् अर्वाक्षम् 'अव' श्रथय अवमुञ्च।

तथाच योऽव्ययं 'मध्यम.' ते पाशोऽस्मत्सु वर्त्तते, एतमपि तथैवावस्थितमस्मदभिसर्जयन् ऊर्द्ध्वमधो वा मदुःखयवशात् 'वि' श्रथय विमुञ्च। अथैवं त्वया 'वयं' सर्वविमुक्तपाशाः सन्तो हे 'आदित्य'! अदितेः पुत्र! वरुण! 'अनागस.' अपापाः संयुक्तसर्वकिल्बिषा। एतदेव हि योपाकीर्ण पाशवयनाग., तेनावमुक्ताः सन्तः 'तव' एव 'व्रते' तवैव परिचरणकर्मणि 'अदितये' शाश्वनोऽदीनत्वाय अनुपक्षयाय आदरवन्तः स्थिताः 'स्याम' इत्याशीः॥

निगमप्रसक्तमुच्यते।—"व्रतमिति कर्मनाम (१२७ पृ०), "वृणोतीति"। एवं कर्त्तरि कारके "व्रतः" वृणोतेः, तद्धि कर्म प्रभवः कृतं सदावृणोति कर्त्तारम्। "इदमपीतरद् व्रतमेतस्मादेव" "निवृत्तिकर्म" यमनियमाख्य वहिर्वैदिकमान्तर्वैदिक वा, यदग्निस्वविधावुपेयते, तत् पुनः "वारयतीति" एवं "व्रत" तद्विषयेषु प्रवर्त्तमानं पुरुषं स्त्र्यादिषु वारयति, तदनुसृत्य स पुरुषो निवर्त्ततेऽवकीर्णी, भविष्यामीत्येतस्माद् भयात्। "अन्नमपि व्रतमुच्यते, यदावृणोति शरीरम्"। रसशोणितमांसमेदोमज्जास्थिभावेन विपरिणममानम्॥ आदित्यशब्दप्रसक्तानुप्रसक्तमिदमुक्तम्। १।

स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता। पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान् संस्प्रष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च। नाक

आदित्यो भवति नेता भासां ज्योतिषां प्रणयो-ऽथ द्यौः कमिति सुखनाम तत् प्रतिषिद्धं प्रतिषिध्येत । न वा अमुं लोकं जग्मुषे किञ्च नाकम् । नवा अमुं लोकं जग्मुषे किञ्च नासुखं पुण्यकृतो ह्येव तत्र गच्छन्ति गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षे-ऽथ द्यौर्यत् पृथिव्या अधि दूरङ्गता भवति यच्चास्यां ज्योतींषि गच्छन्ति । विष्टबादित्यो भवत्याविष्टो रसानाविष्टो भासं ज्योतिषामाविष्टो भासेति वाथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च । नभ आदित्यो भवति नेता भासां ज्योतिषां प्रणयोऽपि वा भन एव स्याद्विपरीतो न न भातीति वैतेन द्यौर्व्याख्याता ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्थः पादः ॥२, ४॥

अधुना प्रकृतमेवोच्यते,—"स्वरादित्यो भवति"। "सु अरण" सुगमन इत्यर्थः। अथवा सुष्ठु तमांसि ईरयतो ऽर्थः। अथवा विशेषणविशेष्यभावेन एते वाक्ये स्याताम्। किमुक्तं भवति—सु अरण ? इति। उच्यते, "सु ईरण" इत्येव। "सृतो रसान्" सुष्ठु रसानादातुं सृतो भौमात् आन्तरिक्षात्। "सृतो भासं ज्योतिषाम्" सुष्ठु पश्चनक्षत्रादीनां ज्योतिषां भासमादातुं सृतो गतः। "सृतो भासेति

वा" सुष्ठु परिगतो भासेति वा, भवतो ह्येव परिगतो दीप्त्या भवति ।

"एतेन द्यौर्व्याख्याता"। उक्तं हि 'तानि चेत् समानकर्माणि समाननिर्वचनानि (५७१ पृ० ८ पं०)'—इति। सापि हि सु चरणा शोभनगमना भवति, शोभनं वा अस्यामयंत इत्येवमादि यथासम्भवं योज्यम् ॥

"पृश्निरादित्यो भवति"। आह,—कस्मात्? उच्यते,—"प्राश्नुत एनं वर्ण इति नैरुक्ताः"। 'प्राश्नुते' प्रकर्षेण व्याप्नोति 'एनम्' आदित्यं 'वर्णः' शोज्ज्वलः 'इति' 'नैरुक्ताः' मन्यन्ते। "संस्प्रष्टा रसान्" स हि नित्यकालमेव रसानां संस्प्रष्टा भवति। तस्य तदेव कर्म, वक्ष्यति,—"अथास्य कर्म रसादानम् (दै० का० ७, २, ४)"—इति। "संस्प्रष्टा भासं ज्योतिषाम्"। आदित्यसंस्पर्शादेव ग्रहनक्षत्रचन्द्रमसां भासो नश्यन्ति। "संस्पृष्टो भासेति वा" दीप्त्या ह्येव सर्वतः संस्पृष्टो भवति ॥

आह,—"द्यौः" कस्मात् पृश्निः? उच्यते,—सापि हि "संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च" ॥

"नाक आदित्यो भवति"। आह,—कस्मात्? उच्यते,—"नेता भासां" सर्वासु दिक्षु। "ज्योतिषां" च "प्रणयः" अस्यैव हि भगवतो रश्मिजालमास्थोपसन्नं ज्योतिश्चक्रं बभ्रमीति ॥

"अथ द्यौः" कस्मान्नाकः? इति। उच्यते,—"कमिति सुखनाम (२६१ पृ०)"। आह, ततः किम्? इति। शृणु,—"तत्प्रतिषिद्धं सत् पुनरपि "प्रतिषिध्येत"। किम्? इति। उच्यते,—तत्प्रतिषिध्यमानम् 'अकम्' भवति, असुखमित्यर्थः, पुनरपि च प्रतिषिध्यमानं 'नाकम्' भवति। तत्तो द्विः प्रतिषेधः प्रकृतमापादयति, नाकमित्युक्ते सुखमिति

प्रतीयते। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"न वा अमुं लोकं जग्मुषे किञ्च नाकम्"—इति। आह,—किमुक्तं भवति? "अमुम्" एव "लोकं" द्युलोकं "जग्मुषे" गतवते "न" "किञ्च" किञ्चित् नाकं "नासुखम्" इत्यर्थः। किङ्कारणम्? य एव हि "पुण्यकृत." भवन्ति, ते "एव हि" "तत्र गच्छन्ति" न च पुण्यकृतां दुःखेन भवितुं न्याय्यम्॥

"गौरादित्यो भवति"। आह,—कस्मात्? उच्यते,—"गमयति" ह्यसौ "रसान्" आत्मानं प्रति, उपचयं वा गमयति। किञ्च, "गच्छत्यन्तरिक्षे" स एवात्मना॥

"अथ द्यौः, कस्माद् गौः?" इति। उच्यते,—"यत्" यस्मादियं गौः "पृथिव्याः" "अधि" उपरि "दूरम्" अध्वानं "गता भवति"। किञ्च, "यत्" यस्मात् "च" "अस्यां" "ज्योतींषि" ग्रहनक्षत्रतारकादीनि "गच्छन्ति" तस्माद् गौः।

"विष्टबादित्यो भवति"। आह,—कस्मात्? उच्यते,—आभिमुख्येन हि एषः "रसान्" भौमानान्तरिक्षांश्च "आविष्टः" प्रविष्टो रश्मिभिरादातुम्। किञ्च, आभिमुख्येन "आविष्टो भासं" "ज्योतिषां" ग्रहादीनाम्। अथवा अयमेवाभिमुख्येन "आविष्टो भासेति वा" सर्वतो ह्येष सन्दीप्तो भवति॥

"अथ द्यौः" कस्माद् विष्टप्? इति। उच्यते,—इयमपि हि "आविष्टा" "ज्योतिर्भिः" ग्रहनक्षत्रादिभिः ये चान्ये पुण्यकृतस्तैश्च तस्माद् विष्टबिति।

"नभ आदित्यो भवति"। आह,—कस्मात्? उच्यते,—"नेता" ह्येष "भासां" सर्वासु दिक्षु, "ज्योतिषां" च "प्रणयः" व्याख्यातमेतत्। "अपि वा भन एव स्याद्विपरीतः" भासनः सन् नभ इत्युक्तो विपर्ययेण। "न न भातीति वा" न न भाति, भात्येवेति नभः।

"एतेन द्यौर्व्याख्याता" सापि आदित्यवर्त्ती भासा-मित्यादि योज्यम् ॥ २ ॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य [द्वितीयाध्यायस्य] चतुर्थ पाद ॥२, ४॥

---

पञ्चम पाद ॥

रश्मिनामान्युत्तराणि पञ्चदश रश्मिर्यमनात्तेषामादितः साधारणानि पञ्चाम्बरश्मिभिर्दिङ्नामान्युत्तराण्यष्टौ दिशः कस्माद्दिशतेरासदनादपि वाभ्यशनात तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति काष्ठा उपदिशो भवन्तीतरेतरं क्रान्त्वा स्थिता भवन्त्यादित्योऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्याज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्यापोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् ॥ १ ॥

आदित्यसम्बन्धं नैव "रश्मिनामान्युत्तराणि पञ्चदश"। "रश्मिर्यमनात्" उदकस्य भरताना वा। "तेषा" "पञ्च" यानि "आदित" तानि "साधारणानि" "अम्बररश्मिभि"। यतमानि पुनस्तानि? "खेदय, किरणा"—इत्येवमादीनि। खे दयन्ते खे गच्छन्ति इति खेदय, किरणा विक्षिप्ता भवन्ति।

"दिङ्नामान्युत्तराण्यष्टौ"। आदित्योपलक्षणा एते हि दिश इत्यादित्यनामभ्य उत्तराणि दिङ्नामानि। कियन्ति पुनस्तानि? अष्टौ। कानि पुनस्तानि? "आताः, आशाः, उपराः"—इत्येवमादीनि। आताः, आगता ह्येतास्तं तमर्थं प्रति भवन्ति। आशाः, अभ्यश्नुवते ह्येताः सर्वमेव यदस्ति किञ्चित्। उपराः, सर्वमेव ह्येता उपरम्य रता भवन्तीत्युपराः॥

आह,—"दिशः कस्मात्"? "दिशतेः" अतिसर्जनार्थस्य (तु० उ०), अतिसृज्यन्ते ह्यासु हविरादीनि देवतानाम्। अथवा "आसदनात्" तं तमर्थं प्रत्येता आसन्ना भवन्ति। "अपि वाभ्यशनात्" अभ्यश्नुवते ह्येतास्तं तमर्थम्॥

"तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति"। तद्यथा,—"काष्ठा दिशो भवन्ति"। आह,—किङ्कारणम्? इति। उच्यते, "क्रान्त्वा स्थिता भवन्ति" क्रान्त्वा ह्येतास्तं तमर्थं प्रति गत्वा स्थिता भवन्ति, न हि तदस्ति, यत्रैता न सन्ति। "काष्ठा उपदिशो भवन्ति"। "इतरेतरं क्रान्त्वा स्थिता भवन्ति" ता अपि हीतरेतरं क्रान्त्वा दिग्भिः साकं स्थिता भवन्ति। "आदित्योऽपि काष्ठोच्यते"। "क्रान्त्वा स्थितो भवति" असावपि स्वस्थानं क्रान्त्वा गत्वा स्थितो भवति। "आज्यन्तोऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति"। आज्यन्तोऽपि शरपर्यन्तः काष्ठोच्यते, असावपि स्वप्रदेशं क्रान्त्वा गत्वा स्थितो भवति। "आपोऽपि काष्ठा उच्यन्ते"। ताः पुनर्द्वय्यः,—स्थावराश्चास्थावराश्च। तत्र, "क्रान्त्वा" गत्वा जलाशयमेताः "स्थिता भवन्तीति स्थावराणाम्" काष्ठात्वम्। अस्थावराणां पुनः क्रामन्त्येवैताः, न कचित् तिष्ठन्तीति काष्ठा मेध्या आपः॥ १॥

मन्त्रोऽपि चैतस्मिन्नर्थे भवति,—

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्। वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः। अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः शरीरं शृणातेः शम्नातेर्वा वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुस्तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिका अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्त्यहिवत् तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार तस्मिन् हते प्रसस्यन्दिर आपस्तदभिवादिन्येषर्ग् भवति॥ २॥

अतिष्ठन्तीनामिति। हिरण्यस्तूपस्यार्षम्, दासपत्नीरिति च। त्रिष्टुभावेते। अग्निष्टोमे निष्केवल्ये नाम शस्त्रम्, तत्र निविद्धानीयमेतत् सूक्तम्, तत्र द्वे अपि शस्येते; न तिष्ठन्तीत्यतिष्ठन्त्यः, तासाम् "अतिष्ठन्तीनाम्" मेघोदरान्तर्गतानामपाम्, ता हि मेघे गच्छति गच्छन्त्येव तदाधार

त्वात्। 'अनिवेशनानाम्' "अनिविशमानानाम्" न हि ताः क्वचिन्निविशन्ते, यावज्जलाशयं नाप्नुवन्ति। तासामेवं-विधाना "काष्ठानां मध्ये" अवस्थितानां वाह्यतो मेघाख्यं "निहितम्" अवस्थापितं धात्रा "शरीरम्" आहृत्य अपः, तासामेव गुप्तये। ताः पुनः 'आपः' तस्य "वृत्रस्य" मेघस्य "निण्यं निर्णामं" येनासौ नीचैर्नमति तं प्रदेशं "विजानन्ति" इव। यतस्तेन प्रदेशेन "विचरन्ति" प्रचरन्ति निम्नानुसारिण्यो हि ताः। असावपि वृत्रस्तासु प्रचरन्तीषु तत्प्रचरणनिरोधं चिकीर्षुः स्वशरीरविवृद्ध्या 'दीर्घं तमः' स हि तमः स्वत एव, धूमादिप्रभवत्वात्। यावन्तं प्रदेशं निम्नमनुसरन्त्यो मेघस्य ताः स्रुता भवन्ति, निपतिष्यन्त्यस्ततो बहुतरमसौ वर्द्धते। तदनुरुरुत्सया एवं दीर्घं तम आहृत्य 'आशयत्' आशेत इत्यर्थः। कः पुनरेवमाशयत्? 'इन्द्रशत्रुः' इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"शरीरं शृणातेः (२३४ पृ०)" हिंसार्थस्य, हिंस्यते हि तत्। "शम्नातेर्वा (२३४ पृ०)" हिंसार्थस्य। "दीर्घं द्राघतेः (भू० आ०)" दृध्यर्थस्य, दृढं तद् भवति। "तमः तनोतेः (तना० उ०)" तेन हि सर्वमेव ततं भवति। "आशयत्" "आङ्" पूर्वस्य "शेतेः"। 'इन्द्रशत्रुः, इन्द्रोऽस्य शमयिता वा" हन्तेत्यर्थः "शातयिता वा" हन्ता वा, धात्वन्यत्वमर्थैकत्वम्॥

इह मन्त्रे वृत्र इत्येतच्छ्रुतं तदेतत् नैगमानुप्रसक्तं विचार्यते इत्युपयुक्तस्तच्छब्दः। आह,—"को वृत्रः?" उच्यते,—"मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः"। निरुक्तमधीयते नैरुक्ताः। आह,—यदि मेघो वृत्रो य एष मन्त्रेषु युद्धसङ्ग्रामे श्रूयते तत्र कः समाधिः?, इति। उच्यते,—"अपाञ्च

ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" । 'अपाञ्च' मेघोदरान्तर्गतानां 'ज्योतिषश्च' वैद्युतस्य चाद्भुतवृत्तेः 'मिश्रीभावकर्मणो वर्षकर्म जायते' तेन हि वैद्युतेन ज्योतिषा वाय्वा वेष्टितेन इन्द्राख्येनोपताप्यमाना आपः प्रस्यन्दन्ते—वर्षभावाय कल्पन्ते । 'तत्र' एवं सत्युदकतेजसोरितरेतरमभिद्रव्यभूतयोः 'उपमार्थेन' रूपकल्पनया 'युद्धवर्णा भवन्ति'—इति युद्धे रूपकाणीत्यर्थः । न त्वत्र यथाभूतं युद्धमस्ति, न हीन्द्रस्य शत्रवः केचन सन्ति । मन्त्रोऽपि चैतस्मिन्नर्थे अस्ति नेन्द्रस्य शत्रवः,—"यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से ॥" (ऋ० सं० ८,१,१५,२) । वामदेवपुत्रस्य बृहदुक्थस्यार्षम् । त्रिष्टुप् । व्यूढस्याष्टमेऽहनि निष्केवल्ये शस्यते । 'यत्' 'अचरः' त्वं नानाप्रकारं 'तन्वा वावृधानः' शरीरेण विग्रहवान् भूत्वा वावृधानः पुनः पुनः वर्द्धमानः । कथं पुनरचरः ? "बलानीन्द्र प्रब्रुवाणो जनेषु" । 'बलानि' आत्मीयानि वीर्याणि, हे 'इन्द्र !' 'प्रब्रुवाणः' इव । क्व ? 'जनेषु' । किं त्वं तथैव ? न । "मायेत्सा ते यानि युद्धान्याहुः" । 'यानि युद्धान्याहुः' ऐतिहासिकाः, नानारूपाण्युपदर्शयन्त, 'सा' अपि च 'ते' तव 'माया इत्' मायैव । किं कारणम् ? 'नाद्य' शत्रुः तवास्ति प्रत्यनीकभूतः, 'न नु पुरा' नापि पुरा कश्चिदासीत्, यावद्वीर्यं किञ्चित् क्वचिदस्ति सर्वं तत् त्वमेव । "वीर्यं वै प्रावीर्यमिन्द्र इति ह विज्ञायते" । क्व ते शत्रुः ? येन सार्द्धं युयोधिथ । एतत् त्वमपि 'विवित्से' वेत्स्येव, न केवलमहमेवेत्यभिप्रायः । एवमेतन्मन्त्रे मायात्वमेव युद्धस्येति श्रूयते । विज्ञायते च "तदाहुर्नैतदस्ति यद्देवासुरमिति" । तस्मात् 'साधु-

कर्म,—"अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" ॥

आह,—किं वृत्रवदेव रूपाणि भवन्ति ? नेत्युच्यते,—"अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च"। चः समुच्चयार्थो द्रष्टव्यः। वृत्रवच्चाहिवच्चेति मन्त्रवर्णा भवन्ति, ब्राह्मणवादाश्च आख्यान्ते भवन्ति, तदप्युपेक्षितव्यम्। "तस्मिन् हते" वृत्राख्ये मेघे हते "प्रसस्यन्दिर आपः" ॥

"तदभिवादिनी एषा"—॥ २ ॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः। अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अपतद्ववार ॥ दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ता अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति। निरुद्धा आपः पणिनेव गावः। पणिर्वणिग् भवति पणिः पणनाद्वणिक् पण्यं नेनेक्ति। अपां बिलमपिहितं यदासीत्। बिलं भरं भवति बिभर्त्तेः। वृत्रं जघ्निवानपववार तद् वृत्रो वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा यदवृणोत्तद् वृत्रस्य वृत्रत्वमिति विज्ञायते यदवर्त्तत तद् वृत्रस्य वृत्रत्वमिति

विज्ञायते यदवर्त्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ॥ ३ ॥

इति द्वितीयाध्यायस्य पञ्चमः पादः ॥ २,५ ॥

दासपत्नीति। 'अपां' 'यत्' 'बिल' निर्गमद्वारम् 'अपिहितम्' 'आसीत्' तेन मेघेन, 'तत्' यदा इन्द्रः तं 'वृत्र' मेघं 'जघन्वान्' निजघ्निवान् अहत, हत्वा च 'अपववार' अपावृतवान्। अथ तदा तस्मिन् निहते अपावृते च द्वारे ताः आपः प्रस्यन्दिरे वर्षभावेनेति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"दासपत्नीः दासाधिपत्न्यः" दासः कर्मकरः, तं हि ता अधिष्ठाय पान्ति रक्षन्ति। स हि कर्मणा श्रान्तः, तासु प्रीतासु विश्रान्त आप्यायितो भवन्ति। विग्रहप्रसक्तं निरुच्यते,—"दासो दस्यतेः (दि० प०)" स हि "उपदासयति" उपक्षयति कृष्यादीनि "कर्माणि"। "अहिगोपाः" "अहिना गुप्ताः"। "अहिः" कस्मात्? उच्यते,—"अयनात्", "एति" हि असौ "अन्तरिक्षे"। शब्दसामान्यान्निरुच्यते,—"अयमपीतरोऽहिः" सर्पः "एतस्मादेव" असावपि हि एति। अथवा "निर्ह्रसितोपसर्गः" स्यात्। कथम्? "आहन्ति" असौ भोगिनेत्यादिः। आङ्पूर्वस्य हन्तेः (अदा० प०), स पुनरयमुपसर्गं निर्ह्रस्य ह्रस्वं कृत्वा अहिरुच्यते। "पणिर्वणिग् भवति"—इति पर्यायेण तत्त्ववचनम्। "पणिः पणनात्" पणिति ह्यसौ व्यवहारं करोति। पर्यायप्रसक्तं निरुच्यते,—"वणिक् पण्यं" वणिजो यत् द्रव्यं तत् पण्यम्, तदसौ "नेनेक्ति" निर्णयकाले शुचीकरोति मूल्यार्हं स्यादिति। "बिलं भरं भवति" "बिभर्त्तेः (जु० प०)" धातोः, भृतं हि तदुदकादिभिः। "वृत्रो वृणोतेर्वा (स्वा० उ०) वर्त्ततेर्वा (भू० आ०)

वर्त्ततेर्वा (भू० प्रा०)"—इत्येषां धातूनामन्यतमस्य। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"यदवृणोत्" अन्तरिक्षमुदकं वा, महत्त्वात् "तद् वृत्रस्य वृत्रत्वम्"—"इति" एवं ब्राह्मणोऽपि "विज्ञायते" विचार्यमाणो ज्ञायते। अथवा "यदवर्त्तत" इन्द्रेण हतो वृत्रो मेघः अपां बिले अपाहते अपः वृष्टिभावेन अवर्त्तयत् मावर्त्तयत्, "तद् वृत्रस्य वृत्रत्वम्"। अथवा "यत् अवर्द्धत" अमावतिमात्रप्रमाणम्, "तद् वृत्रस्य वृत्रत्व" स्यादिति ॥ ३ ॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य [द्वितीयाध्यायस्य] पञ्चमः पादः ॥ २, ५ ॥

---

षष्ठः पादः ॥

रात्रिनामान्युत्तराणि त्रयोविंशती रात्रिः कस्मात् प्ररमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि ध्रुवीकरोति रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्यायाः उषोनामान्युत्तराणि षोडशोषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालस्तस्या एषा भवति ॥ १ ॥

"काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति (५८६ पृ० १०पं०)"—इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्तमुक्तम्, प्रकृतमिदानीमुच्यते,—"रात्रिनामान्युत्तराणि त्रयोविंशतिः"। रात्रेर्नामानि 'रात्रिनामानि'। 'उत्तराणि' इति प्रकृतेभ्यो दिङ्नामभ्यः, तमःसतत्त्वा हि रात्रिः, तस्य च तमसो दिक्स्वेवात्मलाभो भवति, अतो दिङ्नामभ्य उत्तराणि रात्रिना-

मानि। कियन्ति पुनस्तानि ? 'त्रयोविंशतिः' त्रीणि च विंशतिश्च त्रयोविंशतिः (२३)। कतमानि पुनस्तानि ? "श्यावी, क्षपा, शर्वरी"—इत्येवमादीनि। श्यावकर्णा हि रात्रिरिति श्यावी। स्वैः स्वैः कर्मभिः अहनि क्षीणान् प्राणिनः इयं स्वापेन पातीति क्षपा, अस्यां हि सुप्ताः पुनर्नवा इव प्राणिनः प्रातरुत्तिष्ठन्ति। शरणमस्यां स्वापार्थं क्रियत इति शर्वरी। इत्येवमादि सर्वत्र योज्यम् ॥

आह,—"रात्रिः कस्मात् ?" इति। उच्यते,—इयं ह्यागच्छन्ती प्रकर्षेण रमयति। कानि ? "भूतानि नक्तञ्चारीणि" पिशाचादीनि, तानि हि विगतेऽहनि रात्र्यामुपस्थितायां प्राप्तोऽयं विहारसमयः इति प्रकर्षेण रमन्ते। "उपरमयतीतराणि ध्रुवीकरोति" इतराण्यपि दिवाचारीणि सैवोपरमयति, तस्यां ह्युपस्थितायां दिवाचराणि भूतानि मनुष्यादीनि इतिकर्तव्यताभ्यः उपरमन्ति, उपरम्य च स्थिरीभवन्ति निवासाय। "रातेर्वा स्यात् दानकर्मणः" दानार्थस्य। आह,—किमस्यां प्रदीयते ? उच्यते,—"प्रदीयन्तेऽस्यामवश्यायाः" 'अवश्यायन्तीत्यवश्यायाः', तुषारा इत्यर्थः, ते हि रात्रौ निपतन्ति ॥

"उषोनामान्युत्तराणि षोडश" उषसो नामानि। रात्रेरेव अपरः कालः उष आख्यो भवतीति रात्रिनामभ्य 'उत्तराणि उषोनामानि'। कियन्ति पुनस्तानि ? 'षोडश' (१६)। षट् च दश च षोडश। कतमानि पुनस्तानि ? "विभावरी, सूनरी"—इत्येवमादीनि। विविधां भियं भासं कृणोतीति विभावरी। शोभनं नराणामस्यामुत्थानं भवतीति सूनरी। इत्येवमादि निर्वचनं योज्यम् ॥

आह,—"उषाः कस्मात् ?" इति। उच्यते,—"उच्छतीति सत्याः"। 'उछी विवासे (भू० प०)' विवासयति क्षीय

तमांसि तस्मादुच्छतीत्येवमस्या एतस्मिन् कर्मणि सत्या कर्त्तरि कारके भास उषा इत्येतदभिधानं भवति। आह,—का पुनरियमुषा ? इति। उच्यते,—"रात्रेरपरः काल" स उषा इत्युच्यते। आह,—कथमेतदुच्यते रात्रेरपर काल उषा ? इति। उच्यते,—"तस्या" उषसः रात्र्यपरकालत्वम्। "एषा" निर्वाचिका ऋग् "भवति"—॥ १ ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक्॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानं स्त्रीयोनिरभियुत एनां गर्भस्तस्या एषापरा भवति ॥ २ ॥

इदं श्रेष्ठमिति। आङ्गिरसस्य कुत्सस्यैतदार्षम्, उत्तरा च। उभे अपि त्रिष्टुभावेते, प्रातरनुवाकाश्विनयोः शस्येते। "इदम्" उपोलाचष "ज्योति" "श्रेष्ठम्" आदित्यादीनां "ज्योतिषाम्" इति निर्द्धारणे षष्ठी। आदित्यो हि तापकः प्रकाशकः, चन्द्रमा अथ निशीत प्रकाशकश्च, इदं पुनर्नैत्युषं नातिशीत प्रकाशकञ्च। इत्येवमादित्यादीना मिदमेव श्रेष्ठम्। 'आगात्' "आगमत्" आगच्छतीत्यर्थः। "चित्र' चायनीयं पूजनीयं वा श्रेष्ठत्वादेव, 'प्रकेत' "प्रकेतनं प्रज्ञाततमम्" "अजनिष्ट" जातमित्यर्थः। जातं सदागच्छति

सर्वासु दिक्षु। 'विभ्वा' "विभूततमम्" इदमतिमहत्त्वाद् विभूततम विस्तीर्णतमम्, इतराणि परिच्छिन्नतराणि ज्योतींषि अपेक्ष्य। किञ्च, "यथा प्रसूता" प्रकर्षेण सूता प्रसवमनुप्राप्ता। सूतिशब्द प्रसवार्थः। "रात्रि" "सवितु" "आदित्यस्य" 'सवाय' "प्रसवाय" आदित्योत्पत्त्यै देशे जायते। "एवम्" 'एवं' "रात्री" रात्रि उषसो जन्मार्थं "योनि" "स्थानम्" अवकाशम् "उषसे" आत्मलाभाय 'आरैक्' "अरिचत्" आरेचयति, ददातीत्यर्थः। यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरजन्मत्वात्, एव रात्रिरुषसो जन्मनो हेतु, इत्येवमस्याभूचि रात्रेरेव वापर काल उष सञ्ज्ञित इति गम्यते। स्थान योनिशब्देनोच्यते। यस्मि यस्मिन् विधीयते, तत् तेन साक युत भवति मिश्रीभूत मित्यर्थ। इयमपीतरा—"स्त्रीयोनि" एतस्मादेव। किङ्का रणम्? 'अभियुत" हि "गर्भ" "एनाम्" भवति, आमिश्री-भूत इत्यर्थ। पूर्वत्र,—"अयमपीतरो योनि, एतस्मादेव। (किम्?) परियुतो भवति" इति परियवनक्रियासामान्येन निरुक्तो योनिशब्द, इह पुन 'अभियुत एना गर्भ' इति मिश्रीभावसामान्येन उभयलिङ्गत्व चास्योपदर्शितम्,—इह स्त्रीलिङ्गम्,—तत्र पुलिङ्गम् इति। "तस्या" उषस "एषा" "अपरा' अग् "भवति"—(अस्यैवार्थस्य दृढतायै रात्रेरपर काल उषा उच्यत इति)॥ २॥

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः। समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने॥ रुशद्वत्सा सूर्य-

वत्सा रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मण: सूर्य्यमस्या वत्समाह साहचर्य्याद्रसहरणाद्वा । रुशती श्वेत्यागात् । श्वेत्या श्वेततेररिचत् कृष्णा सदनान्यस्या: कृष्णवर्णा रात्रि: कृष्णं कृष्यतेर्निकृष्टो वर्णोऽथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची इतीतरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया चरत इति स्यादामिनाने अन्योन्यस्याध्यात्मं कुर्वाणे अहर्नीमान्युत्तराणि द्वादशाह: कस्मादुपाहरन्त्यस्मिन् कर्माणि तस्यैष निपातो भवति वैश्वानरीयायामृचि ॥ ३ ॥

रुशद्वत्सेति । "रुशद्वत्सा" रोचिष्णुवत्सा, सूर्य्यो हि रोचिष्णु:, तं "सूर्य्यम् अस्या वत्समाह" मन्त्रदृक् । "साहचर्य्यात्" । मातृसहचरो हि वत्सो भवति, अयमपि चानयोषसा सह चरतीत्येतस्मात् सामान्याद् वत्स उच्यते । "रसहरणाद्वा" । यथा हि मातुरूधस: चीराख्यस्य रसस्याहर्त्ता भवति वत्स:, एवमेषोऽप्यौषधिकानामवश्यायाख्यानां रसानामाहर्त्ता भवति रश्मिभि:,—इत्येतस्मात् सामान्याद् वत्सत्वम् । "रुशती" रोचनशीला आत्मनापि । "श्वेत्या" "श्वेतते:" धातो: (भू॰ आ॰) । श्वेतो वर्णं एत्यस्याम्, श्वेतवर्णेत्यर्थ: । या चैवंलक्षणा उषा:, सा "आगात्" आगच्छति । आगतायाश्च तस्या: 'आरैक्' 'अरिचत्' आरेचयति । "कृष्णा" "कृष्णवर्णा

रात्रि"। किमादैवयति ? "सदनानि" स्थानानि। "स्वसाः" उषसः। येभ्यिमुषा स्थानेषु आगता सती भासीदिति, तान्यादैवयति रात्रिः। एवं तावदयमर्द्धर्चो रात्र्युषसोर्विभक्तस्तुति, "अथ" अनेनोत्तरार्द्धर्चेन "एते" रात्र्युषसी "सस्तौति"।—"समानबन्धू" एते रात्र्युषसौ, "समानबन्धनं" समानमनयोर्बन्धनम्। आदित्यस्येव ह्यस्तमय प्रति रात्रि बेला मश्लिष्टा, उदय प्रत्युषा, एव समानबन्धू। "अमृते, अमरणधर्माणौ" न हि रात्र्युषसौ म्रियेते। "अनूची इतो तरेतरमभिप्रेत्य" इतरेतरं संश्लिष्टे ह्येते। "द्यावा वर्णं चरत"। "ते एव" रात्र्युषसौ। "द्यावौ द्योतनात्" उषा हि स्वेन प्रकारेण द्योतते, रात्रिरपि स्वेन तमोवीर्य्येण नक्षत्र-गणेन वा समधिकारं प्रति द्योतते। एव हि द्यावेति द्विवच नम् "अपि वा" तृतीयान्तमेकवचनमेतत् स्यात,—द्यौ, तया "द्यावा" 'सहयुक्ते (पा० २, ३, १८)'। "तया" सह स्वर्हमाने "चरत" गच्छतः। कथम्पुनश्चरत ? "आमिनाने"। आङ् अध्यर्थे 'तोदस्येव शरण आ महस्य। तुदस्येव शरणेऽधि महत"—इति (नैग० का० ५, २, ५)। उषा अपि रात्रे-रधि आत्मान निर्मिमीते, रात्रिरप्युषस, इतरेतरसश्लिष्टे ह्येमे रात्र्युषसौ। तस्मादिवमुच्यते,—"अन्योऽन्यस्याध्यात्म कुर्वाणे" इति ॥

उष प्रश्स्तत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रौ उपवर्णितौ, प्रकृतमिदानीमुच्यते,—"अहर्नामान्युत्तराणि द्वादश। अह्नो नामानि, 'अहर्नामानि', 'उत्तराणि' प्रकृतेभ्य उषोनामभ्य, उषस एवानन्तरमहर्भवति, तस्मादुषोनामभ्य उत्त राणि अहर्नामानि। कियन्ति पुनस्तानि ? 'द्वादश'। द्वे च दश च द्वादश (१२)। कानि पुनस्तानि? "वस्तो, द्युः भानुः,

—इत्येवमादीनि । वस्ते ज्योतिरेतदिति वस्तोरित्युच्यते । यथैव हि स्तुत मन्त्रे तथैवेह समाम्नातम् । द्यु, द्योतते ह्येतत् ज्योतिषा । भानु, भासते ह्येतत् ज्योतिषेत्येवमादि योज्यम् ॥

आह,—"अहः कस्मात्" ? उच्यते,—"उपाहरन्त्यस्मिन् कर्माणि" न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकराः, यथाहनि ॥

"तस्य" अह्नः "एष निपातो भवति" । नैघण्टुकाह्वया । "वैश्वानरीयायाम्" वैश्वानरदेवतायाम् "ऋचि"—॥ ३ ॥

अहश्च कृष्णमहरर्जुनञ्च विवर्त्तेते रजसी वेद्याभिः । वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥ अहश्च कृष्णं रात्रिः शुक्लञ्चाहरर्जुनं विवर्त्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्वैश्वानरो जायमान इवोद्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्योतिषा तमांसि मेघनामान्युत्तराणि त्रिंशन्मेघः कस्मान्मेहतीति सत आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिरुपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा तेषामेषा भवति ॥ ४ ॥

अहःशब्दो हि रात्रिमहश्चोभयमभिधत्ते, अतः सन्देह-

पदम्, तस्यैव विभागोऽस्मिन्नपि उपपदविशेषात् प्रदर्श्यते,— अहश्च कृष्णमिति । भरद्वाजस्येयमार्षम् । त्रिष्टुप् । दशमस्य षष्ठेऽहन्याग्निमारुते शस्त्रे शस्यते । "अहश्च कृष्णं रात्रिः, शुक्लं चाहरर्जुनम्" । अर्जुनशब्दो हि शुक्लपर्यायः । "विवर्त्तेते" विपर्य्ययेण वर्त्तेते । रात्रिरतीता, अह आयातम्, अहरतीतं, रात्रिरायाता, इत्येवम् । "रजसी" रञ्जके । ज्योतिषा हि भूतान्यहो रञ्जयति, तमसा रात्रिः । "वेद्याभिः" "वेदितव्याभिः महोभिः" न हि तासां महतीनामन्तोऽस्ति, अहनि च रात्रौ च प्राणिनामन्तस्था वेदितव्या एव भवन्ति, बहुत्वात्, न हि विदितानामन्ताः कदाचित् । किञ्च, "वैश्वानरः" अग्निः 'अवातिरत्' "अवाहन्" अपहन्ति, स्वेन "ज्योतिषा तमांसि" । कथम्पुनरपहन्ति ? 'जायमानो न न राजा' "जायमान इव", "उद्यन्" "सर्वेषां" सर्वभूतानां "राजा" "आदित्यः" । यथा ह्युद्यन्नादित्यस्तमांसि अपहन्ति दिवा, एवम् "अग्निः" अपि रात्रावपहन्तीत्यग्निरादित्येन तम उपघाते प्रत्युपमीयते ।

"मेघनामान्युत्तराणि त्रिंशत्" । मेघानां नामानि तानि उत्तराणि, प्रकृतेभ्योऽहर्नामभ्यः, मेघा ह्यहनि रात्रौ चाशेषेण भवन्त्यतो रात्र्यहर्नामभ्य उत्तराणि मेघनामानि । कतमानि पुनस्तानि ? "अद्रिः, ग्रावा, गोत्रः"—इत्येवमादीनि । अद्रिः, आदरयितव्यो भवति ह्युदकार्थमित्यद्रिः । ग्रावा, गृणातेर्वा गृह्णातेर्वा, गृणात्यसौ शब्दं करोति, गृहीतश्चोदकमनेनेति । गोत्रः, गोर्वा गत्रः । इत्येवमाद्यभ्युहितव्यम्, पर्वतनामत्वेऽपि यथासम्भवं योज्यम् ॥

आह,—"मेघः कस्मात्" ? उच्यते,—"मेहतीति" सिञ्चत्यसौ । एवं कर्त्तरि कारके "सतः" अस्यैतदभिधानं भवति ।

तेषां मेघनाम्नाम् "आ उपर उपल इत्येताभ्यां" प्राक् उपर उपल इत्येताभ्यां यानि नामानि, तानि "साधारणानि पर्वतनामभिः" तदेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्य्यः । 'आ उपर इत्येतस्मात्'—इति वक्तव्ये "आ उपर उपल इत्येताभ्यां" युक्तम्, उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन् निरुक्ते निरुक्तौ भविष्यत इति, स्लोधाविशेषख्यापनार्थम् । "उपर उपलौ मेघौ भवति" उपर इति च उपल इति च मेघ उक्तो भवति । उपरशब्दादारभ्य मेघनामान्येव, न पर्वतनामानि ॥

आह,—उपरः कस्मात् ? उच्यते,—"उप" गम्य "रमन्ते" "अस्मिन् अभ्राणि" । अथ "वा" । "उप" गम्य "रताः" "आपः" भवन्ति "इति" । उपलोऽप्येतस्मादेव रलोरविशेषेण ॥

आह,—कथ पुनर्गम्यते उपरशब्देन मेघ एवोच्यते, न पर्वतः ? इति । उच्यते,—"तेषा" मेघानाम् उपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका "एषा" ऋक् "भवति"—॥ ४ ॥

देवानां माने॑ प्रथमा अ॑तिष्ठन् कृन्तत्रा॑देषामुप॑रा उदा॑यन् । त्रय॑स्तपन्ति पृथिवी॑मनूपा द्वा बृबू॑कं॑ वहतः॒ पुरी॑षम् ॥ देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमिका देवगणाः प्रथम इति मुख्यनाम प्रतमो भवति विकर्त्तनेन मेघानामुदकं जायते॑ त्रय॑स्तपन्ति पृथि॒वी॑मनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरो-

पश्चौः पाचयन्त्यनूपा अनुवपन्ति लोकान् स्वेन कर्मणायमपीतरोऽनूप एतस्मादेवानूप्यत उदकेनापि वान्वाविति स्याद्यथा प्रागिति। तस्यानूप इति स्याद्यथा प्राचीनमिति। द्वा बृबूकं वहतः पुरीषम्। वाय्वादित्या उदकं बृबूकमित्युदकनाम ब्रवीतेर्वा शब्दकर्मणो भ्रंश-तेर्वा पुरीषं पृणातेः पूरयतेर्वा ॥ ५ ॥

इति द्वितीयाध्यायस्य षष्ठः पादः ॥ २, ६ ॥

देवाना मान इति। वसुक्रस्येन्द्रपुत्रस्येयमार्षम्। त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। 'देवाना' दानादिगुणयुक्तानां 'माने' विमाने निर्माणे। यदा देवाः सृष्टाः प्रजापतिना, तदैत एवमाध्यमिका देवगणाः 'प्रथमा' 'अतिष्ठन्' एतेऽपि हि दानादियोगाद् देवा उच्यन्ते। प्रथमा. प्रकृष्टतमा मुख्या इत्यर्थः। मेघाभावे हि सर्वमेवेद जगद् वर्षाभावान्न स्यात्। तस्मादेत एव प्रकृष्टतमाः अतिष्ठन् स्थितवन्तः। सृष्टौ हि सर्वदेवानामेत एवाग्रे सृष्टा इत्यभिप्राय। किञ्च, 'कृन्तत्रात्' उत्कृन्तात् प्रदेशात् 'एषा' मेघानामिन्द्रेण 'उपराः' आपः 'उदायन्' आगतवत्य, आगच्छन्ति च। किङ्कारणम् ? विकर्तनेनैव हि मेघानामुदकं जायते। उपरशब्देनात्रोदकमुक्तम्, तात्स्थ्यात्तच्छब्दो मञ्चाः क्रोशन्ति इतिवत्, उपरेषु मेघेषु या आपः, ता उपचारादुपरा इत्युच्यन्ते। किञ्च, यदा 'ताभिः' उपराभिरद्भिरोषधयः प्रोक्षिता भवन्त्यस्य तदा 'त्रयः तपन्ति' त्रय पर्जन्यादय. तपन्ति। 'पृथिवी' इमौ लोकम्।

'अनूपाः' ते अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा यथाकालमनुगच्छन्ति। एतदनुवपनं लोकानां यद् वर्षादिभिः पर्जन्यादयो यथार्थमोषधीः पाचयन्ति। किञ्च, 'द्वा बबूकं वहतः पुरीषम्' द्वौ वाय्वादित्यौ वहतः आक्षिपत इतः पृथिवीलोकात् बबूकं सुदकम्। किलक्षणम्? पुरीषम्, प्रीणयितृ वा सतः॥

"अयमपीतरोऽनूपः" नद्यनूपः समुद्रानूपो वा। "एतस्मादेव" वपतेर्धातोः असावपि हि "अनूप्यते" अनुप्रकीर्य्यते नित्यकालम् "उदकेन"। "अपि वा" एवमन्यथा स्यात्,—आप्नोतेः, अन्वाप्यतेऽसावुदकेनेति "अन्वाप्"। पुरस्तादञ्चतीति "प्राक्", "तस्य" अन्वाविव्येतस्य सतः "अनूप इति" एष शब्दः "स्यात्" "यथा प्राचीनमिति", प्रागित्येवं सतः प्राचीनम्। "बबूकमिति उदनाम" इति। पर्य्यायवचनेन तत्त्वाभिधानम्। "वबीतेर्वा" शब्दार्थस्य (अदा० उ०) शब्दकारि हि तद् भवति। "भ्रंशतेर्वा" भ्रश्यति (दि० प०) हि तस्मै चादिति॥ ५॥

निरुक्तव्याख्यायां सप्तमाध्यायस्य [द्वितीयाध्यायस्य]
षष्ठः पादः॥ ६॥

---

सप्तमः पादः।

वाङ्नामान्युत्तराणि सप्तपञ्चाशद् वाक् कस्माद्वचेस्तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति तद्यद् देवतावदुपरिष्टात्तद् व्याख्यास्यामोऽथैतन्नदीवत्॥ १॥

वाङ्नामान्युत्तराणि सप्तपञ्चाशत्। मेघनामप्रकृती "देवान्ना मानि"—इत्येष मन्त्रो व्याख्यातः। प्रकृतमिदानी-मुच्यते,—वाङ्नामानीति। वाचो नामानि 'वाङ्नामानि', 'उत्तराणि' प्रकृतेभ्यो मेघनामभ्य। मेघेष्वेव हि भूयसी वाग् भवति इति ततो वाङ्नामानि भवन्ति। कियन्ति पुन स्तानि ' सप्तपञ्चाशत्" सप्त च पञ्चाशच्च सप्तपञ्चाशत् (५७)। कतमानि पुनस्तानि ? "श्लोक, धारा, इला"—इत्येवमा-दीनि। श्रूयते इति श्लोक। ध्रियते त तमर्थमवधार-यितुमिति धारा। त तमर्थ प्रति ईट्टे गच्छतीति इडा। इत्येवमादाभ्यूहितव्यम्॥

याह,—"वाक् कस्मात्" ? उच्यते,—"वचे" धातो (अदा० प०)। उच्यतेऽनयेति वाक। "तव, सरस्वतोत्य तस्य" तत्र तस्मिन्, सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम "नदोवद् देवतावच्च निगमा भवन्ति" नद्यर्थयुक्ताय देवतार्थयुक्तायेत्यर्थः। "तत्" तत्रैव सति, "यत्" अभिधान 'देवतावत्", "तत्" अधिकृत्य "उपरिष्टाद् व्याख्यास्याम" षोडशेऽध्याये "पावका नः सरस्वती (ऋ० म० १, १, ६, ३)" —इत्येतस्मिन् मन्त्रे। "अथ" पुन यत् "एवत्" "नदीवत्", तद् व्याख्यायते—॥ १॥

इयं शुष्मेभिर्बिसुखा इवारुजत्सानु गिरी-णान्तविषेभिरूर्मिभिः। पारावतघ्नीमवसे सुवृ-क्तिभिः सरस्वतीमाविवासेम धीतिभिः॥

इयं शुष्मैः शोषणैः शुष्ममिति बलनाम शोषयतोति सतो बिसं बिस्यतेर्भेदनक-

मंणो वृद्धिकर्मणो वा सानु समुच्छ्रितं भवति समुन्नुन्नमिति वा महद्भिरूर्मिभिः पारावतघ्नीं पारावारघातिनीं पारं परं भवत्यवारमवरम-वनाय सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीं कर्म-भिः परिचरेमोदकनामान्युत्तराण्येकशतमुदकं कस्मादुनत्तीति सतो नदीनामान्युत्तराणि सप्तत्रिंशन्नद्यः कस्मान्नदना भवन्ति शब्दवत्यो बहुलमासान्नैघण्टुकं वृत्तमाश्चर्यमिव प्राधा-न्येन तत्रेतिहासमाचक्षते विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव विश्वामित्रः सर्वमित्रः सर्वं संसृतं सुदाः कल्याणदानः पैज-वनः पिजवनस्य पुत्रः पिजवनः पुनः स्पर्द्धनीय-जवो वामिश्रीभावगतिर्वा स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययावनुययुरितरे स विश्वामित्रो नदीस्तुष्टाव गाधा भवतेत्यपि द्विवदपि बहुवत् तद्यद् द्विवदुपरिष्टात्तद् व्याख्यास्यामोऽथैतद् बहुवत् ॥ २ ॥

अय शुष्मेभिरिति । भरद्वाजस्यार्षम्, जगती । 'इय' सरस्वती नदी 'शुष्मेभि' बचे.। किङ्करोति ? "बिसखा इवारुजत" यथा बिसखानको बिसमनादरेणैव मृदुत्वात् खनति, एवमियमनादरेणैव यदपि 'सानु' भवति समुच्छ्रित

सीराः"—इत्येवमादीनि। अवनतेन निम्नेन प्रदेशेन यान्तीत्यवनयः। ह्रयन्त्यो यान्तीति यह्वाः। ख्यातव्या भवन्तीति खाः। सरन्तीति सीराः। एवमादि योज्यम् ॥

आह,—"नद्यः कस्मात्"? उच्यते,—"नदनाः" ह्येताः "भवन्ति" "शब्दवत्यः" शब्दसंयुक्ताः। किञ्च, "बहुलम्" "आसां" नदीनाम, अन्यदेवतेषु मन्त्रेषु "नैघण्टुकं वृत्तम्" अप्रधानम्। "आश्चर्य्यमिव प्राधान्येन" क्वचिदेव नदीदेवतो मन्त्रः स्यात्। "तत्रेतिहासमाचक्षते"। यस्मिन् सूक्ते प्रधाना नद्य एव, तत्रेमं निदानभूतमितिहासमाचक्षत इति आचार्य्याः ॥

"विश्वामित्रः" नाम "ऋषिः"। "सुदासः पैजवनस्य" राज्ञः "पुरोहितो बभूव"। "विश्वामित्रः सर्वमित्रः" सर्वस्यैव हि स मित्रं, सर्वमेव वा तस्य मित्रमिति विश्वामित्रः। "सर्वम्"—इति किमुक्तं भवति? उच्यते,—तद्धि "संसृतं" भवति,—सङ्गतं भवत्येकस्मिन्। "सुदाः कल्याणदानः" तस्य हि नित्यमेव प्रशस्तं दानं भवति। "पैजवनः पिजवनस्य पुत्रः"। "पिजवनः पुनः स्पर्द्धनीयजवः" तस्य हि स्पर्द्धार्हो जवो वेगः। अथ "वा" "अमिश्रीभावगतिर्वा" न तस्य मिश्रीभूतपूर्वा गतिरन्यैर्वेगवद्भिः, अतिशीघ्रत्वात्। तस्य पैजवनस्य विश्वामित्रः पुरोहितो बभूव। "सः" पौरोहित्योपार्जितं "वित्तं" धनं "गृहीत्वा" "विपाट्छुतुद्र्योः" नद्योः "सम्भेदं" सङ्गमम् "आययौ" आगतवान्, यत्र विपाट्छुतुद्र्यौ इतराभिः सिन्ध्वादिभिर्नदीभिः सम्भिन्ने एकीभूते इत्यर्थः। "अनुययुः" "इतरे" तदनुयायिनस्तस्करा वा। "स विश्वामित्रः" तास्तितीर्षुः "नदीः तुष्टाव"—"गाधाः" स्वल्पोदकाः यूयं "भवतेति"। एतमर्थं पुरस्कृत्य कथं तुम-

स्तुष्टाव १, "अपि द्विवत्" द्विवचनसंयुक्तैर्मन्त्रैः, "अपि बहुवत्" बहुवचनसंयुक्तैर्मन्त्रैः। "तत्" तत्र, एव सति "यद् द्विवत्" द्विवचनवत्, "तत्" "उपरिष्टात्" चतुर्दशाध्याये "प्रपर्वतानाम् (ऋ० सं० ३, २, १२, १)"—इत्येतस्यामृचि "व्याख्यास्यामः"। "अथ" पुनः "एतद् बहुवत्" व्याख्यायते— ॥२॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः। प्रसिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः॥ उपरमध्वं मे वचसे सोम्याय सोमसम्पादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा मुहूर्तो मुहुर्ऋतुर्ऋतुरर्त्तेर्गतिकर्मणो मुहुर्मूढ इव कालो यावदभीक्ष्णञ्चेत्यभीक्ष्णमभिक्षणं भवति क्षणः क्षणोतेः प्रक्ष्णुतः कालः कालः कालयतेर्गतिकर्मणः प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः कुशिको राजा बभूव क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः साधुविक्रोशयितार्थानामिति वा नद्यः प्रत्यूचुः॥ ३ ॥

रमध्वं मे वचस इति। त्रिष्टुभ एताः। "उपरमध्वं मे" उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्व

मित्यनेन क्रियापदेन योजितः। उपरमध्वं मम "वचसे" "सोम्याय सोमसम्पादिने" सोमा हि अनेनास्मद्वचसा देवतानामवभृता बहवः सम्पादिताः, ता यूयमस्मै प्रतिविशिष्टाय वचसे सत्यतार्थम्,—कथन्नाम सत्यमिदं स्यादित्येवमर्थं-मुपरमध्वम्, मन्दवेगा गाधाय भवतेत्यभिप्रायः। हे "ऋतावरीः" उदकवत्यः। कियन्तं पुनः कालमुपरमध्वम् ? "मुहूर्त्तम्" न च नित्यमेव मन्दवेगतां गाधोदकतां वा प्रार्थये, किन्तर्हि ? यावदुत्तरेयमहं तावदेवेत्यभिप्रायः। "एवैः" एभिरुदकैरतिप्रवृद्धैरुपरमध्वम्। "अयनैर्वा" कामैरेतैरस्म-त्प्रार्थनाविशेषैः—उत्तरेम, गृहान् गच्छेम, वित्तं प्रापयेम, इत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम्। अथ वा "अयनैः" चित्रैर्गमनैर्वेगवद्भिर्यैर्यूयमभिप्रवृत्तास्तैरुपरमध्वम् मुहूर्त्तम्। यदेवमतिशयेणोच्यमाना न शुश्रुवुः, तदैकामुद्दिश्य प्रवहते वक्तुम्,—'सिन्धुमच्छ अच्छ'। अभेः स्थाने। 'अह्वे"—इत्येतत् पदमाकृष्य "प्र अभि ह्वयामि" इत्येवं योजितं भाष्यकारेण। किं प्राभिह्वयामि ? "सिन्धुम्"। कया ? 'बृहती मनीषा' बृहत्या मनीषया" "मनस ईषया" मनःपूर्विकया "स्तुत्या" इत्यर्थः। अथ "वा" "प्रशस्या"। कामर्थमिच्छन् अभिह्वयामि ? 'अवस्युः' अवनमिच्छन्, गमनमित्यर्थः। "कुशिकस्य सूनुः" अहमिति, पितुरपि गौरवाम्मम गौरवमेताः कुर्य्युः॥ इति समस्तार्थः॥

इव यः काल ऋतुः, स मुहूर्त इत्युच्यते। किञ्च "यावत्" एव "च अभीक्ष्णं" तावन्मुहूर्तः, यावांश्च मुहूर्तस्तावदभीक्ष्णमित्यर्थः। सारूप्यप्रसक्तं निरुच्यते,—"अभीक्ष्णमभिक्षणं भवति" तद्धि क्षणमाभिमुख्येन स्थितं भवति। "क्षणं क्षणोतेः" हिंसार्थस्य (तना० उ०)। स हि "प्रक्ष्णुतः" प्रकर्षेण हिंसितः "कालः" अल्पत्वात्। "कालः कालयतेर्गतिकर्मणः"। स हि सर्वाण्येव भूतानि कालयति क्षयं नयतीत्यर्थः। "कुशिको राजा"—इति तत्त्ववचनम्। "क्रोशते" वा शब्दार्थस्य (भू० प०)' स हि साध्वेव क्रियतामिति नित्यकालमेव क्रोशति। "कंशतेर्वा स्यात्" प्रकाशयत्यर्थस्य, स हि प्रकाशयिता साधूना धर्माणामात्मनैव प्रकाशकः। अथ "वा" "साधुविक्रोशयितार्थानामिति" साधुषु ब्राह्मणेषु विक्रोशयिता अर्थानां दातेत्यर्थः॥

एवमुक्तवन्तं "नद्यः प्रत्यूचुः"—॥ २ ॥

इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑हन् वृ॒त्रं प॑रि॒धिं न॒दीना॑म्। दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः॥ इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनति कर्मापाहन् वृत्रं परिधिन्नदीनामिति व्याख्यातम्। देवोऽनयत्सविता सुपाणिः। कल्याणपाणिः पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति। तस्य वयं प्रसवे याम उर्वीः। उर्व्यः

ऊर्णोतेर्वृणोतेरित्यौर्णवाभः प्रत्याख्यायान्ततं आशुगुन्नुवुः ॥ ४ ॥

इन्द्रो अस्मां अरददिति। "अरदत्" अखनदित्यर्थः। "रदति खनतिकर्मा"। कथम्पुनरखनत्? "अपाहन् वृत्रम्" अपावधीत् मेघम। "परिधिं नदीनाम्" नदनानामपाम। स हि नियत तीरयोर्निरुणद्धि, तमिन्द्रो वज्रेण हन्ति, तस्मिन् हते पृथिवीं प्राप्यापो यथा निम्नानुसारिण्य खातानि कुर्वन्त्यो वहन्ति, ते खातैर्वय गच्छामः। एव कृत्वा 'अस्मान् इन्द्र अरदत्'। एवञ्च कृत्वा स एव इन्द्र 'देवः' 'सविता' सर्वार्थप्रसविता वर्षद्वारेणास्मान् 'अनयत्' समुद्रम्। 'सुपाणि' प्रशस्तपाणिरित्यर्थः। यत एव सोऽस्माक खनिता नेता च अत 'तस्य' इन्द्रस्य 'प्रसवे' अनुज्ञायामादेशे वर्त्तमाना वय 'याम' गच्छाम 'उर्वीः' ऊर्णुवत्य सञ्चजमाना वा। तानि तानि देशान्तराणि यथोभि। साऽस्माकमोश्वरः। स एवा स्मानाज्ञापयितुमर्हति, न त्वमित्यभिप्राय ॥

"पाणि पणायते" पूजार्थस्य। "प्रगृह्यपाणी" सयतौ कृत्वा तत "देवान् पूजयन्ति" इति ॥

"प्रत्याख्याय" एष तमृषि तत्सूक्तस्य "अन्तत" अन्ते अनयर्चा "आशुगुवु" ता नद्य स्तुतवत्य इत्यर्थ —॥ ४ ॥

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन। नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥ आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्या-

येव कन्या परिष्वजनाय निनमा इति वाश्व-नामान्युत्तराणि षड्विंशतिस्तेषामष्टा उत्तरा-णि बहुवदश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा तत्र दधिक्रा इत्येतद्दधत् क्राम-तीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा तस्याश्ववद्देवतावच्च निगमा भवन्ति तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामो-ऽथैतदश्ववत् ॥ ५ ॥

आ ते कारो इति । तदा श्रुतं भवति, यदा तद्वचः क्रियते, श्रूयमाणमपि हि तत्रैव श्रुत भवति, यत्र क्रियते। 'आ ते कारो शृणवाम' आभिमुख्येनावस्थिताः सन्तः शृणवाम हे 'कारो' स्तोमानां कर्त्तः। किमाशृणवाम ? 'वचांसि'। अतो ब्रूमः,—"ययाथ" याहि त्वम्। 'अनसा' शकटेन सह 'रथेन' च। कस्मात् पुनरेवमादरवन्तो ब्रूमः याहीति ? इतः,—यस्मात् 'दूरात्' आयातस्त्वं परिश्रान्तः, तस्मात्कारण' नस्त्वयि। तेन वयमेता 'नि ते नंसै' "निनमाम ते"। नीचैर्न-माम गाधोदका भवामित्यर्थः। कथम्पुनर्निनमाम ? 'पीप्यानेव योषा' "पाययमानेव योषा पुत्र'" यथा निनमेदेवं वयं तव निनमाम। एवमुक्ता पुनोपमया कदाचिदयं क्रोधमियादिति मन्वानाः सत्यः पतिकन्यामन्यामन्यामुपमामुपाददिरे,—"मर्य्यायेव कन्या शश्वचै ते" 'मर्य्याय' मनुष्याय 'कन्या' नवोढ़ा 'शश्वचै ते' "परिष्वजनाय" कथं नाम परिष्वजेत मामयमित्यभिप्रायेण यथा ह निनमेदेवं वयं तव निन-

नाम। "निनमा इति वा" यदि वा" निनमा इत्येवं परिणामः निनंसे इति एतस्य पदस्य अथ वा निनंसे इति ॥

अश्वनामान्युत्तराणि षड्विंशतिः। अश्वस्य नामानि 'अश्वनामानि' 'उत्तराणि' प्रकृतेभ्यो नदीनामभ्यः, अश्वा एव ह्यश्वाः। एवं ह्युक्तम्,—"अप्सु जाता अश्वाः स्वादैवतान् योनेर्जनयन्ति" इति। तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि। कियन्ति पुनस्तानि? 'षड्विंशतिः' षड्धिका विंशतिः (२६)। कतमानि पुनस्तानि? "अत्यः, हयः, अर्वा" —इत्येवमादीनि। अतति गच्छतीत्यत्यः। हयति गच्छतीति, हन्ति वाध्वानमिति हयः। ईरणवानर्वा, गमनवानित्यर्थः। एवमादि ॥

"तेषाम्" अश्वनाम्नाम् "अष्टौ" यानि "उत्तराणि" अव्यश्च इत्येवमादीनि, तानि "बहुवत्" बहुवचनप्रयुक्तानीत्यर्थः ॥

आह,—"अश्वः कस्मात्"? उच्यते,—"अश्नुतेऽध्वानं" व्याप्नोतीत्यर्थः। "महाशनो वा भवति इति" स हि बहु भुङ्क्ते। "तत्र" तस्मिन् षड्विंशके अश्वाभिधानगणे "दधिक्रा इत्येतत्" पदं सन्दिग्धम्। तत् पुनरेतत्—"दधत् क्रामतीति" धारयन्नयमश्वारोहं क्रामतीति दधिक्राः? अथ "वा" "दधत्" धारयन्नयमश्वारोहं "क्रन्दति" शब्दं करोति "इति" दधिक्राः? अथ "वा" "दधत्" धारयन् अयमश्वारोहम् "आकारी" आकारवान् "भवतीति" दधिक्राः?— स हि अधिरूढेऽश्वारोहे आकुञ्चितग्रीवो विपुष्पितसर्वगात्र आकृतिमान् भवति ॥

"तस्य" दधिक्राशब्दस्य "अश्ववत्" अश्वसंयुक्ताः, "देवतावत्" देवतासंयुक्ताः "च" "निगमा भवन्ति"। "तत्" एतदुच्यते,—"यद् देवतावत्" अस्य दधिक्राशब्दस्य, "तत्" "उप-

रिष्टात्' पञ्चदशेऽध्याये "आ दधिक्राः शवसा (ऋ० सं० १०; ६, १६, १)"—इत्यस्यामृचि "व्याख्यास्यामः"। "अथ" पुनर्यत् "अश्ववत्" अस्य, तत् "एतत्" व्याख्यायते—॥ ५ ॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि। क्रतुं दधिक्रा अनु सन्तवीत्वत् पथामङ्कांस्यन्वापनीफणत् ॥ अपि स वाजी वेजनवान् क्षेपणमनु तूर्णमश्नुतेऽध्वानं ग्रीवायां बद्धो ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वापि कक्ष आसनीति व्याख्यातम्। क्रतुं दधिक्राः कर्म वा प्रज्ञां वा। अनु सन्तवीत्वत्। तनोतेः पूर्वया प्रकृत्या निगमः। पथामङ्कांसि पथां कुटिलानि पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वाऽङ्कोऽञ्चतेरापनीफणदिति फणतेश्चर्करीतवृत्तं दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ज्वलतिकर्माण उत्तरे धातव एकादश तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ ६ ॥

उत स्य वाजीति। गौतमपुत्रस्य वामदेवस्येयमार्षम्। जगती। वाजपेये वाजियुक्तं रथमधिरुह्य यजमानोऽनुवाकं जपति, तत्रैषा। "उत स्यः" "अपि सः" इत्यर्थः। "वाजी वेजनवान्"। 'ओ विजी भयचलनयोः (रु० प०)'। भयवान् परेभ्यो भयदाता, परेषां हि तं दृष्ट्वा भयमुत्पद्यते।

चलनवान् वा, स हि नित्यं चलनशीलः। 'क्षिपणिं' "क्षेप-
णम् अनु" कशाघातमनु "तूर्णमश्नुतेऽध्वानम्" व्याप्नोती-
त्यर्थः। अपि कशाप्रहारमनु 'तुरण्यति' अप्यनाहत एवेत्य-
ऽपिशब्दः। किञ्च "ग्रीवायाम्" उरसि कक्षेण "बद्धः"। "अपि
कक्षे" कक्ष्यया। अथ "आसनि" मुखे खलीनेन बद्धः। एव-
मनेकेषु स्थानेषु बद्धः। तथापि तुरण्यत्येव। अन्यो हि एक-
स्मिन्नपि प्रदेशे बद्धः चलितुमपि न शक्नोति, किमुत त्वरि-
तुम्। किञ्च, "क्रतुम्" आत्मीयं गमनं "कर्म वा प्रज्ञा वा"
अश्वारोहस्य सन्तनोति काममभिप्रेतार्थेन शीघ्रगामित्वात्
"दधिक्रा" अश्वः अनुसन्तनोतीत्यर्थः। किञ्च, यान्यपि च
कानिचित् "पथां" मार्गाणाम् "अङ्कांसि" अञ्चितानि कुटि-
लानि सन्ति, तान्यपि अनुलोमानीव कुर्वन् आशुगामित्वात्।
आभिमुख्येन पुनः पुनर्भृशं वा फणति गच्छतीत्यर्थः॥ एष
समस्तार्थः॥

अथैकपदनिरुक्तम्।—"ग्रीवा, गिरतेर्वा" गिलनार्थस्य
(तु० प०), तया हि गिलत्यन्नम्। "गृणातेर्वा" शब्दार्थस्य
(क्र्या० प०), तया हि शब्दो गीर्यते। "गृह्णातेर्वा" (क्र्या०
उ०) तया क्षुद्रकादि गृह्यते, यः ग्रहलीक्रियते। "अनुसन्त-
वीत्वत्" इति, "तनोतेः" धातोः (त० प०) "पूर्वया प्रकृत्या
निगमः"। षड्विधो हि धातुः। "प्रकृत्यन्तः, सनन्तश्च,
यङन्तो, यङ्लुगेव च। ण्यन्तो, ण्यन्तसनन्तश्च, षड्विधो
धातुरुच्यते॥" आसां षण्णां धातुप्रकृतीनां या पूर्वा प्रकृति-
स्तयैव निगमः, न सन् प्रकृतीत्यादीनामन्यतमया। "पन्थाः,
पततेर्वा पद्यतेर्वा पन्थतेर्वा" त्रयोऽपि ह्येते गत्यर्थाः, एषा-
मन्यतमस्य। "अङ्कः अञ्चते" गत्यर्थस्य। "आपनीफण-
दिति" "फणतेः" गत्यर्थस्य चर्करीतान्तत्वेन वृत्तम्॥

"दश" यानि "उत्तराणि" नामानि, तान्यग्निनामसम्बन्धेनैवोच्यन्ते तान्यपि अग्निनामानीति। तानि पुनः "आदिष्टोपयोजनानि"—"इति" एवम् "आचक्षते" आचार्य्याः। इदमिन्द्रस्याश्वानां नाम, इदमग्नेः, इदमादित्यस्य,—इत्येवमादिष्टोपयोजनानि। कतमानि पुनस्तानि? "हरी इन्द्रस्य"—इत्येवमादीनि। हरी हरितवर्णौ इन्द्रस्याश्वौ। "रोहितोऽग्नेः" रोहितवर्णौ। इत्येवमादि॥

"ज्वलतिकर्माण उत्तरे धातव एकादश"। य एव ह्यग्नयो भवन्ति, त एव ज्वलन्तीव तेजसा, ततोऽग्निनामभ्य उत्तरे ज्वलत्यर्था धातवः। कतमे पुनस्ते? इति: "भ्राजते, भ्राशते, भ्राश्यति"—इत्येवमादयः॥

"तावन्त्येवोत्तराणि" "जमत्, कल्मलीकिनम्, जञ्झणाभवन्"—इत्येवमादीनि "ज्वलतो नामधेयानि"। जमति गच्छतीति "जमत्"। कमह मलिनं शोधयामीति "कल्मलीकिनम्"। जनं भावयतीति "जञ्झणाभवन्"। इत्येवमादि॥

अध्यायपरिसमाप्त्यर्थो द्विरभ्यासः॥ ६॥

इति निरुक्तवृत्तौ सप्तमाध्यायस्य सप्तमः पादः॥ ७॥

इति जम्बुमार्गनिवासिनः आचार्य्यभगवद्दुर्गस्य

कृतौ ऋज्वर्थायां निरुक्तवृत्तौ सप्तमोऽध्यायः

(द्वितीयोऽध्यायः) समाप्तः॥ २॥

१ २ ३ ४ ५
(अथनिर्वचनमोघोराज्ञोविद्याहवा अथातो-

६ ७ ८ ९
ऽनुक्रमिष्यामोदृनेदृनेतायांवास्तूनियर्द्धंचकारा-

यंसमशिङ्क्ते [10] हिरण्यनामान्याष्टिं [11] पेशोयद्देवापिः- [12]
[13] साधारणानि [14] स्वरादित्यो [15] रश्मिनामान्यतिष्ठन्ती- [16]
[17] नांदासपत्नी [18] रात्रिनामानी [19] दंयथ्ये [20] उषसवन्तसा [21] हस्वक-
[22] प्या देवानां [23] मानेवाङ्नामानी [24] यंशुष्मे [25] भीरमध्वं म
[26] इन्द्रो [27] अस्मानातिकारो [28] उतस्योऽष्टाविंशतिः ॥)

इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥२॥

---

अथ तृतीयाध्यायस्य

प्रथमपादः ।

ओ३म् । कर्मनामान्युत्तराणि षड्विंशतिः कर्म कस्मात् क्रियत इति सतोऽपत्यनामान्युत्तराणि पञ्चदशापत्यं कस्मादपततं भवति नानेन पततीति वा तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः ॥ १ ॥

"कर्मनामान्युत्तराणि षड्विंशति"। कर्मणो नामानि 'कर्मनामानि' 'उत्तराणि'—इति प्रकृतेभ्य । ज्वलत्येवादी

कर्माणि क्रियन्त इति ज्ञव्लनामभ्य: उत्तराणि कर्मनामानि। कियन्ति पुनस्तानि ? 'षड्विंशतिः' षड़धिका विंशतिः (२६)। कतमानि पुनस्तानि ? "अपः, अप्नः, दंस."—इत्येवमादीनि। आप्यते पुरुषेणैतत्, आप्नोति वा पुरुषमेतदिति "अपः"। "अप्नः"—इत्ये तदप्याप्नोतेरेव। एवमादि योज्यम् ॥

आह,—"कर्म कस्मात्" ? उच्यते,—"क्रियत इति सतः"। सत इति कारकावधारणार्थमिति ॥

"अपत्यनामान्युत्तराणि पञ्चदश"। अपत्यस्य नामानि 'अपत्यनामानि' 'उत्तराणि'—इति प्रकृतेभ्यः कर्मनामभ्यः। सर्वकर्मणां ह्यपत्योत्पादनकर्मैव प्रधानऋणापाकरणद्वारेणेति कर्मनामभ्य उत्तराणि अपत्यनामानि। कियन्ति पुनस्तानि ? 'पञ्चदश'। कतमानि पुनस्तानि "तुक्, तोकम्, तनयम्"—इत्येवमादीनि। "तुक्" तकतेर्धातोस्तुज्यतेर्वा। "तोकं" तुद्यतेः। "तनयं" तनोतेरिति वक्ष्यति ॥

आह,—"अपत्यं कस्मात्" ? उच्यते—"अपततं भवति" पितुः सकाशादेत्य पृथगिव ततं भवति। अथ "वा" "अनेन" जातेन सता पितरो नरके "न पतन्तीति"—इत्यपत्यम् ॥

अत्र पुनर्विवदन्ते,—द्वयोः सन्निपाते किं चेत्रिणोऽपत्यमुत बीजिनः ? इति। "तत्" एतदुच्यते,—"यथा जनयितुः" एव "प्रजा" भवति, "एवमर्थीये ऋचावुदाहरिष्यामः—॥१॥

परि॒षद्यं॒ ह्यर॑णस्य॒ रेक्णो॒ नित्य॑स्य रा॒यः पत॑यः स्याम। न शेषो॑ अग्ने अ॒न्यजा॑तम॒स्त्यचे॑तानस्य॒ मा प॒थो वि दु॑क्षः ॥ परि॒हर्त॒व्यं हि नोप॒सर्त॒व्यमर॑णस्य॒ रेक्णो॒ऽरणो॒ऽपार्णो

भवति रेक्ण इति धननाम रिच्यते प्रयतो नित्यस्य राय: पतय: स्याम। पित्र्यस्येव धनस्य न शेषो अग्ने अन्यजातमस्ति। शेष इत्यपत्य-नाम शिष्यते प्रयतोऽचेतयमानस्य तत्प्रमत्तस्य भवति मा न: पथो विदूदुष इति तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

'परिषद्य हि' "न प्रभाय"—इति च (२, ३ख०)। एते त्रिष्टुभौ। वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेण अग्निरभ्यर्थित-—पुत्र मे देहीति। तेन किलासौ प्रत्युक्त,—क्रीतकक्षत्रिम दत्तकादीनां पुत्राणामन्यतमं कुरुष्व पुत्रमिति। स एवमुक्त, एतयाऋग्भ्यामन्यजातान् पुत्रान् निन्दन्नौरसपुत्र ययाचे। "परि षद्य०—०वि दुच'"। (ऋ० सं० ५,२,६,२) 'परिषद्य' "प्रहृ रिवर्त्तव्य" परिहरणीय परित्याज्यमित्यर्थ। किमुनस्तत्? "अरणस्य रेक्ण" 'अरणस्य' अपगतार्णस्य अपगतोदकसम्ब न्धस्य परकुलजातस्य 'रेक्ण' यदपत्याख्य धन, तत परिहर्त्तव्यम, न पुत्रत्वेन परिकल्पयितव्यमित्यर्थ, न हि तत पुत्र त्वेन कल्प्यमानमपि पुत्रकार्य्येष्ववतिष्ठति, परकीयत्वात। यत एवमतो ब्रूम,—"नित्यस्य राय पतय स्याम" "पित्र्य स्येव धनस्य"। यथा हि यदेव पित्र्य धन पुत्रत्वे भवति, तस्यैव ह्युपरि अगौण स्वामित्व भवति। एव यदेव स्वयञ्जात मपत्य भवति, तदेव मुख्य भवति, नेतरत्—क्षेत्रज वा क्रीतक वा। यत एवमतो ब्रूम,—यदेव नित्यमात्मीय मगौण स्वयमुत्पादित पुत्राख्य रा धनम्, तस्यैव वय पतय पालयितार स्याम, मा परकीयस्यैवाभिमाय। कस्मात् पुन

रेव ब्रूमहे ? इत,—यस्मात् "न शेषो अग्ने अन्यजातम् अस्ति"। 'न अस्ति शेष' नास्त्यपत्यमन्येन जात हे 'अग्ने।' य एव जनयति तस्यैव हि तद् भवति, नेतरस्येत्यभिप्राय । 'अचेतनस्य' य एव हि अचेतयमानो भवति, अविद्वान् प्रमादी, तस्यैव "अचेतयमानस्य" "प्रमत्तस्य" अश्रुतवतो धर्मात् परितोषमात्र "भवति"—ममेदमपत्यमिति, न अपत्यकार्येऽवतिष्ठते। यत एवमतो ब्रूम,—'मा पथो विदुक्ष' मास्मानितत् पितृपितामहप्रपितामहानुसन्ततात् 'पथ' मार्गात्, येन केनचित प्रत्याख्यानद्वारेण "विदूदुष"। त्व देहि न पुत्रमौरसमित्यभिप्राय ॥ इति समास्तय ॥

अथैकपदनिरुक्तम्। "अरणोऽपार्ण" अपगतोदकसम्बन्ध इत्यर्थ । "रेक्ण इति धननाम" तद्धि "रिच्यते" अति रिच्यते इतो लोकादमु लोक "प्रयत." म्रियमाणस्येत्यर्थ । "शेष इत्यपत्यनाम" तद्धि "शिष्यते" इहैव लोकेऽवतिष्ठते पितुरमु लोक 'प्रयत' गच्छत इत्यर्थ ॥

एवमस्यामृचि 'न शेषो अग्ने अन्यजातमस्ति'—इत्यनेन विशेषलिङ्गेन उपपन्नमेतद्,भवति,—जनयितुरेव प्रजा भवति न चेतियो नापि क्रेतुरन्यस्य वा कस्यचिदिति। एवञ्चैष शब्दार्थ उपपद्यते,—यस्मादेवापेत्य तत भवति, तस्यैवापत्यमिति ॥

अनेनैव चापत्यशब्दनिर्वचनप्रसङ्गेनैष मन्त्रो व्याख्यात, उत्तरस्च सावशेषमपत्यशब्दे प्रसक्तानुप्रसक्तमवोच्यते,—"तस्य उत्तरा भूयसे निर्वचनाय"—॥ २ ॥

न॒ हि ग्र॒भा॒यार॑णः सु॒शेवो॒ऽन्योद॑र्यो॒ मन॑सा॒ मन्त॒वा उ॑। अधा॑ चि॒दोकः॒ पुन॒रित्स एत्या

नो<sup></sup> वाज्यभीयाले तु नर्व्यः ॥ न हि ग्रहीतव्यो ऽरणः सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यो ममायमित्यथ स ओकः पुनरेव तदेति यत आगतो भवत्योक इति निवासनामोच्यत ऐतु नो वाजी वेजनवानभिषहमाणः सपत्नान्नवजातः स एव पुत्र इत्यथैतां दुहितृदायाद्य उदाहरन्ति पुत्रदायाद्य इत्येके ॥ ३ ॥

न हि ग्रभायेति। "न हि ग्रहीतव्य" नाङ्गीकर्त्तव्यः, पुत्रो ममायमित्यनेनाभिप्रायेण। कः पुनरसौ नाङ्गीकर्त्तव्यः? "अरण." अपार्ण, अपगतोदकसम्बन्ध, अन्यकुलज। यद्यपि "सुशेव" एव स्यात् "सुखतम" परिचरितो हितैषी, तथा "अपि" "अन्योदर्य." अन्ये नोदीरितादेतमो जात, अन्यजायोदरसम्भूतो वा, यो हि स्वस्या जायाया सम्भवति, स स्व एवोदरे सम्भूतो भवति। "अर्द्धो ह वा एष आत्मनो यज्जायेति विज्ञायते"। तस्मात् योऽन्यजायोदरसम्भूत, स "मनसापि न मन्तव्यो ममायमिति" किम्पुन पुत्रत्वेन परिकल्पयितव्य इति। किङ्कारण मनसापि न मन्तव्य इति? "अधा चिदोक पुनरित्स एति"। अधशब्दोऽथशब्दस्यार्थे वर्त्तते, स च हेत्वर्थे। यस्मात् "ओक." स्वं निवासस्थान स्व यत्र बहुनापि कालेन स एति—तद्वश्य एव भवति, तस्मादपुत्र एवासौ। यत एवमतो ब्रवीमि,—'आ नो वाज्यभीषाले तु नव्यं'। "ऐतु" आगच्छतु, "नः वाजी वेजनवान्" परेषां भयदाता 'अभीषाट्' "अभिषहमाण:" अभिभवन्

"सपत्नान्" 'नव्य.' "नवजात." शिशुरित्यर्थः। "स एव पुत्र." आगच्छतु, न परकीयैः पुत्रैः सङ्कल्पितैरित्यभिप्रायः॥

"अथैतां दुहितृदायाद्य उदाहरन्ति"। इदमुक्तम्,—अपेत्य यस्मात् पितु. सकाशात् तत भवति, तस्मादपत्यमिति तदिदमुभयोरपत्यं प्राप्नोति दुहितुः पुत्रस्य च, दुहितापि ह्यपेत्यैव तता भवति पितुः सकाशात्। तत्रैव सति उभयोर्दुहितृपुत्रयोरपत्यकार्य्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति, तदिदं विचार्य्यते। तदधिकारार्थोऽयमथशब्दः। एताञ्च शासद्वह्निरित्यादि या वक्ष्यमाणा (४ख०) ताम्, दुहितुर्दायाद्ये अर्थे उदाहरन्ति धर्मविदः। अस्याञ्चि वक्ष्यमाणाया (४ख०) दुहितुरपि दायाद्यत्वमस्तीति दृश्यते॥

"पुत्रदायाद्य इत्येके" एके पुनर्धर्मविदो मन्यन्ते यत् पैतृकं वित्तं तत् पुत्रस्यैव दायाद्यं न दुहितुरिति॥

यथा दुहितापि दायाद्यमर्हति, तथेयमृग् निरुच्यते,—॥ ३॥

शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन्। पिता यत्र दुहितुः सेकमृञ्जन् संशग्म्येन मनसा दधन्वे॥ अशास्ति वोळ्हा सन्तानकर्मणे दुहितुः पुत्रभावं दुहिता दुहिता दूरे हिता दोग्धेर्वा नप्तारमुपागमद् दौहित्रं पौत्रमिति विद्वान् प्रजननयज्ञस्य रेतसो वा अङ्गादङ्गात् सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन्नविशे-

येन मिथुनाः पुत्रा दायादा इति तदेतदृक्श्लोकाभ्यामभ्युक्तम्। अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यविशेषेण पुत्राणां दायो भवति धर्मतः। मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥ न दुहितर इत्येके तस्मात् पुमान् दायादोऽदायादा स्त्रीति विज्ञायते तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसमिति च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः पुंसोऽपीत्येके शौनःशेपे दर्शनात्। अभ्रातृमतीवाद इत्यपरम्। (अमूर्या यन्ति जामयः सर्वा लोहितवाससः।) अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः। अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया अनिर्वाह औपमिकस्तस्योत्तरा भूयसे निर्वचनाय॥ ४॥

९

शासद्वह्निरिति। एषा त्रिष्टुप्। ऐन्द्रे सूक्ते विश्वामित्री। माध्यन्दिने सवने उक्थ्यपर्याये अच्छावाकस्य यच्छस्त्रमभिविहितं विश्वजिदादिष्वहीनकेष्वहःसु अहीनसूक्तं नाम, तत्रैव शस्यते। "न जामये तान्व (५ ऋ०)"—इतीयमपि अनयैव समानार्षविनियोगदैवतच्छन्दस्का। 'शासद् वह्निः' "प्रशास्ति"

प्रख्यापयति प्रज्ञापयतीत्यर्थः। कः पुनरसौ प्रशास्ति ? किं वा प्रशास्ति ? इति। "वोढा" य उद्वोढा स्त्रिया भवति स., तस्या या जायते दुहिता, तस्याः पुत्रभावं प्रशास्ति,—"सन्तानकर्मणे" अर्थाय। "दुहिता, दुर्हिता" सा हि यत्रैव दीयते, तत्रैव दुर्हिता भवति, "दूरे" सती सा पितुः "हिता" पथ्या भवतीति दुहितेत्युच्यते। "दोग्धेर्वा" सा हि नित्यमेव पितुः सकाशात् द्रव्यं दोग्धि प्रार्थनापरत्वात्। आह,—कथं पुनर्गम्यते प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम् ? इति। उच्यते,—इतः। यस्मात् 'नप्त्यङ्गात्' "नप्तारमुपागमत्" उपागच्छति चेतसा। "दौहित्रम्" दुहितृपुत्रम्। "पौत्रमिति" पुत्रो ममायमिति एवमुपागच्छति। न चापुत्रस्य पौत्रः स्यात्, उपागच्छति च दुहितुः पिता ममायमिति दौहित्रम्। तस्माद् दुहितापि पुत्र एव, यस्याः पुत्रः पौत्रो ममायमित्येव चेतसा उपगम्यते। 'विद्वां ऋतस्य दीधितिं सपर्यन्'। 'विद्वान्' कस्य ? 'ऋतस्य' "प्रजननयज्ञस्य"। ऋत इत्येतदपठित यज्ञनाम। 'दीधितिं' विधानमित्यर्थः। प्रजननयज्ञविधानमविशेषेण 'सपर्यन्' पूजयन्नित्यर्थः। यथैव हि पुत्रजनने प्रजननयज्ञस्तन्यते तथैव हि दुहितृजननेऽपि,—यैरेव मन्त्रैर्येनैव च विधानेन पुत्रगर्भ आधीयते, तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि। अथ "वा" ऋतशब्देन रेत उच्यते। तत् "अङ्गादङ्गाद्" यत् सम्भूत तत् सर्वगात्रेभ्यः हृदयानुस्मरणनिमित्तेन गर्भजनने "मातरि" प्रत्युत प्रवृत्तं भवति रेत, तस्य "रेतस." "विधानं न विशेषेण पूजयन्" स वोढा दौहित्रं पौत्रो ममायमित्येवमुपगच्छति चेतसा। येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते, तेनैव हि दुहितृजननेऽपि, तत्रैव सति रेत उत्सर्गविध्यविशे-

यात् प्रजननयज्ञावशेषाद्वा अविशेषेण मिथुना पुत्राः स्त्रियश्च उभयेऽपि दायादा इत्येवमेके धर्मविदो मन्यन्ते । तदेतत् "ऋक्श्लोकाभ्याम्" "अभि" आभिमुख्येन "उक्तम्" —"मिथुना पुत्रा दायादा इति" "अङ्गादङ्गात् सम्भवसि (गो० गृ० सू० २, ८, २१)" "अविशेषेण पुत्राणाम्"—इत्येताभ्याम् ॥

'शासद्वह्निः'—इत्येतस्या ऋच प्रथमोऽर्द्धर्चो व्याख्यात, "पिता यत्र दुहितुः'—इत्यय द्वितीय उपरिष्टादस्य पादस्य व्याख्यास्यते। अनयोरर्द्धर्चयोरन्तरा तदेतदृक्श्लोकाभ्यामभ्युक्तमित्यत (६३४ पृ० १ प०) आरभ्य प्रसक्तानुप्रसक्त दायाद्यधर्माश्रितमेव पूर्वोत्तरपक्षसम्बन्धादाचारगत बहु व्याख्यायते मन्त्रावयवख्यापनाय, ईदृशोऽपि मन्त्राणा विषयो भवतीति धर्ममविज्ञानाय च। सर्व एवायमेवप्रकारो धर्मो मन्त्रेभ्य एव निर्बभावित्येतदेतेन ख्यापित भवति ॥

"अङ्गादङ्गात् सम्भवसि"—इत्येतामृच प्रवासादेत्य पुत्रस्य मूर्द्धनि जपन् जिघ्रति। अनुष्टुबेषा। स पुत्र उच्यते, —हे 'पुत्र !' 'अङ्गात् अङ्गात् सम्भवसि' त्व 'हृदयात्' च 'अधिजायसे' यत्तदुक्तम्—"अङ्गादङ्गात्सम्भूतस्य हृदयादधिजातस्य (६३३ पृ०२२प०)"—इति। तदनेनापि स्पष्टार्थत एव मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थताया स्पष्टार्थीकरणार्थं मन्त्र । तत्र हि 'ऋतस्य दीधिति सपर्यन्'—इत्यत्र 'ऋतस्य' "प्रजननयज्ञस्य रेतसो वा" "विधान" "अविशेषेण पूजयन्"—इत्युक्तम् (६३३पृ० २३प०), तत् पुनरेतदस्पष्टम्, इह पुनरङ्गादङ्गात् सम्भवसि हृदयादधिजायसे इत्येवमुच्यते। तत्रैव सति यथैव पुमान् अङ्गादङ्गात् सम्भवति हृदयाच्चाधिजायते, तथैव दुहितापीत्यविशेष उपपद्यते। तस्मात् साधूक्तम्—"अवि-

शेषेण मिथुनाः पुत्रा दायादा इति (६१२ पृ० २३पं०)"। 'आत्मा व पुत्रनामासि' यस्मादङ्गादङ्गात् सम्भूतस्त्वं हृदया-दधिजातस्तस्मादात्मैव त्वं ममैवावयवभूत इत्यभिप्रायः। केवल तु पुत्रनामा त्वम्, अहं पितृनामा, एतावानावयो-र्विशेषो नाममात्रं भिन्नमित्यभिप्रायः। 'स.' त्व 'जीव शरदः शतम्'—इत्याशीः। सर्वस्मिन्नपि संवत्सरे शरदि बहुजीवाः प्रचुररोगा भवन्ति, तस्माच्छरदः, तस्माच्छरदेवोपलक्ष्य संवत्-सरशतमतदायुराशास्यते ॥

'अविशेषेण पुत्राणां दायो भवति धर्मतः मिथुनानाम्'। क एवमाह ? 'मनु' 'स्वायम्भुवः' स्वयम्भुवोऽपत्य स्वाय-म्भुवः। कस्मिन् काले स एवमाह ? 'विसर्गादौ' सृष्ट्यादा-वित्यर्थ । पूर्वमहं श्लोकस्य व्यक्ष्येत। एवमेताभ्यामृक्श्लो-काभ्यामुक्तमविशेषेण पुत्रस्य दुहितुश्च दायादत्वम् ॥

"न दुहितर इत्येके" न दुहितरो दायाद्यमर्हन्तीत्येव-मेके धर्मविदो मन्यन्ते। ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति, —"तस्मात् पुमान् दायादः, स्त्री अदायादा,—इति" "विज्ञा-यते" एतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते, न दुहितरो दायाद्यमर्हन्ति, पुमानेवार्हतीति। "तस्मात् स्त्रियं जातां परास्यन्ति, न पुमांसमिति च"। एतदपरं दर्शनं दुहितुर-दायादत्वं लिङ्गतो दर्शयति,—"अथ यत् स्थाली परास्यन्ति हवनकर्मणो न तया जुह्वति, न दारुमयं परास्यन्ति हवन-कर्मणः दारुमयेनैव जुह्वति, तस्मात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति, न पुमांसम्"। तस्मात् पुमानेव पैतृकस्य वित्तस्येष्टे, न दुहिता। किञ्च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः। प्रदीयते हि परस्मै स्त्री, विक्रीयते च धैवा-हिकेन शुल्केन। "विक्रयश्चायमपत्यस्य मतिमान् को न

मस्यते। स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव स.।" इति भगवता वासुदेवेनोक्तं सुभद्राहरणे। तथा च ब्राह्मणमपि दर्शयति,—"चातुर्मास्येष्वनृतं वा एषा करोति, या पत्युः क्रीता सती अन्यथान्यैश्चरति" इति, तस्माच्छुल्केन प्रदानं विक्रय. कन्याया इत्युपपद्यते। अतिसर्गं परित्याग, परित्यज्यते हि कन्या स्वबन्धुभि, स्वयंवरे योऽवलिप्त स गच्छतु, यो वा तुभ्यं रोचते तं वृणीष्वेति। स एष क्षत्रियाणामेव स्वयंवरधर्मो नेतरेषां वर्णानामिति, स पुनरयमितरेषामपि वर्णानामदायादार्हत्वे कन्याया लिङ्गं भवति। तस्मात् दायाद्यमर्हति कन्येति।

"पुंसोऽपीत्येके, शौनःशेपे दर्शनात्"। यदुक्तं दानविक्रयातिसर्गहेतुभिरदायादत्वं स्त्रिया इति, अनैकान्त एषः, पुंसोऽपि दानविक्रयातिसर्गा विद्यन्त एव। पुरुषोऽपि हि परस्मै दीयते। एवं ह्युक्तम—"दत्तक्रीतकृत्रिमपुत्रिकौरसा पुत्रा" इति। तथा च "शौनःशेपे दर्शनात्" शौनःशेपे आख्याने बह्वृचानाम् आरते च शुनःशेपस्य विक्रयो दृष्ट,— 'विक्रीत मध्यमं मन्ये' इत्येवमादि। तथा च परित्यागोऽपि दृष्ट,—यथा विश्वामित्रेण मधुच्छन्द आदीनाम्। तस्मा-दनैकान्तिकत्वादेषां हेतूनामुभयोरपि दायाद्यत्वमित्येके मन्यन्ते।

"अभ्रातृमतीवाद इत्यपरम्" आचार्यमतमिति वाक्यशेष। यैवाभ्रातृका भवति कन्या, सैव पितुः धनमर्हति, नेतरा सभ्रातृका, पुरुषेषु हि पितुः पिण्डदातृषु तिष्ठत्सु न स्त्री धनमर्हति, सा हि परकीयं वंशं वर्धयति, न स्वम्, तस्मा-दसौ नार्धभागिनी। अभ्रातृकायाः पुनरयं विशेष,—अभ्रातृकाया पितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिषु

कार्य्य ऽवतिष्ठते इति भवत्यर्थभागिनी अभ्रातृका दुहिता । तदुक्तम्,—'पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मादर्थमपत्यमिति सवाग्यभिसन्धानमात्रं पुत्रिका' इत्येकेषामिति ॥

निगममप्येतस्मिन्नर्थे उदाहरन्ति,—"अभ्रातर इव योषा-स्तिष्ठन्ति हतवर्त्मनः"—इति । निगमस्य समासतोऽर्थमाह, —"अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदा-नाय हतवर्त्मान इति"। अस्यामृचि "अभ्रातृकाया" कन्यायाः "अनिर्वाह" अनिर्वहण विवाहनिषेध इत्यर्थ । "औपमिक" उपमया दर्शित, अभ्रातर इवेति। "अमूर्या यन्ति यामयः सर्वा लोहितवाससः। अभ्रातर इव योषा-स्तिष्ठन्ति हतवर्त्मनः (अ० सं० १, १७, १)॥" इयमथर्वणा प्रसवमार्गवहनरागिणो या स्त्री भवति, तस्या तन्निवार-कर्मणि विनियुज्यते। 'अमूया' 'यन्ति' स्रवन्ति नाड्यो रक्त-मज्जमभिरता स्त्रिय इवातिलोहितवस्त्रा 'सर्वा' एता तिष्ठन्तु उपरमन्तु हतलोहितवहनमार्गाः, अस्य मन्त्रस्य वीर्येण। कथम्पुनस्तिष्ठन्तु? 'अभ्रातर इव योषा' यथा काश्चिदभ्रातृका योषा हतभर्तृवशमार्गास्तिष्ठन्ति सन्तान-कर्मणि पिण्डदानाय, एवमेता नाड्य तिष्ठन्त्विति । एव मस्या ऋचि अभ्रातृकाया अनिर्वाह उपमया लिङ्गतो दर्शित ॥

"तस्य" अनिर्वाहस्य "उत्तरा" ऋक् "भूयसे" बहुतराय "नि" निर्विवाच्य "वचनाय" ॥ ४ ॥

अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा

उषा हस्रेव निरिणीते अप्सः॥ अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय नयति गर्त्तारोहिणीव धनलाभाय दाक्षिणाजी गर्त्तः सभास्थाणुर्गृणातेः सत्यसङ्गरो भवति तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते श्मशानसञ्चयोऽपि गर्त्त उच्यते गुरतेरपगूर्णो भवति श्मशानं श्मशयनं श्मशरीरं शरीरं शृणातेः शम्नातेर्वा श्मश्रु लोम श्मनि श्रितं भवति लोम लुनातेर्वा लीयतेर्वा नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद्गर्त्तेष्ठाः स्यात् प्रमायुको यजमान इत्यपि निगमो भवति। रथोऽपि गर्त्त उच्यते गृणातेः स्तुतिकर्मणः। स्तुततमं यानम्। आरोहथो वरुण मित्र गर्त्तमित्यपि निगमो भवति। जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते रूपाणीति चतस्र उपमा नाभ्रातृमुपयच्छेत तोकं ह्यस्य तद्भवतीत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्थयति सन्दधात्यात्मानं सङ्गमेन

**मनसैषयैतां जाया रिक्थप्रतिषेध उदाहरन्ति ज्यैष्ठं पुत्रिकाया इत्येके ॥ ५ ॥**

अभ्रातेव पुंस इति। दीर्घतमःपुत्रस्य कक्षीवत आर्षम्। त्रिष्टुप्। औषसी। प्रातरनुवाकाश्विनयोः शस्यते। 'अभ्रातेव पुंस' यथा अभ्रातृका कन्या दत्तापि सती पित्रा, स्वीकृतापि भर्त्रा, पुनः 'प्रतीची' "पितॄन्" एव पितृवंशमेव "अभिमुखी एति" "सन्तानकर्मणे पिण्डदानाय नयति" पतिवंशमित्यर्थः। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्द्धयति, न भर्तृवंशमिति, तस्मादभ्रातृका पैतृकं दायाद्यमर्हतीत्युपपद्यते। "गर्त्तारुगिव सनये धनानाम्"। "गर्त्तारोहिणी इव" काचित् "दाक्षिणात्या स्त्री" सा यथा "गर्त्तः सभास्थाणुः" तमारोहति 'सनये' लब्धये 'धनानाम्'। एवम् 'उषाः' अपरकाले रात्र्या नभ आरोहति। किञ्च 'जायेव पत्य उशती सुवासा'। यथा जाया पत्ये भर्त्रे सुवासा भूत्वा ऋतुकाले आत्मानं दर्शयति एवमुषा आत्मानं दर्शयति जनानाम्। किञ्च 'उषा हस्रेव निरिणीते अप्सः'। यथा हसना हसनस्वभावा दन्तान् आत्मनो दर्शयति, एवमुषा अपि आत्मनोऽन्तर्भूतानि सर्वद्रव्याणां रूपाणि विवृणुते, आवरणे तमसा दिग्धानि सर्वद्रव्याणि प्रकाशोदकेन धौतानीव करोति॥

"चतस्रः" एताः "उपमाः" अस्यामृचि।—अभ्रातेव पुंस इत्येका। गर्त्तारोहिणीवेति द्वितीया। जायेव पत्य इति तृतीया। हस्रेवेति चतुर्थी। अत्र प्रथमोपमया अभ्रातेव पुंस इत्यनया अभ्रातृकाया अनिर्वाहो लिङ्ग्यते, यथा अभ्रातृका पितॄनेव प्रत्येति न पतिम्, एवमुषा आदित्यमेव प्रत्येति। एवमभ्रातृका कन्या यस्मिन्नेव वंशे उत्पन्ना भवति, तमेव

प्रकाशयति· वर्धयति, न भर्तृवंशम्। इत्येवमुपमया अत्र बोद्धव्यं तदुपप्रदर्शितं भवति, पुत्रार्थत्वाद् विवाहस्य। तथा दुवर्द्धयितृत्वाद् भर्तृवंशस्य, वर्द्धयितृत्वाच्च पितृवंशस्य, अस्या उक्ता पितृदायाद्यमर्हतीत्युपपद्यते॥

निगमप्रसक्तस्य तत्त्वमाचष्टे,—"गर्त्तः सभास्थाणु" इति, अक्षनिवपनपीठमित्यर्थः। "गृणातेः (क्रया० प०)" स हि "सत्यसङ्गरो भवति" सङ्गीर्य्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र न पतितमित्येवं प्रायेण कितवास्तत्रानृतं ब्रुवते। "तम्" एवंलक्षणं गर्त्तमारोहति या स्त्री, सा गर्त्तारुगित्युच्यते। तदेतद्गर्त्तस्य सभास्थाणोरारोहणं रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रिया. प्रसिद्धम्। तयैव प्रसिद्ध्या निरुच्यते। देशसमाचारव्यवस्थयापि क्वचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति। "तत्र या अपुत्रा अपतिका सा आरोहति" त समास्थाणुम्, तत्र कितवमध्ये अवस्थित या अपुत्रा स्त्री, या अपतिका, सा आरोहति तस्मिन्नुपविशतीत्यर्थः। ततः "सा" भर्तृबन्धुभ्यः सकाशात् "रिक्थं लभते" यस्तस्या भर्तृसक्तो धनांशस्तम्। एवमसौ सनये अक्षये धनाना गर्त्तमारोहति।

गर्त्तप्रसक्तमुच्यते,—"श्मशानसञ्चयोऽपि गर्त्त उच्यते"। "गुरतेः (तु० आ०)" उद्यमनार्थस्य। स हि लोकविनाशाया अभ्युद्यत इव भवति। यानि हि तत्र पिशाचादीनि सत्त्वान्यास्थितानि भवन्ति। तानि जनमरणमायामते, म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति। "श्मशानं, श्मशयनम्" इत्याख्यानप्रसक्तमुच्यते। तत्र हि श्म शेतेऽचेति श्मशयनं सत् तत् श्मशानमित्युच्यते।' अथ श्मशब्दार्थमाह,—"श्म शरीरम्" इति। तद्धि तत्र शेते, तत्र हि तन्निक्षिप्यते शवस्य शरीरं।

"शृणातेर्वा" इति कृतव्याख्यानमपि पुनराह मुख्यत्वादस्य। तत्र औपमिकं त्वक्सम्बन्धात्, न हि त्वचस्य मुख्यं शरीरम्। श्मशब्दसम्बन्धं निराह,—"श्मन्नु लोम" इति, तद्धि "श्मनि" शरीरे "श्रितं भवति"। पर्य्यायमपृक्तं निराह,—"लोम लुनातेः (क्रया,० उ०)" तद्धि लूयते। "लीयतेर्वा (दि० आ०)" तद्धि शरीरे लीयते॥

तत्र निगममपि चोदाहरन्ति,—श्मशानसम्बन्धयोऽपि गर्त्त इति "नोपरस्याविष्कुर्य्यात् यदुपरस्याविष्कुर्य्याद् गर्त्तेष्ठाः स्यात् प्रमायुको यजमानः" इति। उपर इति यूपस्यातष्टप्रदेश उच्यते, "पञ्चमभागोऽपरा यूपा."—इति श्रुतम्। तदतष्टं यूपस्य नाविष्कुर्य्यादित्यर्थः। पांशुभिस्तदवच्छादनीयं वर्हिषा च। यदि पुनरुपरस्य कञ्चिदप्यवयवमाविष्कुर्य्यात् 'गर्त्तेष्ठाः, गर्त्तप्रतिष्ठः श्मशानप्रतिष्ठः, 'प्रमायुकः' प्रमरणधर्मायुरेव यथाविहितादायुषो यजमानः स्यात्। "इत्यपि निगमो भवति" अप्ययमपप्यन्ये बहव इत्यपिशब्दः॥

"रथोऽपि गर्त्त उच्यते"। "गृणातेः" स्तुत्यर्थस्य। तद्धि "स्तुततमं यानम्" अश्वादिभ्यो यानेभ्यः सुखतरं हि तेन गम्यते। रथोऽपि गर्त्त इत्यस्मिन्नर्थे "आरोहथो वरुण मित्र गर्त्त-मित्यपि निगमो भवति"। "हिरण्यरूपमुषसो व्युष्टावयः-स्थूणमुदिता सूर्य्यस्य। आरोहथो वरुण मित्र गर्त्तमतश्चक्षाथे अदितिं दितिं च।"—इति (ऋ० स० ४, ५, २१, ३)। श्रुतविदार्चेय एतया विद्वभा मित्रावरुणावस्तौत्। राजसूयेऽभिषेचनीयो नाम क्रतुः, स तत्र यजमानस्य रथमारुरुक्षत गृहीतेषुधनुष्कौ बाहू अनया अभिमन्त्रेरते। तावेवात्र मित्रावरुणावधिदेवताभिप्रायेण। एवं ह्याह,—मित्रोऽसीतीय-मभिमन्त्रयति मित्रस्य ह्येतद्रूपम्, वरुणोऽसीतीमं वरुणस्य

तद्रूपमिति, तावुच्यते। हे 'मित्र! वरुण!' 'हिरण्यवर्णम्' 'उषसो व्युष्टौ' उषसो व्युच्छेदनकाले 'उदिता' च उदयकाले 'सूर्य्यस्य' यौ युवामितस्मिन् काले एवंरूपम् 'अयःस्थूणम्' अयोमयं गर्त्तं स्थूणं खं 'गर्त्त' रथम् 'आरोहथः' तौ युवां ब्रवीमि समाप्येव रथं गर्त्तमेतस्मिन् विधावङ्गभूतं तत्स्वरूपमेव साम्प्रतमारोहतम्, 'अतः' एनमारुह्य 'चक्षाथे' कुरुतमित्यर्थः। 'अदितिं दितिश्च' अदीनमनुपचीयमानपक्षं दीनञ्चोपचीयमानमित्यपक्षमित्यर्थः॥

"गर्त्तः सभास्थाणुः"—इत्यत आरभ्य प्रसक्तानुप्रसक्तमुक्तम्।

"जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः"—इति। अयमप्यर्द्धर्चः पूर्वमेव व्याख्यातो भाष्यकारव्याख्यानुक्रमं भित्त्वा अस्माभिः, तथाह्यस्यावयवस्याप्येकवाक्यता न विच्छिन्ना भवेदिति।

"चतस्र उपमाः"—इति यदुक्तं भाष्यकारेण, तदपि परिसंख्याय ताः उपपादिताः अस्माभिः। एवम् "अभ्रातेव पुंस एति प्रतीची"—इत्यनेन पादेनास्याश्चि अनिर्वाहो दर्शितः॥

अन्यत्रापि चोक्तम्,—"नाभ्रातृकामुपयच्छेत तोकं ह्यस्य तद् भवति—इति"। अयमस्मिन् वाक्ये 'नाभ्रातृकामुपयच्छेत'—इति प्रत्यक्ष एवोपयमनप्रतिषेधो विवाहार्थे पाणिग्रहणप्रतिषेध इत्यर्थः। पूर्वयोर्हि मन्त्रयोरुपमया लिङ्गतो विवाहप्रतिषेधो दर्शितः, एतस्मिंस्तु वाक्ये साक्षादेव प्रतिषेधः आदृत्य विधानेनैव नाभ्रातृकामुपयच्छेतेति। अत इदमुक्तम्,—"उपयमनप्रतिषेधः प्रत्यक्षः"—इति।

आह,—किमुपयमनप्रतिषेध एव? नेत्युच्यते,—"पितुश्च

पुत्रभाव." प्रत्यक्ष श्रूयते। कथम् ? "तोकं ह्यस्य तद् भवति" —इति। तोकमित्यपत्यनाम। यदपत्यमभ्रातृकायाः पितुर्भवति, नेतरस्य वोढ़ुः, इत्येवमितरस्य विवाहप्रतिषेध एव नेत्युच्यते पुत्रभावादितरस्य च पुत्रिकापितुरपत्यप्राप्तिरिति। तस्मादुपपन्नं भवति,—यैवाभ्रातृमती, सैव पैतृकं धनमर्हति नेतरेति ॥

अधुना योऽसौ शासद्वह्निरित्यस्या ऋचः उत्तरोऽर्द्धर्चं उत्सृष्टः, स एवाभ्रातृकावादपक्षेणैव निरुच्यते। पूर्वोऽपि च शासद्वह्निरित्ययमभ्रातृमतीवादपक्षेणैव योजयितव्यः। एष एव हि स्थितः पक्षः। तस्या एव ह्यभ्रातृमत्या यः पुत्रो भवति, तमेव पुत्रिकाविधानेन कृताभिसन्धित्वात् पौत्रो ममायमिति अपुत्र सन् मातामह उपगच्छति, नेतरान् भ्रातृमतीपुत्रान्, अन्यथा सर्व एव हि वोढारो अपुत्राः स्युः, ततो विवाहपरिश्रमो व्यर्थ एव स्यात्। अथवा सर्व एव लोकोद्वाममुष्यायण एव स्यात्। किञ्च पुत्रिकापितुरपि या भार्य्या साऽन्यस्य दुहितेति तस्यामपि या जायते सा मातामह स्यैव, नेतरस्य पुत्रिकापितुः स्यात्। अनिष्टं चैतत् सर्वम्। तस्माद् यैवाभिसन्धिपूर्वकं धर्मेण पुत्रिका क्रियते, तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्या इति, सैव च दायाद्यार्हा, भ्रातृमती। अत इदमुच्यते,—"पिता यत्र दुहितुः" इति। 'पिता' 'यत्र' यस्मिन् काले 'दुहितुः' "अप्रदत्तायाः" प्राक् प्रदानादित्यर्थः। "रेत सेक" रेतसः सेक्तारं यो दुहितरि रेतः सिञ्चति त जामातरं "प्रार्जयति" प्रसाधयति, प्रकल्पयति, उपवर्त्तयतीत्यर्थः। तदा तस्मै ता दुहितरं ददत् किं करोति ? "सग्मग्येन मनसा दधन्वे" "सन्दधाति" अभिसन्दधाति "आत्मानम्" यदत्रापत्यमुत्पत्स्यते तन्ममेति।

कथम्पुनरभिसन्दधात्यात्मानमिति 'संवगम्येन' "मनसा बहुमेन" मनसा विगतापुत्रत्वसन्तापेन चेतसा,—नाहमपुत्रः, इयमेव पुत्रिका मम पुत्र, यो ह्यस्यामुत्पद्यते, स पौत्रो मम भविष्यति इत्येव सुखेन मनसा सन्दधात्यात्मानं तस्या पुत्रिकायाम्। तत्रैव सति यस्तस्यामेव कृतपुत्रिकाधर्मिण्यामुत्पद्यते दौहित्र, तमेव नप्ता ममायमित्येवमुपगच्छति मातामह, न सर्वानेव दौहित्रान्, भ्रातृमत्या अपि स तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्याः, इति सैव च दायार्हा, नेतरा। स एव च मुख्यया वृत्त्या मातामहस्यैव पौत्रो भवति, नेतरे भ्रातृमतीपुत्रा। ते हि गौण्या वृत्त्या जनयितृ-पितृ पुत्रा सन्तो मातामहस्य पौत्रा इत्युच्यन्ते कदाचिल्लोके शास्त्रे वा ॥

तत्रैव सति "अङ्गादङ्गात् सम्भवसि" "आत्मा वै पुत्रनामासि" इत्येवमादिषु गौणं दुहितु पुत्रत्वमुच्यते। किञ्च, यदि दुहिता पुत्रेण अविशिष्टा एव स्यात्, ततो दुहितेति विशेषसमाख्या नैव स्यात्, अस्ति चेयम्। यस्माद् विशिष्टतर पुत्रो दुहितु सकाशादित्युपपद्यते।

यदपि चोक्तम्,—"अविशेषेण पुत्राणां दायो भवति"—इति, तदप्यभ्रातृमतीपक्षे द्रष्टव्यम्। अथवा श्रुति-स्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान्, न स्मृतिदृष्ट ...।

तस्मिंश्च वेदे "अथैता जाम्या रि... प्रतिषेध उदाहरन्ति" धर्मविद,—येयमृग् वक्ष्यमाण... (६ ख०) "न जामये तान्वं" —इति। अयमष्टो विशे... धिकाराय.। "ज्येष्ठं पुत्रिकाया इत्येके"—इति। ... दा उत्सृष्टाया पुत्रिकापितुरन्ये पुत्रा जायेरन्, तदा वि... भागकाले ज्येष्ठ भाग पुत्रिकायै च दद्यात्, यथाभागमितर... ान् पुत्रान् विभजेत्, अभागा एव त्वितरा

दुहितर इति। तदेतदनयर्चा निरुच्यते यथा दुहितॄणां भागो नास्तीति—॥ ५ ॥

न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्निमन्यः कर्त्ता सुकृतोरन्य ऋन्धन् ॥ न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति तान्व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादाच्चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य। यदी मातरोऽजनयन्त वह्निम् । पुत्रमवह्निं च स्त्रियमन्यतरः सन्तानकर्त्ता भवति पुमान् दायादोऽन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै ॥ ६ ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥ ३, १ ॥

न जामये इति। "न 'जामये' भगिन्यै" "तान्वः आत्मज" आत्मनो धियो जातः। स आत्मजः किं करोति? इति, 'रिक्थम् आरेक्'। 'रिक्थं' पैतृकं धनं 'न' "प्रादात्" न प्रददौ। किन्तर्हि तस्या करोति? इति। उच्यते,—'चकार गर्भं सनितुर्निधानम्'। "सनितुः हस्तग्राहस्य" भगिनीभर्त्तुः प्रसवसमर्थां करोति, पुष्णातीत्यर्थः। किञ्च, 'यदी मातरः' यत् पुत्रद्वयं मातरो जनयन्ति, "वह्निं" च वोढारं "पुत्रम्" "अवह्निं च" अवोढ्रीं स्त्रियम्, तयोर्द्वयोरपि वोढ्रवोढ्रोः

"मनुष्यनामान्युत्तराणि पञ्चविंशतिः"। मनुष्याणां नामानि 'मनुष्यनामानि' 'उत्तराणि' प्रकृतेभ्योऽपत्यनामभ्यः, अपत्यान्यपि हि विहृतानि सन्ति मनुष्या इत्युच्यन्ते। कियन्ति पुनस्तानि? 'पञ्चविंशतिः' पञ्च च विंशतिश्च पञ्चविंशतिः(२५)। कतमानि पुनस्तानि? "मनुष्याः, नराः"—इत्येवमादीनि॥

अथ,—"मनुष्याः कस्मात्"? उच्यते,—"मत्वा" ज्ञात्वा, तत एते "कर्माणि" "सीव्यन्ति" तन्वन्तीत्यर्थः। अथवा "मनस्यमानेन" प्रजापतिना "सृष्टाः"। "मनस्यतिः पुनः" अयं धातुः "मनस्वीभावे"। मनस्वीभावो नाम प्रहृष्टेन प्रहृष्यता प्रजापतिनैते सृष्टाः। अथवा "मनोरपत्यं" मनुष्याः "मनुषो वा"॥

"तत्र पञ्चजना इत्येतस्य निगमा भवन्ति" सन्दिग्धाः, तत्रेयमप्युदाहरणम्। तद्यथा,—॥ १॥

तदद्य वाचः प्रथमं मसीय येनासुराँ अभिदेवा असाम। ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्॥ तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवा असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः सोऽदेवानसृजत तत् सुराणां सुरत्वमसोऽसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते। ऊर्जाद उत यज्ञियासः। अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः

पक्षं सुमहद्भूतमिति वा। पञ्चजना मम होत्रं जुषध्वं गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवो निषादः कस्मान्निषसनमस्मिन् पापकमिति नैरुक्ताः। यत् पाञ्चजन्यया विशा। पञ्चजनीनया विशा पञ्च पृक्ता सङ्ख्या स्त्रीपुन्नपुंसकेष्वविशिष्टा बाहुनामान्युत्तराणि द्वादश बाहू कस्मात् प्रबाधत आभ्यां कर्माण्यङ्गुलिनामान्युत्तराणि द्वाविंशतिरङ्गुलयः कस्मादग्रगामिन्यो भवन्तीति वाग्रगालिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना भवन्तीति वापि वाभ्यञ्चनादेव स्युस्तासामेषा भवति ॥ २ ॥

अथैकपदनिरुक्तम् ।—"असुराः असुरता स्थानेषु" ते हि न सुष्ठु रताः स्थानेषु, चपला इत्यर्थः। अथ "वा" "अस्ताः स्थानेभ्यः इति" प्रच्याविता देवैरित्यर्थः। "अपि वा असुरिति प्राणनाम"। स हि "अस्तः" क्षिप्त इव "शरीरे भवति" तस्य हि तत्र नित्यमवस्थानमित्यभिप्रायः। "तेन" हि "तद्वन्तः" भवन्ति। ते मत्वर्थे। अथवा इदमन्यद् ब्राह्मणोक्तं निर्वचनं स्यात् "सोर्देवानसृजत" सुरिति प्रशस्तनाम। प्रशस्तादात्मनः प्रदेशात् प्रजापतिः सुरानसृजत, ऊर्ध्वेभ्यः प्राणेभ्यः। तदुक्तम्,—'ऊर्ध्वमुदङ्‌पाण पूर्वपक्षः पञ्चदशः'; तेन "सोर्देवानसृजत तत् सुराणां सुरत्वम्"—इति विज्ञायते। एवमेव प्रातिलोम्येन "असोरसुरानसृजत"। असुरिति प्रशस्तप्रतिषेधः। अप्रशस्तादात्मनः प्रदेशात् प्रजापतिरसुरानसृजत। तदुक्तम्,—'अर्वाङ् वा तिरश्चापरपक्षः', तेन असुरानसृजत'—इति। "ऊर्जाद उत यज्ञियास', अन्नादाश्च यज्ञियाश्च"। "ऊर्गित्यन्ननाम" तद्धि "ऊर्जयति" बलिष्ठं करोतीत्यर्थः। अथ "वा" "पक्वम्" एतत् "सुप्रवृक्णम्" भवति "इति" ककाररेफसामान्यात् पचेश्च वृश्चेर्वा स्यात्। द्वयोरपि वा तद्धि पक्वं सत्सुमृदुत्वात् सुच्छेद्यं भवति।

"पञ्चजना मम होत्रं जुषध्वम्"। एतदत्र सन्देहपदमेकमुद्धृत्य प्रदर्शितम्। "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके" मन्यन्ते। "चत्वारो वर्णा, निषादः पञ्चम",—इत्यौपमन्यवः"। निषद्य हन्तीति निषादः प्राणिवधजीवनः। अथवा "निषण्णमस्मिन् पापकमिति" निषादः सौधन्वनाः इत्येके मन्यन्ते। स च रथकारः। "रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया। ताँ ऊ न्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि।"—इति (ऋ० सं०

२, ७, ७, १)। तत्र भिन्नकालमाधानं श्रूयते,—"वर्षासु रथकार"। "ऋभूणां त्वा इति रथकारस्य" इति च मन्त्रभेदः,— "सौधन्वना ऋभवः (ऋ० सं० १, ७, १०, ४)"—इति च मन्त्रलिङ्गात्।

यथा तु पञ्चजनयस्त्वेन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते, तथैव निराह,—"यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत। अस्तृणाद् बर्हणा विपो३ र्यो मानस्य स क्षयः॥" —इति (ऋ० सं० ६, ४, ४२, १)। प्रगाथेन दृष्टा। इयमनुष्टुप्। ऐन्द्री। पृष्ठस्य पञ्चमेऽहनि मरुत्वतीयशस्त्रस्य प्रतिपदेषा। 'यत्' यदा "पञ्चजनीनया विशा" पञ्चजनसमुदायलक्षणया सहितैः स्तोतृभिः ऋत्विग्भिः अवर्षति 'इन्द्रे' वर्षायितृभिः 'घोषाः' स्तुतीः 'असृक्षत' असृज्यन्त। निषादपञ्चमा वर्णा आर्त्ताः सन्तो वर्षाभावे प्रस्तुवतैव इन्द्रम्—'वर्ष भगवन्!' —इत्येवमर्थयन्त। अत इदमुक्तम्,—यदा पाञ्चजन्यया विशा सह घोषा ऋत्विग्भिः असृज्यन्तेति। तदा किम्? इति। तदा उपस्तुत स इन्द्रः ताभिः प्रह्लादितचेताः 'अस्तृणात्' अहन् वर्षार्थं मेघान्। 'बर्हणा' परिबृहेन वज्रेण, परिबृहानि वा मेघजालानि 'विपः' विपाट्, पिता मेधानां मेधावी वा 'अर्यः'

णात्। अनावृष्टिद्वारेणास्य जगतः विनाशो मा भूत् कथयामि-त्यभिप्रायः ॥

"पञ्च प्रजा सङ्ख्या"। सा हि "स्त्रीपुन्नपुंसकेष्वविशिष्टा" एव भवति। तद्यथा—पञ्च स्त्रियः, पञ्च पुरुषाः, पञ्च कुलानि इति। एव पञ्चशब्दे स्त्रीपुन्नपुंसकेषु विशेषो नास्ति ॥

"बाहुनामान्युत्तराणि द्वादश"। बाह्वोर्नामानि 'बाहुनामानि' 'उत्तराणि' प्रकृतेभ्यो मनुष्यनामभ्यः। मनुष्याणामेव हि भवन्तीति मनुष्यनामभ्य उत्तराणि 'बाहुनामानि'। कियन्ति पुनस्तानि? 'द्वादश' द्वे च दश च द्वादश। कतमानि पुनस्तानि? "आयती, च्यवाना, अभीशू"—इत्येवमादीनि। आमिश्रीभवतः कर्मभिरेताविति आयती। च्यावयितारौ कर्मणा च्यवाना। अभीशू अभ्यश्नुवाते कर्माणि। इत्येवमादि योज्यम् ॥

आह,—"बाहू कस्मात्"? उच्यते,—"प्रबाधत आभ्यां कर्माणि" प्रकर्षेण बाधते प्रक्षिपयत्याभ्यां कर्माणि ॥

"अङ्गुलिनामान्युत्तराणि द्वाविंशतिः"। अङ्गुलीनां नामानि 'अङ्गुलिनामानि' 'उत्तराणि' प्रकृतेभ्यो बाहुनामभ्यः, बाह्वोरेव ह्यङ्गुलयो भवन्तीति बाहुनामभ्य उत्तराणि अङ्गुलिनामानि। कियन्ति पुनस्तानि? 'द्वाविंशतिः' द्वे च विंशतिश्च द्वाविंशतिः। कतमानि पुनस्तानि? "अग्रुवः, अण्वः, क्षिपः"—इत्येवमादीनि। बाह्वग्रे अवस्थिता भवन्त्येताः कर्माणीति अग्रुवः। अण्वः परिमाणात् एताः। क्षिप्यते आभिः क्षेप्तव्यं द्रव्यमिति क्षिपः। इत्येवमादि।

आह,—"अङ्गुलयः कस्मात्"? उच्यते,—"अग्रगामिन्यो भवन्ति" अग्रे स्थिताः कर्मसु गच्छन्ति। अथ "वा" "अग्रगालिन्यो भवन्ति" अग्रे स्थिता गलन्ति उदकानि। "अग्रका-

रिखो वा भवन्ति" पत्ते ह्येताः कर्माणि कुर्वन्ति। "अङ्गुला भवन्ति वा" तथाहि,—यो ह्येताभिरभिहन्यन्ते ऽसावङ्कित इव भवन्ति। "अपि वा अभ्यञ्जनादेव स्युः" एता हि तं तमर्थमाभिमुख्येनाञ्चन्ति गच्छन्ति। ये तु "अभ्यञ्जनाः"—इत्यभिधीयन्ते, तेषामभ्यञ्जत आभिरिति॥

"तासाम्" अङ्गुलीनाम् "एषा" निर्वाचिका ऋक् "भवति"—। २४

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः। दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः॥ अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि कक्ष्याः प्रकाशयन्ति कर्माणि योक्त्राणि योजनानीति व्याख्यातमभीशवोऽभ्यश्नुवते कर्माणि। दश धुरो दश युक्ता वहद्भ्यः। धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहं धारयतेर्वा कान्तिकर्माण उत्तरे धातवोऽष्टादशान्ननामान्युत्तराण्यष्टाविंशतिरन्नं कस्मादानतम्भूतेभ्योऽत्तेर्वात्तिकर्माण उत्तरे धातवो दश। बलनामान्युत्तराण्यष्टाविंशतिर्बलं कस्माद्बलं भरं भवति बिभर्तेर्धननामान्युत्तराण्यष्टाविंशतिरेव धनं कस्माद्धिनोतीति सतो गोनामान्युत्तराणि नव क्रुध्यतिकर्माण उत्तरे धातवो दश क्रोधनामा-

न्युत्तराण्येकादश गतिकर्माण उत्तरे धातवो द्वाविंशशतं क्षिप्रनामान्युत्तराणि षड्विंशतिः क्षिप्रं कस्मात् संक्षिप्तो विकर्षोऽन्तिकनामान्युत्तराण्येकादशान्तिकं कस्मादानीतं भवति सङ्ग्रामनामान्युत्तराणि षट्चत्वारिंशत् सङ्ग्रामः कस्मात् सङ्गमनाद्वा सङ्गरणाद्वा सङ्गतौ ग्रामाविति वा तत्र खल इत्येतस्य निगमा भवन्ति ॥ ३ ॥

दशावनिभ्य इति । अवनय इत्येवमादीनि नद्यादिनामभिः सन्दिह्यन्ते, तदर्थमिदमुदाह्रियते । त्रिष्टुप् । अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । दशभिरवनिभिः ये उपचर्य्यन्ते ग्रावाणः, सोमाभिषवकर्मणि प्रवृत्ते, ते दश अवनयः, तेभ्यः 'दशावनिभ्यः' हे ऋत्विजः ! यूयमपि 'अर्चत' स्तुतीः प्रोच्चारयतेत्यर्थः । एवमेव दशभिः कक्ष्याभिर्ये उपचर्य्यन्ते, ते दशकक्ष्याः, तेभ्यः 'दशकक्ष्येभ्यः' अर्चत । दशभिर्योक्त्रैः ये उपचर्य्यन्ते, ते दशयोक्त्राः, तेभ्यः 'दशयोक्त्रेभ्यः' अर्चत । दशभिर्योजनैः ये उपचर्य्यन्ते, ते दशयोजनाः, तेभ्यः 'दशयोजनेभ्यः' अर्चत । दशभिरभीशुभिर्ये उपचर्य्यन्ते, ते दशाभीशवः, तेभ्यः 'दशाभीशुभ्यः' अर्चत । 'अजरेभ्यः' अजरणधर्मभ्यः 'दश-धुरः' य एते ग्रावाणः तेभ्यः अर्चत । दशभिर्दशभिरङ्गुलीभिर्ये एते युक्ता वहन्ति ग्रावाणः, तेभ्य एभ्यः 'दश युक्ता वहद्भ्यः' अर्चत ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—"अवनयोऽङ्गुलयो भवन्ति" ता हि

"अवन्ति कर्माणि" रचन्ति भचयन्ति वा विपयन्तीत्यर्थः। "कक्षा" अङ्गुलय एव, ता हि "प्रकाशयन्ति कर्माणि" प्रकटीकुर्वन्तीत्यर्थः। "योक्त्राणि"—इत्येतत् पदं "योजनानि इति" अनेन पदेन व्याख्यातम्। योजनानीत्येतत् निगदसिद्धमेव। "अभीशव" अपि अङ्गुलय एव, ता हि "अभ्यश्नुवते कर्माणि" व्याप्नुवन्तीत्यर्थः। अनेकैर्नामभिरङ्गुलय एवोक्ता अनेकक्रियाशक्त्युपप्रदर्शनाय। एतै ग्रावाण एव अनेकक्रियायोगिनीभिरङ्गुलीभिर्गृहीतास्तदर्थमर्चतेति। "धू धूर्वते वधकर्मण"—ध्वरति धूर्वतीति वधकर्मसु पठितम्। "इयमपीतरा धू" अनडुहादिसम्बन्धिनी। "एतस्मादेव" धातोर्वधकर्मण। सापि "विहन्ति वहम्" अनडुहोऽश्वस्य वा। "धारयतेर्वा" सा हि धारयत्यश्वमनडुहञ्च।

"कान्तिकर्माण उत्तरे धातवोऽष्टादश"। खल्वय पुरुषो व्याख्यात सबाहु साङ्गुल, न खलु काम एव प्रथममाविवेशेति उत्तरे कान्त्यर्था इत्यर्थः। यदपि ह्यकान्त भवति, तदप्यङ्गुलीभिरेव कान्त क्रियत इत्यतोऽङ्गुलिनामभ्य 'उत्तरे कान्तिकर्माण' समाम्नाता। कियन्त पुनस्ता? इति। 'अष्टादश' अष्टौ च दश च अष्टादश (१८)। कतमे पुनस्ते? इति। "वश्मि, उश्मसि, अववेति"—इत्येवमादय॥

"अन्ननामान्युत्तराणि अष्टाविंशति"। अन्नस्य नामानि 'अन्ननामानि' 'उत्तराणि' प्रकृतेभ्य कान्तिकर्मभ्य, अन्नमेव हि कान्त सर्वभावेभ्यो भवतीति कान्तिकर्मभ्य उत्तराणि अन्ननामानि। कियन्ति पुनस्तानि? 'अष्टाविंशति' अष्टौ च विंशतिश्च अष्टाविंशति (२८)। कतमानि पुनस्तानि? "अन्ध, वाज, पाज, पय, पृक्ष"—इत्येवमादीनि। अन्ध इत्यय निर्वक्ति। आनयितव्य पूजयि

तथ्यम् एतद् भोजनायोपस्थितं भवतीति वाजः। पीयत इति पाजः। पयः पानादेव॥

आह,—"अन्नं कस्मात्" ? उच्यते,—"आ" आभिमुख्येन ह्येतत् "नतं" प्रह्वीभूतं भवति भोजनाय भूतानाम्। "अत्तेर्वा" अद्यते अत्ति च भूतानि, तस्मादन्नं तदुच्यत इत्युक्तम्॥

"अत्तिकर्माण उत्तरे धातवो दश"। अन्नमेव ह्यद्यत इत्यन्ननामभ्यः 'उत्तरेऽत्तिकर्माणः' समाम्नाताः। कियन्तस्ते। इति 'दश' (१०)। कतमे पुनस्ते ? "आवयति, भवति, बभस्ति"—इत्येवमादयः॥

"बलनामान्युत्तराण्यष्टाविंशतिः"। बलस्य नामानि 'बलनामानि' 'उत्तराणि' प्रकृतेभ्योऽत्तिकर्मभ्यः, य एव ह्यदन्ति त एव बलवन्तो भवन्तीत्यत्तिकर्मभ्य उत्तराणि बलनामानि समाम्नातानि। कियन्ति पुनस्तानि ? 'अष्टाविंशतिः' अष्टौ च विंशतिश्च अष्टाविंशतिः (२८)। कतमानि पुनस्तानि ? "ओजः, पाजः, शवः"—इत्येवमादीनि। ओजः ओजतेर्वोब्जतेर्वा। इत्येवमादि।

आह,—"बलं कस्मात्" ? उच्यते,—तद्धि "भरं भवति" भ्रियते (भृ० व०) हि सः, योऽवलिप्तो भवति। "बिभर्त्तेः" वा (भृ० उ०) स एति॥

"धननामान्युत्तराण्यष्टाविंशतिरेव"। य एव बलवन्तो भवन्ति त एव धनं प्राप्नुवन्ति इति बलनामभ्यः 'उत्तराणि धननामानि'। कियन्ति पुनस्तानि ? 'अष्टाविंशतिरेव' (२८)। बलनामान्युत्तराण्यष्टाविंशतिः इमान्यष्टाविंशतिरेवेत्येवशब्दः। कतमानि पुनस्तानि ? "मघम्, रेक्णः, रिक्थम्, वेदः"—इत्येवम्प्रभृतीनि। रिच्यत इति रेक्णः। अतिरिच्य-

मानमेतदिहैव तिष्ठति म्रियमाणस्ये ति रिक्थम्। विषये लभ्यते एव इति वेदः। इत्येवमादीनि।

भाह,—"धनं कस्मात्" ? उच्यते,—"धिनोतीति सत." सत इति कारकावधारणम्, धिनोतिस्तर्पणार्थः।

"गोनामान्युत्तराणि नव"। नवां नामानि 'गोनामानि' ।इतिभ्यो धननामभ्य', गाव एव हि प्रकृष्टं धनमिति धनना मभ्य 'उत्तराणि, गोनामानि। कियन्ति पुनस्तानि ? 'नव' (९)। कतमानि पुनस्तानि ? "अघ्न्या, उस्रा, उस्रिया"—इत्येव मादीनि। अघ्न्या अहन्तव्या भवति। इत्येवमादि निर्वचनम्। उक्तनिर्वचनो हि गोशब्द, अतो गौः कस्मात् इति न ब्रवीति॥

"क्रुध्यतिकर्माण उत्तरे धातवो दश"। धनार्थमेव हि गवार्थं च क्रोधो भवतीति गोनामभ्य. 'उत्तरे' क्रुध्यर्था. समाम्नाता। कतमे पुनस्ते ? इति। "रेलते, हेलते"—इत्येव मादय।

क्रुध्यर्थसम्बन्धे नैव "क्रोधनामान्युत्तराणि"। कियन्ति पुनस्तानि ? "एकादश" (११)। कतमानि पुनस्तानि ? "हेड, हर, घृणिः, त्यज." इत्येवमादीनि। हे परे इत्यनेनाविष्टो भवतीति हेड.। नीचैरनेन नरकं प्रति ह्रियते इति हर। नीचैरनेन ह्रियते नरकं प्रतीति घृणिः। त्यज त्वनेनाविष्टो धर्मं जहातीति त्यजः। इत्येवमादि।

"गतिकर्माण उत्तरे धातवो द्वाविंशशतम्" (१२२)। क्रुधा एव सन्त. सुतरां गच्छन्तीति क्रोधनामभ्यः 'उत्तरे' 'गतिकर्माण' समाम्नाताः।

"क्षिप्रनामान्युत्तराणि षड्विंशति."। गतिसम्बन्धादेव 'क्षिप्रनामानि उत्तराणि' समाम्नातानि। कियन्ति पुन-

ख्यानि ? 'षड्विंशति.' षट् च विंशतिश्च षड्विंशतिः (२६)। कतमानि पुनस्तानि ? "नु, मक्षु, द्रवत्"—इत्येवमादीनि। नुन इव क्षिप्रं गच्छतीति नु। मां क्षिणोति मां क्षिणोतीति सर्वं एव हि क्षिप्रगामिनं मन्यन्ते इति मक्षु। द्रवत् द्रवतः। इत्येवमादि॥

आह,—"क्षिप्रं कस्मात्" ? उच्यते,—"विकर्षे." विकर्षो विचिक्षोऽर्थः "संक्षिप्त." क्षिप्रमुच्यते॥

"अन्तिकनामान्युत्तराण्येकादश"। य एव हि क्षिप्रं गच्छति, स एवाभिप्रेतार्थस्य अन्तिके समीपे भवतीति क्षिप्रनामभ्य. 'उत्तराणि' 'अन्तिकनामानि'। कियन्ति ? 'एकादश' (११)। कतमानि पुनस्तानि ? "तडित्, आसात्"—इत्येवमादीनि। ताड्यतेऽस्मिन् प्रदेशेऽवस्थित इति तड़ित् इत्युच्यते। अन्तिकप्रदेशोपासन्नः स आसात्। इत्येवमादि योज्यम्।

आह,—"अन्तिकं कस्मात्" ? उच्यते,—तद्धि "आनीतं भवति" सन्निकृष्टत्वात्॥

"संग्रामनामान्युत्तराणि षट्चत्वारिंशत्"। संग्रामस्य नामानि 'संग्रामनामानि' 'उत्तराणि' प्रकृतेभ्योऽन्तिकनामभ्य', अन्तिकीभूतानामेव हि संग्रामो भवतीत्यन्तिकनामभ्य उत्तराणि संग्रामनामानि। कियन्ति पुनस्तानि ? 'षट्चत्वारिंशत्' (४६)। कतमानि पुनस्तानि ? "रण', विवाक्, नदनु"—इत्येवमादीनि। रमन्त्यस्मिन् शूरा इति रण। विविधा शूराणामत्र वाग् भवतीति विवाक्। नदन्त्यस्मिन् शूरा इति नदनु'। इत्येवमादि योज्यम्॥

आह,—"संग्रामः कस्मात्" ? उच्यते,—"सङ्गमनाद्वा" सङ्गच्छन्ति हि परस्परेण तत्र योधा'। "सङ्गरणाद् वा"

सम्पश्यन्ति संयन्त्रायन्ते शूरा यत्र परस्परेण। "सङ्गतौ ग्रामा-विति वा"। ग्राम इति सङ्घात इत्युच्यते। परस्परं जिगी-षया समागतौ तत्र भवतः॥

"तत्र" षट्चत्वारिंशत्के संग्रामनामगणे "खले"—"इत्ये-तस्य" नाम्नः "निगमाः" सन्दिग्धाः "भवन्ति" इतरोऽपि धान्यखल इत्युच्यते' संग्रामोऽपि'। तचैवं सति अस्यामृचि वक्ष्यमाणायां 'खले न पर्षान्'—इति व्यपदेशाद् विभागो लक्ष्यते शस्यखलसंग्रामखलयोः—॥ २॥

अभी३दमेकमेको अस्मि निष्षाडभी द्वा किमु त्रयः करन्ति। खले न पर्षान् प्रति-हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः॥

अभिभवामीदमेकमेकोऽस्मि निष्पहमाणः सप-त्नानभिभवामि द्वौ किं मा त्रयः कुर्वन्त्येक इता सङ्ख्या द्वौ द्रुततरा सङ्ख्या त्रयस्तीर्णतमा सङ्ख्या चत्वारश्चलिततमा सङ्ख्याष्टावश्नोतेर्नव न वननीया नावाप्ता वा दश दस्ता दृष्टार्था वा विंशतिर्द्विर्दशतः शतं दशदशतः सहस्रं सहस्वद-युतं नियुतं प्रयुतं तत्तदभ्यस्तमर्बुदो मेघो भव-त्यरणमम्बु तद्दोऽम्बुदोऽम्बुमद्भातीति वाम्बुमद्भ-वतीति वा स यथा महान् बहुर्भवति वर्षंस्तदिवा-र्बुदम्। खले न पर्षान् प्रतिहन्मि भूरि। खल इव पर्षान् प्रतिहन्मि भूरि खल इति संग्राम-

नाम खलतेर्वा स्खलतेर्वायमपीतरः खल एतस्मादेव समास्कन्नो भवति। किं मा निन्दन्ति यच वोऽनिन्द्राः। य इन्द्रं न विदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा व्याप्तिकर्माण उत्तरे धातवो दश तच द्वे नामनी आत्नाथ आस्नुवान आपान आप्नुवानो वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् तच वियात इत्येतद् वियातयत इति वा वियातयेति वा। आखण्डल प्रहूयसे। आखण्डयितः। तडिदित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः॥ ४॥

"अभीदम्‌ एकम्‌—अनिन्द्राः"। (ऋ० सं० ८, १, ६, २)। वैकुण्ठस्येन्द्रपुत्रस्येयमार्षम् । जगती। दशरात्रस्य नवमेऽहनि निष्केवल्ये शस्यते। आध्यात्मिको मन्त्रः। "इदं" तावत् जगत् 'एकः' एव अहम् 'अभि अस्मि' "अभिभवामि", अभिभूय च भवामि। अस्य सर्वस्याहमेकोऽधिपतिरित्यभिप्रायः। कथं पुनरभिभवाम्यहमेतत् ? "एकम् एकः" निष्षाट् "निषहमाणः" "सपत्नान्" शत्रून् निश्चयेनाधिकं वाभिभवामीत्यर्थः। सहतिरभिभवार्थश्छन्दसि। कथम्पुनरभिभवन् सपत्नानहमस्य जगत आधिपत्ये वर्त्ते ? यावदेकं तावदागतं सन्तमेकमेवाभिभवामि सपत्नम्, 'अभी द्वा', "द्वौ" अभ्यागतौ एक एव "अभिभवामि"। "किम्" 'उ' "त्रयः" 'करन्ति' त्रयोऽपि युगपदागताः सन्तः एकाकिनोऽपि मम किं "कुर्वन्ति" ? न किञ्चिदपीत्यभिप्रायः। किञ्च 'खले न पर्षान्' गाह्यमाने

इश्यमाने गम्यमानेऽर्थे। एकः खलशब्दः उपमानम्, उपमानसम्बन्धात्, यथा 'खले' खलस्थाने कर्षकेण 'पर्षान्' बहूनपि सञ्चितान् अप्रतिबन्धेन लुधेरन्, एवमहमपि भूरीनपि प्रत्यागतान् चणादेव तैरप्रतिबध्यमानः 'हन्मि'। तमेवम्प्रभावं सन्तं मां "किं निन्दन्ति अबवः ?" नाह निन्दार्हः, स्तुत्योऽहमित्यभिप्रायः। अपि च "अनिन्द्राः", 'ये' माम् "इन्द्रं न विदुः" याथार्थ्यतः, ते कथमविज्ञायैव मा निन्दन्ति ? नैतन्न्याय्यमित्यभिप्रायः। "अनिन्द्रा इतर इति वा" अथवा अनिन्द्राः सन्तः आत्मना कथमिन्द्रं सन्तं मां निन्दन्ति ? न तु नामेन्द्रत्वे नैवाहमतिरिक्तस्तेभ्यः, अथ कथमितरे अनिन्द्राः सन्तो न लज्जन्तीत्यभिप्रायः॥ इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"एक इता संख्या" गता संख्या, अल प्राप्तेत्यर्थः। इत्यादिकं वापीय गन्ता। "द्वौ द्रुततरा सङ्ख्या" एकस्याः सकाशात्। "त्रयस्तीर्णतमा संख्या" द्वयोः सकाशात्। प्रसक्तानुप्रसक्तमुच्यते,—"चत्वारश्चलिततमा संख्या" त्रिभ्यः सकाशात्। "अष्टावश्नोतेः" ते हि सप्त संख्या व्याप्य वर्त्तन्ते। "नव" इति या सख्या, सा "न वननीया" न सम्भजनीया भवति, नवसंख्यायुक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते। "दश" इति या संख्या, सा "दस्ता" दस्तैव हि संख्या भवति। "दृष्टार्था वा" दृष्टार्थैव हि दशानामुपरि पुनः पुनः दृश्यते संख्या। तद्यथा,—एकादशेत्येवमादि। तस्मात् दृष्टार्थदर्शनाद् दशेत्युच्यते। "विंशतिर्द्विर्दशतः" द्विः दश विंशतिरित्युच्यते। "शतं दशदशतः" दशकत्वोऽभ्यस्ता या दश, ताः समुदिताः शतमित्युच्यते। "सहस्रं सहस्वत्"। सह इति बलनाम, तेन तद्वत्, दुर्बलानामपि सहस्रं समुदितं बलवदेव भवति सङ्घातबलीयस्त्वात्। "अयुतं नियुतं प्रयुतं

ततदभ्यस्तम्" सहस्रं दशकृत्वोऽभ्यस्तमयुतमाभिधीभूत-मयुतमित्युच्यते, अयुतमपि दशकृत्वोऽभ्यस्तं नियुतमित्युच्यते, नियुतमपि दशकृत्वोऽभ्यस्तं प्रयुतमित्युच्यते। अथार्बुदशब्द-विवक्षया अम्बुशब्दं निर्वक्ति,—अरणशीलम् "अम्बु" तस्य दाता मेघः, सः "अम्बुदः" तस्य, "स यथा" उदकभावमाप-द्यमानः "महान् बहुर्भवति वर्षन् तदिवार्बुदम्" तदिव वर्षन् यद् बहु द्रव्यजातं भवति, तदर्बुदमित्युच्यते। "खल इति संग्रामनाम"। खलतेर्वा अ श्नत्यर्थस्य, अश्नन्ति हि योधाः। "स्खलतेर्वा" हिंसार्थस्य, हिंसन्ते हि तत्र परस्परेण। "अय-मपीतरः" "खलः" धान्यखलः "एतस्मादेव" तत्रापि हि, अश्नन्ति चूर्णमानानि धान्यानि हिंसन्ते वा, चूर्ण्यन्त इत्यर्थः। अथवा "समास्कनः" असौ, "भवति", विप्रकीर्णैः धान्यैः॥

"व्याप्तिकर्माण उत्तरे धातवो दश" (१०)। संग्रामे इतरेतरं व्याप्नुवन्ति योधा इति संग्रामनामभ्यः 'उत्तरे' 'व्याप्ति-कर्माणः'। कतमे पुनस्ते ? इति। "इन्वति, नक्षति"—इत्येव-मादयः। "तत्र" दशके व्याप्तिकर्मधातुगणे एते "द्वे" "नामनी" भवतः—'आचाणः (३)' इति, 'आपानः (६)' इति च। तत्र, "आचाण आश्नुवानः" यो हि अश्नोति व्याप्नोति स आचाण इत्युच्यते, तथा च य आप्नोति सः "आश्नुवानः" सन् "आपानः" इत्युच्यते॥

"वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्"। संग्रामे इतरेतरं व्याप्य ततो घ्नन्तीति व्याप्तिकर्मभ्यः 'उत्तरे' 'वधकर्माणः' समाम्नाताः। कियन्तः ? 'त्रयस्त्रिंशत्' (३३)। कतमे पुनस्ते ? इति। "दभ्नोति, श्नथति, ध्वरति, धूर्वति"—इत्येवमादयः। "तत्र" वधकर्मधातुमध्ये "वियात इत्येतत्" नाम। तत्पुनरेवं

निर्वक्तव्यम्,—"वियातयति" नानाप्रकारं यातयति यः शत्रून्, स वियातः। अथ "वा" एवमन्यथा स्यात्—"वियातयः" एक-मुच्यते यः स्तोतृभिः, स वियातः। 'आखण्डल.'—इत्येतदपि नामैव। निगममपि चात्र दर्शयति,—"आखण्डल प्रहूयसे"। आभिमुख्येनावस्थितो यः खण्डयति मेघान्, स आखण्ड-यिता, तस्य सम्बोधनम्। हे "आखण्डयितः!"।

इरिम्बिठिर्नाम काण्वो मन्त्रदृक्। तस्येयमार्षम्। गायत्री। ऐन्द्री। रात्रिपर्य्यायेषु मध्यमरात्रिपर्य्याये होतुरिय मन्त्रे विनियुक्ता। "शाचिगो शाचिपूजनायं रणाय ते सुतः। आखण्डल प्रहूयसे॥" (ऋ॰ सं॰ ६, १, २४, २)। शाचिगो इति चैकं पदम्। शचीति कर्मनाम। तस्य शच्याख्यस्य कर्मणो येयमिष्टिपशुसोमादिलक्षणा सन्ततिः, सा शाचिः। अथवा स्वार्थिक एव तद्धितः स्यात्। शच्येव शाचिः। तं प्रत्याह्वयमानो यो गच्छति, स शाचिगुरिन्द्रः, तस्य सम्बोधनं हे 'शाचिगो!' इति। तथैव शाच्यां य आगतः सन् पूज्यते स शाचिपूजन, तस्य सम्बोधनं हे 'शाचिपूजन!'। हे 'आख-ण्डल' आखण्डयितः! शत्रूणां मेघानां वा। इयमस्माभि-प्रस्तुता शची या प्रति ते नित्यमिष्टमागतं यथा च पूज्यसे त्वमागतः सन्, किन्त्वेतस्यात्र शच्यामस्मिन् कर्मणि 'अयं' 'रणाय' रमणाय 'ते' तव 'सुत.' अभिषुतः सोमो यतोऽ स्माभिः त्वं 'प्रहूयसे' प्रकर्षेणादरवद्भिरहूयसे आहूयसे। स एवमेतज् ज्ञात्वा अस्मदनुग्रहाय अनतीतकालमागन्तुमर्हसी त्यभिप्रायः॥

आखण्डलशब्दादनन्तरं वक्तव्यं बहुतरं तडिच्छब्दे इति क्रमभेदतो निरुच्यते,—"तडिदित्यन्तिकवधयोः संसृष्टकर्म"। तडिदित्येतच्छब्दरूपमन्तिकाभिधायि वधाभिधायि च

इत्येकमेव, ह्येतदुभाभ्यामर्थाभ्यां सम्प्रयुज्यते। विद्युदपि च तडिदित्युच्यते। सा पुनः कर्त्तरि कारके "ताडयतीति सतः" ॥ ४ ॥

त्वया वयं सुदृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्यादंदीमहि। या नो दूरे तडितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः। त्वया वयं सुवर्द्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तडितो याश्चान्तिकेऽरातयोऽदानकर्माणो वाऽदानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनामाप्नोतीति सतो विद्युत्तडिद्भवतीति शाकपूणिः सा ह्यवताडयति दूराच्च दृश्यतेऽपि त्विदमन्तिकनामैवाभिप्रेतं स्यात्। दूरे चित् सन्तडिदिवातिरोचसे। दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति वज्रनामान्युत्तराण्यष्टादश वज्रः कस्माद् वर्जयतीति सतस्तत्र कुत्स इत्येतत् कृन्ततेर्ऋषिः कुत्सो भवति कर्त्ता स्तोमानामित्यौपमन्यवोऽथाप्यस्य वधकर्मैव भवति तत्सख इन्द्रः शुष्णं जघानेत्यैश्वर्य्यकर्माण उत्तरे धातवश्चत्वार ईश्वरनामान्युत्तराणि चत्वारि तत्रे न

इत्येतत् सनित ऐश्वर्य्यमेति वा सनितमनेनै-श्वर्य्यमिति वा ॥ ५ ॥

यथा त्वन्तिकनामेदं तथेयमुदाहरणम्,—"त्वया वय०—० धनप्रसः"—इति (ऋ० सं० २, ६, ३०, ४)। गृत्समदस्यार्षम्। जगती। प्रवर्ग्ये विनियुक्ता। हे "ब्रह्मणस्पते!" "त्वया" "वय" 'सुवृधाः' "सुवर्धयित्रा" सुष्ठु वर्धिताः मनुष्टहीताः सन्तः 'वसु' "वसूनि" यानि यानि 'स्पार्हा' स्पार्हाणि 'स्पृहणीयानि' तानि तानि 'मनुष्या' "मनुष्येभ्यः" तानभिभूय "आददीमहि"। किञ्च, "याश्च नो दूरे तडित." 'या नो दूरे' अध्यवस्थिताः "अरातय." "याश्चान्तिके"। तडिच्छब्दस्यान्तिकाभिधायित्वम्। दूरे च अन्तिके च या अरातयः। अरातिः सेना। "अदानकर्माणः"। रातिर्दानार्थः। अस्माकमभिमतानर्थान् ददतो ये निवारयन्ति ते। 'अरातयः' "अदानमप्नाः" न दातव्यमस्माभिरेभ्य इत्येवं येषा प्रज्ञा ते अदानमप्नाः। द्विविधा हि शत्रवः,—दुःखसम्बाध्या, सुखसम्बाध्याश्च, तत्र ये दुःखसम्बाध्याः ते अदानमप्ना, ये अदानकर्माः ते सुखसम्बाध्या। ते चोभयेऽपि दूरे चान्तिके चावस्थिता भवन्ति। "ता." दूरान्तिकावस्थितानुभयानपि "जम्भय" निवेष्टान् कुरु त्वं ब्रह्मणस्पते! किञ्च, "अनप्नस." अरूपायेतान् कुरु। "अप्न इति रूपनाम"। तद्धि "आप्नोति" आश्रयम्।

"विद्युत्०"। "सा ह्यवताडयति" अग्रनिरुक्तेव। "दूरात्" एव "च" "दृश्यते"। तस्माच्च तस्या अन्तिकनामाभिसम्बन्धोऽस्ति। "अपि त्विदम्" अपरेणोदाहरणेन "अन्तिकनामैवाभिप्रेतं स्यात्"—"दूरे चित् सन्तडिदिवातिरोचसे"। "दूरेऽपि सन्नन्तिक इव" अवस्थितः "दृश्यसे इति" अत्र दूरेऽपि

सदन्तिक इवेति स्फुटतरमन्तिकाभिधानत्वम्, न तथा पूर्वस्मिन् मन्त्रे—'या नो॑ दू॒रे त॒ळि॒तः' इति ॥

एवमन्तिकनामत्वेन वा विद्युन्नामत्वेन वा वधनामत्वेन वा प्रकरणोपपदे अवेक्ष्य यथासम्भवं निर्वक्तव्यम् ॥

"यो वि॒श्वतः॑ सु॒प्रती॑कः स॒दृङ्ङसि॑ दू॒रे चि॒त् सन् त॒ळि॒दि॒वाति॑रोचसे । रात्र्या॑श्चि॒दन्धो॒ अति॑ देव॒ पश्य॒स्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥" (ऋ० सं० १, ६, २१, २)। एषा जगती। आग्नेयी। कुत्सेन दृष्टा। महाव्रते आग्निमारुते शस्त्रे अभिप्लवस्य च षष्ठेऽहनि आग्निमारुते एव च शस्यते। 'यः' त्वं हे 'अग्ने !' 'विश्वतः' सर्वतः 'सुप्रतीकः' सुदर्शनः शोभनदर्शनः, अपिच 'सदृङ्' यतो यतो दृश्यसे ततस्ततः समानदर्शनः तुल्य एव लक्ष्यसे। अपिच "दूरे" अपि "सन्" अतिभ्राजिष्णुत्वात् 'तळिदिव' अन्तिक इव अवस्थितः 'अतिरोचसे' अतिरोचिष्णुर्दृश्यसे। अपिच यदेतत् 'रात्र्याश्चित्' रात्र्या अपि सन् तम् 'अन्धः' अध्यानलक्षणं तमः, यत् न ध्यातुमपि शक्यते किमुत द्रष्टुम्। एतदपि 'अति' अतीत्य हे 'देव' सर्वभूतदीपयितः ! 'पश्यसि' एव त्वम्, न तेऽस्माकमिव तेनान्धेनापि तमसा प्रतिबध्यते दर्शनम्। तस्य तवैवङ्गुणयुक्तस्य हे 'अग्ने !' 'वय' 'सख्ये' सखिभावे परिचरणकर्मणि वा उत्तमादुच्छ्रासाकृताध्यवसायाः सन्तः 'मा' केनचिद् विधिना प्रभुणा वा 'रिषाम' मास्मान् किञ्चिद्धिंसीत् त्वदनुध्यानादेवेत्यभिप्रायः ॥

"वधनामान्युत्तराण्यष्टादश"। यो हि हन्यते स वज्रेणैवेति वधकर्मभ्यः 'उत्तराणि' 'वज्रनामानि'। कियन्ति पुनस्तानि ? अष्टादश, अष्टौ च दश च। कतमानि पुनस्तानि ? "दिद्युत्, नेमिः, हेतिः"—इत्येवमादीनि, दिद्युत्,

द्यतेर्वा द्योततेर्वा, पुनः पुनरतिशयेन वा द्यति अवखण्डयति, द्योतते दीप्यते वा सा दिद्युत्। अवनामयति, खण्डयति प्रहारेणेति नेमि.। हेतिर्हन्तेः। इत्येवमादि ॥

आह,—"वध: कस्मात्" ? उच्यते,—"वर्जयति" वियोजयति प्राणैः प्राणिनः। "तत्र, कुत्स इत्येतत्" सन्देहपदम्। ऋषिरपि कुत्स इत्युच्यते। तत् पुनरेतत् यदा वज्रनाम, तदा "कृन्तते" कृत्यतेऽनेनेति "कुत्स"। यदा पुनरेतदृष्यभिधानं, तदा "कर्त्ता स्तोमानाम् इति" "औपमन्यव" आचार्य्यो मन्यते। 'अत्राप्यस्य वधकर्मैव' अभिप्रेतं स्यात्। अत्रापि एतद्रूपो वर्त्तमानमभिधानमस्य ऋषेर्वधकर्मैव यथार्थमयुक्तमिव स्यात्। किङ्कारणम् ? 'तत्तस्य इन्द्र शुष्णं जघान इति"। तेन स्तूयमानो विहडबल शुष्णं शोषयितारं रसानामसुरं मेघं वा जघान। मेघो हि शुष्ण., तदुदये हि धान्यानि उदकप्रवाहनिमित्तेन शुष्यन्ति ॥

"ऐश्वर्य्यकर्माण उत्तरे धातवश्चत्वार"। एतामेव हि वज्रेणायुधेनैश्वर्य्यं भवतीति वज्रनामभ्य. 'उत्तरे' 'ऐश्वर्य्य-कर्माण.'। कतमे पुनस्ते ? "इरज्यति, पत्यते, क्षियति, राजति ?"—इति ॥

"ईश्वरनामान्युत्तराणि चत्वारि"। ऐश्वर्य्यसम्बन्धेनैवोच्यते। कतमानि पुनस्तानि ? "राष्ट्री, अर्य्यः, नियुत्वान्, इनः"। "तत्र इन इत्येतत्" अभिधानमेव व्युत्पाद्यम्,—"सनित." सम्भक्त "ऐश्वर्य्येणेति वा", अथ 'वा' "सनित" सम्भक्तम् "अनेनैश्वर्य्यमिति" ॥ ५ ॥

यत्रा॑ सुप॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति। इ॒नो विश्व॑स्य भुव॑नस्य

गोपाः स मा धीरः पाकमत्राविवेश ॥ यत्र सुपर्णाः सुपतना आदित्यरश्मयोऽमृतस्य भागमुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्यधिदैवतमथाध्यात्मं यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे ॥ ६ ॥

इति तृतीयाध्यायस्य द्वितीयः पादः ॥ ३, २ ॥

अधुना मन्त्रमपि व्याचष्टे यस्मिन्नेतदीश्वरनामेन इति,—"यत्रा सुपर्णा०"—इति (ऋ० सं० २, ३, १८, १)। त्रिष्टुवेषा। वैश्वदेवीये सूक्ते दीर्घतमसा दृष्टा। मह्वाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते। वैश्वदेवेषु हि सूक्तेष्वेकदेवता बहुदेवताश्च मन्त्रा भवन्ति, तदप्युपेक्षितव्यम्। "यत्र" यस्मिन् मण्डलेऽवस्थिताः "सुपर्णा सुपतनाः आदित्यरश्मय" ते हि शोभनमर्थमुद्दिश्य तमोविघातलक्षण पतन्ति। अथवा शोभमानाः पतन्तीति सुपर्णाः।

ते किं कुर्वन्ति ? उच्यते,—"अमृतस्य भागम्" "उदकस्य" अमरणधर्मणः 'भागं' भजनीयमंशमादाय सुविवेक्लेनात् तेनान्विताः सन्तः सर्वभूतानि "अभिस्वरन्ति"। 'स्वृ शब्दोपतापयोः (भू॰ प॰)' अभितपन्तीत्यर्थः। अथवा अभिस्वरन्त्यादित्यमण्डलम्, आभिमुख्येन रसान् गृहीत्वा प्रयान्ति। "अनिमिषन्तः" अनिमिषमाणा इव आदरवन्त इत्यर्थः। 'विदथा' "वेदनेन" स्वकर्माधिकारयुक्तेनान्विताः सन्तः इदमेवास्माभिः कर्त्तव्यमादानादिलक्षणं कर्मेति अभिस्वरन्ति। यत्रैतदेवंलक्षणं कर्म कुर्वन्त्यादित्यरश्मयः, तत्र किम् ? इति उच्यते,—"इनो विश्वस्य भुवनस्य गोपाः"। 'इनः' "ईश्वरः" इनो ह्यसावादित्यः, ऐश्वर्य्येण भवति 'विश्वस्य' 'भुवनस्य' भूतस्य "सर्वेषां भूतानां" 'गोपाः' "गोपायिता" भवति "आदित्य." मण्डलान्तरपुरुषो यः तत्र मण्डलेऽवस्थितः। "स मा धीरः" "धीमान्" प्रति विशिष्टया बुद्ध्यान्वितः, बुद्धिरेव हि तस्य शरीरम्। "पाकः पक्तव्यः" पक्तव्यप्रज्ञः "विपक्कप्रज्ञः" सम्यग्दर्शनोऽनुयाह्यतया "आविवेश" आविशतु ॥

"इति" शब्दः प्रकरणप्रदर्शनार्थः,—एवमयम् "उपनिषद्वर्णो भवतीति"। यद्वा, ज्ञानमुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यं विद्या उपनिषदित्युच्यते। उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्णः। "अधिदैवतम्" उक्तम्।

"अथाध्यात्मम्" उच्यते,—अभिदैवतमध्यात्मभित्येतौ शब्दौ व्याख्यातौ। "यत्र" यस्मिन् शरीरे "सुपतनानि इन्द्रियाणि" अवस्थितानि स्वेषु स्वेषु आयतनेषु चक्षुरादिषु। किं कुर्वन्ति ? उच्यते,—"अमृतस्य" अमरणधर्मणः "ज्ञानस्य" "भागं" भजनीयं स्वं स्वं रूपादिलक्षणं रसमादाय। 'विदथा'

"वेदनेन" विज्ञानेन युक्तम् "अभिस्वरन्ति"। न हि इन्द्रियाणां चैतन्यमस्तीति तानि ह्यचेतनानि, चेतनस्य पुरुषस्य कर्त्तुर्विज्ञानमयस्य करणानि, तदधिष्ठानास्तु देवताश्चेतनाः। तदभिप्रायेणोच्यते,—'विदथा' "वेदनेन" विज्ञानेनेति। किं कुर्वन्ति? "अभिस्वरन्ति" "अभिप्रयन्ति" विषयज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति। अथवा 'अभिस्वरन्ति' बुद्धिमाभिमुख्येन विषयविज्ञानमादाय वाह्यप्रत्ययाधानार्थं स्वरन्ति गच्छन्तीत्यर्थः। तत्र किम्? इत्युच्यते,—तत्र योऽवस्थितः "ईश्वरः" इनः, "सर्वेषामिन्द्रियाणां गोपायिता" यः "आत्मा" "स मा धीरः" "धीमान्" "पाकः पक्तव्यः" पक्तव्यप्रज्ञः "विपक्वप्रज्ञः" सम्यग्द्रष्टा सर्वज्ञः। सः "अत्र" एव हि देहेऽवस्थितः बुद्ध्यधिदैवतभावेन तैजसाख्यो माम् "आविवेश" त्वनुग्राह्यतया स मामेवावस्थितोऽनुगृह्णातीत्यर्थः, तदनुग्रहादस्य सम्यग्दर्शनं प्रकाशते तदाशास्यत इति। "आत्मगतिमाचष्टे" एवमपास्य विज्ञानमाचष्टे मन्त्रैः।

यदुक्तं "पुष्पफले देवताध्यात्मे वा" इति, तदेवमुपपाद्यम्,—तत्र एक एव ह्यसावादित्यमण्डले चाधिदैवते चाध्यात्मे च। बुद्ध्यधिदैवताभूतः स एव तत्र तत्रोपेक्षितव्यः। तथाह्यमुष्मादादित्यमण्डलाद् ये रश्मयः प्रसर्प्यन्ति ते विश्वेदेवा इति, "रश्मयो वै विश्वेदेवाः" इति ह्युक्तम्। अध्यात्मेऽपि हृदयाकाशाद् यानीन्द्रियाणि प्रसर्प्यन्ति, त एव रश्मयः। अधिदैवते त एव विश्वेदेवा इत्युक्तम्। एवं तत्र तत्र योज्यम्, प्रकारमात्रमेवेदमुपदर्शितं भाष्यकारेणेति ॥ ६ ॥

इति निरुक्तवृत्तौ अष्टमाध्यायस्य (तृतीयाध्यायस्य) द्वितीयः पादः ॥ ३, २ ॥

तृतीय पाद ॥

बहुनामान्युत्तराणि द्वादश बहु कस्मात् प्रभवतीति सतो ऋस्वनामान्युत्तराण्येकादश ऋस्वो ऋसतेर्महन्नामान्युत्तराणि पञ्चविंशति-र्महान् कस्मान् मानेनान्याञ्जहातीति शाकपू-णिर्मंहनीयो भवतीति वा तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासाद्गृहनामान्युत्त-राणि द्वाविंशतिर्गृहाः कस्माद्गृह्णन्तीति सतां परिचरणकर्माण उत्तरे धातवो दश सुखनामा-न्युत्तराणि विंशतिः सुखं कस्मात् सुहितं खेभ्यः खं पुनः खनते रूपनामान्युत्तराणि षोडश रूपं रोचतेः प्रशस्यनामान्युत्तराणि दश प्रज्ञा-नामान्युत्तराण्येकादश सत्यनामान्युत्तराणि षट् सत्यं कस्मात् सत्सु तायते सत्प्रभवं भव-न्तीति वा अष्टा उत्तराणि पदानि पश्यतिक-र्माण उत्तरे धातवश्चायतिप्रभृतीनि च नामा-न्यामिश्राणि नवोत्तराणि पदानि सर्वपदसमा-म्नानायाथात उपमा यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म ज्यायसा वा गुणेन प्रख्या-

**ततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीते-ऽथापि कनीयसा ज्यायांसम् ॥ १ ॥**

"बहुनामान्युत्तराणि द्वादश"। ईश्वराणामेव बहुत्वं भवतीत्यतः ईश्वरनामभ्यः 'उत्तराणि' 'बहुनामानि'। कियन्ति ? द्वे च दश च 'द्वादश' (१२)। कतमानि पुन-स्तानि ? "उरु, तुवि, पुरु"—इत्येवमादीनि। उरु विस्तारे, यद्धि बहु भवति, तद् विस्तीर्णं भवति। तुवि वृद्धौ, यद्धि बहु भवति, तद् वृद्धं भवतीति। पूरितमिव हि बहुना सर्वं भवतीति पुरु। इत्येवमादि युक्तं योज्यम् ॥ आह,—"बहु कस्मात्" ? उच्यते—"प्रभवति" हि एतत् बहुभ्यो दीय-मानम् ॥

बहुनामसम्बन्धेनैव "ह्रस्वनामानि उत्तराणि"। कियन्ति ? "एकादश" (११)। कतमानि पुनस्तानि ? "कुवित्, रिहम्, ह्रस्व."—इत्येवमादीनि। कुत्सितमिव हि तद् विज्ञायते अल्पत्वादिति कुवित्। लीढमेव हि तदल्पत्वाद् भवतीति रिहम्। "ह्रस्व." कस्मात् ? उच्यते,—"ह्रसते." ह्रसितो हि भवति सः, महत' सकाशात् ॥

ह्रस्वसम्बन्धेनैव "महन्नामान्युत्तराणि पञ्चविंशतिः"। ह्रस्वापेक्षयैव हि महत्त्वं भवति। कियन्ति पुनस्तानि ? "पञ्चविंशति." (२५)। कतमानि पुनस्तानि ? "महत्, ब्रध्नः, ऋष्व."—इत्येवमादीनि। आह,—"महान् कस्मात्" ? उच्यते,—"मानेन" "अन्यान्" ह्रस्वान् "जहाति" "इति" "शाकपूणिः" आचार्यो मन्यते। अथ "वा" "महनीय." पूजनीयो "भवतीति" महान्। दृढत्वात् बृंहणत्वाद्वा ब्रध्नः। ऋष्वः रेषणवान्। इत्यादि योज्यम् ॥ "तत्र" तस्मिन्

महद्धामके गणे "ववक्षिथ(१४), विवक्षसे(१५)"—इत्येते "आख्याते"। ते पुनरुभे वक्तेर्वा वहतेर्वा धातोः "साभ्यासात्" ॥ ९

य एव महान्तस्त एव गृहिणो भवन्तीति महन्नामभ्यः "उत्तराणि गृहनामानि"। कियन्ति पुनस्तानि? "द्वाविंशतिः" (२२)। कतमानि पुनस्तानि? "गयः, कृदरः, हर्म्यम्"—इत्येवमादीनि। गम्यत इति गयः। कृतदरः कृदरः। हर्म्यं हरणम्। इत्येवमादीनि। आह,—"गृहाः कस्मात्"? उच्यते,—ते हि यावदेव किञ्चिद्वा क्रियते, तत् सर्वमेव "गृह्णन्ति" दुःपूरत्वात्॥

गृहेष्वेवावस्थिताः परिचर्य्यन्ते परिचरन्तेवेति गृहनामभ्यः "उत्तरे परिचरणकर्माणः धातवः" समाम्नाताः। कियन्तः पुनस्ते? "दश" (१०)। कतमे पुनस्ते? "इरज्यति, विधेम, सपर्य्यति"—इत्येवमादयः॥

परिचर्य्यमाणानामेव हि सुखं भवतीति परिचरणकर्मभ्यः "उत्तराणि सुखनामानि"। कियन्ति पुनस्तानि? "विंशतिः" (२०)। कतमानि पुनस्तानि? "शिम्बाता, शतरा, शातपन्ता"—इत्येवमादीनि। शिम्बाता, सुखानुसम्बन्धाद्धि कृदमन्नानामिव शरीरं शीतीभवति। शतरा, शीतलतरमिव हि जलादपि सुखम्। शातपन्ता, शान्ततापमेव हि सुखम्। एवमादि। आह,—"सुखं कस्मात्"? उच्यते,—"सुहितम्" सुष्ठु हितमेतत् "खेभ्यः" इन्द्रियेभ्यः। "खं पुनः" इन्द्रियम्, "खनतेः" धातोः। अवदीर्णमेव हि तस्य कर्णायतनं भवति॥

"रूपनामान्युत्तराणि षोडश"। य एव हि सुखिनस्त एव हि प्रायो रूपवन्तो भवन्तीति सुखनामभ्यः 'उत्तराणि रूपनामानि'। कियन्ति पुनस्तानि? 'षोडश' (१६)। कत-

मानि पुनस्तानि ? "निर्णिक्, वव्रिः"—इत्येवमादीनि। निर्णिक्तमिव हि तद् भवति तैजसत्वात्। विवृणोत्यात्मय-मिति वव्रिः। इत्येवमादि। "रूपं रोचते." दीप्यमानमिव हि तत् प्रकाशं भवति॥

"प्रशस्यनामान्युत्तराणि दश"। य एव हि रूपवन्तस्त एव प्रशस्या भवन्तीति रूपनामभ्यः 'उत्तराणि' 'प्रशस्यनामानि'। कियन्ति पुनस्तानि ? 'दश' (१०)। कतमानि पुनस्तानि ? "अक्षेमाः, अनेद्यः, अनिन्द्यः"—इत्येवमादीनि। अक्षेमाः, 'क्षिषु गतिशोषणयोः (दि० प०)', न क्षियति गच्छत्यकीर्त्तिमित्यक्षेमाः, अपाप इत्यर्थः, चमारहितो वा। अनेद्यः, अनिन्दार्हः। इत्येवमादि योज्यम्॥

"प्रज्ञानामान्युत्तराण्येकादश"। य एव हि प्रज्ञावन्तस्त एव हि प्रशस्या भवन्ति, य एव हि प्रशस्यास्त एव हि प्रज्ञावन्तो भवन्तीति प्रशस्यनामभ्यः 'उत्तराणि' 'प्रज्ञानामानि'। कियन्ति पुनस्तानि ? 'एकादश'। 'एकञ्च दश च एकादश (११)। कतमानि पुनस्तानि ? "केत', केतुः, चेत."—इत्येवमादीनि। 'कित ज्ञाने (भू० प०)', तस्य केतः। केतुरपि तथैव॥

"सत्यनामान्युत्तराणि षट्"। य एव हि प्रज्ञावन्त', त एव हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्यः 'उत्तराणि' 'सत्यनामानि'। कियन्ति पुनस्तानि ? 'षट्' (६)। कतमानि पुनस्तानि ? "बट्, श्रत्, सत्रा"—इत्येवमादीनि। वटमिव सम्वद्द भूतेनार्थेन भवतीति बट्। श्रवणार्हमेतद् भवतीति श्रत्। एवमादि। आह,—"सत्य कस्मात्" ? उच्यते,—"सत्, तायते" सत्त्वेन हि तत्तायते विस्तीर्यते, न

हि सतां समीपे शक्यमनृतं वक्तुम्। अथ, "वा" "सत्यमेव भवति" य एव हि सन्तस्त एव हि सत्यं वदन्ति ॥

"षष्ठी" यानि "उत्तराणि पदानि" चिक्यदित्येवमादीनि, ते "पश्यतिकर्माणः" पश्यत्यर्थाः "धातवः"। "चायतिप्रभृतीनि च" तान्येव "नामानि" भवन्ति। तानि पुनरेतानि "आमिश्राणि" संसृष्टानीत्यर्थः। तेषां प्रकरणोपपदाभ्यां विशेषावधारणं भवति। तत्र,—किञ्चिन्नाम, किञ्चिदाख्यातम्,—इत्येके मन्यन्ते। अन्ये पुनः किम्? "चिक्यत् (१)", "विचर्षणिः (६)", "विश्वचर्षणिः (७)"—इत्येतानि नामानि, यान्यन्यानि परिशिष्टानि ते धातवः, तानि पुनरेतानि पूर्वाचार्यप्रामाण्यात् आमिश्राणि पठ्यन्ते इत्येवं मन्यन्ते ॥

"नव" यानि "उत्तराणि पदानि", "इदं, सुकं, नुकम्"—इत्येवमादीनि, आकृतमित्येवमन्तानि, "सर्वपदसमाम्नानाय"। कथं नाम सर्वं चतुर्विधं पदप्रकारमेतस्मिन् समाम्नाये समाम्नातं स्यादित्येवमर्थमेष्वेव हि नवसु समाम्नातेषु उभये निपातोपसर्गाः, दर्शिता भवन्ति ॥

"अथात उपमाः"। 'अथ' इदानीम्, 'अतः' अनन्तरम्, 'उपमाः' भवन्ति। तद्यथा,—"इदमिव, इदं यथा, अग्निर्नये, चतुरश्चिद् ददमानात्, ब्राह्मणा व्रतचारिणः, वृक्षस्य नु ते पुरुहूतवयाः, जार आ भगम्, मेषो भूतोऽभि यन्नयः, तद्रूपः, तद्वर्णः, तद्वत्, तथा"—एताः उपमाः ॥

सामान्यलक्षणमासां ब्रवीति,—"यदतत्तत्सदृशमिति गार्ग्यः"। 'यत्' किञ्चित् अर्थजातम् 'अतत्' भवति, 'तत्' सरूपञ्च, यथा—अनग्निः खद्योतः, अग्निसरूपश्च सोऽग्निनोपमीयते—अग्निरिव खद्योत इति, एवम् अतत्सरूपेण गुणेन

गुणसामान्यात् उपमीयते,—इत्येवं ‘गार्ग्य:, आचार्य्यो मन्यते। “तदासां कर्म” स आसामुपमानानामर्थ:, यदप्रसिद्धतरगुणस्य कस्यचित् प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम्। क्वचित् पुनरात्मनाप्युपमानं भवत्येव ।—“वायुरात्मोपमे गति:”, “तथा करोति सैन्यानि यथा कुर्य्याद् धनञ्जय:” इति। “ज्यायसा वा गुणेन, प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीते”। ‘ज्यायसा’ उत्कृष्टेन ‘गुणेन’ यो यस्मिन् द्रव्ये उत्कृष्टो गुण: तेन, ‘कनीयांसम्’ अनुत्कृष्टं गुणम् उपमीयते’। तद्यथा,—सिंहो माणवक:। सिंहे शौर्य्यमुत्कृष्टम्, माणवकमेतेनोपमिमीते, सिंह इव माणवको विक्रान्त इति। ‘प्रख्याततमेन वा’ ‘अप्रख्यातम्’ ‘उपमीयते’। प्रख्यातश्चन्द्रमा, अप्रख्यातो माणवक:, तं तेनोपमिमीते,—चन्द्र इव कान्तो माणवक इति। “अथापि” क्वचित् “कनीयसा” गुणेन “ज्यायांसम्” अपि सन्तम् उपमिमीते। तदेतच्छन्दस्येव द्रष्टव्यम्॥ १॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम्। तनूत्यक्तनूत्यक्ता वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते तस्करस्तत्करोति यत् पापकमिति नैरुक्तास्तनोतेर्वा स्यात् सन्ततकर्मा भवत्यहोरात्रकर्मा वा रशनाभिर्दशभिरभ्यधीतामभ्यधातां ज्यायांस्तत्र गुणोऽभिप्रेत: ॥ २ ॥

आह,—किमुदाहरणम्? उच्यते,—“तनूत्यजेव • धीताम्। इय ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गै:॥”,

(ऋ० सं० ७, ५, २२, ६)। त्रितस्यैयमार्षम्। त्रिष्टुप्। प्रातः रनुवाकाश्विनयोः शस्यते। 'तनूत्यजा' "तनूत्यक्ता" चौर्य्याभिप्रायेण हर्त्तव्यं वा मर्त्तव्यं वेति कृताध्यवसायौ तस्करौ "वनर्गू वनगामिनौ" मार्गमोषकौ प्रसृतौ, ताभ्यामुपमीयते। तौ यथा उपमार्थत्वेन सुपुष्टौ भवतः, न तथा ग्रामतस्करौ। तौ यथा कश्चिदध्वगं बध्नीयातां रज्ज्वा। एवम् एतौ अस्माद्दाह 'रशनाभिः' अङ्गुलीभिः 'दशभिः' दशसंख्यायोगिनीभिः 'अभ्यधीतां' प्रतिनिबध्नीताम्। अभिनिबध्य च अग्निमन्थनयोक्त्रेण अधरारण्युत्तरारणीभूतं त्वां तस्कराविव कश्चिदध्वगं गाढं बद्ध्वा सुभृशमाकर्षतः। किमर्थं पुनरेवमर्थ्यतेऽस्माभिः ? हे 'अग्ने!' 'इयं' यस्मात् 'नव्यसी' नवतरा, अन्यैः स्तोतृभिः अदृष्टपूर्वा, युष्मद्गुणैः संक्लृत्य विरचिता, 'ते' तव 'मनीषा' स्तुतिः प्रधानसयुक्ता। स त्वमेतज्ज्ञात्वा एवमर्थ्यमानोऽस्माभिः 'युक्ष्व' योजय आत्मानमरणी प्रति। अरणिभ्यां 'शुचयद्भिः' दीप्यमानैः स्वैः 'अङ्गैः' ज्वालाख्यैः। कथम्पुनर्योजय ? 'रथं न' यथा कश्चित् कुतश्चित् आजिगमिषुः शीघ्रं रथं योजयेत्, एवमेवावतरणाय त्वमाभ्यामरणीभ्यां योजयमानो यत्नं विघ्नं मा कार्षीरित्यभिप्रायः। "तनूत्यक् तनूत्यक्तौ" इत्यर्थः। "वनर्गू वनगामिनौ" तत्र हि तयोश्चौर्यं सिध्यति। एवमस्यामृचि "अग्निमन्थनौ" "बाहू" प्रशस्तौ "तस्कराभ्याम्" अप्रशस्ताभ्याम् "उपमिमीते" मन्त्रदृक्।

"तस्करः" "तत्" एव "करोति" "यत्" एव "पापकम्" भवति "इति नैरुक्ता मन्यन्ते"। वैयाकरणानां पुनरन्यथापि स्यात्। स हि "सन्ततकर्मा भवति" रात्रौ ग्रामे मुष्णाति, दिवा अरण्ये, एवम् "अहोरात्रकर्मा वा" एतदेतत् सन्ततकर्मत्वम्। "रशनाभिर्दशभिरभ्यधीताम्" इत्येव "तत्र"

वाक्यौ "ज्यायान्" "गुणोऽभिप्रेत" तयो प्रशस्तत्वात्, अप्रशस्तत्वाच्च तस्करयो कनीयान् ॥ २ ॥

कुह स्विद्दोषा कुह वस्तो॑र॒श्विना कु॒हा॑भिपि॒त्वं क॑रत॒: कुहो॑षतु: । को वां॑ शयु॒त्रा वि॒धवे॑व दे॒वरं॒ मर्य्यं॒ न योषा॑ कृणुते स॒धस्थ॒ आ । क स्विद्रात्रौ भवथ: क दिवा काभिप्राप्तिं कुरुथ: क वसथ: को वां शयने विधवेव देवरं (देवर: कस्माद् द्वितीयो वर उच्यते) विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्मा मर्य्यो मनुष्या मरणधर्मा योषा यौतेराकुरुते सहस्थानेऽथ निपाता: पुरस्तादेव व्याख्याता यथेति कर्मोपमा । यथा वा॒तो यथा वन॒ं यथा॑ समु॒द्र एज॑ति । भ्राज॑न्तो अ॒ग्नयो॑ यथा । आ॒त्मा य॒क्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा । आत्मातत्तेर्वाप्तेर्वापि वाप्त इव स्याद् यावद्व्याप्तिभूत इति । अ॒ग्निर्न॒ ये भ्राज॑सा रु॒क्मव॑क्षस: । अग्निरिव ये (मरुतो भ्राजमाना रोचिष्णूरस्का) भ्राजस्वन्तो रुक्मवक्षस: ॥ ३ ॥

द्वितीयमुदाहरणमेतस्मिन् वाक्ये "यथापि कनीयसा

ज्यायांसम् (६७३ पृ० २ पं०)" इति,—"कुह स्विद् दोषा" (ऋ०स ७,८,१८,२) इति। कक्षीवतो दुहिता घोषा नाम, तस्या स्वमार्षम्। आश्विनी। जगती। प्रातरनुवाकाश्विनयोः प्रशस्ते। हे अश्विनौ। 'कुह स्वित् दोषा' "क्व" नु युवां "रात्रौ" "भवथः"? 'कुह वस्तोः' "क्व" वा "दिवा" भवथः युवाम्? येन नापि रात्रौ अस्माकं दर्शनमुपगच्छथ, नापि दिवा। चिदिति परिदेवनायाम्, ईर्ष्यायां वा। 'कुह' "क्व" च 'अभिपित्वम्' "अभिप्राप्तिं" स्नानभोजनाद्यर्थं "कुरुथः"? 'कुह' "क्व" वा 'ऊषतुः' "वसथः"? सर्वथा न विज्ञायते वामागमनप्रवृत्तिः। किञ्च, 'को वां शयुत्रा' कतमो युवां यजमानः शयुत्रा "शयने"? किं 'विधवेव देवरम्' यथा विधवा मृतभर्तृका काचित् स्त्री शयने रहस्यतितरां यत्नवती देवरमुपचरति, स हि परकीयत्वात् नार्य्या दुराराध्यतरो भवति, यत्नेनोपचर्यते, न तथा निजो भर्त्ता। तस्मात् तेनोपमिमीते अश्विनौ। तथा 'मर्य्यं' मनुष्यं देवरम्। सैव मृतभर्तृका 'योषा' 'आ' 'कृणुते' आभिमुख्येन कुरुते। को वाम् एवम् आभिमुख्येन 'सधस्थे' "सहस्थाने" समाने सहयोगिना वात्मना कृत्वा परिचचार? येनेह नोपगतवन्तौ स्थोऽस्मद्दर्शनमिति। एवमस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते, विधवया च यजमानः॥

अथैकपदनिरुक्तम्।—"विधवा विधातृका भवति"। धाता स तस्या विगत इति। "विधवनाद्वा" सा हि भर्तृमरणेन विधूता कम्पितेव भवति। "विधावनाद्वा" सा हि भर्त्तृरभावादनुरुध्यमाना तत्र तत्र विधावत्येव। "इति चर्मशिराः" आचार्य्यो मन्यते। "अपि वा धव इति मनुष्यनाम, तद्वियोगाद् विधवा। 'देवरः"—इत्येष शब्दो "दीव्यतिकर्मा"

दीव्यत्यर्थः, स हि भर्त्तुर्भ्राता, नित्यमेव तया भ्रातृभार्य्यया देवनार्थं म्रियत इति देवर इत्युच्यते। "मर्य्यः मनुष्यः" स हि "मरणधर्मा"। "योषा यौतेः" मिश्रणार्थस्य, सा हि मिश्रयत्यात्मानं पुरुषेण साकम्। "आ कुरुते सङ्स्थाने" आभिमुख्येन आत्मना कुरुते परिचरणाय॥

"अथ निपाताः" समाम्नाताः। यथा—"अग्निर्नेये" इत्येवमादयः, ते चत्वारोऽवसरप्राप्ताः। ते च पुनः "पुरस्तादेव व्याख्याताः" सामान्यतः, विशेषत इदानीमुदाहरणतो व्याख्यायन्ते। तत्र "यथा इति" एषा "कर्म्मोपमा"। किमुदाहरणम्? "यथा वातो यथा वनं यथा समुद्र एजति। एवा त्वं दशमास्य सहावेहि जरायुणा॥" इति (ऋ० सं० ४, ४, २०, ४)। सप्तवध्रिरात्रेयोऽपश्यत्। एषा अनुष्टुप्। गर्भानुमन्त्रणे विनियुक्ता। यथा वातवनसमुद्राः एजन्ते कम्पन्ते, एव 'त्व' हे 'दशमास्य' दशमाससम्भूत! गर्भ! एतस्मात् मातुरुदरात् अदुःखयन् एनाम् एजन् चलन् 'अवेहि' अर्वाङ् एहि, 'सह' 'जरायुणा' उल्वेण प्रजायस्व, मा स्थाः त्वमेतस्मिन्नुदरे इत्यभिप्रायः॥

अपरमुदाहरणम्,—"अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु। भ्राजन्तो अग्नयो यथा॥" इति (ऋ० सं० १, ४, ७, ३)। प्रस्कण्वस्यार्षम्। गायत्री। सौरी सा। अनयातिग्राह्यो गृह्यते षष्ठस्य षष्ठेऽहनि। 'अदृश्रम्', 'अस्य' 'केतवः' रश्मयः 'वि' विविधाः दृश्यन्तेऽस्य भगवतः सूर्यस्य प्रज्ञानसतत्त्वा, ते हि तमोऽपहत्य सर्वप्राणिनां प्रज्ञानमभिव्यञ्जयन्तीति त एव केतव इत्युच्यन्ते लक्षणया। अथवा प्रकाशसतत्त्वास्त इति साक्षादेव केतुशब्दस्तेषु स्यात्। केतुरिति विज्ञानमुच्यते, विज्ञानञ्च पुनः प्रकाशसतत्त्वाच्चैत इति केतव इत्युच्यन्ते।

अथवा केतव इव सर्वतो दियमुच्छ्रिता आदित्यमण्डले, ध्वजो हि केतुरुच्यते। के पुनस्ते? इति, 'रश्मयः'। किं कुर्वन्ति य एवमुच्छ्रिताः? इति, उच्यते,—'जनान् अनु' तिष्ठन्ति गच्छन्ति तमांस्यपहन्तुमन्यांश्चोपकारान् कर्तुमोषधिपाकादीन्। कथं पुनरनुतिष्ठन्ति? 'भ्राजन्त.' दीप्यमानाः। कथम्? 'अग्नयो यथा' येन प्रकारेण अग्नयो भ्राजन्ते, तथा भ्राजन्तोऽनुतिष्ठन्ति।

अपर मुदाहरणम्,—"यदिमा वाजयन्नहमोषधीर्हस्त आदधे। आत्मा०—" इति (ऋ० सं० ८, ५, १०, १)। आथर्वणो भिषक्, तेनेयमोषधिसूक्ते दृष्टा। अनुष्टुप्। एतेन पुनरुपतप्तो दीक्षितो एकविंशतिभिर्दर्भपिञ्जूलीभिश्चाभिरद्भिरभिषिच्यते। उपतापशान्त्यर्थमनेनैव सूक्तेनाग्निचयनार्थं चैव ग्राम्यारण्याभिरोषधिभिरुप्यते। 'यत्' यदा' अहम् 'इमाः' 'ओषधीः' 'हस्ते' 'आदधे' आधाय च सन्निकर्षेऽपि तिष्ठामि रोगिणः एताः ओषधीः 'वाजयन्' पूजयन् स्तुवन्नित्यर्थः। अथ तदैव तदनन्तरमेव 'पुरा' एव तासामोषधीनां प्रयोगात् अस्मात् सुनीतम् ओषधिवीर्यम्, असह्यं मन्वान. 'आत्मा' 'यक्ष्मस्य' यक्ष्मणः 'नश्यति' रोगस्यापुनरागमनाय। कथं पुनर्नश्यति? 'जीवगृभ यथा' यथा जीवग्राहस्य, पुरैव हननात्, भद्रतस्यैव जीवो नश्येत् विपदो दैवात्, एवमात्मा रोगस्यापि पुरैवौषधिप्रयोगात् नश्यतीत्यभिप्राय. ॥

निगमप्रसक्तमुच्यते,—"आत्मा अततेर्वा" सर्वमेव हि तेनाततं भवति सर्वगत्वात्। "आप्तेर्वा" सर्वमेव हि तेन व्याप्तं भवति सर्वगतत्वादेव। "अपि वाप्त इव" सङ्घाते ह्यसौ कार्यकारणस्थः "यावद् व्याप्तिभूत इति' अपि चैवमन्यथा

'व्याप्त्' आसौ व्याप्त इव स्यात् । किञ्च सर्वगतत्वेऽपि सति यावन्मात्रमेव तस्य कार्यकारणसङ्घातेन व्याप्यते, तावन्मात्रभूत एवासौ लक्ष्यते, तावन्मात्रे हि प्रदेशे तस्य चैतन्यशक्तिरभिव्यज्यते, तद्यथापि दर्भमुष्टिप्रक्षेपात् अग्न्यभिव्यक्तिवदिति । सूक्ष्मेण हि स्थूलं व्याप्यते, न स्थूलेन सूक्ष्मम्, स्थूलञ्च कार्यकारणम्, सूक्ष्म आत्मा, तस्मादिवशब्दः ॥

"इदं यथा (२)", "अग्निर्नये (३)", "चतुरश्चिद् ददमानात् (४)"—इत्येषः समाम्नायानुक्रमः । अग्निर्नय इत्यस्य निघण्टुतन्त्रस्य "दुर्मदासो न सुरायाम्"—इत्यनेनैव गतार्थतेति मन्यमानाः केचिदत्र निगमं नाधीयते, अपरे पुनः समाम्नायानुक्रमोऽयमिति मन्यमाना एवमेवं निगममधीयते । "अग्निर्नये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः । प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ।" (ऋ० सं० ८,१,१२,२) भार्गवस्य वसदस्योरियमार्षम् । मारुती । जगती । अग्निरिव ये भ्राजिष्णुतया रोचनाः, यथा केनचित् प्रकर्षेण 'रुक्मवक्षसः' रोचिष्णूरस्काः, मरुतः । किञ्च, 'वातासो न स्वयुजः सद्य ऊतयः' वाता इव स्वयुजः । स्वेन स्वेनानुग्रहेणानुग्राह्याणां स्तोतॄणां योजयितारो ये ते 'स्वयुजः' । किं तेषाम् ? 'सद्य ऊतयः' शीघ्रगतय इत्यर्थः । किञ्च, 'प्रज्ञातारो न ज्येष्ठाः सुनीतयः' यथा केचित् प्रकर्षेण ज्ञातारः 'सुनीतयः' स्युः, प्रशस्तया नीत्यान्विताः, एवमेतेऽपि मरुतः । बलप्रधाना हि ते इत्यतः प्रज्ञावद्भिरुपमीयन्ते । 'सुशर्माणो न सोमा ऋतं यते' । सुखाः बन्धव इव सन्तु 'सोमाः' सौम्याः 'ऋतं यते' ऋतं यज्ञं कर्त्तुमिच्छते यजमानाय । ये एवङ्गुणयुक्ता मरुतो भवन्तीति, तान् वयम् अभिप्रेतार्थसिद्धये स्तुम इति वाक्यशेषः ॥ २ ॥

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः।
न दुरुक्ताय स्पृहयेत्। चतुरोऽक्षान् धारयत
इति तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद्
बिभीयान्न दुरुक्ताय स्पृहयेत् कदाचिदा इत्या-
कार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्युप-
मार्थे दृश्यते। जार आ भगम्। जार इव भग-
मादित्योऽत्र जार उच्यते रात्रेर्जरयिता स एव
भासां तथापि निगमो भवति। स्वसुर्जारः
शृणोतु न इत्युषसमस्य स्वसारमाह साहच-
र्याद्रसहरणाद्वापि त्वयं मनुष्यजार एवाभि-
प्रेतः स्यात् स्त्रीभगस्तथा स्याद् भजतेर्मेष इति
भूतोपमा। मेषो भूतो ३भियन्नयः। मेषो
मिषतेस्तथा पशुः पश्यतेरग्निरिति रूपोपमा।
हिरण्यरूपः स हिरण्यसन्दृगपान्नपात्सेदु
हिरण्यवर्णः। हिरण्यवर्णस्येवास्य रूपं था इति
च। तं प्रत्नथा पूर्वथा विश्वथेमथा। प्रत्न इव
पूर्व इव विश्व इवेम इवेत्ययमेततरोऽमुष्मादसा-
वस्मतरोऽस्मादमुथा यथासाविति व्याख्यातं
वदिति सिद्धोपमा। ब्राह्मणवद्‌ वृषलवत्। ब्रा-

**ब्राह्मणा इव वृषला इवेति (वृषलो वृषशीलो भवति वृषाशीलो वा ॥ ४ ॥ (१६)**

चिदित्ययमपरो निपात उपमार्थीयो भवति, पुरस्ताद-व्ययमुक्त "दधिचिदित्युपमार्थे" इदानीं समाम्नायविशेष-व्याख्यानावसरप्राप्तस्य छान्दसमुदाहरणमस्य प्रदर्श्यते। कत-मत् पुनस्तत् ? इति, उच्यते,—"चतुर्रः स्त्रृहयेत्"। (ऋ० सं० १, ३, २३, ४) । मित्रावरुणार्थमृषद्वचे घोरपुत्र एता गायत्री-मपश्यत् । चतुरोऽचान् धारयमाणात् "कितवात्" योऽन्यः कितवो "बिभीयात्" किमपि यतिष्यन्ते तदन्यथा किञ्चिद् येन मामयं जेष्यतीति। निहितेषु न तथा भयं भवति यथा कितवस्य प्राङ् निधानात्। "एवं" सर्वदा "एव" "दुरु-क्तात्" "बिभीयात्" उद्विजेदित्यर्थः। तथा तथा वर्त्तेत यथा यथा दुरुक्तं न शृणुयात्, न श्रूयते। दुरुक्ते हि वरुणो देवता, तस्मात् "न दुरुक्ताय स्पृहयेत्" "कदाचित्" अपि किन्तु सूक्तमेव हि शृणुयात्, तत्र हि मित्रो देवता अर्यमा च ॥

"ब्राह्मणा व्रतचारिणः."—इत्येतदुपरिष्टाद् व्याख्यास्यते —"संवत्सरं शशयाना (ऋ० सं० ५, ७, ३, १)"—इत्ये-तस्मिन् मन्त्रे, चतुर्दशेऽध्याये ॥

"वृक्षस्य नु ते पुरुहूतवयाः"—इत्येतत् पुरस्ताद् व्याख्यातम् ॥

"आ इत्याकार उपसर्ग." स पुनरेषः "पुरस्तादेव व्याख्यातः"—"आ इत्यर्वागर्थे" इति, "अत्रापि" अयमाकारः कदाचित् "उपमार्थे" अपि "दृश्यते"। तद्यथा,—"जार आ भगम्" इति। किमुक्तं भवति ? "जार इव भगम्"—इति। आह,—कोऽयमत्र जार उच्यते ? "आदित्योऽत्र" "जार."

इति "वच्यते" अस्मिन् मन्त्रे। स हि "रात्रेर्जरयिता" तदु-दये हि रात्रिर्जीर्यते विपरणमतीत्यर्थः। "स एव भासाम्" चन्द्रादीनां या भासः ता अपि स एव उद्यन् जरयति॥

"उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति। विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती॥" (ऋ० मं० ७, ६, १०, १)। अङ्गिरःपुत्रो हविर्धानैतया जगत्या अग्निमस्तौत्। पितृमेधे विनियुक्ता। हे भगवन्नग्ने। सर्वगत सन्नामधेयस्त्वमात्मानं विशेषात्मलाभाय 'उदीरय' उद्गमयैव। अरणी पितरौ प्रति, अथवा द्यावापृथिव्यौ पितरौ स्याताम्, "द्यौर्मे पिता माता पृथिवी॥" (ऋ० मं० २, ३, २०. ३)। अहोरात्रे वा, ते प्रति विशेषात्मलाभायोज्ज्वलय त्वमात्मानम्। कथञ्च पुनरुदीरय? 'जार आ भगम्' जार इव भगम्। जार आदित्यो यथा भग भजनीय भौममान्तरिक्षञ्च रसं स्व या ज्योतिरुद्धमीरयति, एवं त्वमात्मानं पितरौ प्रत्युदीरय। कस्मात् पुनरेवमादरवान् ब्रवीमि? यस्मादेव यजमानः 'इयक्षति' यष्टुमिच्छति देवान्, 'हर्यत' हवींषि प्रेप्सत, न च त्वदृते शक्योऽयम्, त्वमेव 'इष्ट प्रतिविशिष्टं' यज्ञसाधन सर्वमन्यत्व चैवद्गुणभूतम्। किञ्च, अय यजमानः 'हृत्तः' हृदयेन 'इष्यति' इच्छत्यात्मनोऽभिलषितान् कामान्, न च देवाननिष्ट्वा शक्यास्ते प्राप्तुमिति अतो ब्रवीमि,—देवयागाय यजमानकामप्राप्तये च उदीरय त्वमात्मानमिति। किञ्च, अयमपि 'वह्निः' यज्ञवोढा होता 'स्वपस्यते' यजमानाय अभीष्टकामोपपिपादयिषया देवतितर्पयिषया च त्वमये जगदनुग्रहाय च ऋत्विग्भिः कर्म क्रियमाणमिच्छति 'विवक्ति' च अतो ब्रवीमि,—आत्मानमभ्युदीरय पितरौ प्रति विशेषात्मलाभाय। किञ्च, 'मख' 'सविषते'

यस्मिन्मासि यास्यति उपक्रमादारभ्यापवर्गात्, अतो ब्रवीमि, —उदीरय त्वमात्मानमिति। किञ्च, अयमप्यध्वर्युः 'असुरः' असुमान् प्रज्ञावान् अतिकुशलः अस्मिन् यज्ञकर्मणि 'वेपते मती' मत्या वेपते प्रोत्कम्पमानहृदय आस्ते मा दरः प्रज्ञाभ्रंश', अपि नामायमुदीरयेदात्मानं ततोऽहमेनद्यज्ञकर्म नयामिति, अतो ब्रवीमि —उदीरय त्वमात्मानमिति। अपि वा असुरो ब्रह्मा, स हि त्रयीविद्योपजनितप्रज्ञानः। अपि चोद्गाता असुर', स हि प्राणेनासुना तद्वान्, उद्गातृत्वस्य प्राणवृत्त्यधीनत्वाद् विशेषणम्। अपि वा यज्ञाधिदेवतैवान्वादिश्यतेऽसुर इत्यनेन तस्या आनन्तर्य्यात्। अपि वा सर्व एवैते यजमानादयोऽन्वादिश्येरन, सर्वेषां प्रकृतत्वात्। 'असुरः' असुराः 'वेपते' वेपन्त इति, सर्व एते यजमानादयोऽसुमन्त' मतिभिर्वेपन्तो प्रोत्कम्पमानहृदया आसते, युष्मदाक्रोदीरण-प्रतीक्षाः। अपि नाम अयमग्निरुदीरयेदात्मानं ततो नोऽभिप्रेतार्थसाफल्यं स्यादिति, अतो ब्रवीमि,—उदीरय त्वमात्मानमरण्यादीनां पितॄणामन्यतमौ पितरौ प्रति। अपि चैतावेव पितरौ दम्पती पत्नी यजमानौ अग्न्याधेयेन नवजननसम्बन्धेन पितरः। हे भगवन्! अग्ने! तावेतौ यज्ञविपरिणामकाले एतस्मिन् प्रत्युपस्थिते देवयानेन वा पितृयानेन वा मार्गेण उदीरय उद्गमय यथाप्रार्थितफलप्राप्तये। समानमन्यद्दृक्छिपं पूर्वेणार्थेन॥

यथा आदित्यो जारशब्देनोच्यते "तथा अपि" अयं "मिगसो भवति" (अथान्येऽपि बहवः इत्यपिशब्दः),—"मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः। भ्रातेन्द्रस्य सखा मम॥" (ऋ० सं० ४, ८, २१, ५)। एषा गायत्री। भरद्वाजस्यार्षम्। "एहि वां विमुचो नपादाघृणे" (ऋ० सं० ६, ५,

६, १)"—इत्येतस्मिन् पौष्णे सूक्ते। 'मातुः दिधिषुम्' माता रात्रिरादित्यस्य, स हि भगवान् रात्र्या जघने प्रातरुदेति कुमार इव स्त्रियाः प्रसवकाले, तेन जायते रात्रेरेवासौ जायत इति, अतो रात्रिर्माता, तस्याः स एवं धारयिता वोढा, तम् 'मातुर्दिधिषुं' धारयितारमहम् 'अब्रवम्' उक्तवानस्मि यन्मेऽभिप्रेतम्। स एव चादित्यः 'मम' 'सखा' समानख्यानः। यथैवाहमेतस्मिन् यज्ञे जगदनुग्राहके कर्मणि अभिप्रवृत्त', एवमसावपि प्रकाशपाकरसादानवर्षादिलक्षणे कर्मणि जगदनुग्राहके अभिप्रवृत्तः, इत्येतस्मादावयोः समानख्यानत्वम्। यत एव मम समानख्यानः, अतो मध्यमस्य च 'इन्द्रस्य' 'भ्राता' उदकभागहर्त्ता अथ वा मध्यमस्यैवोद्कैन भर्त्तव्यः, तेन स्वसौ दीप्यते। स पुनः किं करोतु ? यच्च पूर्वमहमब्रवं तच्च साधयतु, साम्प्रतञ्च यद् ब्रूमः, तच्च 'शृणोतु' श्रुत्वा च तदपि साधयत्वित्यभिप्रायः। 'स्वसुर्जारः' इति। अस्मिन् मन्त्रे स्वसृशब्देन मन्त्रदृक् "उषसम्" "आह"। केन पुन' सामान्येनेति ? उच्यते,—"साहचर्य्यात् रसहरणाद्वा"। भ्राता स्वसा सार्कं बाल्ये नित्यमेव चरति, तथा चोषसा सार्कमादित्य इत्येतत् सामान्यम्। आदित्यो हि पूषा, "अथ यद्रश्मिपोषं पुष्यति, तत् पूषा भवति"—इति हि वक्ष्यति। तस्मात् पूषा. एतस्मिन् मन्त्रे जारत्वमेतत् आदित्यस्य दर्शितम्। रसहरणाद्वा उषा. स्वसादित्यस्य। भ्रातृस्वस्रोः सम्भोजनाभिप्रायसामान्यम्। "अपि त्वयं मनुष्यजार एवाभिप्रेत स्यात्" अथादित्योऽपि मनुष्यजारः। अयमेवास्मिन् मन्त्रे "उटो'वय पितरां जार आ भगम् (ऋ० सं० ७, ६, १०, १)"—इत्यभिप्रेतो मन्त्रदृशः, नैरुक्ताना वा स्यात्। "तथा" पुन. यदि "सौभगः" एव "स्यात्"। भगः "भजते." सेवना-

श्वेत्य, स हि सेव्यते मैथुनार्थिभिः पुरुषैः। जारो मनुष्यः, स हि परकीयां स्त्रियं भोगेन सार्वाङ्गिकेण निर्दयो भूत्वा जरयति विपरिणामयति, म्लानरूपां करोति, न तथा निजो भर्त्ता। तं च दृष्टान्तदर्शनेनैवोदोरय,—यथैव स्त्रियाः भग उपस्थः, पुरुषमिश्रसंयोगे चार्द्रीभवति, एवमरणियोक्तादिहस्तानस्मान् युष्मन्मिमन्थिषून् दृष्ट्वोदोरय त्वामात्मानं हे भगवन्नग्ने ! इत्येवं योज्यं जारशब्दे, मनुष्यविषये सति ॥

"मेष इति भृतोपमा" मेष इत्येषा भूतशब्देनोपमा। "मेषो भूतो३ऽभि यन्नयः (ऋ० सं० ५, ७, २४, ५)"—इत्येष निगमः। निगमप्रसक्त उच्यते,—"मिषो मिषतेः" दर्शनार्थस्य। पर्यायप्रसक्तमुच्यते,—"तथा पशुः पश्यतेः" इति, पश्यति ह्यसौ। "इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम्। मेषो भूतो३ऽभि यन्नयः ॥" (ऋ० सं० ५, ७, २४, ५)। काण्वस्यैव मेध्यातिथेरियं मार्षम्। ऐन्द्री। गायत्री। हे 'अद्रिवः' अद्रिवन्! वज्रिन्! 'इत्था' अमुना प्रकारेण 'मेषो भूतः'। इत्यमनेन शब्देन अमुनेति तच्छब्दपर्य्यायवाचिना अभिगमनप्रकारमेतस्मादेव मन्त्रदृग्दर्शनाद् विज्ञाय अभिनयेन मन्त्रदृग्वर्त्तमानः काण्वो मेधातिथिर्दर्शयति,—हे अद्रिवन्! एवमन्यकल्पान्तरीणमेव 'मेध्यातिथिं' 'धीवन्त'' कर्मवन्तं दा 'अभियन्' आहृतो यागे कर्मणि आभिमुख्येनाभ्युद्यतैर्मदृद्भिर्दार्थैः 'यन्' गच्छन्, आह्वानमतानन्तरमेव अविलम्बमानः 'मेषो भूतः' मेष इव किञ्चिदप्युत्तरमब्रुवन् तं गौरवावनतामिव त्वा अनेन प्रकारेण अयस्त्वम् आप्तवानसि। न च तदस्माकमप्रत्यक्षम्। एतस्मादेव मन्त्रदर्शनादखिलं तद् विजानीमो वयं यतोऽतो ब्रूमः। अपहृते तस्मिन् काण्वे मेध्यातिथौ सहान्यमन्वन्तरीणैरधिकारिभिरिदानीमस्य मनोरन्तरे मेधा-

तिथिप्रापकेण कर्मणा मेधातिथिपदम्, तदहं प्राप्तवान् ... सोऽहं ब्रुवे,—याः ताः काण्वमेधातिथिद्वारेण स्तुतयः नित्याः प्रादुर्भवन्ति। एतासां प्रत्नत्वमपि वर्त्तते। स त्वमेताः जुजुषुः, हवींषि वास्मत्प्रदत्तानि प्रतिजिघृक्षुः, पूर्वकाण्वमेधातिथिवदस्मानप्यभ्येहि, किमर्थं वा नाभ्येषीत्यभिप्रायः॥

"अग्निरिति" एषा "रूपोपमा"। "हिरण्यरूपो हिरण्यवर्णः हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै॥" (ऋ० सं० २, ७, २३, ५)। गृत्समदस्यैतमार्षम्। त्रिष्टुप्। अपान्नपाद्देवता। कुम्भेष्टकोपधानेऽग्निचयने विनियुक्ता। 'हिरण्यरूपः' हिरण्यसमानरूपः। अपि च, 'सः' 'अपान्नपात्' मध्यस्थानो वैद्युतोऽग्निरादित्यस्य पुत्रोऽपान्नपात्, प्रावृट्काले घर्मार्त्तानां प्रजानामन्नार्थिनीनां च 'हिरण्यसन्दृक्' हिरण्यमिव सन्दृश्यमानः मनःप्रीतिजनकः। अपि च, स एव 'हिरण्यवर्णः', हिरण्यमिव वरणीयः प्रार्थनीयो भूतानाम्। य एवङ्गुणयुक्तोऽपान्नपात्, स किं करोतु? इति,—'हिरण्ययात्, तेजोमयात् 'योनेः' आदित्यात् विनिर्गत्य 'परिनिषद्य' सर्वतो निषद्य मध्यस्थाने अभ्रजालेनान्तरिक्षलोकं व्याप्य ('हिरण्यदाः'—इत्येवं पदम् विसर्जनीयान्तम्) 'हिरण्यदाः' हिरण्यदाता। सोऽपान्नपात् परिषद्य 'ददति' ददतु 'अन्नम्' अन्नहेतूदकम् 'अस्मै' यजमानाय इति। "समुद्रादूर्मिर्मधुमाँ उदारत्" (ऋ० सं० ३, ८, १०, १)—इत्यादित्यमुक्तं मन्यन्ते, इत्येतस्माद् दर्शनादपां पुत्र आदित्यः। "आदृतो अग्निमभरद् विवस्वतः" (ऋ० सं० ४, ५, १०, ४)—इत्येतस्यादित्यस्यापि वैद्युतोऽग्निः पुत्र, इत्येवमसावपान्नपात् अपां नप्ता॥

'था'—इत्ययं चोपमार्थशब्दः। आह,—किमुदाहरणम्?

उच्यते,—"तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् । प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥" इति (ऋ० सं० ४,२,२३,१) । अवत्सार पञ्चदशर्चं सूक्तमपश्यद् वैश्वदेवम्, तस्मिन् वैश्वदेवे सूक्ते प्रथमामेतां जगतीमपश्यत् । वैश्वदेवेषु च सूक्तेषु एकदेवता अपि मन्त्रा भवन्त्येव । शाखान्तरे वाजपेये सप्तदशे यज्ञे विनियुक्तोऽयम् । चरकाध्वर्यवः पुनरनया मन्थिनं गृह्णन्ति । तेषां पुनः श्रुतिः,—"प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनौ, असावादित्यः शुक्रः, चन्द्रमा मन्थीत्येवं चन्द्रदेवतोऽयं मन्त्रः । अपि वा "तस्मै सूर्याय हविराजुहोत"—इति हवनमन्त्रे सूर्यश्रवणात् सूर्यदेवतोऽयम् । शौनकस्तु दाशतये समाम्नाये मन्त्रदेवता अनुक्रममाणः "को नु वां मित्रावरुणौ (ऋ० सं० ५, ३, ८ सू० )"—इत्यत आरभ्य वैश्वदेवान्येकादशसूक्तान्यवोचत्, "तं प्रत्नथा (ऋ० सं० ५, ३, १२ सू०)"—इत्येतच्चतुर्थं सूक्तम्, तेन तन्मत्या वैश्वदेव एव मन्त्रः स्यात् । वाजसनेयिना पुनरनया शुक्रो गृह्यते, स च सा प्रथमा संस्थितिरित्यनेनैन्द्रेण हूयते, तेन तेषामप्ययमैन्द्र एव । चारके पुनराध्वर्यवे श्रुतिः शुक्रामन्थिनौ, तस्मादेतावन्यदेवतौ गृह्येते । अथेन्द्राय हूयते इति तेन ज्ञायते । यद्यपि हवनमन्त्र ऐन्द्रो मन्थिनः, तथापि ग्रहणमन्त्रो नैन्द्र इति, स एव सर्वथाप्येव दुरवधारदेवतो मन्त्रः, अनिरुक्तदेवतालिङ्गत्वात् । शण्डामर्कयोस्त्वसुरपुरोधसोः सम्मोहनार्थमनेनानिरुक्तदेवतालिङ्गेन मन्त्रेणान्यतरः शुक्रामन्थिनो-र्गृह्यते । "शण्डामर्कौ वा असुराणां पुरोहिता वास्ताम्"—इत्युपक्रम्य "ताविवेतौ शुक्रामन्थिनावाहृणीयाम्"—इत्युक्त्वा "तावपनुद्याथेन्द्रायां जुहुयुः"—इत्युक्तम् । तस्मात्तावनेनानिरुक्तदेवतालिङ्गेन मन्त्रेण सम्मोह्यते । सौम्यो वा स्याद-

यम्, सोमो ह्युच्यते मन्त्रिपावेण शुक्रपावेण मन्थिपात्र:, गृहीतौ वा समदयमनस्तत्प्रशंसनाभिप्रायेण। हे भगवन्! सोम! तमिन्द्रं वा वैश्वदेवं गणं वा 'ज्येष्ठराजं' ज्येष्ठदीप्तिम्। अथ वा ज्येष्ठः श्रेष्ठः सर्वेषां देवानामिन्द्रः, स यस्य राजा, सोऽयं ज्येष्ठराट् वैश्वदेवगणः, तं ज्येष्ठराजम्। बर्हिष्याहृतौ यज्ञभि यः सीदति, स बर्हिषत्, तं 'बर्हिषदम्'। स्वरिव यो दृश्यते, स: स्वर्दृक्, तं स्वर्दृशम् सूर्यसमानदर्शनमित्यभिप्रायः। 'आशु' शीघ्रम्। 'जयन्ते' जेतव्यानसुरादीन्। तमेवङ्गुण-संयुक्तम् इन्द्र" वैश्वदेवं सगणं हे सोम! 'यासु' क्रियासु 'अनुवर्द्धसे' पुनः पुन संस्क्रियसे। स त्वं क्रियासु तासु तथा-वस्थितस्त्वं 'गिरा' स्तुत्या सहितः त्वं 'प्रतीचीनं' यज्ञाभिमु-खम् इन्द्र वैश्वदेवं वा गणम् अवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मै यजमानाय 'वृजनं' धन 'दोहसे' धोक्षि प्रचारयसि। कथं पुनः धोक्षि इन्द्रं वैश्वदेवं वा गणम्? 'प्रत्नथा' चिरन्तना इव। ये महर्षयो भृग्वादयः, तेषां यथा दुग्धवानसि, तथा अस्माक-मपि धोक्षि। अपि च 'विश्वथा' ऋषिपुत्रकाणामृषीणाञ्च सर्वेषां यथा' दुग्धवानसि, तथास्माकमपि धोक्षि। अपि च 'इमथा' यथा वर्त्तमानकालीनानां यजमानानां धोक्षि, तथै-वास्माकमपीति। एवमेष यथाभिमतदैवतं योज्यः॥

इमयेत्येतस्मात् प्रसक्तमुच्यते,—"अयम्" इत्यस्य शब्दस्य का व्युत्पत्तिरिति? उच्यते,—"एततरः" हि आगततर आस-न्नतरः "अमुष्मात्" दूरस्थात् भवति, सोऽयमित्युच्यते। "असा-वित्यस्य का व्युत्पत्तिरिति? उच्यते,—"असौ अस्ततर" अस्मात् चिततर इव विप्रकृष्टत्वाद् भवति। आह,—कुतः चिततरः? उच्यते,—"अस्मात्" एततरात्। असावित्येत-स्मात् प्रसक्तमुच्यते,—"अमुया, यथा असौ इति" असावित्य-

नेन शब्देनोक्तो भवति, स एवार्थः अमुधेत्यनेनाप्युक्तो भवति ॥

"वदिति" एषा "सिद्धोपमा" सिद्धैवैषोपमा लोके। आह,—कथं ज्ञात्वा? उच्यते,—"ब्राह्मणवत्, वृषलवत्"। ब्राह्मणवदधीते, वृषलवद्वाक्रोशतीति ॥ ४ ॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम्। प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानं प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रमर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहेऽङ्गारेष्वङ्गिरा अङ्गारा अङ्कना (अञ्चना) अत्रैव तृतीयमृच्छतेत्यूचुस्तस्मादत्रिर्न त्रय इति विखननाद्वैखानसो भरणाद्भारद्वाजो विरूपो नानारूपो महिव्रतो महाव्रत इति ॥ ५ ॥ (१७)

इति तृतीयाध्यायस्य तृतीयः पादः ॥३, ३ ॥

छान्दसमुदाहरणं ब्रवीति,—"प्रियमेधवत्"—इति। तथा प्रस्कण्वस्यार्षम्। अनुष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे 'जातवेदः!' 'महिव्रत' महाव्रत। महाकर्मन्। महद्ध्यस्य भगवतो जातवेदसः कर्म, हविर्ग्रहणादिलक्षणम्, तेनैवामन्त्र्यते महिव्रत! इति। यथैतेषामृषीणां प्रियमेधादीनां श्रुतवानसि पूर्वमाह्वानम्, शृणोषि वा, एवं ममापि 'प्रस्कण्वस्य' शृणु आह्वानम्। इत्याशीः॥ एष समस्तार्थः॥

अथैकपदनिरुक्तम्।—"प्रियमेध, प्रिया अस्य मेधा" यज्ञा, इत्यय । यष्टुमिति वाक्यशेषः। "प्रस्कण्व, कण्वस्य पुत्र" प्रपदस्य तद्धितायत्व निराह, कण्वस्यापत्यमित्यर्थे । "यथा" प्रगतमग्र "प्राग्र" इत्युच्यते, गतशब्दलोप कृत्वा, एव मिहापि "कण्वप्रभव" इति वक्तव्ये भवशब्दलोप कृत्वा व्यत्ययेन च प्रस्कण्व इत्युक्तम्। "भृगु, भृज्यमानो न देहे" प्रजापतिना किल शुक्रमात्मीयमादाय अग्नौ हुतम्, तत "आचषि" ज्वालाया "भृगु" नाम महर्षि "सम्बभूव" व्यप गतेऽर्चिषि ग्रोऽङ्गारेषु सम्बभूव सोऽङ्गिरा नाम अभवत। विषहप्रसक्तमुच्यते,—"अङ्गारा अङ्कना" ते हि यत्र निधीयन्ते तदङ्कित भवति। तस्मिन्नुत्पन्ने द्वितीये "अत्रैव तृतीय मृच्छत"—"इत्यूचु" ये पूर्वोत्पन्ना ते।। "तस्मात्" अत्रैव तृतीय इत्येतस्मादनुव्याहारात् "अत्रि" सोऽभवत्। अथवैव मन्यथा स्यात्,—अत्रि, प्रतिषेधार्थोऽकार । कथम् ? "न त्रय" एवात्र, किन्तर्हि ? ख्यतामेतदस्मिन्स्थान चतुर्थोऽप्यत्र भविष्यतीत्येवमनुव्याहारादत्रिरभवत्। व्युदुह्याग्नि तस्मि-न्नग्निस्थाने य उत्पन्नः स, "विखननाद् वैखानस" एव नाम्ना अभूत्, "बभूवार्चिषु अङ्गारेषु तत्रैव तृतीय विखननाद् वैखानस" इति। अनयैवानुपूर्व्यैतानि निर्वचनान्युपपाद यितु शक्यन्ते, तस्मान्मन्त्रपाठविपर्यासेनैतानि निरुक्तानि। "विरूपा नानारूप" इति ऋज्वेव। व्रतमिति कर्मनाम। "महिव्रतो महाव्रत" "इति" अर्थ ॥ ५ ॥

इति निरुक्तवृत्तौ षष्ठमाध्यायस्य ( तृतीयाध्यायस्य ) तृतीयः पाद ॥ ३, ३, ॥

---

चतुर्थः पादः ॥

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते सिंहो व्याघ्र इति पूजायां श्वा काक इति कुत्सायां काक इति शब्दानुकृतिस्तदिदं शकुनिषु बहुलं न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः काकोऽपकालयितव्यो भवति तित्तिरिस्तरणात्तिलमात्रचित्र इति वा कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा श्वा शुयायी शवतेर्वा स्याद्गतिकर्मणः श्वसितेर्वा सिंहः सहनाद्धिंसेर्वा (स्यात्) विपरीतस्य सम्पूर्वस्य वा हन्तेः संहाय हन्तीति वा व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा ॥ १ ॥(१८)

"अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते"। उपमाधिकारो वर्त्तते। "यदेतत् तस्येदग्रमिति"—एतदुपक्रान्तम्। तत्र शब्दवत्यर्थोपमा भवन्ति, लुप्तोपमाशब्दाश्च। तत्र "अग्निर्न ये" इत्येवमादिभिः शब्दैरुपमितास्तितानामर्थानां समानरूपैरर्थैरुपमानं क्रियत इत्येतदनुक्रान्तम्। अथ इदानीं येषु पदेषु लुप्यन्ते उपमाशब्दा इवादय, तान्यवसरप्राप्तानि व्याख्यास्याम, तानि पुनरिमानि अर्थोपमानीत्येवमाचक्षते आचार्य्याः, निरूढा क्रियते संज्ञेत्यभिप्रायः। तानि च पुनरसमाम्नातान्येव निघण्टुसमाम्नाये, तेषु बहुनभिप्रायवत्ता

अत एवोपमाशब्दा यत्र त उपमीयन्त इत्यर्थोपमा इत्युच्यते। तान्येतानि भाष्यस्य विस्तरविषयत्वात् समाम्नातान्यपि सन्ति अवसरप्राप्तानि प्रदर्श्यन्ते। तद्यथा,—"सिंहो व्याघ्र इति पूजायाम्"। यो हि पूज्यो भवति स उच्यते 'सिंहो देवदत्तः' इति। अत्र न सिंह एव देवदत्तः, किन्तर्हि? सिंहगुणस्तत्र कश्चिदस्ति शौर्य्यादिः, अतस्तदभिधानेनोपमार्थं कृत्वोपमाशब्दानामिवादीनामन्यतममनुच्चारयन्नेव ब्रवीति 'सिंहो देवदत्तः' इति। यत्तदनुच्चारणमुपमाशब्दस्य स एव लोप इत्युच्यते॥

"श्वा काक इति कुत्सायाम्"। यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति, स एवमुच्यते,—'श्वा अयम्' इति। अत्रापि श्वेवायमिति इवशब्दस्य लोपो द्रष्टव्यः। धार्ष्ट्यादिदोषसमुच्चयेन यः कुत्स्यते, सः 'काकोऽयम्' इत्युच्यते। काकादिशब्दान् उदाहरणप्रसक्तान् निर्ब्रवीति,—"काक इति शब्दानुकृतिः"। अनुकरणमनुकृतिः, शब्दस्यानुकृतिः, यादृशमेवासौ शब्दं करोति तथैवानुकृत्या तस्य नामापि भवति शब्दस्यानुकृतिः। स हि काकु इति वोच्यते, तस्मात् स काक इत्युच्यते। "तदिदम्" एवं शब्दानुकृतिहेतुकं नाम "शकुनिषु" एव नान्येषु सत्त्वविशेषेषु "बहुलं" प्रायेणेत्यर्थः। 'न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः।' शकुनिष्वपि न शब्दानुकृतिहेतुकं नाम विद्यते, इत्यौपमन्यव आचार्य्यो मन्यते। किं कारणम्? व्यभिचारित्वात्। श्यामा, दर्वी, पुच्छन्नवः, हंस, इत्येवमादिषु शब्दानुकरणहेतुको नामधेयप्रतिलम्भो नास्ति। शकुनिपक्षेऽपि शब्दानुकारो न विद्यते। बहवोऽप्येवंप्रकारा अन्यक्रियार्थैर्नामभिरन्विताः शकुनयः। तत्र, यदुक्तं "तदिदं शकुनिषु बहुलम्" इति। एतदयुक्तम्। आह,—काक-

तर्हि काकस्यान्यक्रियाहेतुको नामधेयप्रतिलम्भ इति ? उच्यते,—स हि "काकः अपकालयितव्यो भवति उपघातभयात्, स हि यद्यत् स्पृशति तत्तदुपहन्तीति अपकाल्यते, तस्मात् काक इत्युच्यते । शकुनित्वसामान्यप्रसक्तमुच्यते,—"तित्तिरिस्तरणात्" । 'तॄ प्लवने (भू० प०)' । उत्प्लुत्यासौ गच्छति । "तिलमात्रचित्र इति वा" । अथ वा तिलमात्रचित्रः स भवतीति तित्तिरिः । "कपिञ्जलः कपिरिव जीर्णः" यादृशो हि कपिः मर्कटः, जीर्णः सवर्णतो भवति, तादृशोऽसावपि कपिञ्जल इत्युच्यते । अथ "वा" "कपिरिव जवते" कपिञ्जलः "ईषत्पिङ्गलः" इत्यर्थः । अथ "वा" "कमनीयं" प्रार्थनीयं मङ्गल्यं मधुरं वा "शब्दं" "पिञ्जयति" अभिव्यनक्तीति कपिञ्जलः । "एवमादीनि शकुनिनामधेयानि" एवमादिना प्रकारेण शब्दानुकृतिपूर्वकत्वे सति निर्वक्तव्यानि । "श्वाशुयायी" । शु इति क्षिप्रनाम । क्षिप्रमसौ शीघ्रत्वादेतीति श्वा । "शवतेर्वा गतिकर्मणः" स हि नित्यमेव गच्छति । "श्वसितेर्वा" वधकर्मणः । "सिंहः सहनात्" अभिभवति ह्यसौ अन्यान् प्राणिविशेषान् । "सम्पूर्वस्य वा हन्तेः" उपसर्गस्य लोपेन । "संहाय हन्तीति वा" वैयाकरणानामेषा व्युत्पत्तिः । "व्याघ्रो व्याघ्राणात्" विविधमसौ जिघ्रतीति व्याघ्रः । तस्य हि घ्राणेन्द्रियं पटु भवतीति स हि घ्रन् आघ्राय हन्ति, घ्राणेन्द्रिये हि तस्य विशिष्टं ज्ञानम् । "व्यादाय हन्तीति वा" स किल व्यादाय वक्त्रं विवृतं कृत्वा ततो हन्ति । अथवा "व्यादाय हन्तीति" यः किल प्रथमे ग्रहे गृहीतः, तेन हन्तुं भवति मृगोऽन्यो वा कश्चित्, तमसावमर्दाद् विहृत्य तस्मिन्नेव प्रदेशे प्रथमग्रहस्थाने आनीय ततो हन्ति । सिंहो व्याघ्रः श्वा काक इत्येवमनुक्रम्यार्वाचीना-

न्येतानि पदानि निरुक्तानि, अयमपि निर्वचनप्रकारोऽस्तीति प्रदर्शनार्थम् । सिंहव्याघ्रशब्दयोस्तु अनुलोममेव निर्वचनमनुलोमस्याख्योपप्रदर्शनार्थम्, एवं हि उभे अपि प्राप्ती दर्शिते भवति । १॥

अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशन्मेधाविनामान्युत्तराणि चतुर्विंशतिर्मेधावी कस्मान्मेधया तद्वान् भवति मेधा मतौ धीयते स्तोतृनामान्युत्तराणि त्रयोदश यज्ञनामान्युत्तराणि पञ्चदश यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति नैरुक्ता याच्ञो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वर्त्विङ्नामान्युत्तराण्यष्टावृत्विक् कस्मादीरण ऋग्यष्टा भवतीति शाकपूणिर्ऋतुयाजी भवतीति वा याच्ञाकर्माण उत्तरे धातवः सप्तदश दानकर्माण उत्तरे धातवो दशाध्येषणाकर्माण उत्तरे धातवश्चत्वारः स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ कूपनामान्युत्तराणि चतुर्दश कूपः कस्मात् कुपानं भवति कुप्यतेर्वा स्तेननामान्युत्तराणि चतुर्दशैव स्तेनः कस्मात् संस्त्यानमस्मिन् पापकमिति

नैघण्टुका निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् (निर्णीतं कस्मान्निर्णिक्तं भवति) दूरनामान्युत्तराणि पञ्च दूरं कस्माद् द्रुतं भवति दुरयं वा पुराणनामान्युत्तराणि षट् पुराणं कस्मात् पुरा नवं भवति नवनामान्युत्तराणि षडेव नवं कस्मादानीतं भवति ॥ २ ॥ (१८)

"अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत्"। 'अर्चतिकर्माण' अर्चत्यर्था, पूजयत्यर्था पूजायामवश्यं भवितुं युज्यते उपमेति उपमाशब्देभ्योऽनन्तरम् अर्चतिकर्माण समाम्नाता। कियन्त पुनस्ते? 'चतुश्चत्वारिंशत्' (४४)। कतमे पुनस्ते? "अर्चति, गायति"—इत्येवमादय। य एतेऽर्चतिकर्माण, एतैर्हि मेधाविन एवार्चति, एत एव हि स्तोतुं शक्नुवन्ति, नेतरे अमेधसः॥

तस्मात् "मेधाविनामान्युत्तराणि चतुर्विंशति"। अर्चतिकर्मभ्य 'उत्तराणि' 'मेधाविनामानि'। कियन्ति पुनस्तानि? 'चतुर्विंशति' (२४)। कतमानि पुनस्तानि? "विप्र, धीर, विप्र"—इत्येवमादीनि।, विविधानर्थानस्य प्राप्नु प्रातीति विप्र। धी प्रज्ञा, तद्वान् धीर, रो मत्वर्थे। विस्पष्टं शब्दमि कथयतीति विप्र। इत्येवमादि। आह,—"मेधावी कस्मात्?" उच्यते,—स हि "मेधया तद्वान् भवति"। आह,—"मेधा"। कस्मात्? सा हि "मतौ धीयते"। मतिर्बुद्धि, तस्या या पुरुषशक्तिरभिव्यज्यते, सा मेधा इत्युच्यते॥

य एव मेधाविन, त एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्य "उत्तराणि" "स्तोतृनामानि"। कियन्ति पुनस्तानि?

"वयोदश" (१३)। कतमानि पुनस्तानि ? "रेभ", जरिता, कारुः"—इत्येवमादीनि। रेभो रेभतेः स्तुत्यर्थस्य। जरिता जरतेः स्तुत्यर्थस्यैव। कारुः कर्त्ता स्तोमानाम्। इत्येवमादि योज्यम्। प्रत्यक्षवृत्तित्वादस्य गन्दस्य नीतं स्तोता कस्मादिति॥

यज्ञेष्वेव हि अतिशयेन देवतानां स्तुतयः प्रयुज्यन्त इति स्तोतृनामभ्य. "उत्तराणि" "यज्ञनामानि"। कियन्ति पुनस्तानि ? "पञ्चदश" (१५)। कतमानि पुनस्तानि ? "यज्ञः", वेनः, अध्वरः, मेधः"—इत्येवमादीनि। आह,—"यज्ञः कस्मात्" ? उच्यते,—यदेतत् "प्रख्यातं यजति कर्म" लोकवेदयोः। एतदेव भावसाधनेन शब्देनोच्यते यजनं यज्ञ इति। अथ "वा" "याच्ञो भवतीति" यज्ञः, याच्यते ह्यत्र, यतो वै देवानामयं सम्भृतम् सममावयन्निति ह विज्ञायते, तस्माद् याचनाद् यज्ञः। अथ "वा" "यजुर्भिः" अयम् "उन्न." संक्लिन्न इव "भवति", बहुत्वादव यजुषाम्। "बहु कृष्णाजिन इत्यौपमन्यव." यद् यदत्र दृश्यते प्रतिविशिष्टं साधनं किञ्चित्, तत् तत् कृष्णाजिनमिति यज्ञः, सोमे तावदजिनद्वयम्, यजमानेऽप्यजिनद्वयम्, अवहन्यमानेषु हि हविःषु अजिनं चर्मोपार्जितं चर्मपात्रे चाप्यजिनम्, एवं बहुकृष्णाजिनः। अथ "वा" "यजूंष्येनम्" उपक्रमादारभ्यान्तं "नयन्तीति" यज्ञः। वनतिः कान्त्यर्थः, काम्यन्ते हि यज्ञाद् सोमपशुस्वर्गादयः तस्मात् स वेनः यज्ञ इत्युच्यते। ममेदं दास्यतीति एवं यज्वभिः यस्मात् फलं प्रार्थ्यते इति मेधः। इत्येवमादि॥

यज्ञसम्बन्धेनैव "ऋत्विङ्नामानि उत्तराणि अष्टौ"। ऋत्विजां नामानि ऋत्विङ्नामानि। कियन्ति पुनस्तानि ? "अष्टौ" (८)। कतमानि पुनस्तानि ? "भरताः, कुरवः"—

इत्येवमादीनि। भ्रियन्ते दक्षिणाभिरिति भरताः। कुर्वन्ति कर्माणीति कुरवः। इत्येवमादि। आह,—"ऋत्विक् कस्मात्"? उच्यते,—"ईरणः" ईरयिता हि संस्तुतीनां भवतीति ऋत्विक्। *"ऋग्यष्टा भवतीति शाकपूणि."* ऋग्भिर्ह्यसौ यागकारी भवतीति ऋत्विक्। "ऋतुयाजी भवतीति वा" *स हि काले देवता यजतीति वा। ऋतौ याजयतीति* वा, स हि काले एव याजयते, नाकाले॥

ऋत्विक्सम्बन्धेनैव "याच्ञाकर्माण उत्तरे धातव सप्तदश" (१७)। कतमे पुनस्ते? इति। "ईमहे, यामि, मन्महे" —इत्येवमादयः॥

याच्ञासम्बन्धेनैव "दानकर्माण उत्तरे धातवो दश" (१०)। कतमे पुनस्ते? इति। "दाति, दाशति, दासति" —इत्येवमादयः॥

दानसम्बन्धेनैव "अध्येषणाकर्माण उत्तरे धातवश्चत्वारः (४)। कतमे पुनस्ते? इति। *"परिस्रव, पवस्व"*—इत्येवमादयः। सत्कृत्य दातृभिर्दातुं प्रतिग्रहीतृणा प्रार्थना, अध्येषणेत्युच्यते॥

याच्यमानो हि सर्वोऽपि स्वपितीति अध्येषणाकर्मभ्य उत्तरौ "स्वपितिकर्माणौ"। कतमौ पुनस्तौ? "स्वपिति, सस्ति"—"इति"। समन्त्रेनैवोक्तार्थे द्विग्रहणमवधारणार्थम्, —एतौ एव "द्वौ" निगमे न पुनस्तृतीयोऽस्तीति, अल्पत्वाद्वा द्विग्रहणम्॥

"कूपनामान्युत्तराणि चतुर्दश" कूपमेव हि आश्रित्य सर्वो सुप्यते, सुप्तः कूप इव पतितो भवतीति वा, स्वपितिकर्मभ्यामनन्तराणि कूपनामान्युच्यन्ते। कियन्ति पुनस्तानि? 'चतुर्दश' (१४)। कतमानि पुनस्तानि? "कूप, कातु, काटः"

—इत्येवमादीनि। व्रियते ह्यसावुदकार्थमिति वव्रः। व्रुसुदकमवेति कातुः। इत्येवमादि। आह,—"कूपः कस्मात्"? उच्यते,—"कु पानं भवति" यत्र ह्यसौ भवति, तत्र कुत्सितं पानं भवति, साधनापेक्षत्वात्। "कुप्यतेर्वा" यत्सम्बधादुदकार्थिनः कुप्यन्ति॥

"स्तेननामान्युत्तराणि चतुर्दशैव"। कूपमाश्रित्य मुष्णन्ति स्तेना इत्यत. कूपनामभ्यः 'उत्तराणि' 'स्तेननामानि'। कियन्ति पुनस्तानि? 'चतुर्दशैव' (१४)। कतमानि पुनस्तानि? "तृपुः, रिपुः"—इत्येवमादीनि। परेभ्यो धनान्याहृत्यातिशयेनासावात्मानं भृत्याय तर्पयतीति तृपुः। लिम्पत्यसावात्मानं पापेनेति रिपुः। इत्येवमादि। आह,—"स्तेनः कस्मात्"? उच्यते,—"संस्त्यानम्" संहतम् "अस्मिन्" "पापकम्" कर्म भवति "इति" एवं "नैरुक्ताः" मन्यन्ते। वैयाकरणानामन्यथापि स्यादित्यभिप्रायः॥

"निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्"। निर्णीतस्य च अन्तर्हितस्य नामधेयानि 'निर्णीतान्तर्हितनामधेयानि'। 'उत्तराणि' प्रकृतेभ्यः स्तेननामभ्यः, स्तेना एव ह्यन्तर्हिता भवन्तीत्येष सम्बन्धः स्तेननाम्नामन्तर्हितनाम्ना च। कियन्ति पुनस्तानि? 'षट्' (६)। कतमानि पुनस्तानि? "निण्यम्, सस्तः, सनुतः"—इत्येवमादीनि। निर्णीतमिव निण्यम्। सुप्तमिव सस्तः। सन्ततमिव सनुतः। इत्येवमादीनि॥

"दूरनामान्युत्तराणि पञ्च" (५)। अन्तर्हितं यद् भवति, दूरवत्तद् भवतीत्येष सम्बन्धः। कतमानि पुनस्तानि? "आके, पराके, पराचैः"—इत्येवमादीनि। आ कियतो देशात् एतद् वर्त्तते इति विज्ञातव्यमेतद् भवतीत्याके। पराके पराक्रान्ते। पराङ्मुखमञ्चितं पराचैरित्येवमादि।

यथैव श्रुतानि छन्दसि, तथैवैतानि समाम्नातानि। आह,—"दूरं कस्मात्"? "द्रुतं" हि तत् "भवति" अध्वनो महत्त्वात्। "दुरयं वा" दुःखं हि तद् गन्तुं प्राप्यत इत्यर्थः॥

दूरसम्बन्धेनैव "पुराणनामान्युत्तराणि षट्" (६)। समानं हि कालाध्वनोर्महत्त्वं दूरपुराणयोः। कतमानि पुनस्तानि? "प्रत्नम्, प्रदिवः, प्रवयाः"—इत्येवमादीनि। प्राक्तनं प्रत्नम्। प्राग् द्युतिमदासीदिति प्रदिवः। प्रकृष्टवयाः प्रवयाः। इत्येवमादि। आह,—"पुराणं कस्मात्"? उच्यते,—तद्धि "पुरा नवं भवति" न वर्त्तमानकाले॥

"नवनामान्युत्तराणि षडेव" (६)। पुराणसम्बन्धेनैव। कतमानि पुनस्तानि? "नवम्, नूत्नं, नूतनम्"—इत्येवमादीनि। आह,—"नवं कस्मात्"? उच्यते,—तद्धि सद्य एव कुतश्चित् "आनीतं भवति"॥ २॥

द्विश उत्तराणि नामानि प्रपित्वेऽभीक इत्यासन्नस्य प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते। आपित्वे नः प्रपित्वे तूय आ गहि। अभीके चिद्दु लोककृदित्यपि निगमौ भवतः। दभ्रमर्भकमित्यल्पस्य। दभ्रं दभ्नोतेः सुदभं भवत्यर्भकमवहृतं भवति। उपोप मे परा मृश मा मे दभ्राणि मन्यथाः। नमो महद्भ्यो नमो अर्भकेभ्य इत्यपि निगमौ भवतः। तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवति। तिरश्चिदर्य्या परिवर्त्तिर्यातमदाभ्या।

पार्वेव भिन्दन् सत एति रक्षस इत्यपि निगमौ भवतः । त्वो नेम इत्यर्द्धस्य त्वोऽपततो नेमोऽपनीतोऽर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवत्यृध्नोतेर्वा स्यादृद्धतमो विभागः । पीयति त्वो अनु त्वो गृणाति । नेमे देवा नेमेऽसुरा इत्यपि निगमौ भवतः । ऋक्षाः स्तृभिरिति नक्षत्राणां नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणमृक्षा उदीर्णानीव ख्यायन्ते स्तृभिस्तीर्णानीव ख्यायन्ते । अमी य ऋक्षा निहितास उच्चा । पश्यन्तो द्यामिव स्तृभिरित्यपि निगमौ भवतः । वम्रीभिरुपजिह्विका इति सीमिकानां वम्रयो वमनात् सीमिका स्यमनादुपजिह्विका उपजिघ्रयः । यदत्त्युपजिह्विका यद्वम्रो अतिसर्पतीत्यपि निगमो भवत्यूर्दरं कुदरमित्यावपनस्योर्दरमुदीर्णं भवत्यूर्जं दीर्णं वा । तमूर्दरं न पृणता यवेनेत्यपि निगमो भवति । तमूर्दरमिव पूरयति यवेन कुदरं कृतदरं भवति । समिद्धो अञ्जन् कुदरं मतीनामित्यपि निगमो भवति ॥३॥ (२०)

"द्विश उत्तराणि नामानि" । द्वे द्वे द्विश उत्तराणीति । "प्रपित्वे, अभीके" इत्येवमादीनि । व्याख्यातानि पृथिवी,

नामभ्य आरभ्य एकैकार्थस्य बहूनि नामधेयानि, इदानी-मेकैकस्य द्वे द्वे नामनी वाचके समाम्नायेते,—प्रपित्वे, अभीके इत्येवमादीनि, आद्यावापृथिवीनामभ्यो यावत् ॥

अमुनैवमुक्त्वा सामान्यतो विशेषेण एकैकं व्युत्पाद्य उदाहरणैरेव दर्शयति । तद्यथा,—"प्रपित्वे, अभीके"—"इति" एते नामनी "आसन्नस्य" भवतः । इत्येवमादि । "प्रपित्वे प्राप्ते" इत्यर्थः । "अभीके अभ्यक्ते" आभिमुख्येनाश्रितं । अभ्यागते । इदानीमुदाहरणे ब्रवीति,—"आपित्वे नः" "अभीके चित्"—"इति निगमौ (ऋ० सं० ५, ७, ३०, ३— ८, ७, २१, १) भवतः" ॥

"यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे तूयमागहि कण्वेषु सुसचा पिब ॥" (ऋ० सं० ५, ७, ३०, ३) । ऐन्द्री । बृहती । देवातिथेः काण्वस्यार्षम् । मध्यावते बृहतीसहस्रे गम्यते । हे 'इन्द्र !' 'यथा' येन प्रकारेण 'गौरः' गौरमृगः, 'अवेरिणम्' अपगतार्णम् अपगतोदकं मरुदेशं गत्वा 'तृष्यन्' तृषाबाध्यमानः 'अपाकृतम्' अपानीयम्, (पानयोग्य यत्र नास्ति, स्वल्पोदकत्वात्, तत्र कृतम्, उदकेन वा कृतम् जलाशयस्थानम्) तडागमन्यद् वा गोत्रम् 'एति', एवं त्वमप्येतस्मिन् 'आपित्वे' आपानकाले 'प्रपित्वे' प्राप्ते 'तूयं' क्षिप्रम् 'आगहि' आगच्छ । आगत्य च य एष सोमः 'कण्वेषु' वर्त्तते, तमेभिरेव ऋत्विग्भिः 'सचा' साकं 'सु' सुष्ठु सह स्थित्वा 'पिब' इति । "प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यम् ।" — (?)

उग्रमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ।" (ऋ० सं० ८, ७, २१, १) । सुदासः पैजवनस्यार्षम् । अतिच्छन्दाः । अर्धर्चप्रहायां मैत्रावरुणीयके देवता-

व्यत्यये यागे शाक्वरस्यैन्द्रस्य चरोर्याज्यैषा, रैवतस्य पुरोऽनुवाक्या, चाहूर्च्ये पुनरियमेव षोडशिग्रास्ते शस्यते। हे स्तोतार! 'प्रो' प्रकर्षेण 'सु' प्रशस्ताभिः स्तुतिभिः 'अस्मै' 'इन्द्राय' तुभ्यर्थं 'पुरोरथम्' अग्रतो रथम् एतत् 'शूषम्' बलम्। 'अर्चत' स्तुत। कस्य पुनरर्थमभिसन्धायार्चत? इति। 'अभीकेचित् उ लोककृत्'। 'अभीके' अभ्यागते एतस्मिन् 'सङ्गे' सङ्ग्रामकाले प्राप्तेऽस्येषु 'समत्सु' सम्बधितिषु उद्यतायुधेषु शत्रुषु 'लोककृत्' स्थानकृत्। एष 'वृत्रहा' शत्रुहन्ता इन्द्रो भविष्यतीति एतमर्थमभिसन्धाय प्रार्चत अस्मै यूय मिन्द्राय पुरोरथं शूषमिति। एवमन्यान् स्तोतृन् सम्बोध्य आत्मनापि प्रवृत्ते वक्तुम्,—हे भगवन्निन्द्र। 'अस्माक' बोधि' बुध्यस्व एताः स्तुतीः, मा परेषाम्, बुद्धा चैताः 'चोदिता' अनुज्ञाता जनस्य भव। 'अन्यकेषाम्' अन्येषां 'ज्याका' ज्याः 'अधिधन्वसु' धनुष्वधिरोपिताः 'नभन्ताम्' हिंसन्ताम्, अवततज्याधनुषो हतसर्वायुधा एते अस्मद्द्विषो युष्मदनुग्रहाद् भवन्त्विव्यभिप्रायः॥

"दभ्रम्, अर्भकम्"—"इति" एते "अल्पस्य" नामनी। "दभ्रं दभ्नोतेः" वशार्थस्य। तद्धि "सुदभ्मं भवति" सुच्छेद भवति, अल्पत्वात्। "अर्भकमवहृतं भवति" ह्रस्वमित्यर्थः। "उपोपमे परामृश" "नमो महद्भ्यो नमो"—"इत्यपि निगमौ (ऋ॰ सं॰ २, १, ११, ७—१, २, २४, ३) भवतः"॥

"उपोप मे परामृश मा मे दभ्राणि मन्यथाः। सर्वाहमस्मि रोमशा गन्धारीणामिवाविका॥" (ऋ॰ सं॰ २, १, ११, ७)। भावयव्यस्येयमार्षम्। अनुष्टुप्। भावयव्यमेव सा भर्तारं सं नानुपेयमाना ब्रवीति। हे राजन्! 'उप'अन्ध 'उप'श्लिष्य च 'मे' मम 'परामृश' यः प्रदेशः पुरुषेण क्रियाः

यरामष्टव्यः। किञ्च, 'मा मे दभ्राणि मन्यथाः' अल्पकानि लोमानि;मा मन्यथा,। जानेऽहमेतत्, यथा अलोमिकाया उपगमः प्रतिषिद्धः स्मृतौ,—"नाजातलोम्न्योपहासमिच्छेत्" इति। यतस्ते वेदयामि 'सर्वाहमस्मि रोमशा' सर्वेष्वेवावयवेषु ममोत्पन्नानि रोमाणि (येषु स्त्रीणामुत्पद्यन्ते ?)। कथञ्च पुनरहमस्मि रोमशा? 'गन्धारीणामिवाविका' गन्धारदेशजातानामविकानां,मध्ये,या सुष्ठु रोमशा भवेत्, तथाहमस्मि रोमशा, निःशङ्को मामुपगच्छेत्यभिप्रायः॥ "नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः। यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः॥" (ऋ० सं० १, २,२४, ३) । त्रिष्टुप्। शुनःशेपस्यार्षम्। होतृजपे विनियुक्ता। 'नमो महद्भ्यः' नमो महत्परिमाणेभ्यो देवेभ्यः। 'नमो अर्भकेभ्यः' अल्पपरिमाणेभ्यः। 'नमो युवभ्यः' यौवनवद्भ्यः। 'नम आशिनेभ्यः' व्यापिभ्यः। 'यजाम' 'देवान्' एतस्मिन्नुपस्थिते यागकाले। "यदि' 'शक्नवाम'। अल्पश्रुतविज्ञाना वयम् अतएव ब्रूमो यदि शक्नवामेति। वयमीदृशाः सन्तो युष्मान् ब्रूमहे,—हे 'ज्यायसः' ज्यायांसः! देवाः! युष्माकमेव 'शंस' शंसितारं सन्तमल्पे वा महति वा कस्मिंश्चिद् दुःशस्ते 'मा वृक्षि' मा अस्मान् छिन्धि यज्ञफलात्, को हि नाम नापराध्यति? इत्यभिप्रायः॥

"तिरः, सतः"—"इति" एते "प्राप्तस्य" नामनी भवतः। अप्राप्तस्यैके आधीयते, यथापि योज्यम्। "तिरः तीर्णं" हि तत् "भवति" दूरमध्वानम्। "सतः संसृतं भवति" एकीभूय सृतं भवति। "तिरश्चिदर्य्या, "पार्श्वेव भिन्दन् सतः"—"इत्यपि निगमौ (ऋ० सं० ४, ४, १६, २,—५, ७, ८, १,) भवतः" ॥

"अश्विनावेह गच्छतं नासत्या मा वि वेनतम्। तिरश्चि-

दूर्ध्यया परिवृर्त्तियात मदाभ्या माध्वी मम श्रुतं हवम्॥"
(ऋ० स० ४, ४, १६, २)। पङ्क्तिराश्विनी। अवस्योरात्रेय-
स्यार्षम्। मातरश्विकाकाश्विनयोः शस्यते। हे 'अश्विनौ!'
'नासत्या!' वां 'गच्छतम्' युवाम् 'इह' अस्मिन् यज्ञे सोमं
पातुम्। किञ्च, 'मा वि वेनतम्, मा विगतकामौ भूतम्, युवा-
माहूयमानौ मया। किञ्च, 'तिरश्चिदर्य्यया' तिरोऽपि अप्राप्ते
एव स्थाने यद्यवस्थितौ स्थः, तथापि 'अर्य्यया' ईश्वरयापि रक्ष-
गत्या दैवगत्या शीघ्रया 'आयातम्' (द्विवचनं वा साधयस्त्वात्
पदस्य)। किञ्च, 'परिवर्त्तिः यातम्' यद्यपि क्वचिदनिहत्तौ
स्थः, तथापि परिवर्त्तनं कृत्वा आयातम्। हे 'अदाभ्या'
अहिंस्यौ! अनुपहिंसितौ! अथवा अदाभ्यया अनुपहिंसितया
गत्या आयातम्। हे 'माध्वी!' मधुसोममिश्रं पेय ययोस्तौ।
'मम' 'श्रुत' शृणुतम् 'हवम्' आह्वानम्। श्रुत्वा अविलम्ब-
मानौ शीघ्रमायातमित्यभिप्रायः। "इन्द्रो यातनामभवत्
पराशरो हविर्मथीनामभ्याऽऽविवासताम्। शक्रेदु शक्रः
परशुर्यथा वन पात्रेव भिन्दन् सत एति रक्षसः।" (ऋ० स०
५, ७, ८, १)। वसिष्ठस्यार्षम्। जगती। 'इन्द्रः' 'यातूना'
यातुधानानाम् 'अभवत्' 'पराशर.' पराशातयिता। कीदृ-
शानां पुनर्यातूनामभवत् पराशातयिता? इति। उच्यते,—
'हविर्मथीनाम्' हवींषि ये मथ्नन्ति, तेषाम्। 'अभ्याविवास-
ताम्' अभ्युद्वासयतां, यज्ञोत्सादकानामित्यर्थः। अथवा परि-
चर्य्यायां स्यात्, ये त्वामिन्द्र परिचरन्ति यातव, तेषामेव पराा-
शातयितेति। योऽयमेवलक्षण इन्द्र, सोऽस्माभिराराधितः
परिचर्य्यया 'अभि एति' अभ्येतु, अस्मान् प्रति। 'शक्र' शक्तः,
सर्वयातूना यातने। 'परशुः' परशुहस्त, 'यथा' कश्चित् वन-
च्छित् अभ्येयात्, यथा, 'पात्रा' पात्राणि कौलालानि लकु-

टेनाप्रतिकव्यमानः 'भिन्दन्' कश्चिदभ्येयात्, एवमभ्येति 'रक्षसः' रक्षांसि भिन्दन्। 'सतः' प्रदेशात्, दूरादित्यर्थः॥

"त्वः, नेमः"—"इति" एते नामनी "अर्द्धस्य"। "त्वः अपततः" अपेत्य ततः। "नेमः अपनीतः" अपभज्य नीतः, पृथक् सत इत्यर्थः। "अर्द्धं हरतेर्विपरीतादारयतेर्वा स्यात्" "उद्धृतं" हि तत् "भवति"। "ऋध्नोतेर्वा स्यात्" "ऋद्धतमः" अभिसम्यन्नतमः "विभाग" भवति। "पीयति त्वो अनु त्वो गृणाति"—"नेमे देवा नेमेऽसुराः"—"इत्यपि निगमौ (ऋ० सं० २, २, १६, २—य० मै० ब्रा०) भवतः"॥

"बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने॥" इति (ऋ० सं० २, २, १६, २)। त्रिष्टुप्। दीर्घतमस आर्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोःशस्यते। हे भगवन्! 'अग्ने!' 'यविष्ठ' युवतम! 'बोध' बुध्यस्व 'मे' मम 'अस्य' 'वचसः' 'मंहिष्ठस्य' दातृतमस्य, पूजयितृतमस्य वा, महत्तमस्य वा 'प्रभृतस्य' प्रकृष्टैर्भगवद्गुणैः सम्भृतस्य। हे 'स्वधावः' अन्नवन्। ये गुणा अस्य वचसः, तान् बोध। किञ्च, इदमपरं शृणु,—उभयेषा प्राजापत्याना देवासुराणा द्विधा विभक्ताना "पीयति त्वः" हिनस्ति एकमर्द्धमसुराख्यम्, "अनु त्वः" अनु गृणात्येकमर्द्धं देवाख्यमनुष्टौतीत्यर्थः। तत्रैवं सत्युभयया विप्रतिपन्नेषु प्राजापत्येषु 'वन्दारुः' वन्दनशीलः अहं, देवं पक्षमाश्रितः, हित्वा आसुरं, तवैतां 'तन्वं' तनूं ज्वलनदहन-प्रकाशीकरणसमर्था नित्यकालमेव प्रातर्मध्यन्दिने, सायं च 'वन्दे' स्तौमीत्यर्थः॥"नेमे देवा नेमेऽसुराः"—इति ब्राह्मण-वाक्यमेवेदं वाजपेये मैत्रायणीयानाम्। अर्द्धतो देवा अर्द्धतो-ऽसुरा आसन्नित्यर्थः॥

टेनाप्रतिकव्यमानः 'भिन्दंन्' कश्चिदभ्येयात्, एवमभ्येति 'वचसः' वचांसि भिन्दन्। 'सतः' प्रदेशात्, दूरादित्यर्थः ॥

"त्वः, नेमः"—"इति" एते नामनी "अर्द्धस्य"। "त्वः अपततः" अपेत्य ततः। "नेमः अपनीतः" अपभज्य नीतः, पृथक् कृत इत्यर्थः। "अर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यात्" "उद्धृतं" हि तत् "भवति"। "ऋध्नोतेर्वा स्यात्" "ऋद्धतमः" अभिसम्पन्नतमः "विभागः" भवति। "पीयति त्वो अनु त्वो गृणाति"—"नेमे देवा नेमेऽसुराः"—"इत्यपि निगमौ (ऋ०, सं० २, २, १६, २—य० मै० ब्रा०) भवतः" ॥

"बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥" इति (ऋ० सं० २, २, १६, २)। त्रिष्टुप्। दीर्घतमस आर्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' 'यविष्ठ' युवतम! 'बोध' बुध्यस्व 'मे' मम 'अस्य' 'वचसः' 'मंहिष्ठस्य' दातृतमस्य, पूजयितृतमस्य वा, महत्तमस्य वा 'प्रभृतस्य' प्रकृष्टैर्भगवद्गुणैः सम्भृतस्य। हे 'स्वधावः' अन्नवन्! ये गुणा अस्य वचस, तान् बोध। किञ्च, इदमपरं शृणु,—उभयेषां प्राणापानयोर्द्वन्द्वाद्धि विभक्ताना उपजिघ्रन्ति हि ता, षट् ह्यासां प्राणेन्द्रिय भवति। इयारे...अन नाम्नोरेक एव "निगमः"—"यदत्त्युपजिह्विका (ऋ० सं० ६, ७, १२, ६)"—"इति" "भवति" ॥

"यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वं तदस्तु ते घृतम् ॥" (ऋ० सं० ६,७,१२,६)। भार्गवस्य प्रयोगस्येयमार्षम्। उक्थ्येऽग्नौ समिदनया हूयते। 'यत्' 'अत्ति' भक्षयति 'उपजिह्विका' अन्तरनुप्रविश्य, 'यत्' च 'अतिसर्पति' आर्द्रया मदा परिवेष्टयन्, 'वम्रः' वह्निर्न भक्षोयत्तु खदिरसारादि,

'सर्वं' तदुभयजातीयमपि 'ते' तव हे भगवन्! अग्ने! 'घृतम्' अस्तु, 'ता' तत् घृतीभूतं, त्वं 'जुषस्व, संसेवस्व हे 'यविष्ठ' युवतम!॥

"ऊर्दरम्, कृदरम्"—"इति" एते "आवपनस्य" नामनी भवतः। उप्यते यस्मिन् यवादि धान्यं कुशूलेऽन्यत्र वा वेणवादौ कस्मिंश्चित्, तदुर्दरमिति कृदरमिति च, यदावपनमाहुः, प्राकृतेन लौकिकास्तदावपनमित्युच्यते। "ऊर्दरम् "उद्दीर्णम्" ऊर्ध्वं हि तद् दीर्णं "भवति"। अथ "वा" "ऊर्जं" तदर्थाय "दीर्णं" भवति। ऊर्गित्यन्ननाम, तदुत्तये हि तच्छुषिरीभूत भवति। "तमूर्दरं न पृणता"—"समिद्धो भुञ्जन्"—इति निगमौ (ऋ० सं० २, ६, १४, ५—य० वा० सं० २८, १) भवतः॥

"अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा। तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु॥" (ऋ० सं० २, ६, १४, ५)। गृत्समदस्यैतमार्षम्। त्रिष्टुप्। ऐन्द्री। हे 'अध्वर्यवः'! 'यः' इन्द्रः 'दिव्यस्य' द्युलोकाश्रयस्य, 'वस्वः' वसुनः धनस्य, 'यः' च 'पार्थिवस्य' अन्तरिक्षलोकाश्रयस्य (पृथिवीत्यन्तरिक्षनामसु पठितम्), यश्च 'क्षम्यस्य' भूम्याश्रयस्य, 'राजा' अधिपतिः, 'तम्' एवङ्गुणयुक्तम् 'इन्द्रम्' 'ऊर्दरं न' ऊर्दरमिव 'पृणत' पूरयत 'यवेन'। यथा कश्चिन्मनुष्यः ऊर्दरं पूरयेत्, तथा यूयमिन्द्र 'सोमेभि' सोमैः पूरयत। 'तद् अपः वः अस्तु' तद् वः कर्मास्तु, सर्वमन्यन्न क्रोत्यभिप्रायः॥ "समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः। वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम्॥" (य० वा० सं० २८, १)। आप्रीसूक्तम् आध्वर्यवेऽश्वमेधे। तत्रेयं प्रथमा आप्री। हे

'अग्ने !' भगवन्। 'समिद्ध.' सन्दीप्त', त्वम् 'अञ्जन्' गमयन्नात्मानं प्रति। 'सदरम्' आवपन 'मतीना' देवाना हि सर्वेषां 'घृतम्' आवपन मतीनाम्, ते हि तव सर्वां मती' प्रक्षिपन्ति समिद स्यादिति। तदेवङ्गुणयुक्त घृत 'मधुमत्' मधुस्वादयुक्तम् 'पिन्वमान' पिबन्नित्यर्थ.। अथवा देवान् प्रति 'वहन्' 'वाजी' आत्मना वेजनवान् बलवान्, परेभ्यो वा भयदाता। हे 'जातवेद !' वहन्नेनमाग्नमेधिक वाजिनमुच्यसे,—अस्माभि 'प्रियम्' एन 'वाजिन' 'देवाना' 'सधस्थ' समानस्थानम् 'आ' आभिमुख्येन, शीघ्रतर 'वक्षि' वह प्रापयेत्यर्थ.॥ २॥

रम्भः पिनाकमिति दण्डस्य। रभ आरभन्त एनम्। आ त्वा रम्भं न जिव्रयो ररम्भेत्यपि निगमो भवति। आरभामहे त्वा जीर्णा इव दण्डं पिनाकं प्रतिपिनष्ट्येनेन। कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति। मेना ग्ना इति स्त्रीणां स्त्रियः स्त्यायतेरपत्रपणकर्मणो मेना मानयन्त्येना ग्ना गच्छन्त्येनाः। अमेनांश्चिज्जनिवतश्चकर्थ। ग्नास्त्वाकृन्तन्नपसोऽतन्वतेत्यपि निगमौ भवतः। शेपो वैतस इति पुंस्प्रजननस्य। शेपः शपतेः स्पृशतिकर्मणो वैतसो वितस्तं भवति। यस्यामुशन्तः प्रहराम शेपम्। त्रिः स्म माह्नः

अयथो वैतसेने त्यपि निगमौ भवतः। अबैने-त्यपदेशस्य। अया ते अग्ने समिधा विधेमेति स्त्रियाः। एना वो अग्निमिति नपुंसकस्य। एना पत्या तन्वं १ सं सृजस्वेति पुंसः। सिषक्ता सचत इति सेवमानस्य। स नः सिषक्तु यस्तुरः। स नः सेवतां यस्तुरः। सचस्वा नः स्वस्तये। सेवस्व नः स्वस्तये। स्वस्तीत्यविनाशिनामास्तिरभिपूजितः सु अस्तीति व्यसते रेजत इति भयवेपनयोः। यस्य शुष्माद्रोदसी अभ्यसेताम्। रेजते अग्ने पृथिवी मखेभ्य इत्यपि निगमौ भवतः। द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिस्तयो रेषा भवति ॥ ४ ॥ (२१)

"रम्भ, पिनाकम्"—"इति" एते "दण्डस्य" नामनी। "रम्भ पारभत एनम्" अवष्टम्भनार्थम्। "आ त्वा रम्भ न"—"कृत्तिवासा पिनाकहस्त"—इति निगमौ (ऋ० सं० ६, २, ४५, ५—य० वा० सं० ३, ६१)।

"आ त्वा रम्भ न जिव्रयो ररम्भा शवसस्पते। उश्मसि त्वा सधस्थ आ।" (ऋ०सं० ६,२,४५,५)। काण्वस्य विशोकस्यार्षम्। ऐन्द्री। गायत्री। अतिरात्रे महाव्रते च शस्यते। हे भगवन्निन्द्र। "आरभामहे" वय "त्वा" त्वा 'रम्भं न' "दण्डमिव" जिव्रय' "जीर्णा" इत्यर्थः। यथा इहा केचित् दण्डमारभेरवर-

ष्टमार्थमेवमारभामहे त्वाम् । हे भगवन् ! 'अवसस्पते' बलस्य पते ! त्वं न बाध्यय इत्यभिप्रायः । किञ्च, 'उश्मसि त्वा' कामयामहे त्वां नित्यमेव 'सधस्थे' समाने एव कस्मिन् स्थाने यज्ञायतनेऽवस्थितं त्वामाभिमुख्येन द्रष्टुं स्तोतुं वेत्यभिप्रायः॥ "पिनाकं" "प्रति पिनष्ट्येनेन" इत्तीत्यर्थः । "एष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि । अवततधन्वा पिनाकहस्तः कृत्तिवासाः" । 'एष ते रुद्र भागस्तेन'—इति, त्र्यम्बकाः पुरोडाशा अनेन मन्त्रेण हुत्वे आसज्यन्ते । हे भगवन् ! 'रुद्र!' 'एषः' 'ते' तव 'भागः' 'तेन' अवसेन पथ्यदनेन 'परः' परस्तात् 'मूजवतः' पर्वतात् 'अतीहि' अतिगच्छ, मा यत्रैव स्थाः । कथमुनरतीहि ? 'पिनाकहस्तः' भूत्वा, 'कृत्तिवासाः' चर्मवासाः, 'अवततधन्वा' चैवमतीहि ॥

"मेनाः, ग्नाः"—"इति" एते "स्त्रीणां" नामनी । पर्यायाभिधानप्रसक्तमुच्यते,—"स्त्रियः स्त्यायतेरपत्रपणकर्मणः लज्जार्थस्य, लज्जन्त्यपि हि ताः । "मेनाः" "मानयन्त्येनाः" पुरुषाः । "ग्नाः" "गच्छन्ति" हि "एनाः" मैथुनेन धर्मेण । "अमेनाश्चित्"—"ग्नास्वा क्षन्तन्"—"इति" "निगमौ (ऋ० सं० ४, १, २८, २—सा० वे० कौ० ग्रा० ता० ब्रा० १, १, ८) भवतः" ॥ "आ प्रद्रव हरिवो मा विवेनः पिशङ्गराते अभि नः सचस्व । नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥" (ऋ० सं० ४, १, २८, २) । अवस्योराव्रेयस्यार्षम् । त्रिष्टुप् । ऐन्द्री । हे 'हरिवः !' 'आ' आभिमुख्येनास्मान् 'प्र' प्रकर्षेण 'द्रव' । किञ्च, 'मा विवेनः' मा विगतकामो भूरस्मत्तः । हे 'पिशङ्गराते' शोभनदान ! 'अभि सचस्व' 'नः' । किञ्च, 'नहि' 'अन्यत्' देवतान्तरं 'त्वत्' त्वत्तः प्रतिविशिष्टम् 'अस्ति' यत् प्रतिपद्येमहि । हे भगवन् ! 'इन्द्र !' 'वस्यो' वसुमन् ! किं कार-

याम् ? 'भमेनांचित्' अश्लीकानपि स्तोतॄन् 'जनिमतः' एव स्तौम्, अत एव 'चकर्थ' करोषीत्यर्थः । यस्मात् त्वमेवङ्गुणविशिष्टः, तस्मात् त्वमेव स्तुम इत्यभिप्रायः ॥ "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ०—० । ग्नास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्योऽवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ०—० । क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥" वासःप्रतिग्रहणमन्त्रोऽनुषङ्ग एष', मैत्रायणीयके, ताण्ड्यब्राह्मणे (सा० कौ० ग्रा० १,१,८) च, अन्यास्वपि शाखासु च । तद् वास उच्यते, —हे 'वासः !' 'सवितुः' आदित्यस्य 'प्रसवे' अभ्यनुज्ञातः अहं त्वां 'प्रतिगृह्णामि"। 'अश्विनोः' देवयोः बाहुभ्यां प्रतिगृह्णामि। नैताभ्यामेव 'बाहुभ्याम्' अपि च 'पूष्णः' देवस्य 'हस्ताभ्याम्' प्रतिगृह्णामि । किञ्च, 'ग्नास्त्वा कृन्तन्' स्त्रीभिस्त्वं कर्त्तितः, तन्तुकरणाभिप्रायेण । 'अपसः' अल्पकाः, अनुपजातपुंस्त्वाः, जननायामसमर्थाः, कुविन्दपुत्रकाः त्वाम् 'अतन्वत' । ते हि कुविन्दानां परिकर्म 'धियः' धीमत्यः, बुद्धिमत्यः, कुशलाः, वयित्र्यः त्वाम् 'अवयन्' कुविन्दस्त्रियः कृतवत्यः । तदेवमभिनिष्पन्नं त्वां 'मह्यं' 'बृहस्पतये' बार्हस्पत्यं आत्मव्यवस्थिताय 'वरुणः' देवताविशेषः 'ददाति' उदकपूर्वकं त्वं दीयसे । सोऽहम् एवङ्गुणयुक्तः त्वां प्रतिगृह्य 'अमृतत्वम्' अमृतभाव यथाभिलषितमेव 'अशीय' अश्नुयाम् । त्वं प्रतिगृह्यमाणं वासः, तव प्रसादात् मैवमेतत् स्यात्,—अमृतभावान्मम मा खण्डनं कार्षीरित्यभिप्रायः । किञ्च, 'मयः' सुखं 'दात्रे' 'भूयात्' भवतु । 'मयः' सुखं 'मह्यं' 'प्रतिग्रहीत्रे' च । किञ्च, 'क'

प्रजापतिरयं 'कस्मै' प्रजापतये एव 'अदात्' ददाति। योऽप्ययं ददाति सोऽप्ययं दाता, अयमपि प्रजापतिरेवेत्यभिप्रायः। वक्ष्यति हि,—"क ईवते तुञ्यते का:"—इति (ऋ० सं० १, ६, ८, २) किञ्च, कामः कामायैव अदात् तद्ददाति। पुण्यं भविष्यतीत्यनेन कामेन दाता ददाति, आच्छादनं भविष्यति इति इतरः प्रतिगृह्णाति। एव कामो दाता, काम. प्रतिग्रहीता। स एव काम उच्यते,—हे 'काम! 'एतत् ते वास.' सकामो भव इति॥

"शेपः, वैतसः."—"इति" एते नामनी "पुंस्प्रजननस्य"। "शेपः शपतेः" "स्पृशतिकर्मणः" स्पृशत्यर्थस्य, स्पृश्यते हि तेन स्त्री। "वैतसो वितस्तं भवति"। उपचीय तद् भवति प्रागनुस्मरणात् स्त्रियाः। "यस्यामुशन्तः."—"त्रि. स्म माङ्कः."—"इति" "निगमौ (ऋ० सं० ८, ३, २७, २—८, ५, १, ५) भवतः॥"

"तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति। या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्॥" (ऋ० सं० ८, ३, २७, २)। सूर्याया आर्षम्। कन्याप्रथमोपगमे विनियोगः। हे भगवन्! 'पूषन्!' 'ईरयस्व' तां योनिम्, 'यस्या' योनौ 'बीजं' शुक्रम् 'मनुष्याः वपन्ति'। त्वत्कृतयोनिपोषे बीजमेतस्यामर्थवत् स्यात्, त्वदधीनो हि योनिपोष इत्यभिप्रायः। 'या' इयम् 'न.' अस्माकम् 'ऊरू' 'उशती' कामयमाना स्त्री 'विश्रयाते' नानाप्रकारमाश्रयते। तस्या या योनिः, ताम् 'ईरयस्व' 'उद्गमय' बीजग्रहणाय सुपुष्टां कुरुष्व। 'यस्यां' योनौ 'उशन्तः' पुत्रजन्मकामयमाना. 'प्रहराम' प्रक्षिपेम इमं 'शेपम्'॥ "त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि। पुरूरवोऽनु ते केतमायं राजा

मे वीर तन्व १ स्तदासी" ॥" (ऋ० सं० ८, ५, १, ५)। उर्वश्या आर्षम्। त्रिष्टुप्। सा पुरूरवसमागामिष्ठेत्युक्ता सती अनयर्चा पुरूरवसं प्रत्यब्रवीत्। हे 'पुरूरवः!' 'त्रिः स्म माऽ' त्रिरह्नो माम् 'श्नथय' अताडयः त्वम् 'वैतसेन' शिश्नदण्डेन पूर्वम्। 'उत स्म मे' अपि च यावान् कश्चिदभिलाषो मम मनस्यासीत् तं सर्वमेव त्वम् 'अव्यत्यै' 'पृणासि' व्यतिपूरितवानेवासि। अतस्तवाहम् 'अनु आयम्' अनुगतवती। 'केतम्' चेतसा अनुकूला तवाहमभवमित्यर्थः। किञ्च, हे 'वीर!' तदा तथानुकूलायाः सत्याः 'राजा' ईश्वरः त्वम्, अस्याः 'तन्व.' मच्छरीरस्य 'तदा आसीः' तदानीं त्वम्, सम्प्रति न तथा वर्त्तसे, यथा पूर्वम्, अतस्त्वयेदानीं नाहं समेष्ये इत्यभिप्रायः।

"अया, एना"—"इति" एते नामनी "उपदेशस्य"। स पुनरुपदेशः स्त्रीपुन्नपुंसकेषु भिन्नो भवति, अतस्त्रिष्वपि प्रदर्श्यते॥

तत्र, 'अया ते' अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय। दहाशसो रक्षसः पाह्य१स्मान् द्रुहो निदो मित्रमहो अवद्यात्॥" इति (ऋ० सं० ३, ४, २५, ५)। "स्त्रिया." उपदेश.। वामदेवस्यार्षम्। त्रिष्टुप्। रक्षोघ्ने कर्मणि विनियोग। भगवन्! 'अग्ने!' 'अया' अनया 'समिधा' 'ते' तव 'विधेम' परिचर्य्यां कुर्मः। स त्वमेवमस्माभिः परिचर्य्यमाणः शृणु यत् कुरुष्व 'प्रतिगृभाय' प्रतिगृहाण इमं 'स्तोम' स्तोत्रम्, अस्माभिः 'शस्यमानम्' उच्चार्य्यमाणम्। 'दह' एतान् 'अशस.' अप्रशस्तान् अस्तोतॄन्, आत्मनः 'द्रुह' च द्रोग्धॄन्, अस्माकम्। एतान् 'रक्षसः' राक्षसान् 'निदः' निन्दितॄंश्च। किञ्च, 'पाहि' रक्ष अस्मान्, हे 'मित्रमहः' मित्राणां पूजयितः! 'अवद्यात्' अवन्दनीयात् कर्मणः, पापादित्यर्थः।

"एना वो अग्निं नमसोर्जोनपातमाहुवे। प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम्॥" (ऋ० सं० ५, २, २१, १)। इति "नपुंसकस्य" उपदेशः। वसिष्ठस्यार्षम्। बृहती। प्रातरनुवाकाश्विनयोः शस्यते। 'एना वः' अनेन युष्माकं 'नमसा' अन्नेन अभ्युद्यतेन 'ऊर्जोनपातम्' अपां पौत्रम्, अथवा अन्नानां पौत्रम्, आहुतिभ्यः आपः, अद्भ्यः अग्निः, एनया प्रणालिकया अन्नस्य पौत्रोऽग्निः। तम् ऊर्जोनपातम् 'अग्निम्' 'आहुवे'। किंलक्षणम्, 'प्रियम्' इष्टम्, देवानाञ्च 'चेतिष्ठम्' अतिशयेन चेतनावन्तम्, 'अरतिम्' अलमतिं पर्याप्तमतिम्, 'स्वध्वरं' शोभनयज्ञम्, 'विश्वस्य' यजमानगणस्य, एष योऽधिकृतः कर्मणि, तस्य 'दूतम्' 'अमृतम्' अमरणधर्माणम्। हे ऋत्विग्यजमानाः! तं वः आशास्महे अस्मदाह्वये। स चाहुतो देवान् प्रति दौत्यं करिष्यतीत्यभिप्रायः॥ "एना पत्या तन्वं संसृजस्व (ऋ० स० ८, ३, २५, २)"— "इति" "पुंस" उपदेश। "इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि। एना पत्या तन्वं संसृजस्वाधा जिव्री विदथमा वदाथः॥" (ऋ० सं० ८, ३, २५, २)। इति सूर्य्याया आर्षम्। जगती। वधूरनया गृहान् प्रवेश्यते, सोच्यते। हे वधु! 'इह' एव 'अस्मिन् गृहे' प्रजया युक्तायाः सत्याः 'ते' तव यत् 'प्रियं' तत् 'समृध्यताम्'। किञ्च, अस्मिन् गृहे त्वं 'गार्हपत्याय जागृहि' गृहपतिभावाय अवहिता भवेत्यर्थः। किञ्च, 'एना पत्या' अनेन भर्त्रा सह 'तन्वं' तनुं 'संसृजस्व' मिश्रीकुरु। अथैवं सौमनस्ये वर्त्तमानौ 'जिव्री' जर्णौ यावत् तावत् अवियुज्यमानौ परस्परेण 'विदथं' यज्ञम् 'आ' आभिमुख्येनावस्थितौ सन्तौ यज्ञसम्बन्धीनि वचांसि वदतम् इत्याशीः॥

"ए॒ना वो॑ अ॒ग्निं नम॑सा" "ए॒ना पत्या"—इति समाने-ऽप्येनाशब्दे स्वरान्ते एकस्मिन्नुपपदविशेषादेकस्य नपुंसकविषयत्वमेकस्य पुरुषविषयत्वम्। एकत्र नम इत्युपपदम्, एकत्र पतिशब्दः॥

"सिषक्तु, सचते"—"इति" एते नामनी "सेवमानस्य"। "मर्त्तः सिषक्तु"—"सचस्वा नः"—इति "निगमौ (ऋ० सं० १, १, ३४, २ —१, १, २, ४) भवत" ॥

"यो रे॒वान् यो अ॑मीव॒हा व॑सु॒वित् पु॑ष्टि॒वर्द्ध॑नः। स नः॑ सिषक्तु॒ यस्तुरः॥" (१, १, ३४, २)। मेधातिथेरार्षम्। अग्न्युपस्थाने विनियुक्ता। "सोमानं स्वरणम् (ऋ० सं० १,१,३४,१)"—इत्यस्या ब्राह्मणस्पत्याया द्वयमनन्तरा, तेनेयमपि ब्राह्मणस्पत्यैव स्यात्। उक्तश्चाध्वरकाणां ब्राह्मणस्पत्याभिरग्निमुपतिष्ठेतेति। हे भगवन्! ब्रह्मणस्पते! 'यः' 'रेवान्' रयिमान्, धनवान्, 'अमीवहा' रोगहा, 'वसुवित्' च वसुनो धनस्य अपूर्वस्यापि लब्धा, यश्च 'पुष्टिवर्द्धनः' धनपोषस्य वर्द्धयिता, 'सः' 'नः' अस्मान् 'सिषक्तु' "सेवताम्"। पुनः युष्मत्प्रसादात् 'यः' 'तुरः' तूर्णकारी पटुरित्यर्थः॥ "स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व। सच॑स्वा नः स्व॒स्तये॑॥" (ऋ० सं १, १, २, ४)। मधुच्छन्दस आर्षम्। अग्न्युपस्थाने विनियोगः। हे भगवन्! 'अग्ने!' यं त्वां वयं परिचरामः, 'सः' 'नः' अस्माकं 'सूनवे' पुत्राय 'सूपायनः' सुगमनः सूपचारः 'भव' सुपचीर्णश्च 'सचस्व' 'नः' 'स्वस्तये' स्वस्त्ययनाय। निगमप्रसक्तमुच्यते,—"स्वस्तीति" एतत् "अविनाशिनाम" अविनाशिनः अर्थस्य नाम। अन्ये त्वधीयते,—"अविनाशनाम" इति। तेषाम् अविनाशस्यैव नाम। तत्त्वमुक्तम्, अधुना व्युत्पत्तिं ब्रवीति—"अस्तिः" अयम् "अभिपूजितः" सुपूर्वः समुच्यते "सु अस्ति"—"इति"॥

"भ्यसते, रेजते"—"इति" एते नामनी "भयवेपनयोः"। "यस्य शुष्माद्रोदसी"—"रेजते अग्ने पृथिवी"—"इति" "निगमौ (ऋ० सं० २, ६, ७, १—५, १, ८, ४) भवतः" ॥

"यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥" (ऋ० सं० २, ६, ७, १)। उपरिष्टाद् व्याख्येयः ॥ "प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥" (ऋ० सं० ५, १, ८, ४)। भरद्वाजस्येयमार्षम्। त्रिष्टुप्। चातुर्मास्ये वैश्वदेवे पर्वणि याज्या। "अग्निमारुतीं पृश्निमालभेत वृष्टिकामः"—इत्यस्य पशोः पञ्चर्चे चेयम्। हे स्तोतारः! 'चित्रम् अर्कम्' चायनीयं स्तोमं 'गृणते' स्तुवते, स्तनयित्नुशब्देन स्तवं जगत् उपशब्दायते। 'तुराय' त्वरमाणाय 'स्वतवसे' स्वात्मबलावष्टम्भिने 'मारुताय' गणाय। कीदृशानां पुनर्मरुतां गणाय 'प्रभरध्वम्'? इति,—ये मरुतः 'सहसा' स्वेन बलेन 'सहांसि' परेषां बलानि 'सहन्ते' अभिभवन्ति, 'रेजते' बिभेति, कम्पते वा। केभ्यः मरुद्भ्यः? 'पृथिवी मखेभ्यः' महद्भ्य इत्यर्थः। य एवङ्गुणयुक्ता मरुतः, तेषां यो गणः, तस्मै प्रभरध्वम् चित्रमर्कम्। अग्नये मारुताय च गणायेति स्तोतॄन् सम्बोध्य ततोऽग्निं ब्रवीति,—हे भगवन्नग्ने! शृणु त्वमप्येतमर्कमेवङ्गुणयुक्तैर्मरुद्भिः सह ॥

"द्यावापृथिवीनामधेयानि" एभ्यः "उत्तराणि" दिसस्त्रयेनैवोच्यन्ते। कियन्ति पुनस्तानि? "चतुर्विंशतिः" (२४)। कतमानि पुनस्तानि? "सधे, पुरन्धी"—इत्येवमादीनि। सर्वस्यास्य भूतग्रामस्य धारयित्री सधे। पुरन्धी, पुरु बहूनि धारयित्री। इत्येवमादि योज्यम् ॥

द्विर्वचनेन युक्तानि द्यावापृथिव्योर्नामानि, "तयो" साहचर्यौख्यायिका "एषा" ऋक् "भवति" (साहचर्य्यं हि सति द्विर्वचनयोग उपपन्नरूपो भवति नाम्नाम्),—॥ ४ ॥

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद। विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ कतरा पूर्वा कतरापरैनयोः कथं जाते कवयः क एने विजानाति सर्वमात्मना बिभृतो यद्वैनयोः कर्म विवर्त्तेते चैनयोरहनी अहोरात्रे चक्रयुक्ते इवेति द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे ॥ ५ (२२) ॥

इति तृतीयाध्यायस्य चतुर्थः पादः ॥ ३, ४ ॥

"कतरा पूर्वा कतरा"०—इति (ऋ०म०२,५,२,१)। अगस्त्यस्यार्षम। त्रिष्टुप। पृष्ठ्याभिप्लवयो षष्ठेऽहनि महाव्रते च तृतीये सवने वैश्वदेवे शस्त्रे शस्यते। स्वयमेव तावदितर्कयन्तृपयमशयो मन्त्रदृग् ब्रवीति,—'कतरा' अनयो द्यावापृथिव्यो 'पूर्वा' ? 'कतरा' तु 'अपरा' ? न हि पौर्वापर्य्यमनयो स्फुटं वाचयितु शक्यते। 'कथा' केन प्रकारेण एते 'जाते' स्याताम् ? किं पौर्वापर्य्येण, उत युगपद् भवेताम् ? अपि तावत् हे 'कवयः !' 'क विवेद' कश्चिदपि विस्पष्टं जानाति ? अहं त्वेतावच्छक्यादागमाद् वक्तुम्,—तस्मादुद्भूतस्य हिरण्मयस्याण्डस्यैते शकले इति। एव ह्याह ते,—"अण्डकपाले रजतश्च सुवर्णञ्चाभवताम्, तद्यत् रजत, सेयं पृथिवी, यत् सुवर्ण, सा द्यौ."

—इति। तेन ज्ञायते युगपदेवैते स्याताम् इति। किञ्च, 'विश्वं' सर्वं 'त्मना' आत्मनैव 'बिभृत' धारयत। 'यद्ध नाम' यदर्थं मनयोर्नाम नमनम्, यस्माद् भूतग्रामधारणाधम् एतेन विपरिणामत्वेन, तत् सर्वमेतो बिभृत। किञ्च, 'विवर्त्तेते' 'च' विपर्य्ययेण वर्त्तेते च 'एनयो' एव अन्तर्भूत अहनी "अहोरात्रे" 'चक्रियेव' "चक्रयुक्ते इव" चक्रयुगलमिव अवियोगेन सयुक्ते, सम्बद्धे इत्यर्थः ॥

मन्त्रव्याख्यानेन गतार्थमेतद्भाष्यमिति।

"द्यावापृथिव्योर्महिमानमाचष्टे"—इति। एतदनेन मन्त्रेण द्यावापृथिव्योर्महिमानं महाभाग्यं मन्त्रदृगाचष्टे ॥ ५ ॥

एवमेतन्नैघण्टुकं प्रकरणं समाप्तम्, अतः परमैकपदिकं भवति। यस्यायमादि,—"एकार्थमनेकशब्दमिति"—इति ॥

इति निरुक्तवृत्तौ अष्टमाध्यायस्य चतुर्थ पादः ॥ ३, ४ ॥

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्य्य-

भगवद्दुर्गस्य कृतौ अष्टमोऽध्यायः (तृतीयोऽध्यायः)

समाप्तः॥ ३ ॥

---

(कमनामानिपरिपद्यान्नहिग्रभायधासद्भिर-
भातेवनआमयेमनुष्यनामानितद्युदथाव निम्यो-
ऽभीदन्वयायवयंयचासुपर्णावद्युन्नामानितनूत्यजेक-

यथार्थं विनिवेशो द्रष्टव्यः। देशान्तरप्राप्तिस्तु चलनपूर्विका, सर्वेषां समानं कार्य्यम्, इत्यत एकार्थत्वमेषामुक्तम्। सामान्य शब्दाश्च क्वचिद् विशेषवाचिनो भवन्ति, विशेषशब्दाश्च क्वचित् सामान्यवाचिनः, तदप्युपेक्षितव्यम्।

एकार्थमनेन समासतो नैघण्टुकं प्रकरणमनुसृतम्, "अथ" इदानीं यद्व्याख्यातव्यं, तत् समासतः प्रतिज्ञायते।—"यानि अनेकार्थानि एकशब्दानि" पुरस्तात् समासतः सूचितानि, एतावतामर्थानामिदमभिधानमित्येवम्, "तानि" "अतः" परम् "अनुक्रमिष्यामः" व्याख्ययेत्यभिसम्बन्धः। किंलक्षणा पुनरिह व्याख्या? इति। तदुच्यते,—

"तत्त्वं पर्य्यायशब्देन व्युत्पत्तिश्च द्वयोरपि।
निगमो निर्णयश्चेति व्याख्येय नैगमे पदे॥"

यान्येतानि दयत्यकूपारादीनि पदानि अनेकैरर्थैरुपदया दानदहनहिंसादिभिरर्थयन्ति, यानि चैतान्यर्थजातान्युपदया-दानदहनहिंसादीनि, एकशब्दवाच्यानि, तान्येवमितरेतर-विशेषणविशेष्यभावलक्षणोपलक्षितानि, एकप्रकरणतामुपगतानि, एवम्प्रकारया ऐकपदिकप्रकरणव्याख्यया 'अनुक्रमिष्यामः' वर्णयिष्यामः। अवार्थस्याप्रतीयमानस्य पर्य्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या, शब्दस्यापि व्युत्पादनं व्याख्या। एवमेते द्वे व्याख्ये। तयोरर्थपरिज्ञानमेकस्याः कार्य्यम्, शब्दपरिज्ञानमेकस्याः। तदेतदुभयमप्येकस्मिन् नैगमे पदे यथासम्भवं व्याख्यास्यते॥

आह,—किमनेकार्थान्येव केवलानि अस्मिन् प्रकरणे व्याख्यायन्ते? नेत्युच्यते,—"अनवगतसंस्कारांश्च निगमान्"। 'अनवगतसंस्कारान्' अविज्ञातसंस्कारानित्यर्थः। येषां प्रकृति-प्रत्ययादिसंस्कारो न साकल्येन ज्ञायते, तांश्च निगमान् अत्रैव

व्याख्यास्याम:। पूर्वाणि चानेकार्थानि अनवगतसंस्काराणि चेति चशब्दः ॥

तदेतदेवम्प्रकारं प्रकरणं यत्रैतदुभयं व्याख्यायते, "तत्" "ऐकपदिकम्" "इति" अनेन नाम्ना अन्येऽप्याचार्याः "आचक्षते" निरूढ़ा खीयस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः। पूर्वस्मिन् प्रकरणे गणशः पदानां विरचनामपेक्ष्य तदैकपदिकमुच्यते, अत्र त्वेकैकमेव पदं समाम्नातम्। तद्यथा,—"जहा, निधा"—इत्येवमादीनि। यत्र पुन. क्वचिदनेकान्यपि समाम्नातानि, तद्यथा,—"देवो देवाच्या कृपा" "सोमो अद्याः"—इत्येवमादीनि, तत्रैव तत्प्रयोजनं वक्ष्यामः॥

एवं प्रकरणार्थं सङ्क्षेपतः प्रतिज्ञाय क्रमेण वर्णवृत्तिल्वाच्च प्रथमं यत् पदं, तदुपादीयते,—"जहा(१)"—इति। आह,—किमेतदनवगतसंस्कारमुतानेकार्थम्? उच्यते,—स च जहातेर्हन्तेर्वा नैगमानुपपन्नसंस्कारिणोक्तो भवति। अथ हन्तेर्जहातेर्वा सन्देह इति भाष्यकारेणावधृतं "जघानेत्यर्थः"—इति। आह,—कुतः पुनर्विशेषावधारणं हन्तेरेवात्र रूपम्,"न पुनर्जहातेः? इति। उच्यते,—निगमात्॥ १॥

को नु मर्य्या अमिथितः सखा सखायमब्रवीत्। जहा को अस्मदीषते। मर्य्या इति मनुष्यनाम मर्य्यादाभिधानं वा स्यान्मर्य्यादा (मर्य्यैरादीयते मर्य्यादा) मर्य्यादिनोर्विभागो मेथतिराक्रोशकर्मापापकं जघान कमहं जातु कोऽस्मद्भीतः पलायते निधा पाश्या भवति यन्नि-

धीयते पाश्या पाशसमूहः पाशः पाशयतेर्विपाशनात् ॥ २ ॥

कतमः पुनरसौ निगमः ? इत्याह,—"को नु मर्य्याः (ऋ० मं० ६, ३, ४८, २)"—इति । त्रिशोकस्यैतदार्षम् । गायत्री । महाव्रते महदुक्थे त्र्यचाशीतिषु शस्यते । अस्यामृचि अहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरणशब्दसारूप्यार्थोपपत्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवति हते, न जहाते. । कथम् ? इति, शृणु,—"मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ॥" (ऋ० मं० ६, ३, ४८, ४) । 'मा' 'नः' 'एकस्मिन् आगसि' 'वधीः' हे 'शूर !' 'मा' 'द्वयोः' आगसोः वधीः । 'उत' अपि च 'त्रिषु' अपि आगस्सु मा वधीः । 'भूरिषु' अपि अपराधेषु 'मा वधीः' इति । एतस्मिन् प्रकरणे ब्रवीति "को नु मर्य्याः"—इति । हे 'मर्य्याः' मनुष्याः ! युष्मानेव तावत् पृच्छामि,—'अमिथितः' अनाक्रुष्टः, अल्पमपि वा किञ्चिदनुक्तः, अपि च 'सखा' समानख्यानः, 'सखायम्' अत्र समानख्यानमेव सन्तम (यथा भवतामह यज्ञे समानख्यानः, एव सन्तम्) 'अब्रवीत्' । को न्वेवमाह ? 'अमिथितः' अनाक्रुष्टो ब्रूयाद् यः कश्चित्,—यथा यूयमनाहृताः सन्तो मां ब्रूत मा वधीरिति । "जहा को अस्मदीषते" । अपापकशब्दोऽत्र भाष्यकारेणाध्याहृतः प्राक् जहाशब्दस्य अर्थोपद्योतनार्थम्,—'अपापक"सन्तं "कमह" "जघान" कृतवान् "जातु" कदाचिदित्यर्थः । "अपापक" "कम्" "अहम्" "जातु"—इति सर्वमेतत् अध्याहृतं भाष्यकारेण, 'जहा'शब्दस्य निराकाङ्क्षीकरणार्थमधस्ताच्चोपरिष्टाच्च, एवं हि जहाशब्दः परिसमाप्तार्थो

भवति। न कदाचिदपि कश्चिदपापको मया हतपूर्व इति, पापकारिणन्तु हन्मीत्यभिप्रायः। ते यूयमपापा एवाज्ञम् भूयास्थ, न वो हनिष्यामि। यत् पुनरेतदुक्तं भवद्भिः 'भूरिष्व-प्यागस्त्, माऽस्मान् वधीः (७२८ पृ०१२पं०)'—इति, कथ-मागस्कारी न हन्यते? स्वा पुरोडाशमवलिह्यात्, न च कस्य-चित् कस्मिंश्चिदपि स्वता स्यात्, सर्वं वा असमञ्जसमेव स्यात्, यदि पापकारिणो न हन्येरन्, अथ मनुष्यानपापानपि त्व हन्स्येवेति। अत्र ब्रूमः,—"कः" "अस्मात्" अस्मत्तः अपापकारी सन् "भीतः" 'ईषते' "पलायते" इत्यर्थः, न कश्चिदप्यपाप-कारी मत्तः उद्विजमानः पलायते, स हि शुद्धेन चेतसा अभिमुख एव मामभ्येति, य एव तु पापकारी भवति, स एवात्मापराधशङ्कितया बुद्धा अस्मत्तो भीतः पलायते इत्यभि-प्रायः। अत्रापि कोऽस्मदित्येतस्मात् पञ्चमीयोगात् ईषतेर्गम-नमात्रसामान्यवाचिनः सतो गमनविशेषे पलायनेऽवस्थानम्। यो हि यस्माद् बिभेति, स तस्मात् पलायते। भीतशब्दस्त्वाध्या-हृतः? न ह्यभीतः कश्चित् पलायते ॥ इत्येष समस्तार्थः ॥

अथैकपदनिरुक्तम्।—"मर्य्या इति" मनुष्यनामसु पठि-तम्। इहापि चैतत् "मनुष्यनाम" एव। तस्योक्ता व्युत्पत्तिः,—"मर्य्यो मनुष्यो मरणधर्मा" इति। अथ "वा" "मर्य्यादा-भिधानम्" एव अत्र "स्यात्" न मनुष्यनाम। यदा मर्य्यादाभि-धानमेतदभिप्रेतं भवति, तदैवमर्थवत्तास्य योजयितव्या,—"मर्य्यादा, मर्य्येरादीयते"। का नु एषा मर्य्यादा,—यतो धर्मज्ञाः सन्तो यूयमनाहता अनाक्रुष्टाश्च असदभियोगं सखायः सन्तो मम सख्युर्दत्तं मा वधीः? इति, नैतन्न्याय्य-मित्यभिप्रायः। "मर्य्यादा, मर्य्यादिनोर्विभागः"। संश्रिता या भूमिरपक्षीणा, सा मर्य्येत्युच्यते (विषयान्त इत्यर्थः),

आदित्यस्य विषयस्योपक्रमयोच्यते। सञ्चितायाश्च भूमेरादेश विभागकारिणी या भूमिः, सा मर्य्यादेत्युच्यते। "मेथतिरा क्रोशकर्मा"। अनन्न पल्लरोऽश्वमभिमेथतीति प्रसिद्धमश्वमेधे मेथतेराक्रोशकर्मत्वम्। लोकेऽपि च यालो मेथनक इत्युच्यते, स ह्यभीक्ष्णमाक्रुश्यते, आक्रोशति च सः॥

"अपापकम्"-इत्यस्य भाष्यपदस्यापरो व्याख्यामार्ग,— को न्वेवं ब्रूयादपापक सन्त मा वधीरिति? अघान कमह जातु पापकमपापक वा? कोऽस्मद्भीत पलायते? न कश्चिदपि, सोम्योऽहमित्यभिप्राय। बलकृति सम्बन्धादिन्द्र एवायम्॥

एवमेतस्मिन् मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसाद्गुण्यार्थोपपत्तिभिर्हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः। जहातौ ह्येतस्मिन् कल्प्यमाने प्रकरण पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि सति। तस्मादत्र जहातेरवकाशोऽस्ति, पारिशेष्यात् हन्तेरेतद्रूपमित्युपपन्नं भवति॥

एवमेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम्।

"निधा (२)"—इति। एतत् पदमनवगतसंस्कारावसरप्राप्त व्याख्यानीयमेकपदिकव्याख्याधर्मेण प्रकृतानुवृत्त्या स व्याख्यातव्य इति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रवृत्त्या ब्रूम,—"निधा पाश्या भवति"—इति। पर्यायेण तत्त्ववचनम्। यो वालमय स्नायुमयो वा पाशसमूह, पक्षिग्रहणार्थं, स पाश्येत्युच्यते। अधुना द्वावप्येतौ शब्दौ निर्ब्रूते, निधाशब्द पाश्याशब्दश्च।—"यत्" यस्मात् इय "निधीयते" नीचैर्धीयते पक्षिग्रहणार्थम्। तस्मात् निधि रिति प्राप्ता, निधानीति वा। सैयमेव प्राप्ता सती निधेत्यवगतसंस्कारेणोच्यते। पाश्याशब्द पर्य्यायाभिधानप्रसक्त निर्ब्र-

वीनि प्रत्ययोत्पादनार्थम्,—"पाश्या पाशसमूहः" इति । पदान्विभज्य तद्धितार्थौ निरुक्त, अधुना पदार्थं निर्ब्रवीति,— "पाशः पाशयतेर्विपाशनात्" तेन हि विविधमतिशयेन वा पाश्यते बध्यत इत्यर्थः ॥ २ ॥

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् । वयो वेर्बहुवचनं (सुपर्णाः) सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमाना अपोर्णुह्याध्वस्तं चक्षुश्चक्षुः ख्यातेर्वा चष्टेर्वा पूर्धि पूरय देहीति वा मुञ्चास्मान् पाशैरिव बद्धान् पार्श्वतः श्रोणितः शितामतः पार्श्वं पर्शुमयमङ्गं भवति पर्शुः स्पृशतेः संस्पृष्टा पृष्ठदेशं पृष्ठं स्पृशतेः संस्पृष्टमङ्गैरङ्गमङ्गनादञ्चनाद्वा श्रोणिः श्रोणतेर्गतिश्चलाकर्मणः श्रोणिश्चलतीव गच्छतो दोः शिताम भवति दोर्द्रवतेर्योनिः शितामेति शाकपूणिर्विषितो भवति श्यामतो यकृत्त इति तैटीकिः श्यामं श्यायतेर्यकृद् यथा कथा च कृत्यते शितिर्मांसतो मेदस्त इति गालवः शितिः श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा मेदो मेदतेः ॥ ३ ॥

अधुना यस्मिन् मन्त्रे निधाशब्दः पाशसमूहवाची, तमानीय ब्रवीति, निधाशब्दनिगमार्थम्। कतमः पुनरसौ मन्त्रः? इत्याह,—"वयः सुपर्णा" इति। यास्तस्य गौरिवीतेरियमार्षम्। त्रिष्टुप्। अग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते। 'वयः' "आदित्यरश्मयः"। "वेतेः" गत्यर्थस्य (अदा० प०) नामीभूतस्य "बहुवचनम्" विः, वौ, वयः इति। 'सुपर्णाः' "सुपतनाः" एत एव "उपसेदुः"। उपसीदन्ति व्युष्टायां रात्रावहन्यहनि। कमुपसेदुः? 'इन्द्रम्' आदित्यम्। 'प्रियमेधाः' प्रिययज्ञाः। त एव यज्ञसहचारित्वात्, उद्गतेषूदितेषु हि तेषु यज्ञास्तायन्ते। 'ऋषयः' त एव, मर्षणात्, प्रकाशकत्वात्। 'नाधमानाः' त आदित्यमुपसेदुः। कमर्थं "याचमानाः"? इति। "अपोर्णुहि" अपावृणु जनानामेतत् 'ध्वान्तम्' "आध्वस्तम्" आच्छादितं तमसा। 'चक्षुः' 'पूर्धि' "पूरय" युष्मदननुग्रहीतमसफलमिवैतेषां जनानामेतच्चक्षुः, तत् पूर्धि, सफलं कुर्वित्यर्थः। अथवा 'पूर्धि' "देहि" इति। यदुक्तं स्यात् अस्तं हि गच्छता त्वया एतेषां जनानामात्मानमिव यच्चक्षुः, तत् पुनरुदयंस्त्वमेतेभ्यो जनेभ्यो देहि। कथञ्च पुनर्देहि? 'मुमुग्धि' "अस्मान्" "मुञ्चास्मान्" 'निधया' "पाशैः" पाशसमूहेन पतितान्. "इव" एतस्मिन् मण्डले "बद्धान्"। यावदेतत्तावद्दन्यमेव तमो नाशयित्वा एतेषां जनानामेतच्चक्षुस्सफलं, सफलं वा कुरु। एवं ह्येतत् त्वयैव दत्तं भविष्यतीत्यभिप्रायः। एतदर्थं याचमाना उपसेदुः॥

"चक्षु" "ख्यातेर्वा" दर्शनार्थस्य, "चष्टेर्वा" दर्शनार्थस्यैव। एवमेतस्मिन् मन्त्रे 'मुमुग्ध्यस्मान्निधयेव बद्धान्'—इत्येतेषां पदानां मध्ये वर्त्तमानस्य तृतीयान्तस्य निधाशब्दस्य पाशसमूहादन्यः कोऽर्थः स्यात्?—'मुमुग्धि' 'बद्धान्'—इत्येतौ

शब्दो येन बद्धाः, यस्माच्च मुच्यन्ते, तदर्थाभिधायिनं शब्द-माकाङ्क्षतः। तत्रैवं सति वरमविद्यमानस्याध्याहाराद् विद्य-मानस्य, निधाशब्दस्य, अनयोः शब्दयोर्मध्ये वर्त्तमानस्य, आकाङ्क्षितार्थाभिधायकत्वकल्पना इति निधाशब्दः पाशस-मूहाभिधायित्वेऽवतिष्ठते, इतरथा ह्ययमितरैः पदैरसम्बध्य-मानोऽनर्थक एव स्यात्। तस्मादेव सर्वत्रानवगतसंस्काराणा-मसिद्धार्थानां पदानां सामर्थ्यादाकाङ्क्षितरूप एवार्थोऽवस्थाप्यं भवति, तदुपपाद्यं सर्वत्र, ग्रन्थातिगौरवभयात् तु सङ्क्षेपतोऽत्र दर्शयिष्यामः।

"शितामं (२)"—इति। एतदनवगतम्। अनुपन्यस्यैव पदम्, अभिधेयं चानुक्त्वैव निगममेव प्रथमं पठत्याचार्यः। विप्रतिपत्त्यानेकार्थत्वमस्येति। "पार्श्वतः श्रोणितः शिता-मत."—इति निगमः (य० मा० सं० २१, ४३)। पशुहविषः प्रैषोऽयं मन्त्रशेषः। कतमः पुनरसौ प्रैषः? "होता यक्षदि-न्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यव-सप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽ-ङ्गादङ्गादवत्तानां करत एवाश्विना जुषेतां हविर्होतर्यज॥" (य० मा० सं० २१. ४३)—इति। सर्व एव गद्यः। वामदेवस्या-र्षम्। मैत्रावरुणो ब्रवीति। 'होता यक्षत्' होता यजीत-त्यर्थः। तेन वेक्ष्यमाणौ 'इन्द्राग्नी' यस्मात् 'हविषः' पश्वा-ख्यात् 'मध्यतः' यदेतत् 'मेदः' 'उद्भृतम्' अभ्यां सुखं हितम्। तस्मान्मेदः पश्यति, अपश्यति, द्वेधा मेदः करोतीति श्रुतम्। एतन्मेदः 'अद्य' एतस्मिन्नहनि सद्यः उद्भृतम् 'आत्ताम्' भक्षयेताम्। 'पुरा द्वेषोभ्यः' हविर्मेधिभ्यः पिशा-

चादिभ्य । 'पुरा पौरुषेय्या ग्रभ' अवांगिडावदानात्, इडा हि पुरुषार्थं गृह्यते, प्राक् तस्माद् ग्रहणात्। 'इन्द्राग्नी' 'घस्ता' भक्षयिता, 'नूनं' निश्चयेन। एतस्मिन् 'घासे' ग्रसन-काले, भक्षणकाले प्राप्ते 'अज्राणाम्' अनभिभूतानां रक्षोभि: आदरेण प्रतिविशिष्टैर्मन्त्रै संस्कृतानाम्। अथवा 'घासेअज्राणाम' इत्येक पदम्। तदायमर्थं,—घासे हि सति पशवो न जीर्यन्त इति 'घासेअज्रा'। 'यवसप्रथमाना' यवस अशनम्, तस्य अनेकप्रकारस्य अमृतत्वादेतान्येव देवत्वमये प्रथमानि, तेषां यवसप्रथमानाम्। 'सुमतक्षराणाम' स्वयमेवैतानि भक्ष्य-माणानि स्वादुत्वादुदरं प्रति क्षरन्तीति सुमत्क्षराणाम्। 'शतरुद्रियाणाम' बहुस्तुतीनाम। अथवा 'शतरुद्रियाणा' बहुशो रूपाणानाम। 'अग्निष्वात्तानाम्' अग्निष्वात्तादीनाम, अग्निपाकेन मृदुत्वात् स्वादूकृतानाम्। 'पीवोपवसनानाम' पीवा छागेन, उपवस्त्रानाम, अथवा पीवान कामसुपगम्यो-षितानाम्। 'पार्श्वत' अङ्गात् 'अवत्तानाम' 'श्रोणित' अव-त्तानाम्। शितामत' अवत्तानाम्। 'उत्सादत' च उच्छेदन स्थानात 'अङ्गादङ्गात' अवत्तानाम्। 'करत' कुरुताम इन्द्राग्नी। हविम् एतेषाम् एवंलक्षणानामवदानानाम्। हे 'होत'। यथैतानिन्द्राग्नी 'जुषेताम' आसेवेताम, एतत् 'स्तुहि'। तथा त्वमपि 'यज' ॥ •

निगमप्रसक्तमुच्यते,—"पार्श्वं पर्शुमयमङ्ग भवति"। पशवो बहुश उच्यन्ते, तन्मय हि तद् भवति पार्श्वपटलक्षणम। आह,—पर्शु कस्मात् ? उच्यते,—"पर्शु , स्पृशते"। आह — किमनया स्पृष्टम ? इति। उच्यते,—"संस्पृष्टा पृष्ठदेशम्" प्रति भवति। आह,—"पृष्ठ" कस्मात ? उच्यते,—"स्पृशते" (तु० द०) एव, तर्हि "संस्पृष्टमङ्गै."। आह,—"अङ्गम्"

कस्मात् ? उच्यते,—"अङ्गनात्" अङ्गितं हि तत् कालेन भवति, गतमित्यर्थः (भू० प०)। "अञ्चनाद्वा"। अञ्चतिरपि गत्यर्थ एव (भू० प०)। धात्वन्यत्वमर्थैकत्वम्। पार्श्वशब्दप्रसक्तानुप्रसक्तमुक्तम्। अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति,—"श्रोणिः श्रोणतेः" धातोः "गतिचलाकर्मणः" (भू० प०)। गतिनिमित्तं चलनं यस्य कर्म, सोऽयं गतिचलाकर्मा, तस्य गतिचलाकर्मणः। किं कारणम्? "श्रोणिश्चलतीव" ध्यानात् पशोः "गच्छतः"॥

शितामशब्दस्य तत्त्वमाचष्टे,—"दोः शिताम भवति" बाहुरित्यर्थः। आह,—दोः कस्मात्? उच्यते,—"दोः" "द्रवतेः" (भू० प०) तस्य हि प्राणेन पशु द्रवति। शितसंसभावेन एतत्कार्य्यं भवतीति शिताम। यदा दोर्विषये शितामशब्द, तदैवं निर्वक्तव्यः। आह,—कयोपपत्त्या दोः शितामशब्देनोच्यते? शृणु,—पशोर्हि बाह्यानि चावदानानि, आभ्यन्तराणि च भवन्तीति। तत्र, पशोः पार्श्वे श्रोण्यावंसाविति बाह्यानि, जिह्वाहृदयक्रोडादीनि आभ्यन्तराणि। तत्रैवं सति पार्श्वतः श्रोणितः इत्येतयोरन्तरा वर्त्तमानः शितामशब्दः किमन्यद्दोष्णोऽभिदध्यात्। प्रायो हि नियामको भवति। एवं बाह्यावदानप्राये च शितामशब्दो वर्त्तते इति दोर्विषयः कल्प्यते। "योनिः शितामः"—"इति" "शाकपूणिः" आचार्य्यो मन्यते। तत्र योनिः अनवदानीया एव। योनिसमानदेशस्तु गुदो नामावदानमस्ति, स योनिशब्देनोच्यते। स च गुदः "विषितो भवति"। 'विष्लृ व्याप्तौ' (जु० उ०), व्याप्तः स पुरीषेण भवति। अथवा विषितमांसो विपुषितमांसः, विस्रस्तमांसः, स भवति। आह,—कयोपपत्त्या शाकपूणेर्मते योनिः शितामशब्देनोच्यते? इति। शृणु,—स हि श्रोण्य-

नन्तरो भवति, योऽयमनन्तरश्च शितामशब्द उच्यते,—योषितः शितामत इति। शब्दसारूप्यमपि च किञ्चिदस्ति,—शिथितो भवति, शितामेति। अनयोपपत्त्या अनेन च शब्दसारूप्येण योनिः शिताम इति शाकपूणिर्मन्यते।

“श्यामतो यकृत्तः”—“इति” “तैटिकि” आचार्यो मन्यते। यदुक्तं भवति श्यामत इति, तदुक्तं भवति शितामत इति। एवं हि बहुतरं शब्दसारूप्यं लभ्यते। एवञ्च सति यकृत एतदवदाने चोदितं स्यादिति गम्यते। किङ्कारणम्? तद्धि “श्याम” “श्यायतेः” (भू॰ धा॰) धातोः, तद्धि सम्पर्कादुपपद्यते। आह,—“यकृत्” कस्मात्? उच्यते,—तद्धि मृदुत्वात् “यथा कथा च” अयत्नेनैव “कृत्यते” छिद्यत इत्यर्थः।

“शितिमांसतो मेदस्तः”—“इति” “गालवः” आचार्यो मन्यते। श्वेतान्मांसात् ‘शितिमांसतः’। कतमत् पुनस्तत् श्वेत मांसमिति? उच्यते,—‘मेदस्तः’। तस्मात् यदुक्तं भवति शितिमांसत इति, तदेवोक्तं भवति शितामत इति। एवमपि बहुतरं शब्दसारूप्यमस्ति। “शितिः” “श्यतेः” तनूकरणार्थस्य (दि॰ प॰), परो हि विवेकस्तेजसो मेदस्येवावतिष्ठते। “मांस” “माननं वा” य एव हि मान्यो भवति, तदर्थमेतत् संस्क्रियते। “मानसं वा” सुमनसा हि तदुपादीयते। अथ वा य एव हि मनस्विनो भवन्ति, तैरुपादीयते। “मनोऽस्मिन् सीदतीति वा” सर्वस्यैव हि मांसे मनः सीदति। “मेदः” “मेद्यतेः” स्नेहनार्थस्य॥

एवमेष शितामशब्दोऽनवगताभिधेयोऽनवगतसंस्कारोऽपि। एवमेतस्मिन् प्रकरणे अन्यान्यनवगतसंस्काराणि उपेक्षितव्यानि। यथा हि,—

“शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः।

सर्वमेतदनेकार्थे ह्यानवगमे गुणाः ॥"—इति ।

(१) (२) (३) (४) (५)
कतमे पुनस्ते ? इति । पदजात्यभिधेयस्वरसंस्कारगुण-
(६) (७) (८) (९) (१०)
विभागक्रमविक्षेपाध्याहारव्यवधानानि । तेषु चाभिधेयमपेक्ष्य निर्वचनं कर्त्तव्यम् । उक्तं हि,—

"धातूपसर्गावयवगुणशब्दं हि धातुजम् ।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम् ॥
धातुजं धातुजाज्जातं समर्थार्थजमेव च ।
वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥"—इति ।

(१) पदजात्यनवगतम्,—"त्व" इति यथा, नाम, निपातो वा ?

(२) अभिधेयानवगतम्,—"शिताम" इति ॥ यथा ।

(३) स्वरानवगतम्,—"वने न वायो" इति यथा ।

(४) सस्कारानवगतम्,—"ईर्मान्तास." इति यथा ।

(५) गुणानवगतम्,—"कक्कलतो" इति यथा ।

(६) विभागानवगतम्,—"मेहना" इति यथा ।

(७) क्रमानवगतम्,—"उपरमध्व मे वचसे" इति यथा ।

(८) विक्षेपानवगतम्,—"द्यावा नः पृथिवी" इति यथा ।

(९) अध्याहारानवगतम्,—"दानमनसो नो मनुष्यान्" इति यथा ।

(१०) व्यवधानानवगतम्,—"वायुश्च नियुत्वान्" इति यथा ।

एकमपि पद पदद्वितय क्रियते—"पुरुषाद , पुरुपानट-नाय" इति यथा ।

पदद्वितयमपि चैक पद क्रियते,—"गर्भनिधानीं मनितः" इति यथा ।

आख्यातमपि च नाम क्रियते,—"सर्वाणीन्द्रस्य धनानि विभज्यमाणाः" इति यथा।

एवमेव शब्दार्थसद्भावोऽनेकप्रकार उपेक्ष्यः, दृष्टानुविधानात् छन्दसि यथासम्भवमनुविधेयः॥ ३॥

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः। राधस्तन्नो विदद्वस उभया हस्त्याभर। यदिन्द्र (चित्र) चायनीयं मंहनीयं धनमस्ति यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि त्वया नस्तद्दातव्यमद्रिवन्नद्रिरादृणात्येतेनापि वात्तेः स्यात्ते सोमाद इति ह विज्ञायते राध इति धननाम राध्नुवन्त्यनेन तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहरोभौ समुद्रौ भवतो दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मनो मनोतेः॥ ४॥

"मेहना(४)—इति। एतदनवगतम्। "मंहनीयम्" इति अवगमः। "यदिन्द्र चित्र मेहना"—इति निगमः। अत्रे-र्भौमिस्यार्षम्। अनुष्टुप्। ऐन्द्री। स्वरपृष्ठानां स्वरसाम्नां
१ २र २
प्रथमे स्वरसाम्नि "यज्ञायज्ञा अपूर्व्य" इति स्तोत्रियः, स्वर-
१ २ २ १ २
पृष्ठानां "यदिन्द्र चित्र मेहना" इति द्वे, "या इन्द्र भुज
१ २ ३क
आभर" इति तृतीयानुरूपस्येति विनियोगः। हे "इन्द्र"।

'चित्रम्' "चायनीयम्" पूजार्हम्, "यत्" 'मेहना' "मंहनीयं" पूजार्हम्, तव 'राधः' "धनम्" "अस्ति" किञ्चित्, 'त्वादातं' "त्वया" च "दातव्यम्" एवावश्यं सुचिरमपि स्थित्वा "नः" अस्मभ्यम् "तत्" यतः, अतो ब्रूमः,—हे 'अद्रिवः' वज्रिन्! "तत्" "नः" राधः हे 'विदद्वसो' ख्यातधन! साम्प्रतमेव "उभाभ्यां हस्ताभ्याम्" अकृपणम् 'आभर' "आहर" मा चिराय इत्यभिप्रायः। अथ "वा" "यन्म इह नास्तीति" एतस्मिन् वाक्यैकदेशे "त्रीणि" "पदानि" "मध्यमानि" मध्ये भवन्तीत्यर्थः। कथं मेहना इत्येषा संहिता,—'मे—इह—न' इति? एतान्यस्याः संहितायाः पदानि। एवमेव वाक्यावयवः पञ्चपदो भवति। अत्र 'यत्'—इति प्रथमं पदम्, अतः परं 'मे' 'इह' 'न'—इत्येतानि त्रीणि मध्यमानि पदानि, 'अस्ति' —इति पञ्चम पदम्। एवमभिप्रेत्य "इन्द्र चित्र"—मन्त्रादयश्योक्तं "त्रीणि मध्यमानि पदानि" इति। आह,—यदेवम् पदविभागः, तदा कोऽर्थः? इति। उच्यते,—यत् मे मम गृहे नास्ति धनम्, तव च तत् अस्ति धनम्, दातव्यञ्च त्वया तावत् स्तोतृभ्यः, तद्धस्ताभ्यामस्मभ्यमाभरेति। बह्वृचानां 'मेहना'—इत्येकं पदम्। छन्दोगानां त्रीण्येतानि पदानि 'म, इह, न'—इति। तदुभय पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ, एवञ्जातीयनिर्वचनोपप्रदर्शनार्थमुभयोश्च प्रामाण्यस्यापनार्थम्॥

आह,—पदकारयोः पदविकल्पे कोऽभिप्रायः? इति। उच्यते,—विद्यावान्' विद्यमानधनो वा प्रतिविशिष्टतर प्रार्थ्यते,—यत्र यस्य गृहे नास्ति, स तद्विशिष्टमविशिष्टं वा प्रार्थ्येत, न चानयोरुभयोरपि विशेषनिर्देशमस्ति, तस्मात् इनोदमित्येतयार्थमत्वा मेहनेत्येवमेकं पदमभिप्रेतं शाकल्यस्य।

गार्ग्यस्य पुनर्यस्य दृश्च गृहे नास्ति तदाहरेत्यभिप्रायः। एव-मत्र विशेषलिङ्गाभावाद्विप्रतिपत्तिः एवमन्येष्वपि शास्त्रान्तरोपदविकल्पेषु अनुविधानमर्थाविरोधेन कर्त्तव्यम्। एवमथ मेहनाशब्दो राधःशब्दसामानाधिकरण्ये वर्त्तमानो यन्म-हनीयं राधः, यद्वा मदगृहे नास्तीति धनविशेषणत्वात् कमन्य-मर्थं ब्रूयात्? तस्मान्मेहनेति सामर्थ्याद्धनविशेषणमेतदित्यु-पपत्तिः॥

अधुना निगमप्रसक्तानि निरुच्यन्ते।—"अद्रिरादृणात्येतेन" अद्रिमारमयमेव ह्यायुधं भवतीति। अद्रिर्वज्र उच्यते। आह,—अद्रिः कस्मात्? उच्यते,—आदृणाति आदारयतीत्यर्थः। अथवा सोमाभिषवग्रावभिस्तद्वान् अद्रिवान् स्यात्। तैरपि हि सोम आदार्यते "अपि वा" "अत्तेः स्यात्" अद्रिः। कुतः? एतन्निगमात्। कतमोऽसौ निगम इति "ते सोमाद इति ह विज्ञायते" "ते सोमादो हरी इन्द्रस्य निंसते (ऋ० सं० ८, ४, २०, ४)"—इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायते-ऽत्तेरद्रिः स्यादिति। व्याख्यात एव शेषः। "राधः" "इति" एतत् "धननाम" स्मारयति। व्यभिचारित्वाद्धा शब्दानां धननामसु पठितमपि सदेतदवधारयति,—इहाप्येतद्धननामैव, नात्र व्यभि-चारोऽस्तीति। पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ। "वित्तधन" इति प्राप्तधन।। उभौ समुच्चौ भवतः, संपूर्णावित्यर्थः॥

"दमूनाः (५)"—इति। एतदनवगतम्। "दममनाः" दमूनाः स्यात्, दमे हि नित्यमस्य मनः, अक्रूरमना इत्यर्थः। "दानमना वा" दातव्यं ममेति यस्य मनसि स वा दमूनाः। "दान्तमना वा" दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः, स वा दमूनाः। अथवा "दम इति" एतद् गृहनाम"

एतद् यस्य मनसि ममेदमिति, स दमूनाः "स्यात्" गृहपतिरग्निः ॥ ४ ॥

जुष्टो दमूना अतिथिर्दुरोण इमन्नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा गृहाणीति वा (अयमपीतरोऽतिथिरेतस्मादेव) दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पा इमं नो यज्ञमुपयाहि विद्वान् सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा धनानीति वा मूषो मूषिका इत्यर्थो मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥

निगम,–"जुष्टो दमूनाः"—इति। वसुश्रुतस्यार्षं यस्यैयमार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते स्विष्टकृत्पुरोनुवाक्या चैय चातुर्मास्येषु साकमेधे। हे भगवन्नग्ने! 'जुष्ट.' आसेवितस्त्वमस्माभिः स्तुतिभिः 'दमूनाः' दममना', अक्रूरमना: भूत्वा, ततः 'उपयाहि'। अथवा गृहं ममेदमिति चेतोऽवस्थाप्य, तत उपयाहि। अथवा दानमना भूत्वा, दातव्यमेभ्यो मयेत्येव चेतोऽवस्थाप्य, तत उपयाहि। अथवा दान्तोष्येव हि तव मनो यश्च दाता, 'अतिथि.' च त्वमग्निहोत्रिणां दान्तमनसां प्रात. सायञ्च

उद्बोध्यमानो भवसि, स्वभाव एवैष तवाग्निहोत्रियामसि-विलेनोपस्थातव्यमिति, अतो ब्रूमः वयमपि त्वाम्मन-सोऽग्निहोत्रिणश्च, अस्माकमपि य एषः 'दुरोणे' यज्ञगृहे यज्ञस्तन्यते, तं त्वमुपयाहि, तमागच्छ, 'विद्वान्' जानानः स्वमधिकारं भक्ततायास्माकम्। किञ्च, 'विश्वाः' सर्वाः 'अभि-युजः' अभितः सर्वतो युजः, अभियोक्त्रः, शत्रुसेनाः त्वदागम-नप्रतिबन्धेन वर्त्तमानाः, 'विहत्य' नानाप्रकारं हत्वा, तत उपयाहि। किञ्च, एवमागच्छंस्त्वं शृणु यत्कुरुष्व,—'शत्रू-यतां' येऽस्माकं शत्रुत्वं कामयन्ते कर्त्तुम्, तान् विहत्य, तेषां बलानि, ततो यानि तेषां भोजनानि अन्नानि, धनानि वा, तानि अस्मभ्यम् 'आभर, आहरेति समस्तार्थः॥

निगमप्रसक्तोऽतिथिशब्दो दुरोणशब्दश्च। आह,—"अतिथि," कस्मात्? उच्यते,—"गृहान्" "अभि" आभिमुख्येनाभो "अतितो भवति" गत इत्यर्थः। "अतति—पतति" इति गति-कर्मसु पठितम्। अथवैवमन्यथा स्यात्, "अभ्येति" अभ्याग-च्छति "तिथिषु" पौर्णमास्यादासु "परकुलानि" यज-मानकुलानीत्यतिथिः। "अयमपीतरोऽतिथिरेतस्मादेव"। "दुरोण इति" एतत् "गृहनाम"। आह,—किङ्कारणम्? उच्यते—ते हि गृहाः "दुरवा भवन्ति, अवतिस्तर्पणार्थः", "दुस्तर्पाः" इत्यर्थः। उक्तञ्च,—'कुटुम्बतन्त्राणि हि दुर्भ-राणि'—इति। एवमेतस्मिन्मन्त्रे, जुष्ट, दमूनाः, अतिथि, विद्वान्, हे अग्ने। यज्ञमुपयाहि। इत्येतस्मिन्नधिकारे वर्त्तमानः 'दमूनाः' शब्दः कमन्यमग्निविशेषणादर्थं ब्रूयात्? न कञ्चिदपि, परिशेषाद्दमूना इत्येतदग्निविशेषणमेवेति सिद्धम्॥

"मूष. (६)"—इति। एतदनवगतम्। बहुवचनञ्चैतत्,

मूट्, मूषी, मूष इत्येवम्। अाह,—कुत एतत्? उच्यते,—"व्यदन्ति" इत्येतस्मिन्नाख्याते बहुवचननिर्देशात्, 'मूषा व्यदन्ति'—इत्येतत् सम्बध्यते। "मूषिका—इति" अनेनाव-गतसंस्कारेण य "अर्थ" उक्त स्यात्, स एव मूष इत्युक्त प्रसिद्धार्थेन अभिधानेन। 'मूष'—शब्दस्य तस्वमाख्यातम्, अधुनाऽऽख्यातमसंक्षय मूषिकाशब्दस्य निर्वचन करोति,—"मूषिका पुनर्मुष्णाते"। "मुष स्तेये (क्रया० प०)" इति। अस्य "मूष अपि"-च "एतस्मात् एव" ते हि हरन्ति धान्या दीनि॥ ५॥

सं मा॑ तपन्त्य॒भितः॑ स॒पत्नी॑रिव॒ पर्श॑वः।
मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्यः॑ स्तो॒तारं॑ ते शत-क्रतो वि॒त्तं मे॑ अ॒स्य रो॑दसी॥ सन्तपन्ति मा-मभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति सन्तपन्ति माध्यः कामाः स्तोतारं ते शतक्रतो (वित्तं मे अस्य रोदसी) जानीतं मेऽस्य द्यावापृथिव्याविति त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ तत्र ब्रह्मेति-हासमिश्रमृङ्मिश्रं गाथामिश्रं भवति त्रित स्तीर्णतमो मेधया बभूवापि वा संख्यानामैवाभि-प्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः॥ ६॥

"सं मा तपन्ति"–इति निगमः,–"सं मा तप •–• रोदसी"–इति । आप्त्यस्य त्रितस्य, कुत्सस्य वेयमार्षम् । पङ्क्तिः । ऐन्द्रीया । "सतपन्ति" "माम्" "अभितः" सर्वतोऽवस्थिताः, कूपे पतितस्य एताः, "कूपपर्शवः" कूपेष्टकाः, सङ्कटेऽवस्थितम् । कथं पुनः संतपन्ति मामभितः? 'सपत्नीरिव' यथा समानभर्तृका योषितः (परस्परं वा पीड्यन्ते) एकं भर्त्तारमभि सन्तपेयुः दुर्वचोभिः, इदमस्याः त्वया कृतम्, इदं मम न कृतमिति, एवं मामेताः कूपपर्शवः सन्तपन्ति, ताभिः कूपेष्टकादिभिः सम्पीड्ये । किञ्च, 'मूषो न' "मूषिकाः इव" 'शिश्ना' "शिश्नानि" "व्यदन्ति" अदन्ति तानि । अन्न-वेष्टितानि, अन्नमिश्राणि, अन्नमिश्रोदककषायितानि, "सूत्राणि" "व्यदन्ति" । सूत्रशब्दोऽध्याहृतः उपपत्तिं दृष्ट्वा भाष्यकारेण । विविधमदन्ति भक्षयन्ति । अथ "वा" "स्वाङ्गाभिधानम्" एतत् "स्यात्" । स्वाङ्गाभिधानमिति शेपोऽभिप्रेतः, भवति हि तिरश्चां लेपः स्वभावः,–यच्छेप भक्षयन्ति । अथवा लाङ्गूलमपि साहश्यात् शिश्नमुच्यते, भवति हि मूषिकाणामेष स्वभावः,–स्नेहभाण्डे स्वलाङ्गूलं मुक्त्वा उद्धृत्य व्यदन्ति आ-स्वादयति । उपपद्यते उपमार्थे एवायमपीति शिश्नशब्दो विकल्प्यते । एवमेते मदुक्ताः "सन्तपन्ति मा आध्यः" । आधयः "कामाः" सोमेन यक्ष्ये, दास्ये, भोक्ष्ये इत्येवमादयः । मा भक्षयन्ति, पीडयन्ति, असम्पूर्यमाणाः । 'आधिः'–इति मानसं दुःखमुच्यते । "स्तोतारं ते शतक्रतो" हे 'शतक्रतो!' तव नाम 'स्तोतारं' सन्तम् एते कामाः, एताश्च कूपपर्शवः, मा उभयपार्श्वीकृत सबाह्याभ्यन्तर सन्तापयन्ति । न च नाम त्वमस्मानितस्या आपदः त्रायसे, समर्थः सन्? अहो न युक्तम्? भक्तपरित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्य-

भिप्रायः। यदा एवमर्थ्यमानो न शृणुयाद इन्द्रः, तदा द्यावापृथिव्यौ आह,—यदि नायमिन्द्रः शृणोति मन्दभागधेयत्वादस्माकम्। युवामपि तावत् हे 'रोदसी।' 'वित्तम्' "जानीतम्" "अस्य" वचसः स्तुत्याख्यस्य यत् प्रयोजनम्, यदर्थमहं रोरवीमि, युवामपि चैतस्मात् अतिभयाकारात् कूपात् उद्धरतम्। यदि नायमिन्द्रोऽभ्युद्धरति युवयोरपि स्तोतैवाहमित्यभिप्रायः॥

आह,—पर्शवः इति एतावति श्रूयमाणे कुत एतत् कूपपर्शव एताः? इति। उच्यते,—"त्रितः कूपेऽवहितः"—इत्येतस्मिन् सूक्ते विशेषलिङ्गात् तदेव भाष्यकारेण व्याख्यातम्, अतएव सूक्तगताद्विशेषलिङ्गात् उपलभ्य "त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ" यथैवमुक्तम्। तस्मात् कूपपर्शवः एता इति॥

सूक्तानि व्यदन्तीति सूक्तशब्दो भाष्यकारेणाध्याहृतः मिश्र इत्यस्य शब्दस्य शेषभूतो कूपकसम्बन्धेन, ते ऋक्गन्धेन सूक्तानि व्यदन्तीति। ऋाङ्गाभिधानपक्षे तु अध्याहारो नास्त्येवेति॥

"तत्र ब्रह्मेतिहासमिश्रम्"। तत्र तस्मिन् सूक्ते ब्रह्म, इतिहासमिश्रम्, इतिहासयुक्तमित्यर्थः। तत् यथा,—"त्रितः कूपेऽवहितो देवान् हवत ऊतये"—इत्येवमादि (ऋ० सं० १, १०, ५, १७)। "ऋङ्मिश्र" "गाथामिश्र" च "भवति"। स पुनरितिहासः ऋग्बद्धो गाथाबद्ध। ऋक्प्रकार एव कश्चित् गाथेत्युच्यते, गाथाः शंसति, नाराशंसीः शंसतीति ह्युक्तं गाथानां कुर्यीतेति। स एष सूक्तानां स्वभावः प्रदर्शितः,—इतिहाससम्बन्धान्यपि सूक्तानि भवन्ति। तेषु

प्रकरणादपि मन्त्रिस्य पदस्यार्थोऽध्यवसेयः, यथेह पञ्चशब्दो भाष्यकारेणाध्यवसित इति ॥

भाष्यप्रसक्तं त्रितशब्दं निर्ब्रवीति,—"त्रितः तीर्णतमो मेधया" एकतद्वितयोः सकाशात् "बभूव"। "अपि वा" सङ्ख्यानिमित्तमेव एतत् "नाम" "अभिप्रेतं स्यात्"। कथम्? "एकत", द्वितः, त्रितः इति त्रयः" हि ते भ्रातरः "बभूवु" तस्मात सङ्ख्यानिमित्तमप्युपपद्यत एव। उक्तञ्च,—"भार्याद्वारेणाभ्युपादयत् तत एकतोऽजायत, द्वितीयं ततो द्वितः, तृतीय ततस्त्रित इति ॥ ६ ॥

इ॒रि॒रे॑णं ते॒ मन॑सा सु॒तस्य॑ भक्षी॒महि॑ पि॒त्र्य॑स्येव रा॒यः। सोम॑ राजन् प्र ण॒ आयूं॑षि तारी॒रहा॑नीव॒ सूर्यो॑ वास॒राणि॑ ॥ ईर्पणेन वैर्पणेन वोर्पणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्द्धय च न आयूंषि सोम राजन्। अहानीव सूर्यो वासराणि। वासराणि वेसराणि विवासनानि गमनानीति वा कुरुतनेत्यनर्थका उपजना भवन्ति कर्त्तनहन्तनयातनेति जठरमुदरं भवति जग्धमस्मिन् भ्रियते धीयते वा ॥ ७ ॥

"इपिर' (७)"—इति। एतदनवगतम्। "ईर्पणेन वा एर्पणेन वा ऋर्पणेन वा" इति। एता, शब्दसमाधयः। "इरि॒रे॑णं ते॒ मन॑सा" इति समानविभक्त्यन्तत्वात् इपिरशब्दस्य प्रतीयत एवमतो विशेषणत्वमित्यभिधेयमनुक्ता निगममेव पठति,

—"इषिरेण ते मनसा •—• वासराणि"—इति (ऋ० सं० ६, ४, १२, २)। प्रगाथस्येयमार्षम्। त्रिष्टुप्। सौमो। हे भगवन्! 'सोम!' 'इषिरेण मनसा' त्वां प्रति सर्वात्मना गतेनेत्यर्थः। "ईषति, फणति"—इति गतिकर्मसु पठितम्। "एषणेनेति वा" स्यात्, इच्छावता फलप्रार्थनावतेत्यर्थः। "ऋषणेनेति वा" दर्शनवता। ईदृशेन मनसा किं कुमः? 'ते' तव योऽस्माकं स्वांशः, तं भक्षीमहि त भक्षयेमहि। कथं पुनः भक्षयेमहि? 'पित्र्यस्येव रायः' यथा पित्र्यां धनांशः अविघ्नेन भक्ष्यते, भक्षितश्च सुखपरिणामो भवति, एवं तव वयं स्वमंशमविघ्नेन भक्षयेमहि, भक्षितश्च सुखपरिणामो मे अस्तु, मातीव भिद्येमह्नीत्यभिप्रायः। किञ्च, हे 'सोमराजन्!' 'प्र' 'नः' 'आयूंषि' 'तारीः' तारय च प्रवर्द्धय च नः आयूंषि। कथं पुनः प्रवर्द्धय? "अहानि इव सूर्यः वासराणि"। यथा सूर्यः वासराणि वासन्तिकान्यहानि। "वासराणि" इति "वेसराणि"। शीतोष्णाभ्यां हि द्वाभ्यां तानि सरन्ति, तेषु हि शीतोष्णं भवति, रात्रौ शीतम्, दिवा उष्णम्। अथवा "विवासनानि" स्युः, तानि हि तत् शीतं विवासयन्ति नाशयन्तीत्यर्थः। "गमनानीति वा" विस्तृतानि विस्तीर्णानि सन्ति वासराणीति उच्यन्ते। यथा तानि सूर्यः वर्द्धयति मन्दगतित्वात्, एवमस्माकं त्वमायुः प्रवर्द्धयेत्यर्थः॥

"कुरुतन (८)"—इति। "अनर्थका उपजना भवन्ति" य एवार्थः कुरुतेत्युक्ते भवति, स एव कुरुतनेति, नात्र नकारस्यार्थोऽधिकोऽस्ति। अधुना एवमुक्त्वा अन्यान्यपि दर्शयति,—"कर्त्तनहन्तनयातनेति"।

"शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः

कर्त्तनास्मे"—इति (य० वा० सं० १२, ३८)।

अग्निचयने हिचकर्षणे विनियुक्ता। त्रिष्टुप्। 'शुनं' 'सुफालाः' सुख शोभनाः फालाः, 'वितुदन्तु' विकर्षन्तु 'भूमिम्'। सुखं 'कीनाशाः' भूमिं कीणनाशाः, खिलोत्कारः, कर्षुकाः, 'अभियन्तु' 'वाहैः' अनडुद्भिः। अयं तावदेवं कृषीवलः कृषिं करोतु, युवामपि हे 'शुनासीरौ!' 'हविषा' उदकेन 'तोशमानौ' निघ्नन्तौ भूमिं 'सुपिप्पलाः' सुफलाः, एताः 'ओषधीः' 'कर्त्तन' कुरुत, 'अस्मे' अस्मभ्यमित्यर्थः॥

"यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति॥ द्रुहः पाशान् प्रति संमुचीष्ट तपिष्ठेन हन्मना हन्तना तम्"—इति (ऋ० सं० ५, ७, ३०, २)॥

वसिष्ठस्यैतदार्षम्। सान्तपनस्य चरोः याज्यैषा। 'यः' 'नः' अस्माकं हे 'मरुतः!' 'दुर्हृणायुः' पापक्रोधः, 'तिरश्चित्तानि' अन्तर्हितानि चित्तानि कृत्वा सम्मोह्य ततो हन्तुमस्मानिच्छति। हे 'वसवः' सर्वभूतवासयितारः। तस्य दन्तस्य 'द्रुहः' अस्मद्द्रोग्धुः उपरि 'पाशान्' 'प्रति संमुचीष्ट' प्रतिसम्मोचयत। पाशैः एवं बद्धा 'तपिष्ठेन' तापयितृतमेन 'हन्मना' हननेन, वधेन 'हन्तना' हन्तेत्यर्थः॥

"कोऽन्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः। मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम्॥"—इति (ऋ० सं० २, २, २६, ३)। इन्द्रागस्त्यमरुतां संवादः। कयाशुभीयं सूक्तम्। तत्रेयमगस्त्यस्यार्षम्। महाव्रते व्यूढस्य च दशरात्रस्य सप्तमेऽहनि सूक्तं शस्यते। हे 'मरुतः!' कोऽन्यः युष्मानेवमेतस्मिन् जगति 'मामहे' पुनः पुनः महयति, पूजयति? यथा अहं, तथा न कश्चिदित्यभिप्रायः। यत एवमतो ब्रवीमि,—अस्मान् एव 'सखीन्' अभि-

मुख्येन 'प्रयातन' प्रयात, हे 'सखायः!'। किञ्च, 'मन्मानि' मननानि स्वानि चेतांसि 'चित्राः' चित्राणि, अस्मान् प्रति 'अपि वातयन्तः' निगमयन्तः 'एषाम्' 'ऋतानां' यज्ञानां प्रापयितारः 'भूत' भवत, हे 'नवेदाः' मेधाविनः! इत्यर्थः॥

"जठरम् (६)"—इति। एतदनवगतम्। "उदरं भवति"—इति अभिधेयवचनम्। "जग्धम्" भुक्तमन्नम् "अस्मिन्" अवस्थितं "ध्रियते" इति जठरम्। अथ "वा" जग्धमस्मिन् "धीयते" इति जग्धधानं वा स्यात्। एते शब्दसमाधी॥७॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम्॥ मरुत्वानिन्द्र मरुद्भिस्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्नं मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिं मधु सोममित्यौपमिकं माद्यतेरिदमपीतरन्मध्वे तस्मादेव त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम्॥ ८॥

इति चतुर्थोध्यायस्य प्रथमः पादः॥ ४,१॥

"मरुत्वाँ इन्द्र"—इति निगमः। "मरुत्वाँ इन्द्र वृषभः० – ० सुतानाम्"—इति (ऋ० सं० ३,३.११,१)। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। महाव्रते पृष्ठस्य चतुर्थेऽहनि शस्यते। मरुद्भिः युक्तो भूत्वा पिब। हे 'इन्द्र!' यः त्वं 'वृषभः' वर्षिता, 'अपाम्' इत्यध्याहृतं भाष्यकारेण वृषभसम्बन्धात्। यः त्वामेवं कर्मकारी

तं त्वां ब्रवीमि,—'रणाय' :"रमणीयाय संग्रामाय" रमणीयं संग्रामं करिष्यामीति एतमर्थमुद्दिश्य "पिब" एतं "सोमम्" अस्मत्प्रदत्तम्। 'अनुष्वधं' स्वधेति अन्ननाम, नवनीयपुरोडाशा-द्यभिप्रायेण। 'अनुष्वधम्' "अन्वन्नम्"। 'मदाय' "मदनीयाय" पानाय, युष्मदर्थमस्माभिः संस्कृतम्। 'जैत्राय'—इत्यध्याहृतं भाष्यकारेण, द्विविधो हि मदः,—सम्मोहकरो जैत्रश्च, तयोः जैत्र इष्टः संग्रामे। कथं च पुनः पिब?—किमीयत्? नेत्यु-च्यते,—'आसिञ्च स्वजठरे' ये 'मध्वः' "मधुनः"। "मधु सोम-मिति, औपमिकम्"—इत्येतदुक्तं सोमस्य मधुत्वम्। "माद्यतेः" धातोः। तृप्तिर्हि समाना, सोमेन मध्वा चेत्यौपमिकत्वम्। "इदमपीतरत् मधु" माक्षिकम् "एतस्मादेव" माद्यतेः। यत्तु सोमस्यौपचारत्वेन, तस्मात् माध्वीकम्। 'ऊर्मिं' सङ्घातः। तावत् तं सोममासिञ्च स्वजठरे, यावता जैत्रो मद उपजा-यते। कस्मात् पुनरेवं ब्रवीमि? इतः,—यस्मात् 'त्वं' राजासि प्रदिवः सुतानाम्' त्वमेव 'राजा' ईश्वरः "पूर्वेष्वपि अहःसु सुतानाम्" अभिषुतानाम्, न केवलमाधुनिकानाम्, एवं ते समुचितं सोमपानमित्यभिप्रायः॥ ८॥

इति निरुक्तवृत्तौ नवमाध्यायस्य (चतुर्थाध्यायस्य) प्रथमः पादः॥ ४, १॥

—

द्वितीयः पादः।

**तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा॥ १(९)॥**

"तितउ (१०)" इति। एतदनवगतम्। "परिपवनं भवति"—इति अभिधेयवचनम्। सक्तवः परिपूयन्ते येन

दृष्टेण, तत् परिपवनमुच्यते। ततेन चर्मणा नद्धं 'तितउ'। तुषैर्वा छिद्रैः तद्वत् 'तितउ'। तिलमात्राणि वा तुषानि तस्मिन्निति 'तितउ'। यथासम्भवमेता शब्दनमाधयः ॥ १ (८) ॥

सक्तु॑मिव॒ तित॑उना पु॒नन्तो॒ यत्र॒ धीरा॒ मन॑सा॒ वाच॒मक्र॑त। अत्रा॒ सखा॑यः स॒ख्यानि॑ जानते भ॒द्रैषां॑ ल॒क्ष्मीर्निहि॒ताधि॑ वा॒चि ॥ सक्तु-मिव परिपवनेन पुनन्तः सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा स्याद्विपरीतस्य विकसितो भवति यत्र धीरा मनसा वाचमकृषत प्रज्ञानं धीराः प्रज्ञानवन्तो ध्यानवन्तस्तत्र सखायः सख्यानि सञ्जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि भद्रम्भगेन व्याख्यातं भजनीयं भूताना-मभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा। लक्ष्मीर्लाभाद्वा लक्षणाद्वा (लक्षनाद्वा) लञ्छ-नाद्वा लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्याद्दाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः ॥ २ (१०) ॥

निगम,—"सक्तु॑मिव॒ तित॑उना"—इति। विद्यासूक्ते बृहस्पतेरार्षम्। "सक्तु सचते." स हि सूक्ष्मत्वात् गच्छति सक्षियति मद्दे। तत "दुर्धावो भवति"—इति उपपत्ति। दुःखं धाव्यते प्रक्षाल्यत इत्यर्थः। "कसते, वा स्यात् विपरी-

तस्य" स हि "विकसितः" विपुष्पितः "भवति"। यथा सक्तुं कश्चित् परिपवनेन पुनाति, एवं "मनसा" परिपवनस्थानीयेन परिपूय विनिश्चित्य शब्दार्थे न्याययुक्तां "वाच" "यत्र" यस्मिन् समाजे यज्ञे वा "धीराः" धीमन्तः, मेधाविनः 'अक्रत' "अक्रषत" कुर्वन्तीत्यर्थः। अत्र केचित् अक्रषत प्रज्ञानमित्यभिधीयते, प्रज्ञानार्थत्वात् वाचः। तत्र किम्? इति। "तत्र सखायः" समानख्यानाः। समानख्यानानामेव समानेषु शास्त्रेषु क्षतश्रमाणाम्, तद्यथा,—वैयाकरणाना वैयाकरणा एव, नैरुक्ताना नैरुक्ता एव। "सख्यानि" सखिभावान् "सञ्जानते" विज्ञानानि सञ्जानते, इतरेतरस्य यो विज्ञानप्रकर्ष, तं जानते। किङ्कारणम्? यस्मात् "भद्रा" भन्दनीया "एषा" "लक्ष्मी" विज्ञानाख्या "निहिताधि वाचि" वाचः 'अधि' उपरि, 'निहिता' अवस्थापिता। तया लक्ष्म्या इतरेतरस्य विज्ञानश्रम जानते, इतरो ह्यविद्वान् कि विज्ञास्यत इत्यभिप्रायः॥

"भद्रम्"। "भगेन व्याख्यातम्" स्त्रीभगः तथा स्यात्, भजते इति। "भजनीयम्" इति। "भूतानाम्" "अभिद्रवणीयम्" अभिगमनीयमित्यर्थः। "भवद्रमयतीति वा" यस्य हि तद् भवति, स रमते। "भाजनवद्वा" सन्ति हि कल्याणरूपाः पुरुषा, ये तस्य भाजनम्, तैः तद्वत्॥

"लक्ष्मीः"। "लाभाद्वा" लक्ष्मीवन्त एव लभन्ते, नेतरे। "आ लक्षणाद्वा" आलक्षित एव हि लक्ष्मीवान्। "लञ्छनाद्वा" तया हि लञ्छित इव भवति। "लषतेः (भू॰ उ॰) वा स्यात्, प्रेप्साकर्मण" सर्व एव हि तामभिलषन्ति। "लग्यतेः (भू॰ प॰) वा स्यात्, आश्लेषकर्मण." आश्लिष्ट इव हि सा वर्त्तते पुरुषम्। "लज्जतेः (तु॰ आ॰) वा स्यात्,

अनाधाकर्मण:" ये हि लक्ष्मीवन्तो भवन्ति, ते स्वयमात्मानं न स्नावन्ते ॥

"शिप्रे (११)"—इति । "एतत् उपरिष्टात् व्याख्यास्याम."—"शिप्रे हनू नासिके वा"—इति, अत्र हि एतन्निगमप्रसक्तमायास्यतीति लाघवार्थमुत्क्रष्टम् ॥ २ (१०) ॥

तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं सञ्जभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संक्रियते यदासावयुक्त हरणानादित्यरश्मीन् हरितोऽश्वानिति वाथरात्रौ वासस्तनुते सिमस्मै वेसरमहरवयुवती सर्वस्मादपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति तथापि निगमो भवति पुनः समव्यद्विततं वयन्ती । समनात्सीत् ॥ ३ (११) ॥

"मध्या (१२)"—इति । एतदनवगतम् । "मध्ये"—इत्यवगमः । "तत् सूर्य्यस्य देवत्व०—० सिमस्मै"—इति निगमः (ऋ० स० १, ८, ७, ४) । आङ्गिरसस्य कुत्सस्येयमार्षम् । त्रिष्टुप् । सौर्य्यस्य पशोः षडर्चे वपाया याज्या, सूवितश्च,—"चित्रन्देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्य्यस्योपाग (आ० ३, ८)" इति । 'तत्' पदं 'सूर्य्यस्य' भगवतः 'देवत्व'' देवताभावं, 'तन्महित्व' तच्च महत्त्वं माहाभाग्य 'मन्ये' जाने । तत् किम् ? इति,—'मध्या' "मध्ये" "यत्,"

"कर्मणां क्रियमाणानाम्" अनेकेषाम् अवगणय्य सर्वान् कर्मकर्त्तॄन् 'विततं' तेषां "विततम्" एतत् प्रकाशजालम्। एवंमतिमहत्। महतापि कालेन तत् दुरुपसंहारमन्येर्देवैर्न मुहूर्तेनायत्नेनैव भगवता सूर्येण "सञ्जियते" तत् अस्य देवत्वं तच्च महत्त्वमहं मन्ये। किञ्च, "यदामौ" भगवान् सूर्य्य, "अयुक्त" युनक्ति, 'हरित' "हरणान्" रसहरणान् "आदित्यरश्मीन्" आत्मन्यस्तं गच्छन् 'सधस्थात्' पृथिवी लोकादाकृष्य। पृथिवी हि तेषां रसादानार्थं सहस्थानम्। इतो हि ते सर्वं एव रसानाददते। 'आत्' अथेत्यर्थः। अथ तदेव उपसंहृतसर्वरश्मिजाले भगवति सूर्य्ये, 'रात्रि' 'वास' "वैसरमहरवयुवतो" अवमिश्रयन्तो 'सिमस्मै' सिमस्मात्, सर्वस्मात् लोकात् अहरपकृष्य, स तमः 'तनुते'। तदेवमेतदपि सूर्यस्यैव माहाभाग्य यदस्य सन्निधौ तमो नश्यति, यथानेनोत्सृष्टो देशः स तमसा छाद्यत इत्यभिप्रायः। "हरितोऽस्वानिति वा" ऐतिहासिकपचमतेन॥

"अपि वोपमार्थे स्यात्, रात्रीव वासस्तनुत इति" वास इव रात्रौ तमः तनुत इत्यर्थः। पूर्वत्र वैसरमहरवयुवतो तमस्तनुत इति नास्त्युपमा, इह पुनर्वास इव तमस्तनुत इत्येवमुपमा॥

यथा च उपमार्थोऽपि युज्यते, "तथा" च "निगमः" "अपि" अयं "भवति"—"पुन॒ सम॑व्यद् वित॑तं॒ वय॑न्ती म॒ध्या कर्त्तो॒र्न्य॑धा॒च्छक्म॒ धीरः॑। उत्सं॒हाया॑स्थाद् व्यृ१तूँरद॑र्धर॒र्मतिः॑ सवि॒ता दे॒व आग॑त्॥" (ऋ० सं० २, ८, २, ४)। इत्यमदस्येयमार्षम्। सावित्री। त्रिष्टुप्। पृष्ठस्य षष्ठेऽहनि वैश्वदेवशस्त्रे शस्यते तृतीयसवने। "पुन॒ सम॑व्यद्वित॑तं॒ वय॑न्ती"। "समवात्सीत्"—इति निर्वचनम्। समवेष्टयदित्यर्थः। यद्वा

योषित् काचिद् वासो वयन्ती, पुनः संवेष्टयत्यस्तमयकाले, पुनश्च वितनोत्यादित्य उदिते, एवमिय रात्रि पुनरेव तमः संवेष्टयति, योषिदिव वासो वयन्ती। कदा पुनः संवेष्टयति ? यदा 'मध्या' मध्ये 'कर्त्तो' कर्मणा क्रियमाणाना लौकिकवैदिकाना 'विततम्' एतद्रश्मिजालम् 'शक्म' स्वात्मप्रमयादपत्यभूतं 'न्यधात्' न्यदधात्, नीचैर्धत्ते लोकाना प्रकाशनाय। अथवा शक्मेति कर्मनाम स्यात्, यदा स प्रकाश पुन कर्म निधत्ते, निदधाति, उदेति 'धीर' धीमानादित्य, तदा अहनि अभ्युपस्थिते पुन संवेष्टयति रात्रिस्तम इति। अस्तमय प्रति पुनर्वास इव तनोतीति। एवमेतस्मिन्नपि मन्त्रे सामर्थ्याद्-मत्युपमाशब्दे वासमा तम उपमीयते। यथेह तथा पूर्वस्मिन्नपि, निगमेऽपोत्येवमेके मन्यन्ते। अपरे पुन अपिवोपमार्थे स्यादित्यत्रैव वर्णयन्ति,—रात्रीव वासस्तनुत इत्यत्र वास शब्दोऽह शब्दपर्य्यायवाची, तस्योक्ता व्युत्पत्ति वेसरमहरिति। सा रात्रिः वासस्तनुते, अहस्तनुत इत्यर्थ। रात्रिप्रान्ते हि शुक्लमहर्लक्ष्यते, तेन जायते रात्रैरवेद ततमिति। एवमुपमार्थत्वमके मन्यन्ते,—यदा वायमर्थ, तदा "पुनु सम व्यद्दितत वयन्ती (ऋ० स० २, ८, २, ४)"—इत्यत्र पुन समवेष्टयदक्तो रात्रि, विततमिव वासो वयन्ती। कदा ? यदा मध्ये कमणा॰ 'न्यधात्' निदधाति। अस्त गच्छन् आदित्य स्वमण्डले 'शक्म' रश्मिजाल यदा च 'उदस्थात्' उत्तिष्ठति, स्वरश्मीनुपमहृत्य 'व्यधात्' विदधाति 'ऋतून्' ऋद्धोरात्रलक्षणान्। यदा एवम 'एष' 'सविता देवः' 'अलमति.' पर्य्याप्तमति, 'आगात' आगच्छति। तदा 'रात्रि तनुते' 'वास.' अहर्लक्षणम्, 'पुन' संवेष्टयतीत्येव मन्यन्ते। यदुक्तार्थाविरोधि तत प्रतिपत्तव्यम् ॥ ३ (११) ॥

इन्द्रे॑ण॒ सं हि दृक्ष॑से सञ्जग्मा॒नो अबि॑भ्युषा । म॒न्दू स॑मा॒नव॑र्चसा ॥ इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम् ॥ ४ (१२) ॥

"मन्दू (१३)"—इति । एतदनवगतम् । "मदिष्णू, मन्दुनेति वा" शब्दसमाधी । "इन्द्रे॑ण॒ स हि"—इति निगम । मधुच्छन्दस इदमार्षम् । महाव्रते महदुक्थे तृचा शीतिषु शस्यते, मात्विकेषु चाह सु स्तोमातिवृद्धौ प्रात सवने ब्राह्मणाच्छंसिन शस्ये इन्द्र उच्यते । हे भगवन् । इन्द्र । त्व 'इन्द्रेण' ईश्वरेण, दीप्तेन वा मरुद्गणेन, नित्यमेव "सङ्गच्छमानः" 'सदृक्षसे' "सन्दृश्यसे"। 'अबिभ्युषा' अभयवता, "गणेन"—इत्यध्याहार । तौ च "युवा" मरुद्गण त्व च, एकत्र सङ्गतौ । "मदिष्णू" हर्षशीलौ, नित्यप्रमुदिताविन्यर्थ । 'समानवर्चसौ' च, समानदीप्ती इत्यर्थ । एव "म॒न्दू स॑मा॒न वर्चसा"—इत्येतेन द्विवचनेन मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः । "अपि वा" एवमन्यथा "स्यात्" । मन्दु इत्यस्य तृतीयैकवचनान्तत्वेन विपरिणाम, एवञ्च सति मरुद्गणविशेषणमेतद्भवति । कथम् ? "मन्दुना" मरुद्गणेन, इन्द्र । सन्दृश्यसे सङ्गच्छमान । "समानवर्चसा इति" एतत् पदं मन्दुनेति "एतेन" पदेन "व्याख्यातम्" यथैव हि मन्दू इत्येतत् द्विवचनमेकवचन वा, एवमेतदपि,—समानवर्चसाविन्द्रमरुद्गणाविति द्विवचनमथवा मन्दुना समानवर्चसा च मरुद्गणेन इत्येव तृतीयैकवचनम् । अपि वा एव मरुद्गण

भवते,—त्वमिन्द्रेण सङ्गच्छमानो नित्यमेव मन्दयस इति। समानमन्यत् ॥ ४(१२) ॥

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥ ईर्मान्ताः समीरितान्ताः (सुसमीरितान्ताः) पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वाऽपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठतीदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति संशूरणासः (दिव्यासो अत्याः) शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानं (श्रेणिश इति) श्रेणिः श्रयतेः समाश्रिता भवन्ति यदाक्षिषुर्यदापन् दिव्यमज्ममजनि माजिमश्वा अस्यादित्यस्तुतिरश्वादित्या-दश्वो निस्तष्ट इति। सूरादश्वं वसवो निरतष्ट इत्यपि निगमो भवति ॥ ५ (१३) ॥

"ईर्मान्तासः (१४)"—इति। एतदनवगतम्। "समीरितान्ताः"—"पृथ्वन्ता वा" इति यथासम्भव शब्दसमाधौ। "ईर्मान्तासः"—इति निगमः। दीर्घतमस आर्षम्। "युमेन

तुत्तम्"—इति प्रयस्व, हे अश्वेते अश्वस्तोमीये सूक्ते, तेन
चाश्वः स्तूयतेऽश्वमेधे, आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्ते
ईर्मान्तासः, तेषां सतानां येऽश्वाश्चत्वारः, ते "समीरितान्ताः"
विच्छिन्नान्ताः, प्रवृतान्ताः, प्रविरला इत्यर्थः। "पृथ्वन्ता वा"
तेषामेवाश्वानां पृथवोऽन्ताः, पृथूरस्काः पृथुजघना वा इत्यर्थः।
"सिलिकमध्यमाः, संसृतमध्यमाः" संश्लिष्टमध्यमा इत्यर्थः।
तेषां हि सतानां ये मध्यमास्त्रयः इतरेतरमुत्पीड्य संश्लेषेणा-
वस्थिताः। अथवा पृथुजघनोरस्कानां सतां मध्यमाः शरीरप्र-
देशाः, सतानामपि सश्लिष्टाः संलग्नास्तनवः, निरुदरास्तेऽश्वा
इत्यर्थः। तथापि हि स्तुतिरुपपद्यत एव। "शीर्षमध्यमा वा",
सिलिकमध्यमा वा। एवमपि हि शब्दे सारूप्यमस्ति, यो हि
तेषां सतानां मध्यमः, स शिरोभूतः प्रधान इत्यर्थः। "अपि वा"
एवमन्यथा स्यात्। "शिर आदित्य" एव "भवति" सर्वभूत-
प्राधान्यात्। "मूर्द्धा, राजेति वा ब्रह्मैतमुपासे इति ह विज्ञा-
यते"। यस्माच्चासावनुप्रविश्य प्राणभावेन सर्वभूतानि "शेते"
शास्ते, तस्मात् सर्वभूताश्रयणात् शिर आदित्यः। स चैतेषा-
मश्वानां "मध्ये तिष्ठति" शीर्षमध्यमास्त एते शीर्षमध्यमा
इत्युक्ताः सन्तः सिलिकमध्यमा इत्युच्यन्ते। "इदमपीतर-
च्छिर एतस्मादेव"—इति प्रासङ्गिकम्। "समाश्रितानि" हि
"एतत्" उत्तमाङ्गम् "इन्द्रियाणि" चक्षुरादीनि "भवन्ति"
इति शिर उपपत्तिः। 'संशूरणासः' सङ्गताः शूरेण भगवता-
दित्येन संशूरणाः। "शूरः शवतेर्गतिकर्मणः" स हि पराङ-
भिमुखो गच्छत्येव, न पर्य्यावर्त्तते। 'दिव्यासः' ते हि
"दिव्याः" दिविजाताः। 'अत्याः' "अतनाः" ते हि अतन्त्येव,
मुहूर्त्तमपि नावतिष्ठन्ते। य एवलक्षणा अश्वास्ते किं
कुर्वन्ति? इति। उच्यते,—'हंसा इव श्रेणिशो यतन्ते', हंसा

इव श्रेणीकृताः पङ्क्तीकृताः यतन्ते गच्छन्ति । "हंसा हन्तेः" ते हि "घ्नन्त्यध्वानम्"। कदा पुनरेव यतन्ते ? "यदाक्षिषुः" 'यद्' "यदा" यस्मिन् काले 'आक्षिषुः' 'आपन्' आप्नुवन्ति । किम् ? 'दिव्यम्' 'अज्मम्' "अजनि" । अज्यतेऽस्या गम्यत इति अजनि, वाहिका, स्वर्गपथ इत्यर्थः । यदा ते आप्नुवन्ति —उदयादारभ्य यावदस्तमिति, तदैव यतन्ते । के पुनस्ते ? इत्युच्यते—'अश्वा' । एवमेतानि ईर्मान्तास इत्येवमादीनि अश्वविशेषणानि, अश्वशब्देन समानविभक्त्यन्तत्वात् । आश्वैषा रथो भवत्याश्वा इत्येव प्रक्रमेण सूर्यदैवत एष मन्त्र उक्तः । स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकार प्रतिसमाधित्सुराह,—"अस्त्यादित्यस्तुतिरश्वस्य" इति, अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्यर्थः । आह,—कयोपपत्त्या ? इति । उच्यते, "आदित्यादश्वो निस्तष्ट इति"—अनयोपपत्त्या सूर्यात्मना अश्वः स्तूयते । आह,—कुत एतत्सूरादश्वो निस्तष्ट ? इति । उच्यते,—"सूरादश्वं वसवो निरतष्ट—इत्यपि निगमो भवति" । "यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् । गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट ॥"—इति (ऋ० म० २, ३, ११, २) । 'यमेन' 'एनम्' अश्वाक 'दत्तम्' अश्वम् 'त्रित' त्रिस्थानो वायु 'आयुनक्' युनक्ति । यत्राय योक्तव्यः, तत्र वायुना युक्तस्येन्द्रेणाधिष्ठितस्य 'अस्य' 'गन्धर्वः' गन्धर्वराज 'रशनामगृभ्णात्' नियमेन रज्जुं गृह्णाति । कुत पुनरयमश्वः ? इत्युच्यते,—'सूरात्' सूर्यादेतमेवंलक्षणम् 'अश्वं' 'वसव' 'निरतष्ट' निस्सृष्टवन्त । एवमेतस्मिन् मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते । "कारणाच्च कार्यमनन्यत्"—इत्युपपद्यते सौर्येण मन्त्रेणाश्वस्य स्तुतिरिति ॥ ५ (१३) ॥

कायमानो वना त्वं यन्मातृरजगन्नपः। न तत्ते अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभवः ॥ कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातृरपोऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत् सन्निह भवसि जायमानः। लोधं नयन्ति पशु मन्यमानाः। लुब्धमृषिं नयन्ति पशुं मन्यमानाः। शीरं पावकशोचिषम्। पावकदीप्तिम्। अनुशायिनमिति वाशिनमिति वा ॥ ६ (१४)॥

"कायमान (१५)"—इति। एतदनवगतम्। "चायमानः"—इत्यवगम, "कामयमान इति वा"। "कायमानो वना त्वम्"—इति निगम (ऋ० सं० ३, १, ५, २)। विश्वामित्रस्येयमार्षम्। बृहती। मातरनुवाकाग्निनयोः शस्यते। हे भगवन्। अग्ने। 'कायमानः' "चायमान" पश्यन्नित्यर्थ। अथवा "कामयमान."। किम्? स्वां योनिम्। कतमाम्? 'वना' "वनानि" दारूणि। दारुभ्योऽग्निर्जायते, तदेतत् प्रसिद्धमेवोक्तम्, यदा चाग्निरनुगच्छति अरणी वावगच्छति। 'मातृ.' वा सर्वभूतनिर्माणीः 'अप' सापि योनिरेवाग्नेः। "आपो वा अग्नेर्योनि,—इति ह विज्ञायते"। अनयोर्योन्योरन्यतरां योनि 'यत्' यदा 'अजगन्' "अगम" "त्वम्"। कदा पुनरगमः? "उपशाम्यन्"—इत्यध्याहृत भाष्यकारेण, अनुगच्छन्नित्यर्थं। तत्र तवैवमनुगच्छत किम्? इति। उच्यते,—'न' 'तत्' 'ते' 'अग्ने'।

'प्रकृषे' 'निवर्त्तनम्'। "न प्रमृष्यते" न प्रमृज्यते निवर्त्तनं. वर्त्म, मार्गो न लुप्यत इत्यर्थः। कथं गम्यते न प्रमृज्यते मार्गः ? इति। 'दूरे' अपि 'सन्' अदृश्योऽपि भूत्वा यस्मात् "इह" पुनः "भवसि" एव। कदा ? "जायमानः" "यत्" यदा अग्नी जायसे वैद्युतात्मना, यदा वा अरणिभ्यां जायसे मथ्यमानः, तदा ॥

"न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान् नयन्ति" इति (ऋ० स० ३, ३, २३, ३)। "लोधम् (१६)"—इति। एतदनवगतम्। "लुब्धम्"—इत्यवगमः। यस्मिन् निगमे एष शब्द. सा वसिष्ठद्वेषिणी ऋक्। अहं च कापिष्ठलो वासिष्ठः ? अतस्तान् निर्ब्रवीमीति ॥

"शीरम्(१७)"—इति। एतदनवगतम्। अग्निरभिधेय। "अनुशायिनमिति वा"—इति, अनुप्रविश्य सर्वभूतानि शेते इत्यनुशायी, तमनुशायिनम्। अश्नोति व्याप्नोति वा सर्वभूतानीति "आशिनम्"। "शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा दीदाय दीर्घश्रुत्तम. ॥"—इति निगम (ऋ० स० ६, ७, ११, १)। भार्गवस्य प्रयोगस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। 'शीरम्' अनुशायिन व्यापिन वा अग्नि स्तौमि। "पावकशोचिषम्" पावयित्री यस्य शोचिर्दीप्तिः, त पावकशोचिषम्। किञ्च 'ज्येष्ठ.' श्रेष्ठ, 'य.' प्रधानः 'दमेषु' यज्ञगृहेषु 'आदीदाय' आदीप्यते, परिचर्य्यमाणोऽग्निहोत्रिभि.। किञ्च 'दीर्घश्रुत्तम.' यः, दीर्घश्रोतव्यः यो दीर्घश्रुत्तमः। तमग्निं स्तौमि॥ ६ (१४) ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू

यामे॑षु शोभेते ॥ कनीनके कन्यके कन्या कम-नोया भवति क्वेयं नेतव्येति वा (कमनेनानी-यत इति वा) कनतेर्वा स्यात्कान्तिकर्मणः कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिर्विद्रधेदारुपादौदारु दृणातेर्वा द्रुणातेर्वा तस्मादेव द्रु नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते बभ्रोरश्वयोः संस्तव इदञ्च मेऽदादि-दञ्च मेऽदादित्यृषिः प्रसं॑ख्यायाह । सुवास्त्वा अधि तुग्व॑नि । सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति । कुविन्नंसन्ते मरुतः पुनर्नः । पुनर्नो नमन्ते मरुतो नमत इत्युपरिष्टाद् व्याख्यास्यामः । ये ते॒ मदा॑ आहनसो विहा-यसस्तेभि॒रिन्द्रं॑ चोदय दातवे मघम् । ये ते मदा आहननवन्तो वञ्चनवन्तस्तैरिन्द्रं चोदय दाना॑य मघम् ॥ ७ (१५) ॥

"विद्रधे (१८), द्रुपदे (१९)"—इत्येते पदे एकनिगमे। इ॑ अप्यमवगति, पदेषु चानेकार्थे। 'विद्रधे' विद्धे, 'द्रुपदे' द्रुममये पदे इत्यवगमः। दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते। कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते। द्वयोरपि पदयोरेक एव निगमः,—"कनीनकेव विद्रधे०—०शोभेते"—

इति (ऋ० म० २, ६, २०, ७)। वामदेवस्यार्षम्। "कन्या कमनीया भवति" सर्वं एव हि तां प्रार्थयन्त एव। अथवा "क्वेयं नेतव्येति वा" दानायेत्येव तां प्रति पिता चिन्तयतीति कन्या। "कमनेनानीयत इति वा"। "कनतेर्वा स्यात् कान्तिकर्मणः" "कनति (१७)' कानिषत् (१८)"—इति कान्तिकर्मसु पठितम्। 'इव' इति उपमायाम्। 'विद्रधे' 'नवे' द्रुपदे' 'अर्भके'—इत्येतानि चत्वारि पदानि "कन्ययोरधिष्ठानप्रवचनानि" "सप्तम्या एकवचनानीति" एव "शाकपूणि" आचार्यो मन्यते। एकस्मिन् दारुमये पादपीठेऽस्मिन् समधिरूढेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढे 'शोभेते' यथैव 'बभ्रू' बभ्रूवर्णे अक्षे 'यामेषु' आजिस्थानेषु यमनस्थानेषु, कन्यके, शालभञ्जिके वा। तदेतैश्चतुर्भिः पादैरुच्यत इति शाकपूणिराचार्यो मन्यते। यास्कात्तु "विद्रधे" विकुपिताधो भागयो "दारुपादौ" अधिरूढयो कन्ययोरभिधानपदान्यभिधायकान्येतानि द्विवचनानीति मन्यते। ताभ्यां ह्युभिन्यो खुराकारत्वेन सारूप्यमस्तीत्येवमुपादानम्। दारुपादोरित्येतस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते,—"दारु दृणातेर्वा" विदारणार्थस्य (क्रया० प०)। 'दूणातेर्वा" हिंसार्थस्य। तस्मादेव धातुद्वयादन्यतरस्य "द्रु"—इत्येतदभिधानं भवति। - द्रुपदे इत्येतदपेक्ष्य "तस्मादेव द्रु"—इत्येतदुक्तम्, द्रुम इत्यर्थः। "नवे नवजाते"। "अर्भके अल्पे" अल्पके इत्यर्थः। "ते" कन्यके उपमाकारिषु 'तदधिष्ठानेषु" तेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढे "शोभेते" यथा "एव" "बभ्रू" बभ्रूवर्णे अक्षे "यामेषु" आजिस्थानेषु यमनस्थानेषु वा बन्धनस्थानेषु मन्दुराख्येषु, वर्त्तमाने शोभेते। ते एवमेव "बभ्रोरक्षयोः सम्भव"॥

"तुग्वनि (२०)"—इति। एतदनवगतम्। "तूर्णमेतदा-यन्ति"—इति शब्दसमाधिः। "तीर्थम्" अभिधेयम्। "सुवास्त्वा अधि तुग्वनि"—इति निगमः (ऋ० सं० ६, १, ३५, ७)। अस्य ऋक्पादस्य ऋक्छेषापेक्षो निर्णयः। सर्वस्या अपि च तस्या ऋचो यस्यामयं पादः, तस्या या आद्यान्या आधस्त्या ऋक्, तदपेक्षो निर्णयो यतः, अतस्तस्या ऋचः आधस्त्यायाः सङ्क्षिप्यार्थमाह भाष्यकारः,—"इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः प्रसङ्ख्यायाह"—इति। इदञ्च द्रव्यजातं, मम दत्तवानसौ राजेत्येवं, 'प्रसङ्ख्याय' परिसङ्ख्यानं कृत्वा, ऋषिराह उक्तवानित्यर्थः। कतमा पुनरसौ आधस्त्या ऋक्, यथायमर्थः सङ्क्षिप्यते? इति। उच्यते,—"अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्। मंहिष्ठो अर्यः सत्पतिः" (ऋ० सं० ६, १, ३५, ६)। सोभरेः काण्वस्येयमार्षम्, परा च, दानप्रशंसा। 'यः' 'अदात्' 'मे' मम, 'पौरुकुत्स्यः' बहुशत्रुकर्त्तुः पुत्रः 'त्रसदस्युः' दस्युत्रासनः। किमदात्? 'पञ्चाशत वधूनाम्' पञ्चाशत वोढव्यानां कन्यानाम्। 'मंहिष्ठः' पूज्यतरः। 'अर्यः' ईश्वरः। 'सत्पतिः' च सतां पालयिता च। एवंलक्षणः पौरुकुत्स्यः त्रसदस्युः मम दत्तवान् पञ्चाशत वधूनाम्। आह किमेतदेवाऽदात्? नेति। उच्यते,—इदञ्च यदुक्तम्, उत्तरञ्च यद् वक्ष्यति। कतरा पुनरसावुत्तरा ऋक्? इति। उच्यते,—"उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि। तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः"—इति (ऋ० सं० ६, १, ३५, ७)। अप्येतत्,—यदुक्तम्, अपि च यदेतत् वक्ष्यमाणमिति 'उत'—शब्द एवमुभयं सम्भावयति। 'मे' मम 'प्रयियोः' (प्रगम्यते येन, तत् प्रयियुः, धनमश्वादि, तस्य प्रयियोः) धनस्य, वेङ्कटात्

ताभिः कन्याभिः सह 'वयियोः' (अयत इति वयियुः वस्त्रादि, तस्य) च बहुदात्। 'तिसृणां सप्ततीनां' गवाम्। 'श्यावः' श्यामवर्णः हयः, श्यामवर्णानां 'प्रणेता' प्रकर्षेण नेता अग्रतोगामी। 'भुवदसुः' भावयिता वसूनाम्। 'प्रशस्त' पूजितलक्षणः। 'दियानां' दानार्हाणाम्, देया याः तासां पतिः। तास गा एतत्सङ्ख्यायुक्ताः, एतद्गुणयुक्ताश्च मह्यमदात्। क पुनरसावदात्? 'सुवास्त्वा' सुवास्तुनिवासायाः नद्याः 'अधि तुग्वनि' तीर्थेऽधि, एतत् अदात् मह्यम्। "सुवास्तुः नदी" "तुग्व तीर्थं भवति" "तूर्णं" हि "एतत्" अवगाहनार्थम् "आयन्ति"। अत्र दानसम्बन्धात् सुवास्तुशब्दो नद्यभिधाने, प्रसिद्धं हि नद्यां दानम्; नदीसम्बन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः। निगमार्थप्रकाशनायैवं सूक्तगतोऽपि अन्वीक्षितव्य एवार्थ इत्येतत् प्रदर्शितमाचार्येण।

"नंसन्ते (२२)"—इति। एतदनवगतम्। "नमन्ते"—इत्यवगमः। "कुविच्च नंसन्ते"—इति निगमः, "ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः। यत् सस्वर्त्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम्" ॥ इति (ऋ० सं० ५, ४, २८, ५)। वसिष्ठस्यैयमार्षम्। 'तान्' अहं 'मीळ्हुषः' मरुतः वर्षस्य सेक्तॄन् धनवतः, बलवतः वा 'आविवासे' आभिमुख्येन स्थित्वा परिचरामि। किंलक्षणान् पुनः मरुतः आविवासे? 'रुद्रस्य' इन्द्रस्य स्वभूतान्, आत्मान् वा। अथवा 'मीळ्हुषः' इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात्, मीळ्हुषो रुद्रस्य स्वभूतानिति। कस्मात् पुनस्तानहं परिचरामि? यस्मात् ते मरुतः 'कुवित्' बहु 'नंसन्ते' नमन्ते' 'पुनः' वर्षाद्युपकारेण अस्मान् प्रति नमन्ते, प्रह्वीभवन्ति। किञ्च, 'यत्सस्वर्त्ता' यच्छरीरगतम् 'एनः' 'जिहीळिरे' लज्जयन्ति, यच्च

'आविः' प्रकाशम्, तदेवम्प्रकारमुभयलक्षणमपि एनोऽस्मान् 'जिह्वीलिरे' लज्जयन्ति। तदेवां मरुतां 'तुराणां' त्वरमाणानां प्रसादेन उभयलक्षणमपि 'अवयजेमहि' निर्णुदेमहि,—इत्येतत् 'ईमहे' याचामहे' अनेन परिचारेण आराध्येतान् मरुत इति। "नमत इत्येतदुपरिष्टात्" द्वादशाध्याये "व्याख्यास्यामः" —"अभि प्रवन्त समनेव योषाः" (ऋ० सं० ३, ८, ११, ३)— इति व्याख्याने, "नमतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति ॥

"आहनसः (२३)"—इति। एतदनवगतम्। "आहननवन्तः" —इत्यवगमः। "ये ते मदा आहनसः"—इति निगमः, "परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्। ये ते ०—० मघम्।"—इति (ऋ० सं० ७, २, २३, ५)। पावमानो सौमी। कवेर्भार्गवस्येयमार्षम्। जगती। हे भगवन्! 'सोम!' 'परिप्रधन्व' परिप्रक्षर, एतस्मात् दशापवित्रात्। 'स्वस्तये' स्वस्त्ययनाय अस्माकम्। 'नृभिः' एतैः ऋत्विग्भिः, 'पुनानः' पूयमानः। किञ्च, 'अभिवासय' अभिप्रच्छादय, अभिभावय। 'आशिरम्' तृतीयसवने। किञ्च, 'ये ते मदा आहनसः' ये ते मदाः तव आहननवन्तः, "वचनवन्तः" सम्मोहयितारः, 'विहायसः' महान्तः, तैः 'इन्द्रं' 'चोदय' प्रेरय, 'दातवे' "दानाय" 'मघं' धनम्। यथास्माकं तैर्मदैरनभिहतचेताः सन् दद्यात् मघं धनमित्यर्थः ॥ ७ (१५) ॥

उपो अदर्शि शुन्ध्युवो न वक्षो नो-
धाइवाविरकृत प्रियाणि। अद्मसन्न ससतो बो-
धयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥

शुन्ध्युव: शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वर्णो भासाध्यूढ इदमपीतरद्वर्ण एतस्मादेवाध्यूढं काये शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्युव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽद्मसदद्मान्नं भवत्यद्मसादिनीति वाद्मसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम्। (स्वपतो बोधयन्ती) शाश्वतिकतमागात् पुनरेयुषीणाम्। ते वाशीमन्त इष्मिण:। ईर्षिणिन इति वेर्षिणिन इति वार्षिणिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्या:। शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्। अभिवहनस्तुतिमभिप्रवणप्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते परितकम्येत्युपरिष्टाद् व्याख्यातम्: ॥ ८ (१६) ॥

इति चतुर्थाध्यायस्य द्वितीय: पाद: ॥ ४, २ ॥

"अद्मसत्(२४)"—इति। यत्तदनुगतम्। "अद्मसादिनीति वा अन्नसानिनीति वा" शब्दसमाधी। "उर्पा' अर्दाम्"

शुन्ध्युवः। शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वर्णो भासाध्यूढ इदमपीतरच्छुन्ध्युः एतस्मादेवाध्यूढं काये शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्युव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽप्नसदप्नान्नं भवत्यप्नसादिनीति वाप्नसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम्। (स्वपतो बोधयन्ती) शाश्वतिकतमागात् पुनरेयुषीणाम्। ते वाशीमन्त इष्मिणः। ईषणिन इति वैषणिन इति वार्षणिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्याः। शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्। अभिवह-

“श्रियसे कं भानुभिः संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः”॥ इति निगमः (ऋ० सं० १, ६, १२, ६)। राहूगणस्य गोतमस्येयमार्षम्। जगती। मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या, तत्र ह्युक्तम् “प्रियवती याज्यानुवाक्ये भवतः” —इति। ‘श्रियसे कम्’ श्रियोऽर्थाय यजमानाय आत्मने वा, कमित्यनर्थकमेव, कामये इति वा अस्यार्थः। ‘भानुभिः’ दीप्तिभिः सूर्यरश्मिभिः, येऽन्तरिक्षे मरुतः ‘सम्मिमिक्षिरे’

सङ्गच्छन्ते, 'ते' एव 'रश्मिभि.' सर्वलोकनियन्तृभिः 'समिमिचिरे'—इत्येतदेवानुवर्त्तते। 'ते' एव 'ऋक्वभिः' रसहर्त्तृभिः ममिमिचिरे। 'सुखादयः' सुखदातारः जनानाम्। शोभनानां वा हविषा खादितारः, भक्तारः, 'सुखादयः'। 'ते' एव 'वाश्रीमन्त.' वाग्मिनः। 'इषिणः' "ईषणिनः" उपगमनवन्तः, "एषणिनो वा" इच्छावन्तः, "आर्षणिनो वा" आभिमुख्येन सर्वार्थानां द्रष्टारः, 'अभीरवो विद्रे' विदारयितव्ये भयो प्राप्ते विगतभया, अथवा 'विद्रे' वेद्मि, जाने। य एवंलक्षणा मरुतः, तेषां मरुतां यत् स्थानम् अन्तरिक्षलोकः, तस्य 'प्रियस्य' इष्टस्य 'मारुतस्य' मरुतां स्वभूतस्य 'धाम्न'. स्थानस्य प्राप्तये, तानेव मरुतः स्तौमीत्यध्याहारः। एवमेतस्मिन् मन्त्रे *'वाश्रीमन्त इषिणः'*—इत्येतस्यादेकवाक्यसम्बन्धात् 'इषिणः'—इत्येतन्मरुद्विशेषणम्। "वाश्रीति वाङ्नाम"। "वाश्री (११), वाणी (१२)"—इति पठितं वाङ्नामसु। वाश्यत इति कारकावधारणम्।

ह्वानाना स्तोम"—इति हि मन्त्रति । एवमियमभिवहन-स्तुति । एवमेतच्छस्त्रमाभिमुख्यगामि "इदम्' 'इन्द्राय' इन्द्रार्थम, 'जुष्टम्' प्रियम्, तस्य यथा स्यात् तथा कुर्व । अन्ये त्वेनाम् "अधिपवणप्रवादा" सोमाभिपवणप्रवादिनी स्तुति मन्यन्ते, वाह शब्दो हि उदकवाहाभिधानसारूप्यात् तव युक्तरूपतर इति छत्वा यदा पुनरेव, तदैवमर्थो योज्य,— 'इन्द्राय' 'इद' 'वाह' सोमोदकपूर्णमधिपवणफलकाख्य वाह: जुष्ट' प्रिय यथा स्यात् तथा कुर्व: । तद्धि सुशस्त' सुप्रतिगीर्णञ्च इन्द्रस्य प्रीतिजनक भवति । एतदेव कर्त्तव्य मावाभ्या यत, अतो ब्रवीमि,—'एद बर्हि यजमानस्य सीद' एतद् बर्हि, यदेतदगतप्रतस्तोर्णमपेय होतार बर्हि 'सीद' "स प्रतिगरायापविशति"—इति ह्युक्तम, 'यजमानस्य' अभि-प्रेतकामावाप्तये आसोद । मा अवसस्याधिरयैतच्छ स्वत इति, उपविष्टश्चेत् त्व समाप्नत. । 'अथ' अनन्तरमेव 'भूत्' भवति । 'उक्थ' शस्त्रमेतत्, इन्द्रार्थे शस्तम्, नात्र मम साध्व-पेत्यभिप्राय । एवमियमभिवहनस्तुति, अथवा अधिपवण-प्रवादा स्तुति, उभयथापि तु इयम् "ऐन्द्री त्वेव शस्यते" इद-वा, ऐषी क्रमभिधानमत्र व्युत्पाद्यत इत्यभिप्राय ॥

"श्वियसे क भानु तक्षसा (२७)"—"इति" । "एतदुपरिष्टाद् व्याख्या
सुत्वादय । ते वाशो म ाध्याये, तत्र हि एतत् "किमिच्छन्ती' सरमा
माकृतस्य धान्व" ॥ स० ८, ६, ५, १)"—इत्येतस्मिन् मन्त्रे
इति ि०ावयार्थसुत्कृष्टमिति ॥ ८ (१६) ॥
राहुगणस्य गोतमस्यैयमार्षम् । नवमाध्यायस्य (चतुर्थाध्यायस्य)
घरोरिव याख्या, तत्र ह्युक्तम् "प्रियवःप्राह' ॥ ४, २ ॥
—इति । 'श्वियसे कम्' श्वियोऽर्थाय यज
कमित्यनर्थकमेव, कामये इति वा अस्याः
दीप्तिभि' सूर्यरश्मिभि, येऽन्तरिक्षे मरुत

तृतीय पाद।

सुविते सु इते सूते सुगते प्रजायामिति वा। सुविते मा धा इत्यपि निगमो भवति। दयतिरनेककर्मा। नवेन पूर्वं दयमानाः स्यामे-त्युपदयाकर्मा। य एक इद्विदयते वस्विति दानकर्मा वा विभागकर्मा वा। दुर्वर्तुर्भीमो दयते वनानीति दहतिकर्मा। दुर्वर्तुर्दुर्वारः विदद्वसुर्दयमानो विशत्रूनिति हिंसाकर्मा। इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबत-मश्विना तान्। अहं हि वां मूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्। दय-मान इति। नू चिदिति निपातः पुराणनव-योर्नू चेति च। अद्या चिन्नू चित्तदपो नदी-नाम्। अद्य च पुरा च तदेव कर्म नदीनाम्। नू च पुरा च सदनं रयीणाम्। अद्य च पुरा च सदनं रयीणां रयिरिति धननाम रातेर्दानकर्मणः॥ १ (१७)॥

"सुविते (२८)"—इति। एतदनवगतम्। अनेकार्थं च। 'सु, इते'—इति, "सूते"—इति शब्दसमाधी। अत्र यदा "सु इते" इति विपरिणाम, तदा "सुगते" इत्यर्थः। यदा "सूते" इति, तदा "प्रजायाम्" सूते देवदत्ता पुत्रमिति प्रजायत

इत्यर्थः। एवं 'सुविते'—इत्यस्य "सु इते, सूते" शब्दसमाधी। तयोरेतद् यथासङ्ख्येनार्थवचनम्, "सुमते, प्रजायामिति"। "सुविते मा धाः"—इत्यपि निगमः। "अनाधृष्टमस्य नाधृष्यं देवानामोजो अभि शस्तिपाः। अनभिशस्त्यञ्जसा सत्यमुपगेषां सुविते मा धाः"—इति। अनेन तानूनप्त्रं सस्पृश्यते। हे तानूनप्त्र! 'अनाधृष्टमसि' अनाधर्षितमसि, त्वयि स्पृष्टे समयोपयन्त्रिता छीते नान्योऽन्यस्मिन् द्रोहमुपयास्यन्त्यृत्विजः। कुतः पुनरेतत् सामर्थ्यं तव? इति। इतः,—यस्मात् 'अनाधृष्यं देवानामोजः' अनाधर्षणीयं त्वम्। ओजो बलमित्यर्थः। किञ्च, 'अभिशस्तिपाः' अभिशसनात् पासि त्वम्। 'अनभिशस्ति' नाभिशंसनीयं केनचित्, अनवद्यमित्यर्थः। 'अनु मे' 'इदं व्रतं व्रतपतिः' 'मन्यताम्' अनुमन्यताम् 'इदं व्रतं' वाम्, 'व्रतपतिः' अग्निः। 'मे' मयोपेयमानाम् एनां 'दीक्षाम्' 'अनुमन्यताम्' 'दीक्षापतिः' सोमः। किञ्च, 'अञ्जसा' अनन्तर्हितम्, अहम् 'सत्यम्' 'उपगेषम्' उपगतवान्। योऽहमेतदस्पृशम्, स त्वं हे तानूनप्त्र! एवमुपगतवन्तं मां 'सुविते' सुगते स्थाने, यत्र गतानां शोभनं गतं भवति, तत्र धेहि, अथवा प्रजाया जनयितव्यायां धेहि, यथा बहुपत्या स्याम तथा कुर्वित्यर्थः।

"दयति (२८)"—इति। एष शब्दः "अनेककर्मा" अनेकार्थः, नत्वनेकविकारप्रकृतिः,—यथा सुवितशब्दस्य अन्येनान्येन धातुना विग्रहमनेकार्थत्वमुक्तम्,—इणा विगृह्य "सु इते"—इति गत्यर्थत्वम्, सूतिना विगृह्य "सूते"—इति च प्रजार्थत्वम्, नैवमिह। किन्तर्हि? एकप्रकृतेरेवायं शब्दोऽनेकार्थो भवतीत्यस्य विशेषस्योपद्योतनार्थमुदाहरति। एवमुच्यमानेऽप्यनेकार्थत्वे दयतिरनेककर्मैवेत्येवमुक्तम्। अन्यो

न ब्रुवते,—यथा "सुविते" शब्दोऽनेकार्थोऽनवमतसंस्कारश्च, नैवमयम्। किन्तर्हि? अनेकार्थ एवायमिति ॥

एवमनेकार्थत्वं प्रतिज्ञाय उदाहरणेनैवोपपादयति,— "नवे॑न पूर्व॑ दय॑माना॒ः स्या॑म"—"इति" एतस्मिन् मन्त्रे दयतीत्येष शब्दः "उपदयाकर्मा"। उपदयेति रक्षणमुच्यते। 'नवेन' धान्येन 'पूर्वं' पुराणं 'दयमानाः' रक्षन्तः 'स्याम' पुराणेन च नवम्, दृष्टं हि नवेन पुराणस्य च रक्षणं, पुराणेन च नवस्य, प्रसिद्धं च लोके।, तस्मादिहायमुपपद्यते उपदयाकर्मा। चतुर्दशेऽध्याये व्यस्य शेषः ॥

"य एक॒ इद् वि॒दय॑ते वसु॒"—"इति" एतस्मिन् मन्त्रे "दानकर्मा वा, विभागकर्मा वा"। "य एक॒ इद्वि॒दय॑ते॒ वसु॒ मर्त्ता॑य दा॒शुषे॑। ईशा॑नो॒ अप्र॑तिष्कुत॒ इन्द्रो॑ अ॒ङ्ग॥" इति (ऋ॰ सं॰ १, ६, ६, २)। राहूगणस्य गोतमस्यार्षम्। ऐन्द्री। उष्णिक्। 'यः' इन्द्रः 'एकः इद्' एक एव स्वतन्त्रः 'वि' विविधं 'वसु' धनं 'दयते' ददाति। कस्मै? 'मर्त्ताय' मनुष्याय। किंलक्षणाय? 'दाशुषे' दत्तवते हवींषि। अथवा विभागकर्मा। 'दाशुषे' 'वसु' 'विदयते' विभजते इत्यर्थः। किंलक्षणः पुनरिन्द्रो ददाति, विभजते वा? इति। उच्यते,—'ईशानः' ईश्वरः, 'अप्रतिष्कुतः' अप्रतिस्खलितः संग्रामेषु। 'इन्द्रः' 'अङ्ग' क्षिप्रं धनं ददाति, विभजते वा, 'दाशुषे' यजमानाय, तमहं स्तौमि, सोऽस्माकमेतत् करोत्वित्यभिप्रायः। ईशानः, इन्द्रः, अन्यत्र दानविभागाभ्यां दाशुषे यजमानाय वसेकवाक्ये श्रूयमाणं किमन्यत् कुर्यात्? तस्माद् वाक्यसामर्थ्यादत्र "दानकर्मा वा विभागकर्मा वा"— इत्युपपद्यते ॥

"दु॒र्मर्षु॑ भी॒मो दय॑ते॒ वना॑नि"—"इति" एतस्मिन् मन्त्रे

"दहतिकर्मा"। निगमप्रसङ्गं निदर्शयति,—"दुर्वर्त्तुः दुर्वारः" दुर्वारणीय इत्यर्थः। "अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना। शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्त्तुर्भीमो दयते वनानि॥" इति (ऋ० सं० ४, ६, ८, ५)।

आग्नेयी। भरद्वाजस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। उपज्वलितस्याग्नेः 'अध' अथ, अनन्तरमेव तस्य 'जिह्वा' ज्वाला दारुषु 'पापतीति' पुनः पुनः पतति, 'प्रवृष्णः' प्रवर्षितुः इन्द्रस्य 'गोषुयुध' गवार्थं वारे पणिभिः सह असुरैर्युध्यते, अथवा 'गोषु' अप्सु, मेघेन सह युध्यत इत्यर्थः। 'न'—इत्युपमा, इन्द्रस्य गोषु युध्यत इव। 'अशनिः' 'सृजाना' तेनैव सृज्यमानो यथा पतति अशनिर्वज्रः, तथा अग्नेर्ज्वाला दारुषु पापतीति। किञ्च, 'शूरस्येव प्रसितिः क्षातिरग्नेः'। यथा कस्यचित् 'शूरस्य' विक्रान्तस्य वा अप्रतिहतगतेः 'प्रसितिः' प्रसहनं संग्रामानुप्रवेशमार्गः छिन्नभिन्नरुग्णैः शत्रुभिः प्रकीर्णः स्यात्, एवमस्य 'अग्नेः' 'क्षातिः' दहनमार्गः, ईषत्प्लुष्टार्द्धदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्यते। कदा पुनरेतद् भवति? 'दुर्वर्त्तुः' दुर्वारः, दावाग्निभूतः, 'भीमः' सर्वप्राणिभयङ्करो यदायमग्निः 'दयते' दहति। किम्? 'वनानि'। एवमयमाग्ने ये मन्त्रे वनग्रहणसन्निकर्षे श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात्? तस्मात् सामर्थ्यादिहायं "दहनकर्मा"—इत्युपपत्तिः।

"विदद्वसुर्दयमानो वि शत्रून्"—"इति" एतस्मिन् मन्त्रे "हिंसाकर्मा"। "इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून्। ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे॥" इति (ऋ० सं० ३, २, १५, १)।

विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। उक्तिरुक्तमभिदोनिर्व- चनं निर्वक्तनीयस्य सूक्तस्य प्रथमैवेयम्। 'इन्द्रः' 'पूर्भित्' असुरपुरां मेघानां वा भेत्ता, अद्भिः पूर्णा अपो वा पालयन्तीति मेघाः, पुरः, "पॄ पालनपूरणयोः (क्र्या० प०)" —इत्येतस्य। 'आतिरत्' आभिनत्। 'दासं' दासयितव्यं मेघम्। के सहाये. सह? 'अर्कैः' ह्वचैः, देवैर्माध्यमिकैर्वा। किंलक्षणः पुनरसाविन्द्रः, य आतिरत्? 'विदद्वसुः' प्राप्त- धनः। किं कुर्वन् आतिरत् दासम्? 'विदयमान' विविधं हिंसन् 'शत्रून्' ये मेघवधप्रतिबन्धिनः। आह,—किं विद- द्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्र, स एतदकरोत्? नेत्यु- च्यते,—'ब्रह्मजूतः' च ब्रह्मणा स्तुतिलक्षणेन 'जूतः' प्राप्त, प्रीतो वा, वाल्लभ्यतन्वा शरीरेण 'वाहधानः' वर्द्धमानः 'आपृ- णत्' आपूरयति। 'रोदसी' द्यावापृथिव्यौ उभे अपि 'भूरि- दात्र.' बहुदानश्च इन्द्रो दासमातिरत्। एवमत्र "विदद्वसुर्द- यमानो विशत्रून्" –इति शत्रुसन्निधौ दयते. किमन्यत् साम- र्थ्यमुपपद्येतान्यत्र वधात्?

"इमे सुता इन्द्रवः प्रातरित्वना सजोषसा पिबतमश्विना तान्। अहं हि वां मूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्"—इति। "दयमान इति"। अत्र दयतिर्गत्यर्थः। दयमान उड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मा सुप्तं दोषा- यामबोधयत्। नयोऽत्र ग्रेष।

"नू चित् (३०)"—इति। एषः "निपातः" अनेकार्थत्वे- नेह समाम्नातः। न हि निपातानां प्रकृतिप्रत्ययादिसंस्का- रोऽस्ति, यस्यानवगतं स्यात्। स च पुनरयं "पुराणनवयो" अर्थयोर्वर्त्तते। प्रकरणोपपदवशात् पुराणतां कस्यचिदर्थ- स्यावद्योतयति, नवतां च कस्यचित्।

"नू च (३१)"—"इति च"। अयमपि पुराणनवयोरर्थयोर्वर्त्तते। अयन्तु नू चिदित्येतस्येवार्थसामान्यप्रसङ्गादसमाम्नात एवोदाहृतः ॥

नू चिदित्यस्योदाहरणम्,—"अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र। निपर्वता अद्मसदो न सेदुस्त्वया दृढानि सुक्रतो रजांसि ॥"—इति (ऋ० सं० ४, ७, २, ३)। भरद्वाजस्येयमार्षम्। त्रिष्टुप्। उक्थपर्य्यायेष्वच्छावाकस्य शस्त्रे माध्यन्दिने सवने विनियुक्ता। 'अद्य' च पुरा च, तदेव कर्म 'नदीनां' वर्त्तते। कतमत्? 'तत्' उद्दिश्य वहनं कर्म। कथं नाम? अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति। 'गातुं' गमनमार्गम् 'आभ्यः' नदीभ्योऽर्थाय त्वम् 'अरदः' अखनस्त्वम्। किं गमनम्? गच्छन्त्यनेनेति गमनम्। हे 'इन्द्र!' तदेव कर्माद्यापि वर्त्तते, तासां नदीनाम्, यथा व्यादिष्टमेव 'त्वया'। ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः। यदुक्तं पुरस्तादपि, "इन्द्रो अस्मां अरदत्"—इत्यत्र। एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः। किञ्च, 'निपर्वता अद्मसदो न सेदुः'। य एते 'पर्वताः' पर्ववन्तो मेघाः, 'अद्मसदः' निष्पादयितव्यमन्नमस्माभिरित्येतदर्थमुद्दिश्यान्तरिक्षे लोके सीदन्ति, आवर्त्तन्ते, गच्छन्ति वा, तेऽपि युष्मदीर्य्योपस्पृदिता एवोदकभूता, नीचैर्भूम्यामत्र, निष्यन्त्यर्थं 'सेदुः' सीदन्तीत्यर्थः। तदेवं कृत्वा (किं बहुना) सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि, हे 'सुक्रतो!' 'दृढानि' दृढीकृतानि 'रजांसि' लोका इत्यर्थः। त्वत्तेदेयामेवमन्नमुदकञ्च न व्यधास्य', सर्व एवैते लोका नामविष्यन्नित्यभिप्रायः। इत्यत्रैतस्य सन्निधौ वर्त्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते। इह पुराणनवयोरित्युक्तम्, तत्र

पुराणाभिधायित्वस्यैतदुदाहरणम्, नवाभिधायिन "नू चित्" इत्यादि। सायोरमृत वि दंसयेत्" अत्र हि वक्ष्यति,—"नवञ्च पुराणञ्चेति" ॥

नू चेत्यस्योदाहरणम्,—"नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्। सतश्च गोपां भवतश्च भूरे र्देवा अग्निं धारयन् द्रविणोदाम।" इति (ऋ० सं० १, ७, ४, २)। कुत्सस्यैयमार्षम्। पृष्ठ्यस्य षष्ठेऽहनि अग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। 'नू च पुरा च सदनम्' अद्य च पुरा च सदनम्। कस्य? 'रयीणां' धनानाम। किञ्च, 'जातस्य' उत्पन्नस्य 'जायमानस्य' 'च' अभिनिष्पद्यमानस्य भूतजातस्य 'क्षाम' निवासमित्यर्थः। "तस्मात् सर्वानृतून पशवोऽग्निमभिसर्पन्तीति विज्ञायते"। "यत्र गा अयाना निर्जगाति स्त्रतामेतामविद्वान् मन्यतेऽन्वग्नौ ह्येवैते प्रविश न्तीति च विज्ञायते"। तस्मादुपपद्यते स्थानत्व निवासत्व माग्ने.। 'सतश्च' निष्पन्नस्य भूतजातस्य 'गोपां' गोप्तारम्, 'भवतश्च' उत्पद्यमानस्य 'भूरेः' बहुन, गोप्तारमित्यनुवर्त्तते। य एवलक्षणोऽग्निस्तं 'द्रविणोदां' धनस्य दातारम्, 'देवा' 'धारयन्' धृतवन्त इत्यर्थः। क्व? हविर्वहनकर्मणि? "अथा देवा दधिरे हव्यवाहम्"—इति वक्ष्यति। एवमिह पुरा चेत्यस्य सन्निधौ नू चेत्येष शब्दो वर्त्तमानो नवाभिधायीत्युपपद्यते। पुराणाभिधायित्वे पर्य्ययमस्योदाहरणम्॥ १ (१७)॥

विद्याम तस्य ते वयमकूपारस्य दावने।

विद्याम तस्य ते वयमकुपरणस्य दानस्यादित्यो-ऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः समु-

द्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा कच्छः खच्छः खच्छदोऽयमपीतरो नदीकच्छ एतस्मादेव कमुदकं तेन छाद्यते । शिशीते शृङ्गे रक्षसे विनिक्षे । निश्यति शृङ्गे रक्षसो विनिक्षणाय रक्षो रक्षितव्यमस्मादहसि क्षणोतीति वा रात्रौ नक्षत इति वा । अग्निः सुतुकः सुतुकेभिरश्वैः । सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति वा । सुप्रायणा अस्मिन् यज्ञे विश्रयन्ताम् । सुप्रगमनाः ॥ २ (१८) ॥

"दावने (२२)"—इति । एतदनवगतम् । "दानस्य"—इत्यवगम । "अकूपारस्य (२३)"—इति । एतदनवगतम् । अनेकार्थम् । "अकुपरणस्य"—इत्यवगम । द्वयोरप्येतयोरेक एव निगम', "यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर । विद्याम तस्य ते वयमकूपारस्य दावने ।"—इति (ऋ॰ स॰ ४, २, १०, २) । अर्वभौमस्येयमार्षम् । अच्छावाकस्य तार्तीयसवनिके आवापे नियुक्ता, "यदिन्द्रचित्र"—इति, इत्यत्र । हे 'इन्द्र !' 'यत्' 'मन्यसे' जानीषे त्वं 'वरेण्यं' वरणीयम, एतद्धनमिति, 'द्युक्षं' च, यत् द्युतिनिवासभूतम्, द्युतिमदित्यर्थः । 'तत्' अस्मभ्यम् 'आहर' । कदाचित् त्वमाहृत्यापि न दद्या ?

अतो ब्रूमः,—'तस्य' त्वयाहृतस्य धनस्य 'विद्याम' लभेमहि 'ते' तव सम्भृतस्य। किंलक्षणस्य? 'अकूपारस्य' "अकुपरणस्य" अकुत्सितपूरणस्येत्यर्थः। येन लब्धेन सुपूर्णमात्मानं मन्यामहे पर्य्याप्तमैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः। 'दावने' "दानस्य" इत्यर्थः। ईदृशस्य भावत्कस्य धनस्य वयमेव लब्धारः स्यामेत्यभिप्रायः। एवमिह यद्मन्यसे वरेण्यं, द्युक्ष, तदाभरेति इन्द्र उच्यमानो धनसंविधानाद् दानादभ्यत् किमुच्यते? धनमेव हि प्रायेण मनुष्यैः प्रार्थ्यते, तस्मादश्रूयमाणोऽपि धनशब्दोऽध्याहृतः। तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते। तस्मादकूपारस्येत्येष शब्दोऽतिपरोक्षवृत्तिः। "अकुपरणस्य"—इत्येवं परोक्षवृत्तित्वेनावस्थाप्य, ततः अकुत्सितपुरणस्य—इत्येवं प्रत्यक्षवृत्तित्वेन व्याख्यायते। अत्र कुरिति कुत्सार्थः, परणं पूरणमुच्यते, कुत्सितं परणं 'कुपरणम्' न कुत्सितं परणं 'अकुपरणम्' तस्य "अकुपरणस्य" प्रभूतस्येत्यर्थः॥ दानसम्बन्धादेव "दावने"—इत्येष शब्दो दानार्थ इत्युपपत्तिः। एतस्मिन् मन्त्रे "अकूपारस्य, दावने"—इत्ययमनयोः पदयोरनुक्रमः, समाम्नाये पुनः "दावने, अकूपारस्य"—इति, मन्त्रपाठव्यतिक्रमेणानुक्रमः। तेन प्रागेतदत्रैरेवायस्थपिभिः समाम्नायः समाम्नातः, अन्य एव चायं भाष्यकार इति, एको हि समाम्नानं भाष्यं च कुर्वन्, प्रयोजनस्याभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत्। अविवर्चितार्थायैते मन्त्रे निगमाः, तेषु सम्प्राप्ता काकतालीयन्यायेन कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे अगच्छतस्ते यथोपागते एव भाष्यकारो व्याचष्टे इत्यदोषः।

"आदित्योऽप्यकूपारः"—इति "उच्यते"। किं कारणम्? न हि अकुत्सितस्य महतोऽध्वनः पारयिता भवति, उदया-

दारभ्य यावदस्तमिति। "समुद्रोऽप्यकूपार उच्यते" असावपि ह्यकुत्सितपारः आत्मनैव भवति। "महापारः"—इति पर्यायेणार्थवचनम्, विस्तीर्णपार इत्यर्थः। "कच्छपोऽप्यकूपार उच्यते" स हि "न कूपमच्छति" अल्पोदकत्वात्, किं तर्हि? यत्र बहु प्रकीर्णमुदकम्, तत् स्थानं गन्तुमिच्छति, समुद्रं नदीं वा। आख्यानप्रसक्तमुच्यते,—"कच्छपः" "कच्छम्" आत्मनो मुखसम्पुटं "पाति" रक्षति, स हि किञ्चिद् दृष्ट्वा स्वशरीरे एव मुखसम्पुटं प्रवेशयति, सम्पुटे हि कच्छशब्दः प्रसिद्धः, प्राणिवाचः कच्छपुट इति च। "कच्छेन" कटाहेन इतराण्यङ्गानि पातीति वा, स हि किञ्चिद् दृष्ट्वा सर्वाण्यङ्गानि कटाह एवानुप्रवेश्य कूर्मत्वेनैवावतिष्ठते। अथ "वा" "कच्छेन" मुखसम्पुटेन "पिबतीति" कच्छपः। विग्रहप्रसक्तः कच्छशब्दो निरुच्यते,—य एष कच्छो मुखसम्पुटः कटाहो वायं कच्छः, आह किमुक्तं भवति? "खच्छः"—इत्युच्यते, स हि "खच्छदः" खम् आकाशं छादयति, स हि मध्ये सुषिरो भवति। "अयमपीतरो नदीकच्छ एतस्मादेव" कसञ्ज्ञकेन उदकेन "छाद्यते" इति कच्छः॥

आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपारः—इत्येतेषु निगमाः पर्यायाः॥

"शिशीते(३४)"—इति। एतदनवगतम्। "निश्यति"—इत्यवगमः। "वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा। प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे॥" (ऋ० सं० ३, ८, १५, ३)।—इति निगमः। इषो नाम जनयुवस्याधिगमनम्, आत्रेयस्य वा कुमारस्य, उभयोर्वा। प्रातरनुवाकाग्निमयोः शस्यते। 'वि भाति', 'अग्निः' नानाप्रकारं भाति। केन? 'बृहता ज्योतिषा'। स

एव विभासमानः किं करोति? "आविर्विश्वानि कृणुते" "आविष्करोति" प्रकाशीकरोति 'विश्वानि' सर्वाणि भूतानि। 'महित्वा' महत्त्वेनेत्यर्थः। किञ्च, "प्रादेवीर्मायाः सहते" 'प्रसहते' प्रकर्षेणाभिभवति। किम्? "अदेवीर्मायाः" आसुरीरित्यर्थः। 'दूरेवाः' दुरवा, दुस्तर्पा वा, न ह्यग्नेस्तृप्तिरस्ति। किञ्च, 'शिशीते शृङ्गे' यथा हि वृषभस्तटादिषु शृङ्गे तीक्ष्णीकरोति, एवमग्निरपि दाहार्थं दंष्ट्रे तीक्ष्णीकरोति ज्वालाः। कमर्थं पुरस्कृत्य? "रक्षसे विनिक्षणाय" विहिंसनायेत्यर्थः॥ अत्र शृङ्गशब्दसन्निधानात् "शिशीते"—इत्यस्य तीक्ष्णार्थत्वम्, तीक्ष्णीकृतैश्चार्चिर्भिर्विनिक्षणमुपपद्यत इति॥ निगमप्रसक्तमुच्यते,—"रक्षः रक्षितव्यम्", अस्मिं शरीरमस्मात्—कृत्वात्, रक्षो हि मानुषान् भक्षयति। "रहसि वा" विविक्ते प्रदेशे रक्षः "क्षणोति" हिनस्तीत्यर्थः। "रात्रौ नक्षते" गच्छति—"इति वा" रक्षः॥

"सृतुके(२५)"—इति। एतदनवगतम्। यत्नेन चानेकार्थम्। "सुतुक्कः"—इत्यवगम, "सुतुकनैरिति वा" "स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः। अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः॥"—इति निगमः (ऋ० स० ७, ५, ११, ७)। वित्तस्थेयमार्षम् आत्यस्य। प्रातरनुवाकाग्निनयोः शस्यते। यश्च 'दिवस्पृथिव्योः' 'युवत्योः' सम्मिश्रीभवन्त्योः यानि भूतानि अन्तरा वर्त्तन्ते, तेषां सर्वेषाम् 'अरतिः' त्वमेवात्मगति, पर्यासमतिरित्यर्थः। 'स' एवम्भूतस्त्वमस्माकम् 'आवक्षि' आह्वयसि देवान्, 'महि' महत इत्यर्थः। स एवम् 'आवहसि च' आसीदसि च होतृत्वे। 'अग्निः'—इत्येतत् पदं सम्बोधनत्वेन विपरिणंस्यते, 'आ वक्षि'—'आ च सत्सि'—इति मध्यमपु-

क्रमयोगात्मकस्य। हे अग्ने। यस्त्वमेवङ्गुणयुक्तः 'सुतुकः'—"सुतुकनः" सुगमन इत्यर्थः, अथवा "सुप्रजाः"। तुगित्यपत्यनामसु पठितम्। हिरण्यमपत्यमभिप्रेतमग्नेः, "हिरण्यरेता अग्निः"—इति श्रूयते, "अग्नेरपत्यं प्रथमं सुवर्णम्"—इति च। 'सुतुकेरैव' सुगमनैरश्वैः, अथवा "सुप्रजोभिः" कुलजैरित्यर्थः। अथवा शोभना प्रजा येषां ते सुप्रजाः, शोभनानामिवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेण चाग्निः स्तूयते। अथवा स एवाग्निः 'सुतुकः' "सुप्रजाः"-अपत्यद्वारस्य सर्वाः प्रजाः, ताश्च प्रति कल्याण इति "सुप्रजाः"। 'रभस्वद्भिः' त्वरितैः 'रभस्वान्' स्वयं च त्वरितः 'एह गम्याः' आगच्छ त्वमिह कर्मणि, नित्यं हवींषि वोढुम्, कर्मैव तवेदमित्यभिप्रायः। एवमेतदिह "सुतुकः"—इत्यग्निविशेषणम्, सुतुकनैरश्वैरित्येतस्मात् तृतीयासम्बन्धादित्युपपत्तिः॥

"सुप्रायणाः(२६)"—इति। एतदनवगतम्। "सुप्रगमनाः"—इति ग्रन्थप्रतीतिः। यज्ञगृहद्वारोऽभिधेया यास्कमतेन, शाकपूणेस्तु अर्चिषः। "होता यक्षद्दुरऽऋष्वा कवष्योऽकोषधावनीरुदातामिविश्रयन्तां वि पक्षोभिः श्रयन्तां सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज॥"—इति निगमः (य० का० सं० वा० सं० २८, ५)। मैत्रावरुणो ब्रवीति,—'होता यक्षत्' होता यजतु। किम्? एताः 'दुरः' यज्ञगृहद्वारः, अथवैता अग्न्यर्चिषः। 'ऋष्वाः' महत्यः, अथवा हिंस्राः, द्वार्येव हि यो निवारणीयः, स हिंस्यते, अर्चिषान्तु हिंसत्वमुपपद्यत एव। 'कवष्यः' विकर्त्तिताः, कुपिता इत्यर्थ, कपाटवत्यो वा यज्ञगृहद्वारः। 'अकोषधावनीः' अकोशधावनीः, तासु हि महतासु द्रव्यकोशाः सुरक्षा भवन्ति, अर्चिष्वपि हविः प्रक्षिप्तं नान्यतो धावति, किं तर्हि? देवानेव प्राप्नोति,

एतदक्रीयाधावनीत्वमर्चिषाम् । एवलक्षणा एता द्वारः, अर्चिषो वा 'उदाताभिजिहताम्' 'उज्जिहताम्' उत्सिहन्तु, 'धातानि' दिग्भि', 'विश्रयन्ताम्' च 'पक्षोभिः' विव्रियन्ते कपाटसंवरणैः द्वारः, अर्चिषस्तु हविषोऽनुप्रवेशार्थम् पक्षोभिः स्वैरेवावयवैः विश्रयन्ताम्। विहृताश्च सत्यः 'सुप्रायणाः' "सुप्रगमना" भवन्तु ऋत्विजं प्रति द्वारः, अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु । सामान्यमेवेदमाशास्ते यत्, पुनस्तस्मिन्नेव वर्त्तमाने कर्मण्याशास्ते,—'अस्मिन् यज्ञे' विश्रयन्तां' विश्रियन्ताम् 'ऋतावृधः' यज्ञवर्द्धयित्र्यः। या एता एवंलक्षणा द्वारः, अर्चिषो वा, ता, अस्या. 'आध्वरस्य यन्तु' य आमां ध्वांसः, तं वियन्तु। के 'होतः।' स्वमपि मया प्रेषितः 'यज' एताः॥ एवमेव 'सुप्रायणाः'—इति द्वारमर्चिषां वा सन्निधौ श्रूयमाणः सुप्रगमनाभिधायीत्युपपद्यते॥ २ (१८)॥

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥ देवा नो यथा सदा वर्द्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाऽहन्यहनि च्यवन अपिभवति, च्यावयिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति। युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुर्युवा प्रयौति कर्माणि तक्षतिः करोतिकर्मा रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका

रजांस्युच्यन्तेऽहृगहनी रजसी उच्येते (रजांसि चित्रा विचरन्ति तान्यव इत्यपि निगमो भवति) हरो हरतेर्ज्योतिर्हर उच्यते (उदकं हर उच्यते) लोका हरांस्युच्यन्ते। (अहृगहनी हरसी उच्येते। प्रत्यग्ने हरसा हरः शृणी-हीत्यपि निगमो भवति) जुहुरे विचितयन्तः। जुह्विरे विचेतयमाना व्यन्त इत्येषोऽनेककर्मा। प्रदं देवस्य नमसा व्यन्त इति पश्यतिकर्मा। वीहि शूर पुरोडाशमिति खादतिकर्मा। वीतं पातं पयस उस्रियायाः। अश्नीतं पिबतं पयस उस्रियाया उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः (उस्रेति च)। त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः। गोभिः क्राणा अभ्यनूषत। गोभिः कुर्वाणा अभ्यस्तोषत। आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य हरिः सोमो हरितवर्णोऽयमपीतरो हरिरेतस्मादेव। वाशीभिस्तक्षताश्मन्मयी-भिः। वाशीभिरश्ममयीभिरिति वा वाग्भि-रिति वा। स घेदुत्थौ विपुरास जन्तोर्मा

ग्निश्चदे॑वा॒ अपि॑गुक्र्तं न॑ः । स उत्प्रश्ता यो विप्रुणस्य जन्तोर्विषमस्य मा ग्निश्चदेवा अब्रह्मचर्य्याः शिश्न॑ अ॒यु॒ते॑ः । अपि॑गुक्र्तं न॑ः । सत्य॑ं वा य॒ज्ञ॑ं वा ॥ ३ (१८) ॥

"अप्रायुवः(३७)"—इति । एतदनवगतम् । "अप्रमाद्यन्त."—इत्येवमर्थप्रतीतिः । "आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ । देवा नो यथा सद॒मिद् वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥"—इति निगमः (ऋ० सं० १, ६, १५, १) । गोतमस्यार्षम् । अग्निष्टोमे महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते । 'आ यन्तु' उपयन्तु, अस्माकं 'भद्राः' भन्दनीयाः, स्तुत्याः । 'क्रतवः' सोमक्रतवः, कामा वा । 'विश्वतः' सर्वतः, सर्वदैव यथाविहितेषु कालेषु । 'अदब्धास.' अनुपहता., अविगुणा, कोपिदर्पि दस्युभिः । 'अपरीतास.' अपरिमाणपूर्वा., असम्पृक्ताभिः । 'उद्भिदश्च' उद्भेत्तारः, एषां त्रयाणामपि लोकानाम्, येषां फलेनैतान् त्रीनपि लोकानुद्भिन्दीमहि, ते आगच्छन्तु । किञ्च, तया च तेऽत्यर्थमविगुणा आगच्छन्तु, 'यथा' तैः परितोषिताः सन्तः 'देवाः' सदैव नित्यमेवास्माकं वर्द्धनायोद्यताः 'असन्' स्युरित्यर्थः, भाष्येऽपि "स्यु:"—इत्येव पाठः । 'अप्रायुवः' अप्रमाद्यन्तः, प्रमादमकुर्वाणः, असम्मुह्यमाना इत्यर्थः । वर्द्धयितारो 'रक्षितार.' च । 'दिवेदिवे' अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः, सगुणा. कामा वा आगच्छन्तु । अत्र "अप्रायुवो रक्षितार"—इति रक्षितृशब्देन समानार्थसन्निवेशादप्रायुवशब्दस्याप्रमादार्थत्वम्, रक्षणे हि सत्यप्रमादस्य दृष्टत्वात् ।

"च्यवनः(२८)"—इति । एतदनवगतम् । "च्यावनः"—इत्येवमर्थप्रतीतिः । "ऋषिर्भवति"—इत्यभिधेयवचनम्, "च्यवानम्"—"इति" । एवम् "भयस्य" ऋषेर्गुणनस्य छन्दसि "निगमाः" सन्ति । च्यवन इति प्रसिद्धमेवेति कृत्वा निगमं न पठति, इतरथा त्वप्रसिद्धमल्पप्रयोगञ्चैतदिति कृत्वा पठति,—"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः । निष्टौग्रमूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ॥"—इति (ऋ० सं० ७, ८, १५, ४) । काक्षीवत्या घोषाया इयमार्षम् । प्रातरनुवाकाश्विनयोः प्रस्तुते । अश्विनावुच्येते,—हे अश्विनौ ! "युवां" 'च्यवानम्' ऋषिं च्यावयितारं स्तोमानाम् । 'सनयं' इह गमनासमर्थं सन्तम् 'यथा' चिरन्तनं 'रथं' गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्यात्, एवं 'पुनः युवानम्' च्यवनमपि 'चरथाय' "चरणाय" गमनार्थम् 'तक्षथु.' कृतवन्तौ स्थ इत्यर्थः । किञ्च, 'निष्टौग्रमूहथु.' निरूहथु', निर्वहनवन्तौ स्थ', 'तौग्र्य' तुग्राणामपां सङ्घातं मेघानाम् । क्व पुनः निरूहथुः ? 'अद्भ्यस्परि' चिरन्तनीनामन्यासामपामुपरि, अनुपक्षीणास्वेवान्यासु वार्षिकास्वप्सु, तासामेवोपरि लोकानुग्रहार्थमन्यमुदकसङ्घातं निरूहथुः । तान्येवमादीनि कर्माणि 'विश्वा' विश्वानि, सर्वाणि । युवयोः 'सवनेषु' यज्ञेषु, प्रातःसवनादिषु वा 'प्रवाच्या' प्रकर्षेण वदनीयानि स्तोतृणाम् ॥ एवमेतस्मिन् मन्त्रे "च्यवानः",—शब्देन च्यवन एव ऋषिरुक्तः, स हि श्रूयते सौकन्ये आख्याने,—जीर्णः सन्नश्विभ्यां पुनर्युवाकृत इति । तस्मादुपपद्यते निगमप्रसङ्गात्तूच्यते,—"युवा, प्रयौति कर्माणि" मिश्रयति । "तक्षतिः करोतिकर्मा" करोतीत्यर्थः ॥

"रजः (२९)"—इति । अनेकार्थम् । "रजते."—इति

व्युत्पत्तिः। "ज्योती रज उच्यते" तद्धि मनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन। "या ते अग्ने रजःशया तनूः"—इत्येव मायुदाहरण द्रष्टव्यम्। भाष्यकारस्तु प्रभृत्यादिषेतेषु निग मान् न पठति॥

"उदक रज उच्यते" तदपि हि स्वेन स्नेहाख्येन गुणे- नानुरञ्जयति। "भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भि सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्॥"—इति निगम (ऋ० स० ७, ६, ४, ६)। हे अग्ने! त्वमेवास्य 'यज्ञस्य' 'भुवः' पृथिवी लोकादस्य लोक 'नेता'। रजस उदकस्य च नेता, "अग्निर्वा इतो वृष्टिं समीरयति"—इति हि वक्ष्यति। क्व पुनर्नेता? 'यत्र' यस्मिन् लोके 'नियुद्भि' अश्वजातिभि 'शिवाभि' सुखतमाभि सहित 'वायुम्' अन्तरिक्षस्थान 'सचसे' ससेवस त्वम, तत्र नेता, मध्यस्थानाना देवाना स्थितये। किञ्च, त्वमेव 'दिवि' अवस्थितः सर्वभूतमूर्द्धान 'दधिषे' धारयसि। यज्ञाभिनिष्पन्नेनेतो लोकाद्धृतेन हविषा 'स्व' स्वराख्यमादि- त्यम। किञ्च, त्वमेव एता 'जिह्वा' ज्वालाम् अत्यद्भुताम, आत्मन, सकाशात् 'चकृषे' पुन पुन करोषि। य अस्मात् प्रदत्तानि हवींषि उपाचिपात, यस्त्वमवड्गुपयुक्तस्त त्वा वय मेतस्मिन् कर्मणि 'हव्यवाह' हविषा वोढारम, अनेन पुरा डाशाख्येन 'हविषा' यजाम'। पौर्णमासस्याग्नेयस्य हविषो याज्या॥

"लोका रजांस्युच्यन्ते" तेष्वपि हि प्राणिनो रज्यन्ते। "त्वया दृढानि सुक्रतो रजांसि" (ऋ० स० ४, ७, २, ३)— इति व्याख्यातो निगम॥

"असृगहनी, रजसी उच्येते"। असृग् रुधिरम्, अहः

च अहस्र अस्तगच्छन्ती, ते अपि रजसी उच्येते। "मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति"—इति रुधिरस्योदाहरणम्। "अहश्च कृष्णमहरर्जुनञ्च"—इत्यह्न उदाहरणम्॥

"हरः (४०)"—इत्येतदनेकार्थम्। "हरतेः"—इति व्युत्पत्तिः। "ज्योतिर्हर उच्यते" तद्धि ह्रियते, हरति वा स्नेहम्, विरूक्षीकरोति। हरति वा तम इति हरः। "या ते अग्ने हर॒श॒या त॒नूः" "अग्ने॒ यत्ते॒ हर॒स्ते॒न॒ तं प्रति॒ ह॒र"—इत्येवमादयः प्रचुरा एव निगमा इति अत्रापि भाष्यकारो न पठति॥

"उदकं हर उच्यते" तद्धि ह्रियते प्राणिभिः जीवनाय॥

"लोका हरांस्युच्यन्ते" तेभ्यो हि क्षीणपुण्याः प्राणिनो ह्रियन्ते॥

"जुहुरे (४१)"—इति। एतदनवगतम्। "जुह्विरे"—इत्यवगमः। "जु॒हु॒रे वि॒चि॒तय॒न्तोऽनि॑मिषं नृ॒म्णं पा॑न्ति। आ दृळ्हां पुरं॑ विविशुः॥"—इति (ऋ० सं० ४, १, ११, २)। वम्रेरात्रेयस्यार्षम्। जुहुरे, जुह्विरे, जुह्वति। योऽग्निं 'विचितयन्तः' "विचेतयमानाः" कर्मकर्तृसाधनानां याथार्थ्यं वेदान्तदर्शनेन जानानाः, ये च नराः 'अनिमिषम्' आदरवदवस्थानमात्मनः कृत्वा युक्तात्मानो 'नृम्णं' योगबलमात्मनः कर्मणि वर्त्तमाने 'पान्ति' रक्षन्तीत्यर्थः। आह,—ये एवं गुणयुक्ताः, किं तेषाम्? इति। उच्यते,—'आ दृळ्हां पुरं विविशुः' ते 'दृळ्हां' नित्याम्, अनावृत्तये परब्रह्ममयीं 'पुरम्' इमामदृढां शरीरपुरं प्राविक्षन् इत्यभिप्रायः॥ विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत् कुर्य्युः, येन दृळ्हां पुरमाविशेयुः? यस्कात्प्यमपि च "जुहुरे"—इत्येतस्मिन्क्लेऽ-

स्यैव। प्रकरणाच्चेयमाग्नेयी ऋक्। तस्मात् "जुहुरे"— इत्येष शब्दो हवनार्थ एवेत्युपपद्यते॥

"व्यन्तः (४२)"—इत्येषोऽनेककर्मा। यस्माद्धातोरयं शब्दो निष्पद्यते, स धातुरनेककर्मा, अनेकार्थः। "वी गतिप्रजननकान्त्यशनखादनेषु (धा॰ प॰)"—इति। तद्यथा,— "पुदं दे॒वस्य॒ नम॑सा॒ व्यन्तः॑ श्र॒व॒स्यव॒ः श्रव॑ आपु॒न्नमृ॑क्तम्। नामा॑नि चिद् दधिरे य॒ज्ञिया॑नि भ॒द्रायां॑ ते रणयन्त॒ सन्दृ॑ष्टौ॥"—इति (ऋ॰ सं॰ ४, ४ २५, ४)। इत्यत्र "पश्यतिकर्मा"। भरद्वाजस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते, पशौ च विनियुक्ता। 'पदं' स्थानम्, अवस्थानं याथार्थ्यम्, 'अग्नेः' 'देवस्य' दानादिगुणयुक्तस्य 'व्यन्तः' पश्यन्तो जानानाः। केन? 'नमसा' नमस्कारेण, 'स्तुत्या' मन्त्रेणेत्यर्थः। मन्त्रार्थपरिज्ञानादेव ह्यग्ने राध्यात्माधिभूताधियज्ञेष्ववस्थानं याथार्थ्यतो दृश्यते। पदशब्दो हि स्थाने प्रसिद्धः, पदस्थोऽयमिति हि वक्तारो भवन्ति लोके। अथवा 'नमसा' अन्नेन, हविराद्येनाभ्युपगतेनेति योज्यम्। 'श्रवस्यवः' अन्न इच्छमानाः, अन्नमात्मनः प्रार्थयमानाः। य एवमग्नेः स्तुतिभिर्विद्वांसो याथार्थ्यम्, अन्नैर्वा अभ्युपगतैः अन्न इच्छमानाः पश्यन्तोऽग्निमुपासते। किन्तेषाम्? इति। उच्यते,—'श्रव आपन्' किंलक्षणं पुनराप्नुवन्ति? 'अमृक्तम्' अमृदितम्, अनुपभुक्तम्। किञ्च, 'नामानि चित्' ये चैते अन्यमात्राधेतरो केवलच्छान्दसाः, नामान्यपि च मन्त्रभावेनावस्थितानि धारयन्ति, अनर्थज्ञाः, 'यज्ञियानि' यज्ञार्हाणि, तेऽपि 'भद्रायां' भन्दनीयायाम्, अग्नेः 'सन्दृष्टौ' सन्दर्शने 'रणयन्त' रमयन्त्यात्मानम्। तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः॥

एवमेतस्मिन् मन्त्रे "पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्"—इत्येतेषां पदानामेकवाक्ययोगात् "व्यन्तः"—इत्यस्य शब्दस्य पश्यत्यर्थोऽप्युपपद्यते॥

"इमा ब्रह्म॑ ब्रह्मवाह. क्रियन्त॒ आ ब॒र्हिः सी॑द। वी॒हि शू॑र पु॒रो॒डाश॑म्॥"—इति (ऋ० सं० ३, ३, ६, ३)। इत्यत्र "खादतिकर्मा"। विश्वामित्रस्येयमार्षम्। रात्रिपर्य्यायेषु महारात्रिके पर्य्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'इमाः' इमानि, 'ब्रह्म' ब्रह्माणि, ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि, अस्माभि. ब्रह्मणोऽस्य हविषः वहनसमर्थानि, त्वां प्रतिक्रियन्ते, उच्यन्त इत्यर्थः। यत्तो ब्रवीति,—हे इन्द्र! 'आ बर्हिः सीद' आसीदेदं बर्हिः प्रति। आसीनश्चैतस्मिन् बर्हिषि, 'वीहि' भक्षय एतमस्मत्प्रदत्तं हे 'शूर'! 'पुरोडाशम्'॥ एवमेतस्मिन् मन्त्रे "वीहि शूर पुरोडाशम्"—इत्येतस्मादेकवाक्यसंयोगात् "वीहि"—इत्येष शब्दः खादनार्थः प्रतीयते, किमयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्य्यात्? प्रसिद्धञ्च लोके कठिनद्रव्यस्य भक्षणम्, भक्षयति मोदकादीनि। तस्मात् सामर्थ्याद्भक्षणार्थोऽयमित्युपपद्यते॥

"श्रीतं पात पयसः"—इत्यश्नानार्थः। "उ॒त वां॑ वि॒क्षु मद्या॒स्वन्धो॒ गाव॒ आप॑श्च पीपयन्त॒ देवीः॑। उ॒तो नो॑ अस्य पू॒र्व्यः पति॒र्दन् वी॒तं पा॒तं पय॑स उ॒स्रिया॑याः॥"—इति (ऋ० सं० २, २, २३, ४)। मैत्रावरुणेषा। त्रिष्टुप्। दीर्घतमस आर्षम्। मित्रावरुणावुच्येते,—'उत वां' अपि युवयोः, 'एतासु 'विक्षु मद्यासु' एतेषु मनुष्येषु मदयित्नुषु वर्त्तमानमेतत् 'अन्धः' हविर्लक्षणम्, यदि तस्मिन्नहनि मनुष्यैः अयष्टव्यं देय पयस्यादिकम् आज्यादिकञ्च। तदेव 'गावः' एताः 'च आपः'

'देवी:' दानादिगुणयुक्ताः। आसां गवामुपकारं कुर्वाणाः, 'पीपयन्त' वर्द्धयन्तीत्यर्थः। यदेतदशनपानयोग्यम्, सान्नं सान्नाय्यलक्षणम् आभिरङ्गिराभिश्च युवयोरन्धो वर्ध्यते। 'पती नो अस्य' अस्यास्य हविषोऽस्मत्पूर्वो यजमानः पतिः। पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति, तदनन्तरं स तद ऋत्विग्भ्यः समर्पयति—'देवतायै संस्कुरुतैतत्'—इति, ततस्ते तस्य हविषः पतयो भवन्ति। तानपेक्ष्य यजमानः 'पूर्व्यः पतिः'। तदपेक्षयैव ऋत्विज आहुः,—योऽस्माकं 'पूर्व्यः पतिः' अस्य हविषः, सः 'दन्' भवति, ददद्रित्यर्थः। तेनाप्येतद् भवन्तावेवोद्दिश्य स्यात् प्रत्युत्सृष्टम्। एवमपि सदत्र भवत्यपि वयं यथा व्यादिष्टमेव तेन पूर्वेण हविःपतिना भवद्भ्यामेतद्धः। तौ युवामस्य हविषः, 'पयसः' पयस्याख्यस्य, 'उस्रियायाः' पयसा निष्पन्नस्य, नातिकठिनस्य अशनयोग्यस्य स्व भागमस्माभिर्दीयमानं 'वीतम्' अश्नीतं युवामित्यर्थः। पिबतं च यदेतदाज्यस्य स्व भागम् उपस्तरणाभिघारणसम्बद्धम्। एवमस्मिन् मन्त्रे 'उस्रियायाः पयसा निष्पन्नस्य'—इति श्रूयमाणे पयस्याज्ये प्रतीयेते, तयोराज्य पेयम्, तत् 'पातम्'—इत्यनेन सम्बध्यते, पारिशेष्यात् 'वीतम्'—इत्यस्य शब्दस्य पयस्यया सह सम्बन्धः, सा च नाति कठिना, नातिद्रवा, अशनयोग्या, तस्मात् "वीतम्"—प्रत्येष शब्दोऽशनार्थे इत्युपपद्यते, लोकेऽपि हि नातिकठिने नातिद्रवे अश्नातिशब्दः प्रसिद्धः,—'अश्नाति पायसम्'—इति॥ निगमप्रसङ्गमुच्यते,—"उस्रियेति गोनाम" "उत्स्राविण" हि तस्याः सकाशात् क्षीरादयः "भोगाः" भवन्ति॥

"क्राणाः" (४३)—इति। एतदनवगतम्। "कुर्वाणाः"—

इत्यर्थप्रतीतिः। "गोभिः क्राणा अनूषत"—इति निगमः। "गोभिः कुर्वाणा अस्तोषत"—इति निर्वचनम्, त्वामिन्द्रेति शेषः। "त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः। गोभिः क्राणा अनूषत॥"—इति। हे 'इन्द्र!' त्वामस्मिन् सोमे, 'मतिभिः' मतिमद्भिः 'सुते' मेधाविभिरभिषुते सोमे, य एव हि मतिमन्तः, त एव हि सोममभिषोतुं शक्नुवन्ति, नेतरे मतिहीनाः। 'सुनीथासः' सुष्ठु ये स्तोतुं शक्नुवन्ति, ते सुनीथाः। 'वसूयवः' वसुकामाः। आह,—किमिति कुर्वन्ति, मतिभिः सुते मेधाविभिरभिषुते सोमे? उच्यते,—'गोभिः' वाग्भिः, स्तुतिलक्षणाभिः। अस्मिन्नभिषुते सोमे, आभिमुख्येन "कुर्वाणाः" 'अनूषत' "अस्तोषत" स्तुवन्तीत्यर्थः। अभिषुतेषु सोमेषु किमन्यदाभिमुख्येन करणात् इन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्युः, तस्मात् "क्राणाः"—इत्येव शब्दः, "कुर्वाणाः"—इत्येवमुपपद्यते॥

"वाशी (४४)"—इति। एतदनवगतम्। यद्येव च अनेकार्थम्। "वाशीभिरश्ममयीभिरिति वा, वाग्भिरिति वा"—इति शब्दसमाधौ। "वाश्य." एवाभिधेयाः, वाच्याः वा। "आ तू षिञ्च हरिं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। परिष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त॥"—इति (ऋ० सं० ८, ५, १८, ४)। बुधस्य सोमसुवस्यार्षम्। 'आसिञ्च' प्रक्षिप, एतं 'हरिं' हरितवर्णं सोमम्। क्व? 'द्रोरुपस्थे' द्रुममयस्याधिषवणफलकद्वयस्योपरि। एवं तावदध्वर्युरुक्तः, स हि सोममुपावहरति। अधुनेतरानभिषवकर्तॄन् ब्रवीति,—यूयमपि अनेनाध्वर्युणोपावहृतमेनं सोममधिषवणफलकयोरुपरि 'वाशीभिः' एताभिः 'अश्मन्-

यीभि' "अश्ममयीभि." 'तचत' संस्कुरुत, अभिषुणुतेत्यर्थः, "ग्रावभिरभिषुखन्ति"—इति श्रुतम्। अथवाऽयमन्योऽस्यार्धस्यार्थः,—हे ऋत्विजः! 'आसिञ्च' प्रचारय, तं हरितवर्णं सोममनेन कलशेन। क? 'द्रोरुपस्थे' द्रोणकलशस्योपरि। यूयमपि च हे होतारः! आसिच्यमानम् एनं सोमं 'वाशीभिः' "वाग्भि" स्तुतिलक्षणाभिः 'तक्षत' संस्कुरुत, यदस्यायधियमपूतं, तत् स्तुतिभिः पुनीतेत्यभिप्रायः। 'अश्मन्मयीभिः' व्यापनसमर्थाभिरित्यर्थः। यूयमपि हे अध्वर्यवः! पूतमेतमुद्गातृभिः, सोमं 'परिष्वजध्व' ग्रहेषु, स्थालीषु च। 'कक्ष्याभि.' अङ्गुलीभिः, अङ्गुलिभिरेव हि पावकः सोमो गृह्यते। यदेव चेदं ग्रहणमेव एव तस्य परिष्वङ्गः। परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्धान-'धुरौ' 'प्रति' 'वह्निम्' इव, वोढारमिव, अनड्वाहं 'युनक्त' एनं सोमं सादयतेत्यर्थः। स हि सोमो हविर्धानधुरोः अधस्तात् खरे साद्यते। एतस्मादेव चानडुद्योजनदेशं प्रति सामान्यादङ्गिमिव युनक्तेति लुप्तोपममुपपद्यते। अत्र "वाशीभिस्तक्षते"—इति लक्षणयोगात् अश्ममय्यो वाश्य एता ग्रावाण्या इति प्रथमस्यार्थस्योपपत्तिः॥ एतदिच्चर्ये 'आ तू षिञ्च'—इत्यासेकमन्त्रो गौणः, न हि सोमांशूनाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात्, तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः॥ अथवा 'आसिञ्चत हरिं द्रोरुपस्थे'—इत्यतोऽनन्तरं वाशी मन्त्रः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपपद्यते एव, सोमो हि द्रोणकलशस्योपरि आसिच्यमाने वाग्भिः स्तूयते। एवमर्थद्वयमभिप्रेत्य उभयथा भाष्यकारेणोक्तम्,—"वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा"—इति॥

"अयमपीतरो हरि." मर्कटः, "एतस्मादेव" इति, हरित-

वर्णत्वादविरुध्यते, "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः, वानराः"—इति श्रूयन्ते रामायणे ॥

"विषुणस्य (४५)"—इति। एतदनवगतम्। "विषमस्य"—इत्यवगमः। "न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः। स शर्द्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः॥"—इति (ऋ० सं० ५, ३, ३, ५)। वसिष्ठस्येयमार्षम्। त्रिष्टुप्। उक्थ्यमानसूक्ते माध्यन्दिने सवने शस्यते। हे भगवन्! "इन्द्र!" तथा, कुरु यथा 'न' इमसस्मद्यज्ञं 'यातवः' यातयितारः, यज्ञविघ्नकर्त्तारः, केचिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः। किञ्च, हे 'शविष्ठ' बलिष्ठ! ये एते 'वन्दनाः' वन्दितारः, लाडगौडादयः, जानपदीभिः 'वेद्याभिः' आकृतिभिर्युक्ताः, किं ब्राह्मणाः एते स्युः, उतान्यजातीयाः केचिदिति? अथवा आवेदितव्याभिः प्रवृत्तिभिः युक्ताः, न हि तासां प्रवृत्तीनामन्तोऽस्ति, याभिस्ते प्रवर्त्तन्ते चपलत्वात्। किञ्च, येऽपि चैते श्रोत्रिया अपि सन्तः 'शिश्नदेवाः' शिश्नेन नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीड़न्त आसते, श्रौतानि कर्माणि उत्सृज्य, तेऽपि युष्मदनुग्रहादिदमस्माकम् 'ऋतं' यज्ञम् 'मा अपिगुः' मा आगच्छन्तु, नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः। आह, —कीदृशास्तर्हि यज्ञमागच्छन्त्विति? उच्यते,—'स शर्द्धत्' स एवोत्सहतामिममस्मद्यज्ञमागन्तुम्, य एव 'अर्यः' ईश्वर आत्मीयानामिन्द्रियाणाम्, जितेन्द्रिय इत्यर्थः। यश्च 'विषुणस्य "विषमस्य" यज्ञविध्वंसयितुः 'जन्तोः' मनुष्यस्य निग्रहाय समर्थः, येन परिपाल्यमाना एतं यज्ञमविघ्नेन समापयेमहीत्यभिप्रायः। एवमेतस्मिन् मन्त्रे "यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु"—इति प्रतिषिद्धेषु तेषु अनिष्टत्वादेतेषां 'स शर्द्धत्'

दृश्ये'—इति श्रूयमाणमर्थवृत्तमनुष्याभ्यागमनविषयमेतद्भवति, तस्येष्टत्वात्, स चाभ्यागतः सन्नवस्य 'विपुणस्य' "विषमस्य" मनुष्यस्य निग्रहं करोति, तस्मात् "विपुणस्य"-शब्दो विषमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य "सत्यं वा"—इत्येतदर्थवचनं भवति, तदाऽस्माकम् 'ऋतं' सत्यम्, एवंलक्षणाः पापकर्माणः 'मा अपिगुः'—इत्येवं योज्यम्। अपिगुरिति चेथ गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत इत्यतो भाष्यकारेणोक्तम्,—"सत्यं वा यज्ञं वा"—इति ॥ ३ (१९) ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ ४ (२०) ॥

"जामि (४६)"—इति। एतदनेकार्थम्। भगिनी, बालिशः, पुनरुक्तञ्चास्याभिधेयानि। प्रकरणादेवैतेषामन्यतममभिप्रवर्तिष्ठते। यथानेन तावद्भगिन्युच्यते, तथेदमुदाहरणम्,—"आ घा ता०—०मत्"—इति (ऋ० सं० ८,६,७,५)। इयं यमी किल यमं प्रार्थयाञ्चकार,—एहि मैथुनाय सङ्गच्छावहा इति, तामकामयमानोऽसावनयर्चा प्रत्युवाच,—'आ घा ता गच्छान्'। 'घा'—इत्यनर्थक एव, 'आगच्छान्' आगमिष्यन्तीत्यर्थः।

आह,—कानि ? उच्यते,—'ता:' "तानि उत्तराणि युगानि आगमिष्यन्ति" तेऽपि काला न तावत् साम्प्रतं वर्त्तन्ते इत्यभिप्रायः। येषु किम् ? 'यत्र' येषु 'जामयः' भगिन्यः भ्रातृणाम् "अजामि"—योग्यानि मैथुनसम्बन्धानि "कर्माणि" "करिष्यन्ति" कलियुगान्ते हि तादृशः सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः। यतो न तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः, सदाचारा एव तावत् प्रजाः। अतो ब्रवीमि, —'उप बर्बृहि' उपधेहि। कस्मै ? 'वृषभाय' तवोपरि रेतःसेक्तुमन्यकुलजो योग्यः, तस्मै। किमुपबर्हि ? इति 'बाहुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न भविष्यामीति। यतो ब्रवीमि,—'अन्यमिच्छस्व' अन्यमन्वेषयस्व। हे 'सुभगे !' 'पतिं' 'मत्' मत्त इत्यर्थः॥ एतमेतस्मिन् मन्त्रे, सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

"जामि"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरेकनाम" भवति, पुनरुक्तनामित्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, तद् यत् समान्यामृचि समानाभिव्याहारं भवति, तत् "जामि भवति"—इति पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्य्यायो निगमः॥

"बालिशस्य वा" बालिशस्यैतदेव नाम। बालिशो मूर्खः, स हि बाल इव शेते, प्रमादित्वाद्धर्मकार्य्येषु। एतस्यापि पर्य्यायो निगमः॥

"असमानजातीयस्य वा" असमानजातीयो हि पुरुषस्य भगिन्याख्यो स्त्राता, सा हि स्त्रीत्वादेवातुल्यजातीयैव पुरुषस्य भवति। जामिरित्येतस्मिन् शब्दे 'मिः'—इत्येषः "उपजन"

यदेवोक्तं भवति 'जा'—इति, तदेव जामोति । उभयथापि मन्त्रे प्रयोगो द्रष्टव्यः । "अन्यमिच्छस्व सुभगे । पतिं मत्—इति व्याख्यातम्" । निगदसिद्धमेवैतदित्यर्थः । अथवैतानि पदान्यधस्तात् तत्र तत्र व्याख्यातानि, तद् यथा,—"अन्यो नानेय"—इत्येवमादि उपेक्षितव्यम् ॥ ४ (२०) ॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो-र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥

द्यौर्मे पिता माता वा पालयिता वा जनयिता नाभिरत्र बन्धुर्मे माता पृथिवी महतीयं बन्धुः सम्बन्धनान्नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते सबन्धव इति च ज्ञातिः सञ्ज्ञा-नात् । उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान उत्ततान ऊर्ध्वतानो वा तत्र पिता

पृथिव्योर्मातृपितृभावः। आह,—किमेते द्यावापृथिव्यौ अन्यत् किञ्चिदनपेक्ष्यैव सर्वभूतानां मातृपितृभावं बिभृतः, उत अन्यदपि किञ्चिदपेक्षेते? इति। उच्यते,—अनयोः 'चम्वोः' द्यावापृथिव्योः 'उत्तानयोः' ऊर्ध्वमेव स्थानयोः अन्तरा च प्रतिधारणीयोऽन्तः प्राणः सन् इति उत्ताने द्यावापृथिव्यौ, प्राणेन होमे वायुना सूत्रभूतेन विधृते तिष्ठतः, एतयोः द्यावापृथिव्योरुत्तानयोः, य एषोऽन्तरिक्षाख्यः 'अन्तः' मध्ये 'योनिः' 'अत्र' एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति 'पिता' "पर्जन्यः" द्युलोकास्यः, सौरेण हि रसान् प्रार्जयति, तस्मात् सेनात्र पर्जन्यशब्देन भाष्यकारेणोक्ता। 'दुहितुः' "पृथिव्याः" उपरि 'गर्भं' सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् 'आधात्' आदधाति, ददातीत्यर्थः। अत्र पृथिव्येव दुहितृशब्देनोक्ता, सा हि द्युलोकात् 'दूरे निहिता' अथवा सा हि द्युलोक 'दोग्धीति' दुहिता,—सा हि द्युलोकात् पतितमुदकमुपजीवन्त्येवादूरे निहिता, दोग्धि वा॥ एव द्यावापृथिवीभ्यामन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येतान्यस्मादादीनि भूतान्युत्पद्यन्त इति एतदनेन मन्त्रेण मन्त्रदृशाख्यापितम्। अत्र मातृपितृसम्बन्धात् पितृशब्दः पितर्य्येवेत्युपपत्तिः। पिता माता चायमेतदाम्नासन मन्त्रेण॥

"शयोः(४८)"—इति। एतदनवगतम्। पञ्चम्यन्तं वा षष्ठ्यन्तं वा सत्। निगमश्चैष,—"बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्। त आ गतावसा शन्तमेनाथा नः शयोररपो दधात।"—इति (ऋ० म० ७, ६, १०, ४)। न चैवं यजमानोऽर्थात्तस्मात् बृहस्पतिपुत्रादर्थमपेक्षते, किं कारणम्? स्वत एव हि ते विधातुं समर्थाः, न च बृहस्पतिपुत्रस्य शयोः मम पितरः किञ्चिदेभिः पितृभिः विधेये

शेति। एव पञ्चम्यर्थासम्भवं षष्ठ्यर्थासम्भवञ्च पश्यन् भाष्यकारः, 'शयोः'—इत्येकं पदं, द्वितीयान्ते द्वे पदे चकार, 'शम्'—इति, 'योः'—इति च। शमित्यस्य "शमनम्" अर्थं निराह, योरित्यस्य "यावनम्"—इति। एवं द्वितीयान्तेन परिणामं कृत्वा अर्थं निराह,—तथाहि वाक्येन सम्बध्यत इति। कस्य शमनं कस्य वा यावनम्? इति पुनः पर्य्यनुयोगे प्राप्ते "रोगाणाम्" "भयानाम्" "च" इत्यध्याजहार भाष्यकारः। रोगशमनञ्च दधात, भययावनञ्च, शान्तरोगा यथा स्याम, प्रक्षीणसर्वभयाश्च, तथा कुरुतेत्यभिप्रायः। किमेतावदेव? नेत्युच्यते,—यदपि चान्यत् किञ्चित् 'अपरं' अपापम्, तदपि चास्मभ्यमेव 'दधात' दत्तेत्यर्थः॥ एवमेतत् पदम् एकम्, अर्थासम्भवाद् द्विधा प्रविभज्य भाष्यकारेण निरुक्तम्। इत्थमप्यर्थासम्भवे सति निर्वचनप्राप्तिरस्त्येव, तद्यथा उद्गीथशब्दे,—"प्राण एवोत्प्राणेन ह्युत्तिष्ठति, वाग् गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्नेन हीदं सर्वं स्थितम् (छा० ब्रा० ३, ३)" —इत्येवमादि, तस्मादुपपद्यते। प्रथमान्तमेव सत् कस्माद् द्वितीयान्तत्वेन विपरिणम्यते शयुमिति? एवमपि न विरुध्यति, तथापि हि न कश्चिदर्थ उपपद्यते, तस्माद् युक्तमिति॥ "रपो रिप्रम्"—इति, अत्र रिप्रशब्दस्य रपशब्देनार्थसामान्यात् तत्त्वमुक्तम्। यद्वैनास्य 'रिप्रम्' अमेध्यम्, तच्छुध्यतीति ह विज्ञायते॥

"अथापि शयुर्बार्हस्पत्य उच्यते" अपि शं, योः,—इत्यनेन पदद्वयेन शमनयावने रोगभययोः उच्येते, द्वेधा प्रविभक्तेन, अपि यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते, तस्याप्येतदेव नामेत्यपिशब्दः। "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये"—इति। "श्रीमान् शंयोर्मम-

काय सूनवे (ऋ० सं० १, ३, ४, ६)" इति, "तच्छं योरा वृणीमहे (ऋ० सं १, ३, २६, ४)"—इति च निगमौ। इयं शकरी। शंयोरेव बृहस्पतिपुत्रस्यार्षम्। शंयोर्वाके विनियुक्ता। शंयोरात्मानमभि सम्पाद्य, अथवा शंयोः सकाशादिति केचिन्मन्यन्ते। अनेन कर्मणा 'शंयोः' वाकाख्येन 'तत्' तदा चाभिमुख्येन 'वृणीमहे'। किं पुनस्तत्? 'गातुं यज्ञाय' "गमनम्" अस्मै "यज्ञाय" देवान् प्रति, 'गातुं यज्ञपतये' "गमनं" चास्मै "यज्ञपतये" देवान् प्रति। किञ्च, 'दैवी स्वस्तिरस्तु नः' देवानुग्रहादस्माकं स्वस्तिरस्तु, मा नो देवाः काचिदापदमुत्पादयन्त्वित्यभिप्रायः। 'स्वस्ति मानुषेभ्यः' मनुष्येभ्योऽपि सकाशात् मा नः काचिदापदस्तु। 'ऊर्ध्वं जिगातु भेषजम्' गच्छत्वेतद्भेषजम्, भयसादयितृ कर्म, यावज्जीवमनवच्छिन्नमविगुणञ्चोर्ध्वगमनयोग्यम् अस्माकमस्त्वित्यभिप्रायः। किञ्च, 'शं नो अस्तु' शं सुखं नोऽस्माकं भवतु, 'द्विपदे' मनुष्यादिकाय 'चतुष्पदे' गवादिकाय च॥ 'शयु' बृहस्पतिपुत्र—इति, एतस्मिन् मन्त्रे विशेषलिङ्गमस्ति, तदन्यस्मात् श्रुतिलिङ्गात् कुतश्चिदुपलभ्यमानाद्वा एतावदेव त्वेतस्मात् मन्त्रात् सिद्धम्,—एकमेवेदं पदमविभक्तम् निरुच्यते, पञ्चम्यन्तं वा षष्ठ्यन्तं वा, न यथा पूर्वस्मिन् मन्त्रार्थासम्भवाच्छंयुशब्दो विभक्त इति॥ ५ (२१)॥

इति निरुक्तवृत्तौ नवमस्याध्यायस्य (चतुर्थाध्यायस्य) तृतीयः पादः॥ ४, ३॥

---

चतुर्थः पादः॥

## अदितिरदीना देवमाता॥ १ (२२)॥

"अदितिः (४८)"—इति । एतदनवगतम् । "अदीना"—इत्यवगमः । "देवमाता" अभिधेया, ऐतिहासिकपक्षेण, नैरुक्तपक्षेण पुनर्यान्येतस्यामविवक्षमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते एतान्येवादितिशब्देनोच्यन्ते ॥ १ (२२) ॥

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः। विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒-जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ इत्यदिते-र्विभूतिमाचष्ट एनान्यदीनानीति वा । यमेरिरे भृगवः । एरिर इतीर्त्तिकपक्षद्दोऽभ्यस्त ॥ २ (२३) ॥

"अदि॑ति॒र्द्यौः०—०मदि॑ति॒र्जनि॑त्वम्" ( ऋ० मं० १, ६, १६, ५ ) । राहूगणस्य गोतमस्येयमार्षम् । तृतीयसवने सर्वस्तोमेष्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयेषा । 'अदितिः' एव देवमाता 'द्यौः' 'अदितिः' अदितिरेव च 'अन्तरिक्षम्' 'अदितिः' एव 'माता' सर्वभूतनिर्मात्री, 'सः' एव च 'पिता' पालकः, 'सः' एव हि 'पुत्रः' सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात् त्रायते, अथवा सैव निष्ठणाति, सर्वभूतानां यन्निर्वर्त्तव्यं दातव्यमित्यर्थः । येऽपि चैते 'विश्वेदेवाः' सर्वे देवाः, एतेऽपि 'अदितिः' एव । 'पञ्चजनाः' गन्धर्वादयः 'अदितिः' एव । सर्वथापि किं बहुना, यावदेतत् किञ्चित् 'जातं' च 'जनित्वं' च जनिष्यमाणञ्च सर्वमप्येतत् 'अदितिः' एव । एवमनेन मन्त्रेण मन्त्रदृक् "अदितेर्विभूतिमाचष्टे" देवमातुस्तत् सर्वमप्युपपद्यत एव, माहाभाग्याद्देवतायाः । तदुत्तरत्र वक्ष्यामः । एवमैतिहासिकपक्षेण, नैरुक्त-

पक्षेण पुनः "एतानि" द्युलोकादीनि सर्वाणि "अदेवानि" अनुपक्षीणानि इति योज्यम्, न ह्येषां क्षयोऽस्तीति ॥

"एरिरे (५०)"—इति। एतदनवगतम्। "आ ईरिरे" —इत्यवगमः। "यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना। अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति॥"—इति (ऋ० सं० २, २, २, ४)। दीर्घतमस इयमार्षम्। जगती। प्रातरनुवाका-श्विनयोरग्निमारुते च शस्यते। 'यम्' अग्निमाभिमुख्येन ईरितवन्त, प्रेरितवन्त, स्थापितवन्त इति यावत्, आत्माभि-प्रेतार्थसिद्धये 'भृगवः'। 'विश्ववेदस' सर्ववेदस, सर्वस्य वेत्तार, सर्वधन वा। क्व पुन 'एरिरे'? 'नाभा' पृथिव्याः नाभौ अवस्थितम्, उत्तरवेदिमध्यगतायाः पृथिव्या वेद्या उपरि। केन पुनरेरिरे? 'भुवनस्य' उदकस्य 'मज्मना' मननीयेन वीर्य्यणाक्षेन हविर्नेचणेन। किं तस्य? 'तमग्नि' हे यज-मान। त्वमपि 'गीर्भिः' वाग्भि स्तुतिलक्षणाभि. आभिमु-ख्येन स्थित्वा 'हिनुहि' प्रेरय। तस्मिन् तस्मिन् कर्मणि वर्त्तमानमग्निहोत्रादौ, यथा भृगव ईरितवन्त', तथा 'स्वे दमे' स्व एव गृहे, मा कस्यचिदार्त्विज्येऽवस्थित इत्यभिप्रायः। किंलक्षण पुनरग्निमाहिनुहि? 'य एको वस्व.' एक एव यो वसुनो धनस्य दाता। 'वरुणो न' वरुण इव, यथा वरुणः समुद्रान्तर्गताना धनानाम् इष्टे, एव य सर्वस्यैव धनस्य 'राजति' इष्टे इत्यर्थः। राजतिरैश्वर्यकर्मसु पठितः,— "क्षियति (३), राजति (४)"—इति। "एरिरे—इति" "ईर्त्तिः" अय धातुर्गतिकर्मा,—"ईर्त्ते(७८), क्षयति(८१)"—इति गति-कर्मसु पठितम्। स पुनरयमाङोपसर्गेण "उपसृष्टोऽभ्यस्तः" च, पुनः पुनरीरितवन्त इत्यर्थः॥ २ (२३)॥

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु। नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम्॥ अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनं वस्त्रं वस्तेस्तायुरिति स्तेननाम संस्त्यानमस्मिन् पापकमिति नैरुक्तास्तस्यतेर्वा स्यादनुक्रोशन्ति क्षितयः संग्रामेषु भर इति संग्रामनाम भरतेर्वा हरतेर्वा नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितं भवति जस्तमिव श्येनं श्येनः शंसनीयं गच्छति। श्रवश्चाच्छ पशुमच्च यूथम्। श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा यूथं यौतेः समायुतं भवति। इन्धान एनं जरते स्वाधीः। गृणाति मन्दी मन्दतेः स्तुतिकर्मणः। प्र मन्दिने पितुमदर्चता वचः। प्रार्चत मन्दिने पितुमद्वचो गौर्व्याख्यातः ॥ ३ (२४) ॥

"जसुरिः (५।१)"—इति। एतदनवगतम्। "जस्तम्"—इत्यवगमः। "उत स्मैन"—इति निगमः (ऋ० अ० ३, ७, ११, ५)। वामदेवस्यार्षम्। त्रिष्टुप्। दधिक्राव्णो सूक्ते। दधिक्रावा चेन्द्र एव, वायुर्वा मध्यस्थानत्वात्। 'उत स्मैनम्'

अश्वेनमिन्द्रम् 'अनुक्रोशयन्ति' आभिमुख्येन क्रन्दन्ति, आह्वयन्ति । 'चितय' मनुष्या । क्व ? 'भरेषु' सङ्ग्रामेषु । कथं पुनरभिक्रन्दन्ति ? 'वस्त्रमथि न' वस्त्रापहर्त्तारमिव 'तायुम्' यथा केचिज्जना कञ्चिद्वस्त्रापहर्त्तारं तायु दृष्ट्वा कञ्चिदवमाननस्त्राणार्थमभिक्रन्देयु, एवमेतमिन्द्रम् अभिक्रन्दन्ति सङ्ग्रामेषु, परैरभ्यर्थमानास्त्राणार्थमात्मन. । किञ्च, अपि चैन तायु 'नीचायमान' नीचैर्गच्छन्त 'जसुरि न' जसुरिमिव, "जस्तमिव" 'श्येन' बदम, त्रायुतन्तुना य एप याजिक इति प्रसिद्धो राष्ट्रम, स हि बद्धत्वादुत्पतितुमत्यर्थ न शक्नोति, नीचैरेव गच्छति, गत्वा च शशकादीनि हिनस्ति सत्त्वानि । स यथा जनैरभिक्रन्यन्ते, तथा चैनमभिक्रन्दति । आह,— वमर्थमभिसन्धाय ? इति । उच्यते,—'श्रवश्च अच्छ' कीर्त्तिश्चाभिसन्धाय, कथ नाम यूयेमहि ? प्रमस्येमहि जितमेभिरित्येतमर्थमभिसन्धाय । 'पशुमच्च यूथम्' अनेकपशुजातिसयुक्त पशुयूथमभिसन्धायैतदस्माक स्यादित्येवमभिक्रन्दतीत्येष ममस्तार्थ ॥

अथैकपदनिरुक्तम् ।—"वस वस्ते" आच्छादनार्थस्य (अदा० आ०), तदनाच्छाद्यते । "तायुरिति"—एतत् "स्तेननाम" "सस्त्यान" महतम् "अस्मिन पापक" भवति "इति" पर "नैरुक्ता" मन्यन्ते । "तस्यते वा स्यात्" सयार्थस्य (दि० प०), उपचीयो ह्यसौ भवति, अधार्मिकत्वात्, परलोकमनपेक्ष्य कल्पयति कर्माणि। चितयो मनुष्या । "भर इति सङ्ग्रामनाम" भ्रियन्ते तस्मिन् योद्धार "हरते वा" ह्रियन्ते हि तस्मिन जीवितानि वसूनि च । "श्येन शसनीय गच्छति" शीघ्रत्वात । "यूथ यौते" तद्धि "समायुत भवति" एकत्र मिश्रीभूत स्त्रीपुरुषबालवृद्ध पशुभि । एवमिह नीचाय-

मार्गे श्येनमित्यनेन मन्त्रभागमुरिर्वेति इत्युपपद्यते न ह्यत्र श्येनो नोचैरयते ॥

"जरते (५२)"—इति। एतदनवगतम्। धातोरस्यार्थे प्रवृत्तिरेवानवगमः। "दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥"—इति (ऋ० सं० ७, ८, २८, १)। वत्सप्रीर्भालन्दनः, तस्येयमार्षम्। उक्थ्यस्याग्नेरुपस्थाने विनियुक्ता। 'दिवस्परि' 'दिवः' द्युलोकादित्यर्थः। 'प्रथमम्' अयम् 'अग्निः' 'जज्ञे' आदित्यात्मना। 'द्वितीयम्' 'अस्मत् परि' अस्मदधि, अस्मत्तो जायते, पार्थिवात्मना। 'तृतीयम्' 'अप्सु' अन्तरिक्षलोके वैद्युतात्मना जायते। "आपः"—इति अन्तरिक्षनामसु पठितम्। नृणां मनस्यवस्थितेः 'नृमणाः' नृषु वा मनोऽस्य, स नृमणाः। योऽयमेक एव त्रिषु स्थानेषु जायते, तमेवङ्गुणयुक्तं 'स्वाधीः' शोभनधीः 'इन्धानः' 'अजस्रं' नित्यं 'जरते' स्तौति, यः, स एव 'स्वाधीः' सुप्रज्ञ इत्यर्थः। इन्धानो हि किमन्यत् स्तुतेः कुर्यात्? तस्मात् "जरते"—इत्यस्य शब्दस्य "गृणाति"—इत्ययं उपपद्यते॥

"मन्दिने (५३)"—इति। एतदनवगतम्। "मन्दते" स्तुत्यर्थस्य। मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः। "मन्दति (१८), शंसति (२५)"—इति स्तुतिकर्मसु पठितम्। "प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना। अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे॥"—इति (ऋ० सं० १, ७, १२, १)। कुत्सस्येयमार्षम्। छन्दोमेषु तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैषा। हे स्तोतारः! 'प्रार्चत' प्रकर्षेणार्चयत, पूजयत। 'मन्दिने'

मन्दनीयाय, स्तुत्याय, स्तुतिमते वा, इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? उदकं मेघस्य गर्भभूता अपः 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवार्वाचितो लक्ष्ये यः स्वनति गच्छति इति ऋजिश्वा वज्र', तेन निरगमयत्। 'अवस्यवः' अवनमात्मनो रक्षणमिच्छन्त', तर्पणं वा। योऽयमेवम्प्रभाव इन्द्र', तमिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं, वज्रबाहुम्, 'मरुत्वन्त'' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत'—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते॥

"गोः (५४)"—इति। एतदनेकार्थत्वादिह समाम्नातम्। यथा चैतदनेकार्थत्वं तथा पुरस्तात् "व्याख्यातम्"॥ ३ (२४)॥

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे गातुर्व्याख्यातः (गातुं कृणवन्नुषसो जनायेत्यपि निगमो भवति) दंसयः कर्माणि दंसयन्त्येनानि। कृत्साय मन्मन्नह्यश्च दंसय इत्यपि निगमो भवति। स तुताव नैनमश्नोत्यंहतिः। स तुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद्विपरीतात्। बृहस्पते

चयस इत्पियारुम् । बृहस्पते यच्चातयसि देवपीयुं पीयतिर्हिंसाकर्मा वियुते द्यावापृथिव्यौ वियवनात् । समान्या वियुते दूरे अन्ते । समानं सम्मानमात्रं भवति मात्रा मानाद्दूरं व्याख्यातमन्तोऽततेर्ऋधगिति पृथग्भावस्य प्रवचनं भवत्यथाप्युभ्नोत्यर्थे दृश्यते । ऋधगया ऋधगुताशमिष्ठाः । ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति चास्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम् अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व (श्रवस्यतामजाश्व) ॥ अस्यै नः सातय उपभवाहेळमानोऽक्रुध्यन्ररिवान्रातिरभ्यस्तोऽजाश्वेति पूषणमाहाजाश्वाजा अजना अथानुदात्तम् । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् । दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतं शरच्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति वाऽस्येत्यस्या इत्येतेन व्याख्यातम् ॥ ४ (२५) ॥

यत्तूक्तम्, "यथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, •—• सोऽपि गौरित्युच्यते,—'अत्राह गोरमन्वतेति' तदुपरिष्टाद्व्याख्यास्यामः"—इति, तदिदमुच्यते,—"अत्रा ह"

मन्दनीयाय, स्तुत्याय, स्तुतिमते वा, इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? कृष्णं मेघस्य गर्भभूता अप. 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवावच्छिन्नो लक्ष्ये यः श्वनति गच्छति इति ऋजिश्वा वज्र, तेन निरगमयत्। 'अवस्यव' अवनमात्मनो रक्षणमिच्छन्त', तर्पणं वा। योऽयमेवम्भाव इन्द्र, तमिम 'वृषण' वर्षितारम्, 'वज्रदक्षिणं, वज्रबाहुम्, 'मरुत्वन्त' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत"—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते॥

"गौ' (५४)"—इति। एतदनेकार्थत्वादिह समाम्नातम्। यथा चैतदनेकार्थत्वं तथा पुरस्तात् "व्याख्यातम्"। २ (२४)॥

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे गातुर्व्याख्यातः (गातुं कृणवन्नुषसो जनायेत्यपि निगमो भवति) दंसयः कर्माणि दंसयन्त्येनानि। कुत्साय मन्मन्नह्यश्च दंसय इत्यपि निगमो भवति। स तूताव नैनमश्नोत्यंहतिः। स तुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद्विपरीतात्। बृहस्पते

चयंसु इत्यियारुम्। बृहस्पते यच्चातवसि देव-
पीयुं पीयतिर्हिंसाकर्मा वियुते द्यावापृथिव्यौ
वियवनात्। समान्या वियुते दूरे अन्ते।
समानं सम्मानमात्रं भवति मात्रा मानाद् दूरं
व्याख्यातमन्तोऽततेरृधगिति पृथग्भावस्य प्रव-
चनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते। ऋधगया
ऋधगुताशमिष्ठाः। ऋध्नुवन्नयाक्षीरृध्नुवन्नश-
मिष्ठा इति चास्या इति चास्येति चोदात्तं
प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्त-
मल्पीयोऽर्थतरमनुदात्तम् अस्मा ऊ षु ण
उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व
(अश्वस्तामजाश्व)॥ अस्मै नः सातये उपभ-
वाहेळमानोऽक्रुध्यन्नरिवान् रातिरश्वस्तोऽजाश्वेति
पूषणं सा हाजाश्वाजा अजना अथानुदात्तम्।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्।
दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतं शर-
च्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति
वाऽस्येत्यस्या इत्येतेन व्याख्यातम्॥ ४ (२५)॥

यत्तूक्तम्,—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते,
——० सोऽपि गौरित्युच्यते,—'अत्राह गोरमन्वतेति' तदु-
परिष्टाद्व्याख्यास्यामः"—इति, तदिदमुच्यते,—"अत्रा ह"

—इति। गौतमस्य राहुगणस्येयमार्षम्। अग्निचयने स्वर्केोपधाने विनियुक्ता। 'अत्रा ह' अत्रैव, एतस्मिंश्चन्द्रमण्डले 'गो.' सुषुम्नस्यैकस्य सूर्यरश्मेः, इतरे सूर्यरश्मयः 'अमन्वत' अमन्यन्त, समनुज्ञातवन्त इत्यर्थः। किं पुनस्तत् सममन्यन्त 'नाम' नमनं प्रह्वणमवस्थानमित्यर्थः। कुतः? 'त्वष्टुः' आदित्यस्य स्वभूता रश्मयः सममन्यन्त। कथं तस्य नमनं तत् सममन्यन्त? इति 'अपीच्यम्' "अपगत" तत्रैव चन्द्रमण्डलेऽन्तःप्रविष्टस्य यदवस्थानान्तरं तत् सममन्यन्त। अथवा अपीच्यमिति "अप" एत्य सूर्यमण्डलात् चन्द्रमण्डले "चितम्" अपीच्यम्। अथवा अपीच्यम् "अन्तर्हितम्" इत्यर्थः, "प्रतीच्यम् (५), अपीच्यम् (६)"—इति अन्तर्हितनामसु पठितम्। क्व पुनरन्तर्हितस्यान्यत्रावस्थानम्? इति 'इत्था चन्द्रमसो गृहे' अमुष्मिंश्चन्द्रमण्डले इत्यर्थः॥

"गातुः (५५)"—इति। "व्याख्यातः" "गमम यज्ञपतये" —इत्यत्र॥

"दंसयः (५६)"—इति। एतदनेकेषां कर्मणां अभिधानम्। तानि हि दंसयन्त्युपचयन्ति कर्मकाराः। "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम्। यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः॥"—इति (ऋ० सं० ८, ७, २६, १)। अङ्गिरसस्येयमार्षम्। हे 'इन्द्र' 'तव' 'त्ये' 'वह्नयः' वोढारोऽश्वाः, 'सख्येषु' समानख्यानेषु कर्मसु वर्तमानाः, इदमेव हि भवतः कर्म, मेघो विदारयितव्य इति, एतदेव तेषामपि समानख्यानत्वम्। 'ऋतम्' उदकमस्मिन्नस्तीति, एवमेतं 'मन्वाना.'। किमकुर्वन्? 'व्यदर्दिरु.' विदारितवन्तः 'वल' मेघं काले काले। 'यत्र' यस्मिन् मेघे विदारिते 'दशस्यन्' दशस्यन्ति 'उषस.'

माध्यमिकाः एकस्या एव पूजनार्थं बहुवचनम्। किं दयन्त्यन्? 'अप.' 'क्षयः च' अन्तरिक्षनिवासिन्य, मेघनिवासिनीरित्यर्थः। ताश्च दीर्य्यमाणाः 'रिणन्' आगच्छन्, पृथिवीलोकम्। तदेतत् सर्वमपि युष्मदर्थे क्रियते। किं पुनरर्थमुद्दिश्य त एव कुर्वन्ति? 'मन्वन्' मन्यमानाः, 'कुलाय' पृथिवीं कृन्तते, कर्षीवलाय, 'दसयः' कृषिकर्माणि सफलानि कर्त्तुम्। अत्र 'दसयः'—इत्येतेन शब्देन "कर्माणि" उक्तानि। दासैः कर्मकरैः, 'दस्यन्ते'—इति कृत्वा कर्मकरा दासा इति। बाहुल्याद् भाष्यकारेण नोदाहृतः॥

"तूताव(५७)"—इति। एतदनवगतम्। "तूताव" इत्यवगमः। "यस्मै त्वं मा यजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम्। स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव॥"—इति (ऋ० सं० १, ६, ३०, २)। कुत्सस्येयमार्षम्। महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। हे भगवन्! 'अग्ने!' 'यस्मै' यजमानाय 'त्वम्' 'आ' आहूय 'यजसे' देवान्, होतृत्वेऽवस्थितः। 'स' एव 'साधति' 'साधयत्यात्मनोऽभिप्रेतार्थम्। किञ्च, स एव 'अनर्वा' अप्रत्यृतः, अनाश्रितः कञ्चिदन्यम्, स्वेनैव महिमायुक्तः। 'क्षेति' निवसति, युष्मदनुग्रहात्। स एव 'दधते' धारयते 'सुवीर्य्यं' शोभनमात्मनो वीर्य्यम्। स एव 'तूताव' वर्द्धते, प्रजाधनयशोभिः, 'न' च 'एनम्' 'अंहतिः' अपि पापमपि सम् "अश्नोति" आप्नोति। हे भगवन्नग्ने! यः त्वमेवमतिमहानुभाव, तस्य 'तव' 'वय' 'सख्ये' सखिभावे, परिचरणकर्मणि वर्त्तमानाः 'मा रिषाम' मा केनचिद्धिंस्येमहि॥ एवमयमत्र "तूताव" —इति शब्दः 'यस्मै त्वमा यजसे'—इत्येवमादीनां पदानां मध्ये श्रूयमाणो वृद्ध्यर्थमुपपद्यते॥ "मंहतिय अहय मंहुय"

—इत्येते शब्दा "हन्ते" "निरुद्धोपधात् विपरीतात्" भकारमुपधातीर्निष्कृष्यादौ कृत्वा, ततो हकारनकारौ विपर्य्ययेण भवत ॥

"चयसे (५८)"—इति। एतदनवगतम्। "चातयसि"—इत्यर्थप्रतीतिः। "ये त्वा देवोस्रिक मन्यमाना पापा भद्र मुपजीवन्ति पज्राः। न दूढ्ये अनुददामि वामं बृहस्पते चयस इत् पियारुम्॥"—इति (ऋ० सं० २, ५, १२, ५)। अगस्त्यस्य मैत्रावरुणस्यैयमार्षम्। हे 'बृहस्पते।' 'देव' दानादिगुणयुक्त। 'ये' यजमाना त्वाम् 'उस्रिकम्' उत्सृष्ट-विषभोगाना 'मन्यमाना' दातैव केवल भोगानाम, अथ मार्जवेन न प्रत्युपकारार्थोऽयेव मन्यमाना, 'पापा' अप्रत्युपचिकीर्षव 'उपजीवन्ति' एव केवल, न क्रियया प्रत्युपकार कुर्वन्ति, 'भद्र' भन्दनीय स्तुत्यम अपि च 'पज्रा' प्राजित धना सन्त, न दरिद्रा। किं तेभ्य? इति 'न दूढ्ये' न तेभ्य एवलक्षणेभ्य, दुर्धीभ्य, पापबुद्धिभ्य, स्वार्थप्रधानेभ्यः त्वम 'अनुददामि' 'वाम' वननीय धनम्। किं तर्हि? यस्मादृशो जन' 'पियारु' देवपीयु, देवद्विमिता, स्वभोग प्रधान न यष्टा देवानाम्, त 'चयसे' "चातयसि" नाशयसि। य एव श्रद्धानो यष्टा, तस्मै देवान् यजते अनुददामि वामम, यस्मात् त्वमेव करोषि, तस्मात् ते पापबुद्धय त्वा मन्यन्ते न पश्यन्तीत्यभिप्राय। यो हि दुर्बुद्धि देवपियारु तस्य किम न्यत् चातनादृते स्यात्? चात्य एवासौ॥ तस्मात् 'चयसे'—इत्येष शब्दः, "चतयति" नाशने इत्येवमवस्थापिते नाश नार्थो भवतीत्युपपद्यते, "चातयतिर्नाशने"—इति हि वक्ष्यति। लोकेऽपि च प्रसिद्ध देशाद्दुश्चातित इति। तस्मादुपपद्यते॥

"वियुते (५९)"—इत्ये तदेकमेव समस्तयोर्द्यौरपि यावा

पृथिव्योरभिधानम् । "वियवनात्"—इति निर्वचनम् । यौतिर्मिश्रणार्थं ( अदा० प० ) तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति, विमिश्रीभूते इत्यर्थः । "इमे वै सहास्तां ते व्यस्यामाव व्यैतामिति ह विज्ञायते" । "समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके । उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥"—इति (ऋ० सं० ३, ३, २५, ७)। विश्वामित्रस्येयमार्षम् । वैश्वदेवे सूक्ते । 'समान्या' समान्यावेते द्यावापृथिव्यौ, समानपरिमाणे । 'वियुते' च विमिश्रीभूते । 'दूरे अन्ते' च, न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति । 'ध्रुवे पदे' सप्तम्येकवचनम्, अन्तरिक्षविषयम्, ध्रुव शाश्वतम्, एतस्मिन् पदे आधारभूते, अन्तरिक्षस्य क्षयो नास्ति, प्रतिद्वन्द्वाभावात्, तच्चैतयोर्द्यावापृथिव्यो प्रतिष्ठा, तस्मिन्नेते 'तस्थतु' स्थितवत्यौ । सर्गादारभ्य 'जागरूके' जागरणशीले, स्व स्वमधिकारं प्रति । 'उत' अपि चैते 'स्वसारौ' भगिन्यौ, सहोत्पन्नत्वात । 'युवतीभवन्तो' सम्मिश्रीभवन्त्यौ, अन्योन्यसंयोगेन । 'आद् उ ब्रुवाते मिथुनानि नाम' इति । अथैवमेते 'वियुते' च सम्मिश्रीभूते च सत्यौ, द्यावापृथिव्यौ, ब्रुवाते इव, प्रथयत इव, स्तोतृणा 'नाम' नामानि, आत्मन 'मिथुनानि' द्विवचनसम्बद्धानि स्तुतिनामभि,—"स्वधे (१), पुरन्धी (२)"—इत्येवमादिभिरिति ॥ एवमेतस्मिन् मन्त्रे 'वियुते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्, द्यावापृथिवीशब्दस्यात्राध्याहार्य्य, 'दूरे अन्ते'—इत्येवमादीनां तद्योपपत्तिदर्शनात् ॥

"ऋधक् (६०)"—इति । अनेकार्थम् । "ऋधगिति पृथग्भावस्य प्रवचनं भवति" पृथक्त्वमेव पृथग्भावः, तस्येद प्रवचनं भवति, सोऽनेन प्रोच्यते इत्यर्थः । "यदिन्द्र दिवि पार्य्ये यदृ-

भुग् यद्वा स्वे सदने यत्र वासि। अतो नो यज्ञमवसे नियुत्वान् सजोषाः पाहि गिर्वणो मरुद्भिः॥"—इति (ऋ० सं० ४, ७, १२, ५)। भरद्वाजस्यार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निविद्धानीये सूक्ते शस्यते। 'हे भगवन्! 'इन्द्र!' 'यत्' यदि त्वं 'दिवि' द्युलोके 'पार्य्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् पृथगिव इत्यर्थः। 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽवस्थितः। 'यत्र वासि' क्वचिदन्यत्रैव स्थानेऽवस्थितः, को हि तत्त्वतो वेद, तव स्थानं यत्रासीति। किं बहुना, यत्र यत्रासि अवस्थितः, 'अतः' आगत्य 'यज्ञम्' 'अवसे' रक्षसि। 'नियुत्वान्' वायुर्भूत्वा। यस्त्वमेवंप्रभावः, त्वा तु ब्रवीमि,—हे 'गिर्वणः' गीर्भिः सम्भजित। स हि स्तुतीः सम्भजति, स्तुतिभिर्वा सम्भज्यते, 'सजोषाः', सहजोषणः सप्रीतिः, 'मरुद्भिः' पिबेतं सोममस्मत्प्रत्तम्। एवमिके पृथग्भावोदाहरणमेतामृचं व्याचक्षते॥

अपरे पुनरयं एवैष भाष्यकारेण निगमः पठितः,—"ऋधगया"—इति, यद्येवैतौ द्वावप्यर्थाविति मन्यन्ते, तथापि दर्शयितव्यामस्त्यामेवर्चि "अयापि" अयमेवमृधगिति शब्दः कदाचित् "ऋध्नोत्यर्थे" अपि "दृश्यते"—"ऋधगया ऋधगुताशमिष्ठाः" इत्यस्मिन् मन्त्रे। "वय हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह। ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान् स्वाहा॥"—इति (य० वा० स० ८, २०)। समिष्टयजुःषु सौमिकेषु विनियुक्ता। तत्र चोक्तम्, —"एतौ विश्वामित्रौ यज्ञस्यारणी अपश्यत्"—इति। हे भगवन्। 'अग्ने!' 'यत्' प्रयोजनमुद्दिश्य 'अद्य' 'प्रयति' मोक्ष्यति एतस्मिन् 'यज्ञे' 'वयम्' 'अवृणीमहि' वृतवन्तः 'होतारं' त्वाम्। "अग्निर्दैवो दैव्यो होता"—इति श्रूयते।

किं पुनस्तत् प्रयोजनम् ? इति। कथं नामाल्पमप्यवदान-मात्रं हुतं देवतातृप्तिसमर्थं बहु कुर्य्यादयान्तमपि च यद् विगुणं यज्ञस्य किञ्चित् तत्क्षमयित्वा सम्हमेव कुर्य्यात् ? इति, तच्चोभयमपि यथाशास्त्रमेवास्माकं त्वया कृतम्, अत इदानीं परिसमाप्ते एतस्मिन् यज्ञे प्रत्यभाषमे अस्माभिः,— 'ऋधगयाः' त्वम्, अल्पमपि हुतम् अस्माभिः हविः, 'अयक्' एव ऋद्धमेव, देवतातृप्तिसमर्थं बहु कुर्वन् 'अयाः' त्वं यागम-कार्षीरित्यर्थः। किञ्च, 'ऋधगुताशमिष्ठाः' अपि च यदपि किञ्चिद्विगुणम् अकार्ष, वयमेतस्मिन् यज्ञे, तदपि सर्वमेव सम्हद्ध सगुणमेव कुर्वन्, पापमस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि। यस्त्वमेतदकार्षीरस्माकमेतस्मिन् यज्ञे, तं, त्वां ब्रवीमि,—एतदेव मयैतेपा कर्त्तव्यमित्येतत् 'विद्वान्' 'प्रजानन्' प्रकर्षेण जानन् अस्माकमात्मन उपरि भक्तिं पुनः पुनः 'उपयाहि' उपागच्छ 'यज्ञम्' ॥ एवं तावदेकेषाम् "ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि "ऋधक्"-शब्दौ ऋध्नोत्यर्थाविव। एतस्मिन्नर्थे, ऋधक्छब्दस्य पृथग्भावार्थत्वे "यदिन्द्र दिवि पार्य्ये यदृधक्"—इत्येतदुदाहरणम्। अन्ये पुनर्मन्यन्ते,—"ऋधगया, ऋधगुताशमिष्ठाः"—इत्येतयोरेव ऋधक्छब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति। तदेतदुपपद्यते, मिथ्याण्यपि हवींषि हुतानि सन्ति, त्वमग्ने ऋधक् पृथगेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः। 'ऋधगुताशमिष्ठाः'—इत्येष यथाव्याख्यात एव। पूर्वस्त्वर्थः साधीयान्, यत उभयत्रेनावृध्नोत्यर्थावेव,—"ऋधगया" "ऋधगुताशमिष्ठा"—इति। किं कारणम् ? "यथाप्यृध्नोत्यर्थे इष्यते" —इति एवमुपक्रम्य भाष्यकारेण ततोऽयमुपात्तो निगमः,—

"अर्थगया अर्थगुणार्थमिष्टा,"—इति, एवञ्च, निरुक्तम्—"अन्न वयाश्चोऽर्थ वरार्थमिष्टाः"—इति। तस्मात् भाव-क्षेनाहमीत्यर्थोऽवित्त तदेव साधीयः॥

"अस्याः (६१)"—इति, "अस्य (६२)"—इति च। पद-द्वय स्त्रीपुंसविषयम्, स्वरकृतात् विशेषात् प्रधानाभिधायि वा भवति। आह,—कथम्? इति उच्यते,—"उदात्तं प्रथमा-देशे"। प्रथम इति मुख्यनाम, मुख्यं प्रधान उच्यते, प्रधानं कञ्चिदर्थमभिदधत् एतद् द्वयमुदात्तं भवति। "अनुदात्त-मन्वादेशे"। प्रधानमर्थमनु यो वर्त्तते गुणभावेन तस्मैतत् पदद्वयमन्वादेशे वर्त्तमानमनुदात्तं भवति। आह,—कस्मा-देतत् पुनरुदात्तं प्रधाने वर्त्तमानमनुदात्तमप्रधाने? इति। उच्यते,—लोकेऽपि हि यत् "तीव्रार्थतरम्" उक्तृष्टार्थप्रधान-तरं तत् "उदात्तम्"—इति प्रसिद्धम्, तद्यथा,—उदात्तमेतत् कुलमिति। "अल्पीयोऽर्थतरमनुदात्तम्" अल्पीयसार्थेन यद्युक्तं भवति तदनुदात्तमुच्यते, अप्रधानमित्यर्थः। उदाहरणैरेवा-नयोर्विभागं दर्शयति,—"अस्या ऊ षु ण उप सातये भुवोऽ-हेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व। ओषु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः न हि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे॥"—इति (ऋ॰ सं॰ २, २, २, ४)। पदच्छेपस्यार्षम्। अतिच्छन्दा। 'ऊ'—इति, 'षु'—इति, 'णः'—इति पदानि। 'अस्याः' "अस्यै" 'सातये' लब्धये। कथं नाम वयमर्थमभिप्रेतं लभेमहि? इत्येतमर्थमुद्दिश्य, हे 'पूषन!' अस्माकं सुष्ठु 'उप' समीपे 'भुवः' भव। त्वयि सन्निकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः। कथं पुन-रुपभव? 'अहेळमानः' अक्रुध्यन्, सर्वो ह्याभ्यर्थ्यमानः क्रुध्य-तीत्यभिप्रायः। 'ररिवान्' दानवान्, दानाभिप्रायसयुक्तेन

चेतसा उपभव। 'अजाश्व' "अजनाश्व" गमनाश्व, छागाश्व वा 'श्रवस्यताम्' अस्माकं धनमिच्छतां भव, "अजनाश्व" छागाश्वेत्यर्थः। किञ्च, 'ओषु त्वा वहतीमहि'। 'आ' 'उ' 'सु'—इति पदानि। 'आ वहतीमहि' त्वां सुष्ठु आभिमुख्येन आत्मनो वर्त्तयामहे। केन? 'स्तोमेभिः' स्तोत्रैः। 'स्तोत्रैः। 'दस्म' हे दस्म! दर्शनीय! अथवा दान्त! साधुभिः शोभनैरित्यर्थः। किञ्च, 'न हि त्वा' नैव त्वां दर्शनीयम् अतीत्य साधुतरां कञ्चिदप्यन्यामहं देवतां मन्ये, हे 'आघृणे' आगतदीप्ते! त्वन्नन्न एवाहमस्मीत्यभिप्रायः। किञ्च, 'न ते' न चाहं तव 'सख्यं' सखिभावं कदाचिदपि 'अपह्नुवे' कृतघ्नो न्वहमित्यभिप्रायः। एवमथ साति: प्रधानेति कृत्वा "अस्याः"—इत्येतत् पदमन्तोदात्तम्। अन्तोदात्तमपि च यदुदात्तमित्युक्तं भाष्यकारेण, एकदेशस्योदात्तत्वात्॥

"अथ" पुनर्यस्मिन् "अनुदात्तम्" एतत् पदं गुणभूतार्थाभिधायि भवति। तस्यैव निगमः,—"पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्॥"—इति (ऋ० सं० ८, ३, २७, ४)। सूर्याया आर्षम्। विवाहे विनियुक्ता। पित्रा पूर्वमेतां दत्तां सती कन्यां पत्नीं पुनरग्निरदात्, 'आयुषा सह वर्चसा' तेन सह एतस्मिन् वैवाह्निके कर्मणि अग्निसन्निधिसंस्काराद् भार्यात्वमुपजायते इत्येतदपेक्ष्य पूर्वदानात् पुनर्दातृत्वमुच्यते। तदेवमस्या दत्ताया एतदाशास्महे,—'योऽस्याः पतिः' सः 'दीर्घायुः' अस्त्विति। यतो विशेषयन् ब्रवीमि,—"जीवतु सः शरदः शतम्"—इति। शरदि दुर्जीवाः, रोगभूयस्त्वात्, अतएव आशास्यते शरच्छतं जीवत्विति॥ एतस्मिन् मन्त्रे भर्तृकन्यासंयोगे सति भर्त्तैव प्रधानम्, तस्य ह्यायुराशास्यते। तस्य

लक्षणार्था पञ्चमी। तस्मात् "दीर्घायुः अस्या य पतिः"—इति, एतदनुदात्तम् ॥

निगमप्रसक्तमुच्यते,—"शरत्" "अस्यां" हि "शृताः" पक्वाः "ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा" वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्य्यन्ते। "अस्य—इति" एतत पद पुंविषयम् षष्ठ्यन्तं "अस्याः—इत्येतेन" स्त्रीविषयेण पदेनैव "व्याख्यातम्" ॥ ४ (२५) ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम्॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ताः सङ्ख्या सप्तादित्यरश्मय इति वदन्ति ॥५ (२६)॥

यदेवोक्तम "उदात्त प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्षणमित्यभिप्राय.। उदाहरणमात्र प्रदर्श्यते,—"अस्य वामस्य०—० सप्तपुत्रम्"। अस्यवामीयमेवेदं सूक्तम। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्ते शस्यते। 'अस्य' सूर्य्यस्य 'वामस्य' "वननीयस्य" स्तुतिभि, 'पलितस्य' "पालयितु" अयं हि सर्व-

मेवेदं जगत् पालयति। 'होतुः' "ह्वातव्यस्य" आह्वाना-र्हस्य। आह,—तस्य किम्? इति। उच्यते,—योऽय-मेवलक्षणः 'तस्य' 'भ्राता' "भागहर्त्ता" "भर्त्तव्यो वा" इट-केन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते। कतमः? योऽयम् 'अश्नः' "अशनः" व्यापनो वायुस्तिर्यः, स हि द्युलो-कादादित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हविर्भागहर्त्ता वा, ऐन्द्राग्ने हविषि संस्तुतौ वा 'घृतपृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथिवीस्थानः। 'सप्तसिपुः' वायोः, सर्वस्माद्धि वायुः बलवान्। अथवा सहस्रमस्य नियुत-मश्वानामस्तीति सहस्री वायुः, "आ नो नियुद्भिः शतिनीभि-रध्वर सहस्रिणीभिः"—इति (ऋ० सं० २, १, २४, ३)। श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परि-संख्याय वायोस्तृतीयोऽग्निर्भवति, वायुरपि च ज्योतिरेव, "वायुना ज्योतिषा"—इति विज्ञायते। तदेतस्मिन् त्रेधा विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहमपश्यमिति। 'विश्-पतिं' विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम्? य एषः 'सप्तपुत्रः' सूर्य्य एतमेवाहमत्र प्रधानेनापश्यमित्येवमेत-स्मिन् मन्त्रे सूर्य्यः प्रधानः, सूक्ते सूर्य्याधिकारात्, तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः। वायुरत्राप्रधानम्, तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इत्येषः "अस्य"—शब्दोऽनुदात्तः॥ एवमेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविष-यावित्येकमेवोदाहरणम्॥

आह,—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य"-शब्देन सूर्य्य एव कस्मान्न सम्बध्यते? अपि च "तृतीय"-शब्दस्य

प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति। उच्यते,—'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्त्त् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इति प्रधानरूपमेव सत् पूर्वेणानुदात्तमिति स्वरकृतादिविशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते वायुस्त्वप्रधान', प्रकृतादादित्यात् तस्माद्वायुविषयमेवेदम् अस्येति द्वितीयपदमनुदात्तं सम्पद्यते। अतः सुतरामुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे"—इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतरमुदात्तत्वेनैव लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ॰ सं॰ २, २, २, ४)" "अस्य वामस्य (ऋ॰ सं॰ २, ३, १४, १)"—इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेश', तत्र वर्त्तमानमनुदात्तं भवति। पदात् पदस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते। तथानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ॰ सं॰ ८, ३, २७, ४)" "तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ॰ सं॰ २, ३, १४, १)"—इति।

आह,—कथं सप्तमपुत्र आदित्यः? इति। उच्यते,—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितरमण्डमवापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इति ह विज्ञायते"। अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्रा', तेनासौ सप्तपुत्रः। अथवा नैव संख्याभिप्रायमेतत् सप्तपुत्र इति। आह,—कथं तर्हि? इति। उच्यते,—"सर्पणपुत्रमिति" एवम्, सर्पणा हि तस्य रश्मयो

मुहूर्त्तमप्यनवस्थायिनी यस्य पुत्रा सोऽयं सप्तपुत्र । "सप्त स्वसा सख्या"; षड्भ्य सकाशात् । एव सप्तसख्योपेता, सर्पणक्रियायोग्या वा एत एव "आदित्यरश्मय" आदित्यस्य पुत्रा "इति" मन्त्रविद "वदन्ति" मन्यन्ते ॥ ५ (२६) ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं चक्रं चक्रतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्य, सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषय: स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् सम्वत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतु: संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सर. संवसन्तेऽस्मिन् भूतानि ग्रीष्मा ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभि: स्तौति पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तुतया पञ्चर्त्तव: संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयो: समासेन पलर

आहुरर्पितमिति यद्वृतुतया अराः प्रत्यृता नाभौ षट् पुनः सुहर्तैः । द्वादशारं नहि तज्जराय । द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् प्रधिः प्रहितो भवति । तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः । षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन । सप्त शतानि विंशतिश्च तस्थुः । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन ॥ ६ ॥

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥

यथा चाय सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेवार्थे “सप्त युञ्जन्ति ०—० अधि तस्थु”—इति (ऋ० सं० २, ३, १४, २) । ‘सप्त’सङ्ख्योपेता सर्पणा वा ‘युञ्जन्ति’ योजयन्त्यात्मना रश्मय ‘रथ’ रंहणमादित्यम्, तथैवेव ह्यसावादित्यो रश्मिभि युज्यते, रंहणशालो मुहूर्त्तमप्यनवस्थायित्वात् । ‘एकचक्रम्’ एक एव ह्यसावन्तरिक्षे चरति, इतराणि ज्योतींषि नाश्नुवन्त्येव स्वेन तेजसा प्रकाशेन । ‘एकोऽश्व’ एक एवाश्व, अशनो व्यापन. सर्वभूतानाम् ‘वहति’ गच्छति ‘सप्तनामा’ सप्तस्तुतिः, सप्तपुत्र —इत्येवमाद्या सप्तसङ्ख्याका स्तुतयोऽस्य । अथवा “सप्तास्मै रश्मयो रसानभिसन्नामयन्ति”—एतस्मिन् सप्तके, इति सप्तनामा । अथवा

"सतेनम्रमय. (नमन्ति) स्तुवन्ति इति" सतनामा। "इद-मपीतरत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि समर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभि-मुख्येन सन्नमति। स एवंलक्षणः सप्तचारी व्यापनः सप्त-नामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादा-रभ्य यावदस्तमिति, तदेवं वहन् निर्वर्त्तयन्तीति। उच्यते, —'त्रिनाभिचक्रमजरमनर्वम्' त्रिनाभिसंयुक्तं कालचक्रम्, चक-नधर्मि, चकन चलनमुच्यते, चरणधर्मि, क्रमणधर्मि वा। 'अजरम्' "अजरणधर्माणम्"। 'अनर्वम्' "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। 'त्रिनाभिचक्र' "त्र्यृतुः" हि "संवत्सर" —"ग्रीष्मो वर्षा हेमन्त इति" अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि सवत्सरो नह्यते सन्नह्यते इत्यर्थः। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" नादित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः। "ग्रीष्म', ग्रस्यन्तेऽस्मिन् रसा" सूर्येण। "वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव। "हेमन्त', हिमवान्" तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्यो-षधिवनस्पतीन् प्रकिरति, "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्ते', तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् सवत्सरचक्रम् अजरणधर्मि, न हि संवत्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृ-तम्" अप्रतिगतमनाश्रितमन्यत्र क्वचित्। आह,—यत्र किम्? इति। उच्यते,—"यत्र" यस्मिन् 'इमा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभि-सन्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति। विनाशोऽपि

हि सञ्चोच्यते, संस्थित. पिता मन्येत्युक्तो न्न दति गम्यते। तदेवलचणं 'विनाभि' कालचक्रमजरम्,' य आदित्योऽभिनिवर्त्तयति, यच्चेदमभिनिर्वर्त्त्यते कालचक्रम्, तदेतदुभयमप्यत्र स्तोमीत्येवमस्य मन्त्रस्य पूर्वार्द्धर्चं आदित्यप्रधानः, उत्तर. संवत्सरप्रधानः ॥

आह,—कथ गम्यते संवत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न हि सवत्सरग्रहणमत्रास्ति ? उच्यते,—'विनाभिचक्रम्'—इत्येतस्मादनुसम्बन्धात्। आह,—एतदपि विशेषलिङ्गमत्र नास्त्येव, तथ ऋतवो नाभिशब्देनोच्यन्ते इति ? तस्मादितदप्ययुक्तमेवेति। उच्यते,—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्य्येणाभिनिर्वर्त्त्यते सवत्सरः, यस्मिन सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एतं "सवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत् 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वं. यत्र यत्र, 'पञ्चारे चक्रे' 'षडरे' 'त्रीणि शतानि षष्टिश्च' 'सप्तशतानि विंशतिश्च'—इत्येवम्प्रकारैः "स्तौति"। तस्मात् सूक्ते सवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। पश्चाद्यतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्। यथैवमुक्ता "तं सवत्सर सर्वमात्राभिः स्तौति" अधुना यथैत सर्वमात्राभि. स्तौति, तथोपपादयति,—"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाचस्तप्यते भूरिभार: सनादेव न शीर्य्यते, स नाभिः॥"—इति (ऋ० सं० २, ३, १६,३—१, २२, ८, १३)। "इति पञ्चर्तुतया" सवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः। 'परिवर्त्तमाने' परिगृह्यो दं जगद् वर्त्तमाने। आह,—किम् ? इति। उच्यते,—'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढानि।

कानि ? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि, कालचक्रे हि सर्वमेवेदं जगदधिरूढ बम्भ्रमीति। अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभार' बहुभार मत्वे यायम् 'अक्ष' सवत्सराख्य 'न तप्यते' न सन्तापयति नापि सन्ताप याप्यतीत्यर्थ । अपि च 'सनादेव' चिरन्तन एव सोऽक्ष, तथापि न तप्यते, न वा तस्मोऽपि सन् सहसैव 'विशीर्यते' नश्यति। आह,—यदक्षो न तप्यते शीर्यते वा, किमेवमतिबलीयसाक्षेण दृष्यमाणा नाभि, तप्यते शीर्यते वा ? इति। नेत्युच्यते,—'स नाभिः' अक्षो न शीर्यते न तप्यते । नाभिरादित्य एवाभिप्रेत । आह,—कथमतदम्यते 'पञ्चारे चक्रे'—इत्यत्र अर शब्देन ऋतवोऽभिप्रेता इति, न ह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति, अपि च ऋतव षट् प्रसिद्धा, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम् ? इति। उच्यते,—सूक्ते सवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तव सवत्सरस्येति च ब्राह्मणम्, हेमन्तशिशिरयो समासेन" एकत्वेनेत्यर्थ । तस्मादुपपद्यते। एव पञ्चर्त्तुत्वमृतूनाम्, अरत्व चावयवस्तुत्वभिसम्बन्धादिति ॥

पञ्चपाद पितर द्वादशाकृति दिव आहु परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षण सप्तचक्रे षळर आहुरर्पितम्"—इति (ऋ० स० २, ३, १६, १)। "षळर आहुरर्पितमिति पुडतुतया" सवत्सरस्य स्तुति । 'पञ्चपाद' सवत्सरम्, ऋतवो हि सवत्सरस्य पादा, तैरसौ पतति गच्छति। 'पितर' पालक सर्वभूतानामुत्पादयितार वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासा सवत्सरस्य"—इति च ब्राह्मणम् "दिवे' द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽयमवस्थित आदित्य, एतस्मिन् पञ्चपाद पितर द्वादशाकृति 'पुरी-

पिणं' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्वमुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्य्यवस्थिताः, 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमेवमादित्यं 'चक्रे षड़रे' तस्मिन् संवत्सराख्ये 'अर्पितमाहुः'। अथवा सप्तचक्र आदित्यः, स हि सप्तभीरश्मिभिश्चक्रते दीप्यते, 'सप्तचक्रे'—इत्येकं पद तस्मादेवमपि भवति। एवमेके संवत्सरमादित्य-प्रविष्टमाहुः, अपरे पुनरादित्यं संवत्सरप्रविष्टमित्येष समस्तार्थः॥ एवमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुतिरुपपद्यते॥ "अराः प्रत्यृता नाभौ" प्रतिगता इत्यर्थः। "षट् पुनः सहते:" ते हि पञ्च-महाप्रासमभिभूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्र-मेकम्"—इति। "इति मासानाम्" एतौ पादौ भवत इति वाक्यशेषः। "द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥"—इति (ऋ० सं० २, ३, २३, २)। "मासा मानात्" मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रश्लिष्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते। 'द्वादश-प्रधयः' मासाख्याः, संहताः सन्तः 'चक्रमेकं' भवति। तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथार्थ्यतो विजानाति? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिंशता न शङ्कवोऽर्पिताः' त्रिशतान्यहोरात्राणि शङ्कव

इवार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि। द्वितीयो नकार समुच्चयार्थ। 'चलाचलास.' चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभाव न मुञ्चति। आह,—कथ गम्यते अहोरात्राण्येतानीति? उच्यते,—संवत्सरस्तुतिप्रायत्वस्यान्याच्च। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः इति च ब्राह्मण समासेन" अहोरात्रयोरेकत्वेनेत्यर्थ॥

"द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य। आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः॥"—इति (ऋ० सं० २, ३, १६, १)। 'न हि तज्जीर्यते' किं तर्हि? अन्यानि भूतानि जरयत् 'वर्वर्ति' च पुनःपुनर्वर्तते। 'परि द्याम्' परिगृह्य द्यां च पृथिवीं च ततो वर्वर्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथवा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथवा 'ऋतस्य' यज्ञस्याङ्गभूतम् 'आतस्थु' पुत्रा। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थ। कस्य? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्त, षष्ठ्या विपरिणम्यते, अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेत, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम्। आह,—कियन्तस्ते पुत्रा? इति। उच्यते,—"सप्त शतानि विंशतिश्च"। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा"—इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति॥ एवमेतस्मिन् सूक्ते संवत्सरं "सर्वमात्राभि" सर्वैरवयवै "स्तौति"। तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामपि संवत्सरप्रधानात्मनाभिचक्रमित्येषोऽर्थ। तदेतत् दृश्यमपि 'सप्त-

पुत्र' सर्पणपुत्रमित्यं तस्मात् पदात् प्रसक्तानुप्रसक्तमुक्तम्, प्रकृत मिदानीं वर्णयिष्याम। किं पुनः प्रकृतम्? ऐकपदिकसमाम्नायव्याख्यानम्। तत्र यदुक्तं तदुक्तमेव, यदनुक्तं तद्वक्तव्यमितीदमारभ्यते,—"सर्पिरमविन्दुद्धरणे इन्दोनाम्"—इति ॥ ६ (२०) ॥

इति निरुक्तवृत्तौ नवमाध्यायस्य [चतुर्थायस्य]
चतुर्थ पाद ॥ ४, ४ ॥
ऋज्वर्थाया निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन
आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्याय.
(चतुर्थोऽध्याय) समाप्त. ॥ ४ ॥

---

(१ एकार्थको २ नुत्रयः ३ सुपर्णा ४ यदिन्द्र ५ जुष्टो दमूनाः
६ सम्मातपन्त्रौ ७ पिरेणम ८ कर्त्वा ९ तितउ १० यत्रा ११ मिवततसूर्य-
१२ स्त्रेन्द्रे १३ णषसो १४ मान्तासः १५ कायसानः १६ कनीनके वो-
१७ पो १८ श्रदर्थिसुविते १९ विद्याम २० देवानश्रा २१ घा २२ द्यौर्मे ऽदिति-
२३ रदितिः २४ तत्रा २५ चा २६ हाश्चवामस्य सप्त २७ युञ्जन्ति सप्त-
विंशतिः ॥)

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः
समाप्तः ॥ ४ ॥

अथ पञ्चमाध्यायस्य

प्रथमः पादः ।



ॐम् । सखिमविन्दच्चरणे नदीनाम् । संखातं मेघम् । वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । वोढ़तमो ह्वानानां स्तोमो दूतो हुवन्नरौ नरा मनुष्या नृत्यन्ति कर्मसु दूतो जव-तेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति । ) वावशानो वष्टेर्वा वाश्यतेर्वा । सप्त स्वसूररुषीर्वावशान इत्यपि निगमो भवति । वार्य्यं वृणोतेरथापि वर-तमम् । तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् । तद्वार्य्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायि-तारः । यूयं स्थ इुम्मभ्यमिति वान्ध इत्यन्लनामा-ध्यानीयं भवति । आसतेभिः सिञ्चता मद्यम् ; । आसिञ्चतामत्रं मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिमितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तम इत्यभिभाषन्तेऽयमपीतरोऽन्ध

एतस्मादेव। मध्य इन्द्रस्त्वान् न विचेतद्वः इत्यपि निगमो भवति ॥ १ ॥

"सस्निम् (१)"—इति। एतदनवगतम्। अर्थाप्रतीतिरप्यनवगम इत्युच्यते। लक्षणासम्पन्नव संस्कारः खल्वपि अविज्ञातमित्युच्यते। तत्रैव सति, क्वचित्प्रत्ययादेः संस्कारस्यानवगमः, क्वचिदर्थाप्रतीतिरेव, क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्निमिति, न विज्ञायते किमप्युक्तं भवति? प्रकरणादत्र मेघाभिधेयम्, अन्यवान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम् ॥"—इति (ऋ॰ सं॰ ८, ७, २७, ६)। विश्वावसोर्देवगन्धर्वस्येयमार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्त ऋत्विजो यजमानश्चेति। तासामुपस्थानर्चामियं मध्ये मैत्रायणीयके। 'सस्निं' "संस्नातम्" अद्भिः परिवेष्टितं, सर्वतः परिस्नुतं, धौतं वा "मेघम्" 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत? 'चरणे नदीनां' यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत, अन्तरिक्षलोके इत्यर्थः। आह,—लब्ध्वानन्तरं किमकरोत्? इति। उच्यते,—'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः। 'दुरः' द्वारः। आह,—कस्य? उच्यते,—'अश्मव्रजानाम्' अपामश्मा मेघः, तमधि या भजति, स च यासां व्रजभूतो गोष्ठभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृणोत्। या एता एवलक्षणा आपः, 'आसाम्'

अस्य च इन्द्रस्य 'गन्धर्वः' विश्वावसुः 'प्रावोचत्'—'अमृतानि' नामानि, छान्दसस्तुतियुक्तानि, तानि हि नित्यत्वादमृतानि। आह,—कस्मात् पुनरस्येन्द्रस्यामृतानि प्रावोचदाम्नायाणाम् ? इति । उच्यते, इतः,—यस्मादसाविन्द्रः 'दस्र' दातारं मेघम् । अयम् आसाम् 'अह्नीनाम्' अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भविष्यति,—इत्येवं 'परिजानात्' परिज्ञातवान्। परिज्ञाय च 'अपावृणोत् दुरोऽश्मव्रजानाम्'। तस्मादस्येन्द्रस्यामृतानि नामानि प्रावोचदद्रियानेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद्ध्रियत इति आनामपि अनेन हेतुना प्रावोचदिति। एवमेतस्मिन् मन्त्रे 'चरणे नदीनाम् अविन्दत्' अपावृणोच्च दुरोऽश्मव्रजानाम्, दस्रञ्च परिजानात्'— इत्येकवाक्यतार्थसम्बन्धात् "अद्रि" शब्दो मेघविशेषणम् उपपद्यते ॥

अथवा अयमपरस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्,— संवार्तं मेघमविन्ददलभतेन्द्रः पर्यन्वेषमाणः, क्वाविन्दत् ? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्धा च स एव इन्द्रः, तं मेघ, दस्र दातारम्, अह्नीनाम् अपां परिजानात्। परिज्ञाय च समर्थोऽयमिति ततस्तस्य द्वाराण्यपावृणोत्। अश्मव्रजानामपामधो निर्गमनाय। तत एतानि निर्गतानि, अमृतानि उदकानि, शम्यसम्पत्कराणि प्रावोचदिव प्राकाशयदिव,—असाविन्द्रो गन्धर्वः, आसां प्रजानां जीवध्वमेभिरुदकैरमृतैरिति। "इन्द्रो गन्धर्वः, तस्य मरुतोऽप्सरसः"— इति श्रूयते। तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव, स च गोः वज्रस्य धारयिता इति गन्धर्वः ॥

"बर्हिष्ठः (२)"—इति। एतदनवगतम्। "वोढृतमः"— इत्यवगमः। "बर्हिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा।

युवाभ्यां भूत्वश्विना ।"—इति (ऋ० सं० ६, २, २९, १)। गायत्री। विश्वमनसो वैयश्वस्यैयमार्षम्, पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शस्यते। 'नरा' हे नरौ। सर्वेषामेव वोढॄणां स्तोमानाम्, श्राह्लादनाच्च। य एव एष. 'वाहिष्ठ.' श्रतिशयेन वोढा, श्राह्लादतम', श्रयमेव 'दूतः' इव युवां 'हुवत्' श्राह्वयदित्यर्थं। योऽयमेवलक्षणः 'सोम.' श्रस्मत्-प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'श्रश्विना' श्रश्विनौ। इति सम्बोधनम्। 'स्तोमो दूत.' —इत्येताभ्यां समानविभक्त्यन्तत्वात् "वाहिष्ठ"-शब्दः सोम-विशेषणमित्युपपद्यते॥

निगमप्रसक्तमित्युच्यते,—"मनुष्या." श्रपि हि "नरा:" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनः पुन. प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमाना.॥

"दूतो (३) जवतेर्वा गत्यर्थस्य" स हि गच्छति। "द्रव-तेर्वा" गत्यर्थस्यैव। "वारयतेर्वा" स हि वारयत्यनर्थान्॥

"वावशान (४)"—इति श्रनवगतम्। "वष्टेर्वा" कान्त्य-र्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशान. स्यात्। "सुत स्वसृ-रपोर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्। श्रन्तर्यमे श्रन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य।"—इति (ऋ० सं० ७, ५, ३३, ५)। वितस्यास्यैयमार्षम्। श्राग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयो. शस्यते। 'सप्त' 'स्वसृ.' स्वसारो भगिन्य इव याश्चर्चिषः समानजन्मत्वात्। श्रथवा सह सर्पणात् स्वसार', ता हि सह सर्पन्ति 'श्ररुषी.' श्ररो-चना:, दीप्ता इत्यर्थः। या एवलक्षणा. श्रर्चिष', ता, श्रग्निः 'वावशान.' कामयमानो वावश्यमानो वा, शब्दं कुर्वाणः सः 'विद्वान्' श्रात्मीयमधिकारान् जानानः, 'मध्व.' घृतस्य

हविषः पूर्णः, 'तज्जभार' जहार हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः। एवं तां जहार हृत्वा दर्शनमभिव्यञ्जयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रोपनियमितवान् तद्धविः 'सुराजाः' अग्निः, स हि सर्व-देवेभ्यः प्रथम एव जातः। 'इच्छन्' 'वव्रि' रूपं 'पूषणस्य' पूष्णः आदित्यस्य। कथं नामासावादित्यो दीप्तरूपः स्यात्? अतोऽन्तरादित्यस्य येमे। तत्रासावेतमर्थम् 'अविदत्' अल-भत इत्यर्थः। स एव दीप्तरूप आदित्यः सम्वृत्त इत्यभिप्रायः॥ एवमत्र "स्वमूर्वावगान."—इत्यनेन सामानाधिकरण्याच्छन्द-साम्याच्च "वावशाने"—इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च उप-पद्यते॥

"वार्य्यम् (५)"—इति। अनवगतम्। वृणोतेर्वरयितव्यं भवति, तद्वार्य्यमित्युच्यते। अथापि कदाचिद् वार्य्यशब्देन यद्वरतमं श्रेष्ठतमं किञ्चिद्भवति, तदुच्यते। "तद्वार्य्यं वृणीमहे वरिष्ठं गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्य्यमा॥"—इति (ऋ० सं० ६, २, २३, ३)। विश्वमनस आर्षम्। मैत्रा-वरुणे सूक्ते। 'तद्वार्य्यं वृणीमहे' वरयितव्यं वरणार्हं धनं वृणीमहे। हे स्तोतारः! 'वरिष्ठं' 'गोपयत्यं' "गोपायि-तव्यं" यद्रक्षणार्हमित्यर्थः। अथवा गोपयत्यं गोपितारो यस्य धनस्य यूयं भविष्यथ, तद् वृणीमहे। अथवा युष्मभ्यं योऽपाकीर्णं यद्भवति, तद् वृणीमहे। किञ्च, नित्यकालमेव मित्रावरुणार्य्यमाणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद् वृणी-महे। एवमत्र च मित्रावरुणार्य्यमाणो यत् पान्ति इत्यनेन सम्बन्धात् "वार्य्य"-शब्दो धनविशेषणमित्युपपद्यते॥

"अन्धः (१६)"—इति। अनेकार्थमनवगतम्। आध्यानीय-मित्यर्थप्रतीतिः। आध्यानीयमन्नं भवति सर्वस्यैव। "[illegible]

भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः। कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि॥"—इति (ऋ॰ सं॰ २, ६, १२, १)। गृत्समदस्यार्षम्। रात्रिपर्याये प्रम्यते। होतुः शस्त्रे विनियुक्ता। अस्यैव च मन्त्रस्य याज्येयम्। हे 'अध्वर्यवः!' 'भरत' प्रापयतेमं 'सोमम्' एतस्माद्धविर्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथवा 'भरत' धारयताग्नेरुपरि। ततश्चैनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते 'आसिञ्चत' तस्मिन्नग्नौ। 'मद्य' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि? ? इत'—यस्मात् 'कामी हि वीरः' कामयत वीरः इन्द्रः 'अस्य' सोमस्य 'सद' सदैव, नित्यकालमेव 'पीतिं' पानमित्यर्थः। तस्मात् कारणात् 'जुहोत' तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम्। किमेतमेव केवलं सोममेष कामयते? नेत्युच्यते,—'तदिदेष वष्टि' तत्सोमप्रदानमेष इन्द्रो वष्टि कामयत इत्यर्थः, न केवलं रात्रिपर्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं मा विलम्बध्वमित्यभिप्रायः। एवमत्र दानसम्बन्धात् "अन्धः" शब्दोऽन्नार्थ उपपद्यते। पठितमपि चान्ननामसु अनेकार्थत्वात् तु सन्दिह्यते इत्येष निगम उपात्तः॥

निगमप्रसक्तमुच्यते।—"अमत्रं पात्रम्, अमा अस्मिन् अदन्ति" अन्नमित्यर्थः। अमा शब्देन पुनर्यदनिर्मितपरिमाणं किञ्चिद् भवति, तदुच्यते, न हि तेषां परिमाणमस्ति, यावन्तस्तस्मिन्नदन्ति। "पात्रं पानात्" पीयते हि तेन॥

तमोऽप्यन्ध उच्यते। किं कारणम्? "नास्मिन्" "ध्यान" दर्शन कृतं "भवति" चक्षुषो दृष्टि-निरोधात्। लौकिका अपि दर्शननिरोधे सति "अन्धन्तम इत्यभिभाषन्ते"। "स्त्रियः

स्त्रीः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न वि चेतदन्धः । कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत् ॥"—इति (ऋ० सं० २, ३, १७, १)। अस्यवामीये। स्त्यायतेः पालनार्थस्यात्र स्त्री-शब्दो निरुच्यते। पालयित्र्यः एवैताः सत्यः कृत्स्नस्य जगतः। एत एव रश्मयो 'नाडीभिः आध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति, ततः स्थितिरुपजायते, एत एव वर्षप्रदानेन कृत्स्नं जगत् त्रायन्ते, तस्मात् त्राणात् 'स्त्रियः' एताः। 'तान्'—इति नकारान्तं पदम्। 'उ'—इति पदपूरणे एव। तानेवंलक्षणानश्मीन् पालयितॄन् सतः। 'मे' ममेति मन्त्रदृगात्मानं निर्दिशति। ममैतान् पुंस आहुः। एत एव रश्मयो 'बहुप्रजानाः' इत्येवं ब्रह्मविद आहुः। एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति। जगत्त्रायन्त एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः। आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता, तदवयवभूताश्च रश्मयः, तेन ह्यन्तर्गता आध्यात्मं पुरुषस्य विज्ञानम् उपहरन्ति। अतस्तेषां बहुप्रजानत्वमुपपद्यते। आह,—कः पुनरेतान् रश्मीनेवङ्गुणयुक्तान् पश्यतीति ? 'पश्यदक्षण्वान् न वि चेतदन्धः' यो हि अक्षण्वान् भवति, दर्शनवान्, विज्ञानवान्, वेदार्थविज्ञानवान्, वेदार्थविज्ञानेनोपजनितप्रज्ञः, स एव ताभ्यां गुणाभ्यां युक्तान् पश्यत्यास्ते नित्यकालं नित्ययुक्तत्वात्। इतरस्तु योऽन्धः अध्यानवान्, अश्रुतवेदोपनिषत्कः, स मन्दबुद्धित्वात् 'न विचेतत्' नैतान् याथार्थ्यतः पश्यति, न विजानातीत्यर्थः। यः पुनः एवम् एतान् यथार्थ्यतः पश्यति, स एव 'कविः' क्रान्तदर्शनो भवति, परिनिष्ठितविद्य इत्यर्थः। स च परिनिष्ठितविद्यत्वेनैव 'पुत्रः' पुरुषो बहुनोऽहसस्त्रातः। यथायमेवङ्गुणयुक्तः,

स 'ईम् आचिकेत'। 'ईम्'-इति पदपूरणः। 'आचिकेत' स एवैतानेवम् आभिमुख्येन यथावत् पश्यति, नेतरो मूढः। यश्चैतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः, स हि आधिदैविकम् आत्मानम् अभि सम्पन्नो भवति, न हि तस्य पिता नाम कश्चित्, स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः। एवमेतस्मिन् मन्त्रे य एवाचक्षुष्मान् भवति। स एव पश्यतीत्यस्य सन्निधौ 'न विजानात्यन्धः' शब्दप्रयोगात् अदर्शनलक्षणं तमः 'अन्धः'-शब्देनोच्यत इत्युपपद्यते॥ १॥

असंश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वाव्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् तरुष्यतिरप्येवङ्कर्मा। इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति। भन्दना भन्दते स्तुतिकर्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदियर्त्ति प्रजावतीरिति च। अन्येन मदाहनो

याहि तूर्यम् । अन्येन मदहनो गच्छ चिम-
माहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव
भवत्येतस्मादाहनः स्यादपिनंदो भवति नदतेः
स्तुतिकर्मणः । नदस्य मा रुधतः काम आ
गन् । नदनस्य मा रुधतः काम आगमत् संरुद्ध-
प्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं
वेदयन्ते ॥ २ ॥

"असश्चन्ती (७)"—इति अनवगतम्। "असज्यमाने इति वा"—इत्यर्थप्रतीति, "अव्युदस्यन्त्याविति इति वा"—इति। "असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥" इति (ऋ० सं० ५, १, १४, १)। भरद्वाजस्येयमार्षम्। अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निविद्धानीये सूक्ते शस्यते। असश्चन्ती' असज्यमाने असक्लिश्यमाने परस्परत, एते द्यावापृथिव्यौ। 'भूरिधारे' बहूदकप्रक्षरणस्वभावे एव, अथवा बहु भूत धारयित्र्यौ। 'पयस्वती' उदकवत्यौ। 'घृतम्' उदकम्, द्वे अप्येते 'दुहाते' प्रपूरयेते, इतरेतरसंयोगेन। 'सुकृते' शोभनकृते, अथवा शोभनाना स्वाधिकारप्रयुक्ताना कर्मणा कर्त्र्यौ। 'शुचिव्रते' शुक्लकर्मणौ इत्यर्थः। 'राजन्ती' दीप्यमाने स्वै स्वै तेजोभि। 'अस्य' 'भुवनस्य' भूतजातस्य 'रोदसी' रोधसी, रोधयित्र्यौ। ये एते एवलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्माभ्य 'रेत' उदक 'सिञ्चतम्' अभिमते काले। किमलक्षण पुन. सिञ्चतम् ? 'यत्' 'मनुर्हितम्'

मनुष्यहितम्, प्रचार, गस्यसम्पत्करमित्यभिप्रायः। एवमेतस्मिन् मन्त्रे 'भूरिधारे'—इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्ती"—इति द्यावापृथिवीविशेषणमुपपद्यते। "असज्यमाने इति" न हि ते सज्येते परस्परतः "अव्युदसन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्यस्यन्त्यौ वा, न हि ते उपक्षीयेते विपर्यस्येते वेति ॥

"वनुष्यति (८)"—इति "हन्तिकर्मा" इत्यर्थे वर्त्तमानः, "अनवगतसंस्कारो भवति"। "यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा। अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ॥" इति (ऋ० सं० ६, ३, २५, १)। नाभाकस्यार्षम्। महाव्रते मरुद्वत्ये शस्यते। अस्याः पुनरष्टाक्षराः षट् पादाः। छन्दसां पुनरनुक्रमण्यां शौनकेनाग्निमस्तोपीत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि, तेषामपीय मध्ये हे 'इन्द्राग्नी !' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च उभयेऽपि 'विह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया। 'तना' सन्ततया 'गिरा' वाचा, अथवा 'तना' धनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते। तदा युवाम् 'अस्माभिः' अस्मदीयैः 'नृभिः' मनुष्यैः सहितौ भूयास्तन्तो 'वयं' युवाभ्यां सहिताः 'सासह्याम' पुनः पुनरभिभवेम। कान् ? ये एते 'पृतन्यवः' पृतनामस्माभिः सह कर्त्तुम् इच्छन्ति, तानभिभवेम। किञ्च, 'वनुयाम वनुष्यतः' ये च एतेषाम् अस्माभिः सह सम्यवा एव सम्प्रहारोभूता वनुष्यन्त्यस्मान् घ्नन्त्येव, एतांश्च वनुष्यतः वनुयामो वयं हन्म इत्यर्थः। कथं पुनर्हन्म ? उच्यते यथा,— "नभन्तामन्यके समे' युवयोरनुग्रहादस्म इत्यभिप्रायः। एवमेतस्मिन् मन्त्रे "सासह्याम पृतन्यतः"—इत्येतस्मिन् सङ्ग्रामा-

धिकारे वनुष्यतिर्हन्त्यर्थमुपपद्यते, न हि संग्रामे हननादन्यत् कर्त्तव्यमस्ति, यत् क्रियते।

"इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम्। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः॥"—इति (ऋ० स० ५, ६, २, १)। वसिष्ठस्यार्षम्। जगती। तार्त्तीयसवनिकीये मैत्रावरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'युवम्' युवामित्यर्थः। 'अध्वराय नः' यज्ञाय अस्माकं 'विशे' जनाय सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय 'महि' महत्, 'शर्म' सुखं 'यच्छतम्' दत्तमित्यर्थः। 'दीर्घप्रयज्यु' "दीर्घप्रततयज्ञ" नित्ययायजूकम्, अग्निहोत्रिणम् 'अति यो वनुष्यति' "अभि जिघांसति" यो निहन्तुमिच्छति। किं तस्य? इत्युच्यते,—'वयं जयेम' 'पृतनासु' संग्रामेषु 'दूढ्यः' "दुर्धियं" पापधियं, पापया धिया हि दीर्घप्रततयज्ञमभि जिघांसति। एवमत्रापि प्रकरणात् "वनुष्यति" हन्त्यर्थः। अल्पप्रयोगविषयत्वाद् भाष्यकारेण निगमद्वयं पठितम्।

व्याख्यानप्रसङ्गमुच्यते,—"पापः पाताऽपेयानाम्" अपेयान्यलेह्यानि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः। "पापत्यमानः" पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा। "अवाङेव" नरकमेव प्रति "पतति" असौ, तस्मात् "वा" पापः॥

"तरुष्यति (८), अभ्येवङ्गमते" हन्तिकर्मेत्यर्थः। "ऋभुक्षभुर्भिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि। वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम्॥"—इति (ऋ० स० ५, ४, १५, २)। वसिष्ठस्यार्षम्। त्रिष्टुप्। अविवाक्ये तृतीयसवने, वैश्वदेवे शस्त्रे, आर्भवे तृचे, निविद्धानीये सूक्ते। ऋभवः ऋक्-

भासो वयम्, ऋभुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि षः स्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूतबले. युष्माभिः 'शवसा' स्वेन बलेन, एतेषामभिभवितॄणां 'शवांसि' बलान्यभिभवेम। किञ्च, 'वाजः' 'अस्मान्' 'अवतु'। कस्मिन्? 'वाजसातौ' सङ्ग्रामे, 'इन्द्रेण' च 'युजा' सयुक्ताः सन्तो वय 'तरुषेम' हन्मेन 'वृत्र' शत्रुमित्यर्थः। अभिभवाधिकारात् तरुषतिर्हन्त्यर्थं उपपद्यते ॥

"मन्दना (१०), मन्दते. स्तुतिकर्मणः." स्तुत्यर्थे वर्त्तमानस्य। "पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम्। आविवेश रोदसी भूरिवर्पसा पुरुप्रियो मन्दते धामभिः कविः॥"—इति (ऋ० म० १, ८, २०, ४)। विश्वामित्रस्यार्षम्। षष्ठस्य प्रथमेऽहनि आग्निमारुते शस्ये, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगत, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्धि निर्मीयते। 'वयुनञ्च' प्रज्ञानमयमेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निं विशिष्टं यज्ञसाधनमित्येव मन्यन्ते। योऽयमेवलक्षणोऽग्निः 'आविवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवङ्गुणयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'मन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतेः कुर्यात्? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य ॥

"स मन्दना उदियर्त्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिव। ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्द्रविन्दु-

स्माभ्य[1] याचतात् ॥"—इति (ऋ० सं० ७, ३, २०, १)। भौमो-ऽत्रिः, तस्यैयमार्षम्। जगती। "प्र तं आशवः पवमान धीजवः" —इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी। यदिममयाग्नं कर्मोपगमेत्तत्सुयामहमेतं सोमं तवेति, य एवं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्तोमकर्मणि उपनीते हे सोम! तव 'मन्दनाः' स्तुतीः 'उदीरयति। 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः, सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ह्युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकारणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः। 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकालमित्यभिप्रायः। कं पुनरर्थमुपेत्य स्तुतीरुदीरयति? 'अस्म प्रजावत्' अन्नं प्रजासंयुक्तं भोक्तृसहितम्। अपि च 'रयिम्' धनं गोहिरण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्वमस्माभिरस्मिन् कर्मणि। हे 'इन्दो' सोम! इदमस्मदर्थं याचतात्' याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। मन्दना इदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "मन्दना"शब्दे नोच्यन्ते इत्युपपद्यते। पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो मन्दते धामभिः"—इति (८४० पृ० ८ पं०), इदन्तु नामरूपसम्बद्धं "स मन्दना उदियर्त्ति प्रजावतीः"—इति (८४०पृ०२५पं०) च। उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच।

"आहनः (११)"—इति। एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात्। "आहसि"—इत्यर्थप्रतीतिः।

भासो वयम्, उरुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि ष्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूतबलैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषामभिभवितॄणां 'शवांसि' बलान्यभिभवेम। किञ्च, 'वाजः' 'अस्मान्' 'अवन्तु'। कस्मिन्? 'वाजसातौ' संग्रामे, 'इन्द्रेण' च 'युजा' संयुक्ताः सन्तो वयं 'तरुषेम' हन्मेन 'वृत्रं' शत्रुमित्यर्थः। अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थे उपपद्यते॥

"भन्दना (१०), भन्दतेः स्तुतिकर्मणः।" स्तुत्यर्थे वर्त्तमानस्य। "पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम्। आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः॥"—इति (ऋ॰ म॰ १, ८, २०, ४)। विश्वामित्रस्यार्षम्। पृष्ठ्यस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगतः, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगदिदं निर्मीयते। 'वयुनञ्च' प्रज्ञानमयमेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निः विशिष्टं यज्ञसाधनमित्येव मन्यन्ते। योऽयमेवंलक्षणोऽग्निः 'आविवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवङ्गुणयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतिं कुर्यात्? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य॥

"स मन्दना उदियर्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि। ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्र-

स्माय" याचतात् ॥"—इति (ऋ० सं० ७, ३, २०, १)। भौमोऽत्रिः, तस्यैयमार्षम्। जगती। "प्र ते आग्नवः पवमान धीजवः"—इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी। यदिममयाज्ञं कर्मोपनमेत्तत्सुयामहमेतं सोमं तवेति, य एवं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्त्सोमकर्मणि उपनीते हे सोम! तव 'मन्दनाः' स्तुतीः 'उदीरयति। 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वव्याप्तिरिहतप्रस्थान इत्यर्थः, सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभि, कर्मणा, रूपेणेति ह्युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युक्तगुणैरलङ्कृताः। 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्यायाभिप्रायेण नित्यकालमित्यभिप्रायः। किं पुनरर्थमुपेत्य स्तुतीरुदीरयति? 'अस्म प्रजावत्' अव प्रजासयुक्तं भोक्तृसहितम्। अपि च 'रयिम्' धनं गोहिरण्यादि। 'अश्वपस्यम्' अश्वे. पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्वमस्मिन् कर्मणि। हे 'इन्दो' सोम! इदमस्मदर्थं याचतात्' याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। मन्दना उदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "मन्दना"शब्देनोच्यन्ते इत्युपपद्यते। पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो मन्दते धामभिः"—इति (८४० पृ० ८ पं०), इदन्तु नामरूपसम्बद्धं "स मन्दना उदियर्त्ति प्रजावतीः"—इति (८४०पृ०२५पं०) च। उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च।

"आहनः (११)"—इति। एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात्। "आहसि"—इत्यर्थप्रतीतिः।

"न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति।
अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥"—इति
(ऋ सं० ७, ६, ७, ३)। यमस्य यम्याश्च संवादसूक्तम्, तत्र
यमस्येयमार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति,—
हे यमि! मामंस्या साम्प्रतं रहो वर्त्तत इति, किन्तु 'न
तिष्ठन्ति' मुहूर्त्तमपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभि-
प्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त
इत्यभिप्रायः। के पुनस्ते? इत्युच्यते,—'एते देवानां स्पशः',
य इह एतस्मिन् लोके 'स्पशः' आशयितारः, कृताकृतानां कर्म-
णाम्। के पुनस्ते? इति। उच्यते,—अहश्च, रात्रिश्च, उभे
च सन्ध्ये, सूर्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च इत्येवमा-
दयः, न ह्येतेषां किञ्चिदविदितं परोक्षमस्ति इत्यभिप्रायः।
अतो ब्रवीमि,—'अन्येन' अन्यकुलजेन केनचित् पुरुषेण,
'मत्' मत्तः, त्वं हे 'आहनः।' मैथुनं 'याहि' 'तूयं'
"क्षिप्रम्"। "आहसि इव" असभ्यमेतत् "भाषमाणा" त्वम्,
नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किं पुनः कर्तुम्? तस्मा-
न्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'विवृह' अभ्युद्य-
च्छस्व आत्मानं मैथुनकर्मणि। 'रथ्येव चक्रा' रथचक्रे इव,
यथैकमस्य रथचक्रे द्वे अभ्युद्यतः, एवमेकमनस्त्वमुपपाद्य
तेनैकभूतेन मनसा अन्येषेवोभेऽपि शरीरे, तत्र तस्य कामिन-
सक्तम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति,
न मया सार्द्धमेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मा शक्ष्यसे कम्पयितु-
मित्यभिप्रायः। एवमेतस्मिन् मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य
"आहनः"—इत्येतद् यमीविषयं सम्भानम्। आहन्यत "इव"
हि स यम तयाऽनेन दुर्वचनेन। तस्मात् सैव सम्बोध्यते
आहनः। इति "एतस्मात्" एव कारणात् "आहनः स्यात्"—

योऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्यते, स आहन्यत इव असभ्यत्वात्, तस्य अयज्ञियो वै पुरुषोऽमेध्य आहनः स्याज्जायत इति विज्ञायते ।

"नदः (१२)"—इति, एतदनवगतम् । "ऋषिः नदो भवति"—इति शब्दस्य पर्य्यायेण तत्त्ववचनम् । "नदतेः स्तुतिकर्मण." इति व्युत्पत्तिः । नदिता वा नदतीवेत्यर्थप्रतीतिः । "नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् । लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम् ॥"—इति (ऋ० सं० २, ४, २२, ४) । अगस्त्यलोपामुद्रोब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम् । सा अब्रवीदगस्त्यं भर्त्तारमभिप्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संयच्छतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रत पीड्ये । स पुनरेवं न जाने । किम् 'इतः' एव 'आजातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीडनाय,—अथवा 'अमुतः' अगस्त्यशरीरात् ? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात् । अतएव "स्मरः"—इति काम उच्यते । तस्मादुपपद्यते इतो वास्मच्छरीरात्,—अमुतो वा नदशरीरात्, कुतः ? इति, न जाने इति । अथवा अन्यत एव 'कुतश्चित्' अयमागतः स्यात् ? इत्येतदपि तत्त्वतो न जाने । इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति, यदि न ममासावुपरि प्रणमनं निरीक्ष्यात्, ततो नायं कामो मागमिष्यत्, इत्येवं दोषेण गच्छति । "रिणाति"—इति गतिकर्मसु पठितम् । अथवा चेतसा

'नीरिणाति' उपगच्छतीत्यर्थः, इष्टपुरुषानुचिन्तना हि कामार्त्तानां स्त्रिया स्वभाव एव। तस्मादेवमप्युपपद्यते। 'धीरं' स्थिरबुद्धिं ब्रह्मचर्य्ये 'अधीरा' सती अस्तवेन्द्रियधामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति। 'श्वसन्त' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्य्ये कृतबुद्धिं तथापि धयत्येव। "श्वसति, नदति"—इत्येव गतिकर्मसु पठितम्। एव लोपामुद्रावाक्ये "नदस्य रुधतो मामागमत् काम."— इति प्रकरणादपिर्नदशब्दो नोच्यत इत्युपपद्यते। "क्रन्दत्-प्रजननस्य ब्रह्मचारिणः इत्यृषिपुत्रा विलपितं वेदयन्ते"— इति निदानप्रख्यापनम् ॥ २ ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। अक्षैतेरित्येके। अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। लोपाशः सिंहं प्रत्यञ्चमत्साः। क्षियन्निति [illegible] पूर्णः चरतिनिगम उत्तरः इत्येके-ऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः। त्वावमिति क्षिप्रनामाशु अतनं भवति। स पतत्री त्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः। स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत् क्षिप्रमग्निरकरोज्जातवेदाः। जातिरनीत्। आ त्वा रथं यथोतये

द्व्यमपि निगमो भवति । द्राघमाने द्वय परि-
ष्टाद्व्याख्यास्यामः । वम्रकः पुड्भिरूपसर्प दि-
न्द्रम् । पानैरिति वा स्पाशनैरिति वा
(स्पशनैरिति वा) सुपं न पक्कमविदच्छुचन्तम् ।
स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तदि-
वाविदज्ज्वाज्वल्यमानम् । द्विता च सत्ता स्वधया
च शम्भुः । द्वैधं सत्ता मध्यमे च स्थान उत्तमे
च । शम्भुः सुखभूः । मृगं न व्रा मृगयन्ते ।
मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

"सोमो अद्याः (१३)"—इत्येते द्वे पदे। अत्र अद्या इत्येतत् पदं अनवगतम्, पदेन चानेकार्थम्। अर्थेव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः। कथ नाम "न यस्य द्यावापृथिवी"—इत्येतदेवोदाहरणमत्र उपलक्षितं स्यात्? अत्र हि अद्या इत्येष शब्दः, सोमशब्देन सम्बद्धः, यथा भूतशब्देन, मेषशब्दः—"मेषो भूतो३ भियन्नयः"—इत्यत्र, यथा वा "अग्निर्नूये"—इत्यत्राग्निशब्दः। अत्र वाशोतिपदे अद्या इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादयमनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाते प्राप्ते सति॥

"न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अद्याः। यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि॥" इति (ऋ० सं० ८, ४, १५, १)। रेषनाम

विश्वामित्रस्य पुत्रः, तस्यैयमार्षम्। ऐन्द्रे सूक्ते सूक्तसुखा-मैकाहः, तत्रैयं निष्केवल्यशस्त्रे निविद्धानीये शस्यते। 'न यस्य द्यावापृथिवी' न यस्य इन्द्रस्य द्यावापृथिव्यौ महिमानं 'अश्नुवाते' व्याप्नुत इत्यर्थः। 'न' 'धन्व' उदकम्, तद्धि धन्व-त्यन्तरिक्षलोकात्। 'न अन्तरिक्षम्' 'न' 'अद्रयः' पर्वताः अश्नुवाते महिमानम्। किं तर्हि? सोम एवास्य महिमान-मश्नोतीत्यर्थः। कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमान-मश्नोतीति? इतः,—'यत् अस्य मन्युः अधिनीयमानः' यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदमाम-र्थ्यादुपरि शत्रूणां नीयमान. प्राप्यमाणः शृणाति। 'वीलु'। यदपि 'वीलु' दृढं सबद्धं शत्रुबलं भवति, तदपि शृणात्येव, छिनत्तीत्यर्थः। 'रुजति' च 'स्थिराणि' अपि दृढानि मेघ-वृन्दानि भिनत्तीत्यर्थः। एवमेतस्मिन् मन्त्रे व्याख्यर्थस्य "अश्नोतेः" अच्चा इत्येष शब्दो निरुच्यते "इत्येयमेके" मन्त्रा-र्थविदो मन्यन्ते॥ .

"अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते।"—इति (ऋ० स० ७, ५, १३, ४)। सप्तर्षीणामार्षम्। बृहती। पावमानो सौमो। 'अनूपे' देशे 'गोमान्' गोभिः सहितो यदा 'अक्षाः' क्षियति, निवसति, अथ तदा सुयवसत्वात् तस्य देशस्य 'सोमो दुग्धाभिः' पुनः पुनः दुग्धाभ्योऽपि गोभ्यः क्षरत्येव। कथं पुनः क्षरति? इति। उच्यते,—समुद्रं न संवरणानि समुद्र-मिव संवरणान्युदकानि, उदकानि हि देशान्तरात् संवृण्वन्ति, तानि यथा सर्वेभ्यो देशेभ्यः सङ्गत्य समुद्रमाभिमुख्येन 'अग्मन्' गच्छन्ति, एवं दुग्धाभ्यः सोमः सर्वेभ्यो गावेभ्यः संसृत्य ऊधः प्रतिक्षरति मदायेन्द्रस्य। अथ यदैवं प्रक्षरति, तेन सोमेना-

मावास्यायां मावाख्येन तृप्त इन्द्रः 'मन्दी' हर्षशील', यजमानस्य यवून् 'तोपते' छिनत्तीत्यर्थः । "नितोपयति, निबर्हयति"—इति हन्तिकर्मसु पठितम् । एवमेतस्मिन् मन्त्रे "चियति-निगमः पूर्वः"—"प्रनूपे गोमान् गोभिरक्षाः"—इत्येषः (८८६ पृ० १६ पं०) "चरति-निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र (८८६ पृ० १६ पं०)। एवम् "एके" मन्त्रार्थविदो मन्यन्ते । तत्र तथैवोपव्याख्यातम् । "सर्वे" एवैते त्रयोऽपि "चियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते । न यस्य द्यावापृथिव्यौ निवासः, न अन्य, न अन्तरिक्षं निवासः, किं तर्हि ? सोम एव इन्द्रस्य निवासः । तस्य सोमस्य किम् ? इति । उच्यते,—यदस्य मन्यूरधि यवूणां नीयमानाः, शृणाति वीलु रुजति स्थिराणि । समानमन्यत् पूर्वेणैवार्थेन । "प्रनूपे गोमान् गोभिरक्षाः"—इत्यत्र नियासार्थतैव पुर्वस्मिन्नेवार्थे । अथ सोमो दुग्धास्वपि गोषूधः निवसति, न निर्दुग्धाः कर्त्तुं शक्यन्ते इत्यभिप्रायः । एवमेते सर्वे त्रयोऽपि "चियतिनिगमाः"—इति "शाकपूणिः" आचार्यो मन्यते ॥

"स्वावम्(१४)"—इति एतदनवगतम् । "आप्तं भवति"—इति शब्दसमाधिः । "चिप्रनाम"—इत्यभिधेयवचनम् । "यो होतासी॑त् प्रथमो दे॒वजु॑ष्टो॒ यं स॒माञ्ज॒न्नाज्ये॑नावृणा॒नाः । स प॒तत्री॑त्व॒रं ज॑ग॒द्यच्छ्वा॒त्रम॒ग्निर॑कृणो॒ज्जा॒तवे॑दाः ॥"—इति (ऋ० सं० ८, ४, १०, ४)। इयं हविष्पाङ्क्तीये सूक्ते । तत् पुनर्मूर्द्धन्वताङ्गिरसेन दृष्टम्, वामदेव्येन वा । पृष्ठ्यस्य पञ्चमेऽहनि अग्निमारुते शस्त्रे निविद्धानीयं तद्भवति । 'यः' अग्निः 'होतासीत्' आह्वोता देवानाम्, 'प्रथमः' प्रधानः, मनुष्यहोतुः सकाशात् । 'देवजुष्टः' देवैरासेवितः ।

'यं' 'समाश्नन्' समुचितवन्तः। केन? 'बाह्वेन' 'बाहवानाः' सेवमानाः, भजमाना इत्यर्थः। तस्य किम्? इति। उच्यते,—सः पतत्रीत्वरम्, सोऽग्निः पतत्रि', यदेतदितश्चेतश्च पतति, इत्वरञ्च पश्वादि, 'स्था' स्थावरञ्च हचादि, 'जगत्' यदेतज्ज-ङ्गमादि। तस्य किम्? इति। उच्यते,—तत् सर्वं प्रलयकाले 'स्वात्रं' चिप्रमात्मसात् 'अकृणोत्' "अकरोत्" 'जातवेदाः' अग्निः। एवमेतस्मिन् मन्त्रे "स्वात्रमिति" इत्येतत् "चिप्र-नाम"। पतत्रि-स्थावर-जङ्गमानां चिप्रदहनादग्नि किमन्यत् कुर्य्यात्? तस्मादुपपद्यते चिप्रनामेति॥

"ऊतिः(१५)"—इति, अनवगतम्। "अवनम्"—इत्यर्थ-प्रतीतिः। "अवनात्" रचणादित्यर्थः। "आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि। तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते॥"—इति (ऋ॰ स॰ ६, ५, १, १)। प्रियमेधस्यार्षम्। हे इन्द्र! 'त्वा' त्वाम् 'आवर्त्तयामसि' आवर्त्तयामहे। किमर्थम्? 'ऊतये' अस्माकं रचणाय, 'सुम्नाय' सुखाय च। कथं पुनरावर्त्तयामहे? इति। उच्यते,—'रथं यथा' अश्वो हि कश्चिद् यथा रथमावर्त्तयेत्, एवमावर्त्तयामहे वय त्वा स्तुतिभिः। किंलक्षण पुनर्भवन्तमावर्त्तयामहे? उच्यते,—'तुविकूर्मिम्' बहुनामनेकप्रकाराणां कर्मणां कर्त्तारम्। 'ऋतीषहम्' च, आर्त्तानामभिभवितारम्। हे 'इन्द्र!' 'शविष्ठ' -बलिष्ठ! 'सत्पते' सतां पते! एवमावर्त्तनेनैकवाक्याभिसम्ब-न्धेन "ऊति"शब्दो रचणार्थे इत्युपपद्यते॥

"हासमाने (१६)"—इति। "उपरिष्टाद् व्याख्यास्यामः" "प्रपर्वतानामुशती उपस्थात्"—इत्यत्र॥

"षड्भिः (१७)"—इति, अनवगतम्। "पार्श्वैरिति वा अर्थैरिति वा"—इति शब्दसमाधौ। "एवा महो असुर

वृवर्थाय वसुरुकः पुच्छिरुपसपु दिन्द्रम् । स ईयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥"—इति (ऋ० सं० ८, ५, १५, ६)। वस्रो नाम वैखानसः, तस्येयमार्षम्। ऐन्द्री। य एव एतस्मिन् सूक्ते स्तुतिप्रकारोऽधिकृतः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान। हे इन्द्र! 'असुर' असुमन्! प्रज्ञानवन्! बलवन्! वा 'वचयाय' स्तुतिवक्त्रे, महते यजमानाय, पूर्वकल्पान्तरीणाय, पूर्वकल्पान्तरेण एव 'वस्रकः' 'पड्भिः' सोमपानैरभ्युदितैः, अथवा गुणस्थागनैः स्तुतिगतैः, 'उपसर्पत्' उपसृप्तवान्, अन्यकल्पान्तरीणम् 'इन्द्रम्'। 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्रियमाणः 'करति' कृतवान्। किम्? 'स्वस्तिम्' स्वस्त्ययनम्। 'अस्मै' यजमानाय। यतो ब्रवीमि,—साम्प्रतमहमेतस्मिन् कल्पे वस्रकः, त्वञ्चेन्द्रः, ता एवैताः स्तुतय, याभिरहमुपासर्पं साम्प्रतं भवन्तम्, स त्वमेवं विज्ञाय, अस्मै वर्त्तमानाय यजमानाय स्वमधिकारं जानानः, कुरु स्वस्त्ययनम्। किञ्च, 'इषमूर्जम्'। 'इषम्' अत्र व्रीहि-यवादि, 'ऊर्जम्' क्षीरादि। 'सुक्षिति' च, शोभननिवासञ्च। 'विश्वम्' एतत् सर्वम् 'आभाः' आभिमुख्येनास्मै यजमानाय भावयस्व ॥ एवमेतस्मिन्मन्त्रे शब्दसारूप्यात् प्रकरणाच्च "पड्भिः"—इत्येतत् पानाभिधानं स्थानाभिधानं वेत्युपपद्यते ॥

"सस्रम् (१८)"—इति अनवगतम्। "सपनम्"—इत्यगमः। "प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः। ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥"—इति (ऋ० सं० ८, ३, २४, ३)। अग्नेर्वैश्वानरस्य, अग्नेर्वा सूचीकस्य, सप्तेर्वा जभरस्य इयमार्षम्। आग्नेयी। त्रिष्टुप्। मातरनुवाकाश्विनयोः शस्यते। 'प्रमातुः प्रतरम्

गुह्यम्' प्रकर्षेण गततरं गह्वरं, मातुः सर्वनिर्मातुः भूमेः, यत्किं 'वीरुधः' दग्ध्वा 'उपसर्पत्' 'उर्वीः' ऊर्णुवत्यः, प्रच्छाद्य भूमी निर्झरप्रदेशम्, तस्मिन् निर्झरप्रदेशे वर्त्तमानाः, तत्र हि ताः सुविरूढाश्च भवन्ति। कथम्पुनरुपसर्पत्? इति। उच्यते,— 'प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न' स्तनपानाय मातुः यथा कुमारः, प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशम्, स्तनपानम् इच्छन् उपसर्पेत्, एवं योऽग्निः बह्वोषधिके भूमिनिर्झरप्रदेशे कुमार इव स्तनप्रदेशमिवोपसर्पत्। तत्रैव च निर्झरप्रदेशे 'रिरिह्वांसं' पुनःपुनरास्वादयमानम्, ओषधीः 'रिपः' अस्या एव भूमेः 'उपस्थे' उपस्थाने, निर्झरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्झर एवोपस्थो भूमेः। तस्या एव 'अन्तः' मध्ये इत्यर्थः। तस्मिन्नेवलक्षणे प्रदेशे, तमग्निम् 'अविदत्' कश्चित् ऋषिः अन्यो वा। ओषधीरास्वादयन्तं कथं पुनरविदत्? इति। उच्यते,—'सस न पक्वम्' अविदत्,— यथैव स्वपनशीलं "माध्यमिकं ज्योतिः" वैद्युताख्यं पक्वमभिव्यक्तम्, वर्षासु उपर्य्यवस्थानादयत्नेनैव दृश्यते, एवं निर्झरान् प्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविददेवापश्यत्। 'शुचन्तं' दीप्यमानमित्यर्थः। निर्झरेऽन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्झरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः। य एवङ्गुणयुक्तोऽग्निः स इदं नाम करोतु—इत्येवमाशीर्योज्या। न ह्यदृष्टो साक्षात् माध्यमिकं ज्योतिर्दृश्यते, ततः "अनित्यदर्शनम्" तस्मादनित्यदर्शनात् "स्वपनम्"—इत्युच्यते, पक्वं नामाभिव्यक्तमित्युच्यते॥ एवमिह शब्दसारूप्यात् अर्थोपपत्तेश्च "ससम्"—इत्यनेन शब्देन स्वपनमुच्यत इत्युपपद्यते॥

"द्विता (१९)"—इति, अनवगतम्। "द्वैधम्"—इत्यब-

गमः। "यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता स्वधया च शम्भुः। तस्यानुधर्म प्रयजा चिकित्वोऽथा नो धा अध्वरं देववीतौ॥"—इति (ऋ० सं० ३, १, १७, ५)। कतस्य वैश्वामित्रस्येयमार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने।' पृथिवीस्थान! 'त्वत्' त्वत्तः, 'यः' 'पूर्वः' 'होता' मध्यमस्थानो वायुः, असावपि हि दूतो देवानामिति श्रूयते,—"आ दूतो अग्निमभरद् विवस्वतः"—इति। वैद्युतोऽग्निरिति केचिन्मन्यन्ते। 'यजीयान्' यष्टृतरः। 'द्विता च सत्ता' द्वैधं यस्य विद्यमानता,—"मध्यमे च स्थाने" वैद्युतभावेन, "उत्तमे च" स्थाने सूर्यभावेन। 'स्वधया च' अन्नेन, सर्वभूतानां वर्षादारेण। यः 'शम्भुः' "सुखभूः" सुखस्य भावयिता। तस्य किम्? इति। उच्यते,— 'तस्य अनुधर्म' वायोर्हृत्तिलाभमन्वात्मनो दीप्तिलक्षणां वृत्तिमतिलाभमाप्नुवन्, "वायुर्वा अग्ने स्तेजः, तस्माद् वायुरग्निमन्वेति"—इति ह विज्ञायते। हे अग्ने! 'प्रयज' प्रकर्षेण यज, देवान्। हे 'चिकित्वः' चिकित्वन्! ज्ञानवन्नित्यर्थः। 'अथ' एवम्, 'नः' अस्माकं यागं कुर्वन्, त्वं शृणु, यं कुरुष्व। 'धा अध्वरं' धारय यज्ञम्। 'देववीतौ' देवतर्पणायेत्यर्थः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "द्विता"—इत्ययं द्वैधमित्येवमुपपद्यते॥

"भ्राः (२०)"—इति, अनवगतम्। "भ्रात्याः"—इत्यवगमः। "गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयन्ते। अभित्सरन्ति धेनुभिः॥"—इति (ऋ० सं० ५, ७, १८, १)। काण्वस्य मेधातिथेः, प्रियमेधाङ्गिरस ऐन्द्रं सूक्तं ददृशतुः। तवैपाभिप्लवस्य षडहस्य द्वितीयेऽहनि मरुत्वतीये शस्त्रे अनुचरतृचे शस्यते। हे भगवन्निन्द्र! 'यद् ईम्' यद्यपि त्वाम् 'अन्ये' यजमानाः

'गोभिः' वाग्भिः, स्तुतिलक्षणाभिः 'धेनुभिः' च तर्पयित्रीभि-राहुतिभिः 'अभिक्षरन्ति' अभिगच्छन्ति, अभिव्याप्नुवन्ति, तथाप्यस्मानेव प्रत्यभ्येहि। किं कारणम्? इत,—यस्मादेते-ऽस्माभिरतिरिक्तया भक्त्यान्येभ्यो यजमानेभ्यः सकाशात् 'व्रा' "व्रात्या" "प्रैषा" युष्मत्स्तवसंयुक्ताः प्रतिप्रहिताः 'मृगं न' "मृगमिव" इतरे लुब्धका व्रात्या 'मृगयन्ते' मार्गयन्ते त्वाम्, तस्माद् भक्त्यतिरेकात् विप्रहेतोरस्मानेव प्रत्यभ्येहि॥ एवमेत-स्मिन्मन्त्रे मृगसम्बन्धात् "व्राः"—इति शब्देन लुब्धका उच्यन्ते इत्युपपत्तिः॥ ३॥

वराहो मेघो भवति वराहारो वर-माहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्-वराहन्तिरो अद्रिमस्तेत्यपि निगमो भवत्यय-मपीतरो वराह एतस्मादेव वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषमित्यपि निगमो भवत्यङ्गिरसोऽपि वराहा उच्यन्ते। ब्रह्मणस्पतिर्वृषभिर्वराहैः। अथा-प्येते माध्यमिका देवगणा वराहव उच्यन्ते। पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्॥ ४॥

"वराह (२१)"—इति, अनवगतमनेकार्थस्य। "मेघ." तावद् वराह उच्यते, स हि "वराहारो भवति" तस्य वर-मुदकमाहारः। "वरमाहारमाहार्षीरिति च ब्राह्मणम्" निर्वचनस्य दृढप्रतीत्यर्थं ब्राह्मणमाचार्येण प्रदर्शितम्। यथा

मेघो वराहशब्देनोच्यते, तथैव निगमः,—"अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवांश्चार्वन्ना। मुषायद्विष्णुः पचतं सहीयान् विध्यद्वराहं तिरो अद्रिमस्ता॥"—इति (ऋ॰ सं॰ १, ४, २८, २)। नोधा नाम गोतमपुत्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। अभिजिद्विश्वजिन्महाव्रतादिषु आहीनिकेषु अहःसु अहीनसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'अस्य इत् उ मातुः' अस्य जगन्निर्मातुः यज्ञस्य 'सवनेषु' प्रातःसवनमाध्यन्दिनतृतीयसवनेषु, 'महः' महतः यज्ञस्य, 'पितुं' महान्तं सोमभागं पपिवान् पीतवान्। पीत्वा 'चार्वन्ना' चारूणि च शोभनान्यन्नानि, अन्यान्यपि हवींषि भक्षयित्वा, तैर्हविभिः, तेन च सोमेन विवृद्धबलः, सद्यः एव 'पचतम्' परिपक्वमुदकदानसमर्थं मेघं हि 'विष्णुः' इन्द्रः, सर्वभूतानां वेष्टा प्राणभावेन 'मुषायत्' अमुष्णादित्यर्थः। 'सहीयान्' अभिभवितृतमः। कथम्पुनरमुष्णात्? इति। उच्यते,—"विध्यद्वराहं तिरो अद्रिमस्ता"। 'वराहम्' मेघं 'विध्यत्'। कथम्पुनः विध्यद्वराहम्? इति। उच्यते,—'तिरः अद्रिम् अस्ता' दूर एवावस्थितस्य 'अद्रिं' वज्रम् 'अस्ता' क्षेप्तेत्यर्थः॥ एवमेतस्मिन् मुषायच्छब्दसम्बन्धात् "वराहः=मेघ."—इत्युपपत्तिः॥

"अयमपीतरो वराह एतस्मादेव" असौ अपि हि वरं मूलाख्यमाहारमाहरत्येव। "वर वरं मूलं बृहति"—इत्यवक्तीत्यर्थः॥

यथा अयमपीतरो वराहशब्दः छन्दसि वराह इत्युच्यते, तथैव निगमः,—"विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः। शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम्॥"—इति (ऋ॰ सं॰ ६, ५, १०, ४)। काण्वस्य पुरुहन्तेरार्षम्।

ऐन्द्री। 'विश्वा इत् ता' विश्वानि एव तानि 'विष्णुः आभ-रत्'। 'उरुक्रमः' बहुविक्रान्तः, 'त्वेषितः' सन्दीपितः ब्रह्म-वाक्येन। यदि 'त्वा' 'इषितः'—इति पदविभागः, तथापि तु 'त्वेषितः'—इत्येकं पदं कृत्वैव निरुक्तम्, परोक्षकृतत्वाद्वा-क्यस्य, नान्यथार्थ उपपद्यते। कानि पुनस्तानि वसूनि आहरत्? इति। उच्यते,—'शतं महिषान्' बहून् महतो यज्ञान् आहरत्। किंलक्षणान्? इति। उच्यते,—'क्षीरपा-कम् ओदनम्' प्रायणीयाख्यमादितः कृत्वा ये क्रियन्ते तान्, सोमक्रतूनित्यभिप्रायः। कुतः पुनराहरत्? इति। उच्यते,—'वराहम्' असुरम्, वराहरूपेणावस्थितम्। सर्वेषामसुराणां मध्ये 'एमुषम्' मोहस्थानीयम्॥ "माययायमिन्द्रो जघान, तस्य मध्यादाहरत, यदयं वराहमिन्द्र एमुषमेकविंशत्याः पुरां पार इत्युच्यते"—इत्येवं ब्राह्मणं मैत्रायणीयके, तदनु-वादिनी चैषा ऋक्। तस्मादत्र वराह एवोच्यत इत्युपप-द्यते॥

"अङ्गिरसोऽपि वराहा उच्यन्ते"। "स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः। ब्रह्मणस्पतिर्वृष-भिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट्॥"—इति (ऋ० सं० ८, २, १६, १)। आयास्यस्याङ्गिरसस्येयमार्षम्। ब्राह्मणस्प-त्यस्य काम्यपशौ षडर्चे विनियुक्ता मैत्रायणीयके। 'सः' 'ब्रह्मणस्पतिः' 'सत्येभि' सत्यवादिभिः, 'सखिभिः' समान-स्थानैः, 'शुचद्भिः' दीप्तिमद्भिः, 'विधनसैः' विविधधनवद्भिः, 'वृषभिः' वर्षद्भिः वर्षितृभिः, 'वराहैः' 'घर्मस्वेदिभिः' घर्मता-पयितृभिः, प्रवर्ग्यकर्मणि, अथवा यज्ञस्वेदिभिः, यज्ञस्वादयि-तृभिः, यज्ञसद्भिर्वा। एवङ्गुणविशिष्टैरङ्गिरोभिः सहितो ब्रह्मण-स्पतिः 'गोधायसं' गोः वाचः धायितारम्, अपां वा, मेघम्।

'अटट्' अटारयदिति । विपरिणामपरोक्षकृतत्वाभ्नन्वय । टारयित्वा च 'द्रविणम्' उदकं 'व्यानट्' व्याप्नोतीत्यर्थः। एतस्यामृचि अङ्गिरसां विशेषलिङ्गं नास्ति वराहशब्दवाच्यत्व, सूक्ते तु एतस्मिन्नङ्गिरसो लिङ्गमस्तीत्ययः ।—

"ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः। विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त ॥"—इति (ऋ० स० ८, २, १५ सू०, २=१०, ५, ६७ व०, २)। 'ऋतं शंसन्त' ऋतं सत्यं वा प्रशंसन्तः, अपि च 'ऋजु' अकुटिलम् अतिकालमेव 'दीध्यानाः' ध्यायमानाः, सर्वभूतानामुपरि समचेतस इत्यभिप्रायः। 'दिवस्पुत्रासः' द्योतनवतः, 'असुरस्य' प्रज्ञावतः पुत्राः, 'वीराः' विविधानामर्थानां वक्तारः, ईरयितारो वा मेधावित्वात्। 'विप्रं पद' विप्राप्तं सर्वतः प्राप्तम् 'अङ्गिरसो दधानाः'। यत्पदं स्थानं ध्यानसहितस्य कर्मणः फलपराकाष्ठा, तामङ्गिरसो दधाना धारयन्तः चेतसा, विहृष्टप्रज्ञत्वात्। "यज्ञस्य धाम प्रथमं मनन्त" 'यज्ञस्य' यत् 'प्रथम' मुख्यं परमात्माख्यमनावृत्तिलक्षणं 'धाम' स्थानं तत्त्वेन 'मनन्त' जानत इत्यर्थः ॥ एतदेवैतस्यामृचि अङ्गिरोलिङ्ग दृष्टा एव निगमो भाष्यकारेणोदाहृतः,—"अङ्गिरसोऽपि वराहा उच्यन्ते"—इति ॥

"अथापि एते माध्यमका देवगणा वराहव उच्यन्ते" "मरुतः, रुद्राः"—इत्येवमादयः। अङ्गिरसो ब्लृप्तिसमाख्यामपि लभन्ते, तस्मान्माध्यमकत्वेऽपि सति पृथगुद्दिष्टाः। ये तावन्मरुतो वराहशब्देनोच्यन्ते, तथैव निगमः,—"एतच्चन योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः। पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ॥"—इति (ऋ० सं० १, ६, १४, ५)। राहूगणस्य गोतमस्येयमार्षम्। "आविद्यु-

न्नद्रिमरुतः"—इतीयमेतस्मिन्नेव सूक्ते। हे 'मरुतः!' 'एतत्' 'त्यत्' बलं यौष्माकीणं 'न योजनमचेति' न योगमागच्छति, विजितारित्वात् भवतां न युज्येत इत्यर्थः। तस्य बलस्य किम्? इति। उच्यते,—'सस्वर्हं यत् मरुतो व.'। अन्तर्हितं यत् सर्वेषां मनुष्याणाम्। यस्य च मध्ये युष्मान् 'वराहून्' परेषां शत्रूणां हन्तॄन्, उद्धर्षणान्, 'हिरण्यचक्रान्' सुवर्णविकृतचक्रान्, 'अयोदंष्ट्रान्' अयोमयान् रथानधिरूढान् 'विधावत.' नानाप्रकारं धावतः, 'पश्यन्' स्तौति, 'गोतम.'। तदेतत्र योजनमचेति। अचेतिर्गत्यर्थः, अञ्चतेर्गत्यर्थस्य साक्ष्यात्। एवमत्र प्रकरणे मरुतो वराहव उच्यन्ते इत्युपपत्तिः। मरुतादयो हि सर्व एव माध्यमका देवगणा वराहव उच्यन्ते। तेषां शाखान्तरेषु मृग्या निगमाः। निगमानुपलब्धौ च "माध्यमका देवगणा वराहव उच्यन्ते"—एतद् बहुवचनं मरुत्स्वेव योज्यम्, तेषां सप्तसप्तका गणा ब्राह्मणे हि श्रूयन्ते,—"ते सप्तसप्त मरुतां गणाः"—इति, तस्मादेवमप्युपपद्यते।

एवं बहुवचनं भाष्यकारस्य एकदेवताविषयेऽपि कदाचिद् वराहशब्दो भवत्येव, तदप्युपेक्षितव्यम्। तद्यथा,—"दिवो वराहमरुषं कपर्दिनम्"—इति (ऋ० सं० १, ८, ५, ५)। रुद्र उक्तः ॥ ४ ॥

स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति। उस्रा इव स्वसराणीत्यपि निगमो भवति। शर्या अङ्गुलयो भवन्ति (सृजन्ति कर्माणि) शर्या इषवः शरमय्यः शरः शृणातेः शर्याभिर्न भर-

मा॒णो गर्भ॑स्त्योरि॒त्य॒पि नि॑ग॒मो भ॑व॒त्यर्को॑ दे॒वो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृत्तः कटुकिम्ना ॥ ५ (४) ॥

"स्वसराणि (२२)"—इति। अनवगतम्। "स्वयं सारीणि"—इत्यवगमः। "अहानि"—इत्यभिधेयवचनम्, तानि हि स्वयमेव सरन्ति गच्छन्ति। अपि वा "स्वर् आदित्यः" अत्र उच्यते। "स एतानि सारयति" तेनैतानि स्वसराणीत्युच्यन्ते। "विश्वे॑ देवासो॑ अ॒प्तुरः॑ सु॒तमाग॑न्त॒ तूर्ण॑यः। उ॒स्रा इ॑व॒ स्वस॑राणि॥"—इति (ऋ० सं० १, १, ६, २)। मधुच्छन्दस आर्षम्। अग्निष्टोमे प्रउगे शस्त्रे गायत्रे तृचे वैश्वदेवे शस्यते। हे 'विश्वे देवासः!' 'अप्तुरः' कर्म प्रति त्वरमाणाः, ते हि याज्ञिकं कर्म प्रत्यागन्तुं त्वरन्ते। अत एवमामन्त्रयते 'सुतम् आगन्त' अस्माभिः अभिषुतमेतं सोमं प्रति 'आगन्त' आगच्छत। हे 'तूर्णयः' त्वरणशीलाः! कथं पुनरागच्छत? 'उस्रा इव स्वसराणि'। यथा 'उस्राः' रश्मयः, 'स्वसराणि' अहानि प्रति, शीघ्रमागच्छन्ति, एवमागच्छत॥ एवमस्मिन् रश्मिसम्बन्धात् "स्वसराणि"—इत्यहानीत्युपपद्यते।

"शर्याः (२३)"—इति। अनवगतम्। "शरमय्यः"—इत्यवगमः। "इषवः" अभिधेयाः। "शरः, शृणातेः" हिंसार्थस्य (क्र्या० प०), हिंसन्ति हि तेन। "अ॒र्य॒भि॒ हि श्रव॑सा त॒तर्दि॑थोत्सं॒ न कं चि॑ज्जनपा॒नमक्षि॑तम्। शर्या॑भि॒र्न भर॑माणो॒ गभ॑स्त्योः॥"—इति (ऋ० सं० ७, ५, २२, ५=९, ७, ७, ५)। कश्यपः समदृश्य "पव॑स्व॒ पवे॑न्द्र॒ वाज॑सातये"—इति पावमानं सौम्यं सूक्तं ददृशतुः। पिपीलिकमध्यास्त्रिस-

ऽनुष्टुभः षड्डूहत्यः, तासामियं द्वितीया । 'अभि-प्र तर्दिथ' एतं सोमं हे अभिषोतारः ! पुनः पुनरभिहते-त्यर्थः । 'अवसा' अवणीयेन मन्त्रेण । कथं पुनरभित-र्दिथ? इति,—'शर्याभिः न भरमाणः' शरमयीभिः इषुभिः यथा कश्चित् कं तर्दयेत् धनुर्धारयमाणः, एवमेतं सोमम् एभिः यावभिः 'गभस्त्योः' बाह्वोरवस्थितैरभितर्दिथ यूयम् । किञ्च, एवमेतं सोमं अभितर्दयन्तो यूयं वसतीवरी-भिरद्भिराप्याय्य 'उत्सं न कञ्चित्' कूपमिव कञ्चित् 'जनपान' महतः 'अचितम्' अचीणं कुरुत, महतो देवजनौघस्य पानार्हं प्रभूतं कुरुतेत्यभिप्रायः ॥ एवमिहाभितर्दनक्रियासम्बन्धात् "शर्या"शब्देन इषव उच्यन्त इत्युपपद्यते ॥

"अर्कः (२४)"—इति, अनेकार्थम् । "देवः" तावत् सर्व एवार्क इत्युच्यते । आह किं कारणम् ? उच्यते,—"यत्" यस्मात् "एनं" देवम् "अर्चन्ति" स्तोतारः । "अर्को मन्त्रो भवति" । किं कारणं ? "यत्" यस्मात् "अनेन" मन्त्रेण "अर्चन्ति" तस्मादर्कः । "अर्कमन्नं भवति" । किं कारणम् ? तद्धि "अर्चति भूतानि" यो हि पूज्यः, तस्मात् तमपि सत्कार-विशेषेण संस्कृत पूजा क्रियते, पूज्य च सर्वस्यैनमन्नम् । "अर्को वृक्षो भवति" य एष प्रसिद्धः । आह किं कारणम् ? इति । उच्यते,—"संवृत्तः" सन्नतः, सव्यासः, "कटुकिम्ना" कटुकभा-वेन भवति ॥ ५ ॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥
गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो
ब्राह्मणास्त्वा शतक्रतो उद्येमिरे वंशमिव वंशो

वनशयो भवति वननाच्छ्रूयत इति वा पवी रथ-नेमिर्भवति यद्विपुनाति भूमिम्। उत पव्या रथानामद्रिं भिन्दन्त्योजसा। तं मरुतः क्षुर-पविना व्ययुरित्यपि निगमौ भवतः। वक्षो व्याख्यातं धन्वान्तरिक्षं धन्वन्त्यस्मादापः। तिरो धन्वातिरोचत इत्यपि निगमो भवति। सिन-मन्नं भवति सिनाति भूतानि। येन स्मा सिनं भरथः सखिभ्य इत्यपि निगमो भवति। इत्था-मुथेत्येतेन व्याख्यातं सचा सहेत्यर्थः। वसुभिः सचा भुवा। वसुभिः सह भुवौ। चिदिति निपा-तोऽनुदात्तः पुरस्तादेव व्याख्यातोऽथापि पशुना-मेह भवत्युदात्तश्चिदसि मनासि चितास्त्वयि भोगाश्चेतयस इति वा आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्यध्यर्थे दृश्यते। अभ्र आँ अपः। अभ्रे आ अपोऽपोऽभ्रेऽधीति द्युम्नं द्योततेर्यशो वा अन्नं वा। अस्मे द्युम्नमधि रत्नं च धेहि। अस्मासु द्युम्नं च रत्नं च धेहि ॥ ६ (५) ॥

इति पञ्चमाध्यायस्य प्रथमः पादः ॥ ५, १ ॥

यथा तावद्देवोऽर्कशब्देन उच्यते, तथैव निगमः,—

"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शत-क्रतो उद्वंशमिव येमिरे॥"—इति (ऋ० मं० १, १, १८, १)। मधुच्छन्दस आर्षम्। अनुष्टुप्। ऐन्द्री। हे भगवन्निन्द्र। 'गायन्ति त्वा गायत्रिणः' स्तुवन्ति त्वां सामगाः, सामभिः। 'अर्चन्त्यर्कमर्किणः' पूजयन्ति त्वाम् ऋग्भिः होतारो मन्त्रिणः। एवमनेन प्रकारेण सर्वे एते "ब्राह्मणाः" यास्मे कर्मणि हे 'शतक्रतो!'। 'उद्वंशमिव येमिरे' उद्येमिरे वंशमिव त्वां स्तुतिभिः हविर्भिश्च, यज्ञेषु तवैव महिमानं वर्द्धयन्तीत्यर्थः॥ "वंशो वनशयो भवति" वने शयित इवास्ते। "वननाच्छ्रूयत इति वा" सम्भजनाद् वा वक्षिभिः॥ एवमत्र देवः "अर्क"-शब्देनोच्यते॥

- मन्त्रस्यार्कशब्दवाच्यत्वे "अर्चन्त्यर्कमर्किणः"—इत्येष एव निगमः (८८५पृ०२२पं०), अर्किणो हि मन्त्रिण एवाभिप्रेताः॥ इत्यत्र प्रसिद्ध एव, तेन निगमस्तदभिधायको नैवास्ति॥

"पविः (२५)"—इति। अनवगतम्। "रथनेमिर्भवति"—इत्यभिधेयवचनम्। "यद् विपुनाति भूमिम्" सा हि विपु-नाति भूमिमिति पविः॥ "उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः। उत पव्या रथानामद्रिं भिन्दन्त्योजसा।"—इति (ऋ० सं० ४, २, ८, ४)। स्तावाश्वस्येयमार्षम्। हे मरुतः! येषां वः तिरोभवितुमाविर्भवितुं च काले शक्तिरस्ति, ते यूयम् 'उत स्म' अपि च कस्मिंश्चन काले 'शुन्ध्यवः' मद्राव इव 'परुष्ण्यां' नद्यां, माध्यमिकायां वा विपर्ववत्यां यूयमेव 'शुन्ध्यवः' शोधयितारः 'ऊर्णाः' चिवाः, तिरोहिताः 'वसथ' एतस्मिन्नन्तरिक्षलोके। 'उत' अपि च, कस्मिंश्चिदभ्युद्गमन-काले प्राप्ते युष्माकं 'रथानां पव्याः' या रथनेमयः, ता एव 'अद्रिम्' एवं 'भिन्दन्ति' 'ओजसा' बलेन, किमुत यूयमित्य-

भिप्राय' ॥ एवमेतस्मिन्नर्थसंयोगात्पविशब्देन रथचक्रनेमि-रभिसम्बध्यते। ब्राह्मणमपि चैतस्मिन्नेवार्थे चातुर्मास्येषु मान्तपन हविरधिकृत्य 'देवा वै वृत्रस्य मर्म नाविदन्—"त मरुतः क्षुरपविना ,व्ययु" मान्तपन सन्तापस्तस्मात् सान्तपनाः'—इति। एतस्मिन्नपि च ब्राह्मणे चक्रनेमिः क्षुरधाराकृतिस्तीक्ष्णपविरित्युच्यते, तस्मादुपपद्यते। अल्पप्रयोगविषयत्वादुदाहरणद्वयम् ॥

"वक्षः (२६)"—इति, व्याख्यातम्। "उपो अदर्शि शुन्ध्युवः"—इत्यत्र ॥

"धन्व (२७)"—इति, अनवगतम्। "धन्वन्ति"—इत्यव गम.। "अन्तरिक्षम्"—इत्यभिधेयवचनम्। "धन्वन्त्यस्मादाप."—इति नामप्राप्तौ हेतुनिर्देशः,—"यः परस्याः परावतस्तिरो धन्वातिरोचते। स नः पर्षदति द्विषः ॥"—इति (ऋ॰ स॰ ८, ८, ४५, २)। अग्निपुत्रस्य वत्सस्यार्षम्। व्यूढस्य दशरात्रस्य नवमेऽहन्याग्निमारुतस्य शस्त्रस्य जातवेदस्ये सूक्ते निविद्धानीये शस्यते। 'य.' अग्निरादित्यात्मनावस्थित, परस्या. परावत.' परस्यामपि परावति वर्त्तमानः, 'तिरः' तीर्णतममेतन्महदन्तरिक्षं 'धन्व' स्वेन प्रभावेन दीप्त्या 'अति' अतीत्य, अस्मान् प्रति 'रोचते' एव, प्रकाशत एव। अनेनैवमतिमहतापि तिरोधीयत इत्यभिप्रायः। तस्य किम् ? इत्युच्यते,—'स नः' सोऽस्माकं 'पर्षत्' 'अति' सर्वतः मादयतु नाशयतु 'द्विषः' द्वेष्टॄन् इत्यर्थः। एवमस्मिन्नादित्यस्तुतिसम्बन्धात् "धन्व"शब्दोऽन्तरिक्षाभिधानमित्युपपद्यते ॥

"सिनम् (२८)"—इति, अनवगतम्। "सिनाति"—इति शब्दयुक्ति'। "अन्न भवति"—इत्यभिधेयवचनम्। "सिनाति भूतानि" बध्नातीत्यर्थं, अन्नेन हि सर्वाणि भूतानि बध्यन्ते।

"इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन्।
क्व१ त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः
सखिभ्यः॥"—इति (ऋ० सं ३, ४, ८, १)। विश्वामित्रस्यार्षम्। तार्तीयसवनेषु उक्थपर्यायेषु स्तोमाभिगमने सैवा वरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'इमा उ वां' युवयोः 'भृमयः' स्तुतयः यायास्त्वैस्त्वैस्तोद्वभिरुदीरयामहे, ता पुनरेता अस्मै 'युवावते' युष्मद्वते, भवद्भ्यां तद्वते यजमानाय 'न' यथा पूर्वं 'तुज्या' दानायाभिमतानामर्थानाम् 'अभूवन्' बभूवु। यतो ब्रवीमि,—हे 'इन्द्रावरुणौ!' 'क्व त्यत्' क्व तत् युवयो 'यशः' माहाभाग्य गतम्? 'येन' माहाभाग्येनैताभिः स्तुतिभिः अभिष्टुतौ सन्तौ 'सिनम्' अन्न 'भरथः' 'सखिभ्य' समानख्यानेभ्यो यजमानेभ्य। अन्नमेव हि प्रायेण यजमानै. प्रार्थ्यत इति "सिन"शब्देनान्नमभिधीयत इत्युपपत्ति। व्यभिचारित्वादभिधानाना "सिनम्"—इत्यादीनि स्वेस्वेऽभिधानवर्गे पठितान्यपि सन्ति नैघण्टुके प्रकरणे समाम्नाता द्वैतस्मिन्नैकपदिके प्रकरणेऽनवगतसंस्काराभिप्रायेण, कानिचिदनेकार्थाभिप्रायेण॥

"इत्था (२८)"—इति, एष निपात, "अमुथा"—इत्यनेन व्याख्यातोऽष्टमेऽध्याये।

"सचा (३०)—इति, अप्रतीतार्थो निपात। "सह"—इत्यर्थप्रतीतिः। "अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभि. सचा भुवा। सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना॥"—इति (ऋ० सं० १, ३, १४, १)। श्यावाश्वस्यार्षम्। त्रिष्टुप्. ज्योतिष्मती। हे 'अश्विनौ!' एताभि अग्न्यादिभि. देवताभि. 'सचा भुवौ' सहितौ भूत्वा, 'सजोषसौ च' सहप्रीतौ, इम 'सोम' 'पिबतम्'। पीत्वा

चैतन्नामाख्यातमर्थमभिप्रेतं कुरुतमित्येवमाद्योयोक्त्या। एवमिन्द्राग्न्यादिदेवताभिमन्त्रणात् "सचा"—इत्येव मन्त्रयोगो भवतीत्येतदुपपद्यते।

"चित (२१)"—इति, एष "निपातः" "अनुदात्तः"। तद्यथा,—"मयश्चिद् यः शर्वसा पर्वं कृष्टोः"—इति (ऋ० स० ८, ८, २६, ३)। स "पुरस्तादेव व्याख्यातः" चिदित्येषोऽनेककर्मा"—इत्यत्र। "अथापि" अयमेव "उदात्तः" आद्युदात्तो भवति, ततः "पशुनाम भवति"। तद्यथा,—"चिदंसि मनासि धीरसि—इति राजक्रयणी गोस्तुती। सैवोच्यते,—"चिदसि मनासि"—इति। अतः पुनरेतद् ब्राह्मणे व्याख्यायते,—"चिदसीति यद्य विचिकित्सते"—इत्येवमादि आख्यायते॥

"आ (२२)—इति, आकार उपसर्ग, पुरस्तादेव व्याख्यातः" —"आ इत्यर्वागर्थे"—इति। "अथाप्युपमार्थे दृश्यते" निपातत्वेन "जार आ भर्गम्"—इति। "अथापि" कदाचित् "अध्यर्थे दृश्यते"—"अधोध्य परिभावमैत्त्वर्ये वा"—इति। यथायमध्यर्थेऽपि भवति, तथा "अभ्र आँ अपः"—इत्येष निगमः। "कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम्। आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी॥"—इति (ऋ० स० ४, ३, २, १)। अधुना पदविभागमस्य भाष्यकारः करोति, उपसर्गविभागोपप्रदर्शनार्थम्,—"अभ्रे, आँ, अपः"—इति। अधुना "आँ—इत्यस्यार्थं ब्रवीति,—"अपोऽभ्रे ऽधीति" यदुक्तं व्यासदेवोक्तं भवति "अभ्र आँ अप."—इति। प्रतिमानो रावेयस्येयमार्षम्। वैश्वदेवस्य प्रथमैव। जगती। एव पुनः प्राधेयापः स्तूयन्ते। "आपो वै विश्वे देवाः, सर्वा एव वा देवता."—

इत्यनेन ब्राह्मणदर्शनेनापां विश्वेदेवत्वमुपपद्यते। तत् पुनः सूक्तं अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे शस्यते। "कदु प्रियाय धाम्ने मनामहे"। 'कत् उ प्रियाय' सुखाय प्रियाय च 'धाम्ने' स्थानाय वैश्वदेवाय, तत् प्राप्त्यर्थम्। तानेव च विश्वान् देवान् य 'मनामहे' त एवम् ह्युपास्यमाना नत स्थान प्रापयतु समर्था इत्यर्थं मनामहे। स्थानविशेषणान्येवान्तराण्यपि स्वक्षत्रादीनि। 'स्वक्षत्राय' च धाम्ने स्वबलायेत्यर्थं। यत्र स्वमेव बलं भवति, न तत्र परकीय बलमाश्रयते, यथेह लोके। 'स्वयशसे', यत्र स्वमहिमकृत मेव यशो भवति, न सायोगिकद्रव्यकृतम्। 'महे' महते धाम्ने। मत्प्राप्त्यर्थमेव 'वय' मनामहे, मत्वा चोपास्महे इत्यभिप्राय। 'आमेन्यस्य' मेना माध्यमिका वाक्, सा यत्र, तस्य। 'रजस' रजोलोक, अन्तरिक्षलोक इत्यर्थ, तस्य। 'यो' उपरि। 'यत् अभ्रे' यो मेघ, तत्र। या आप अत्र स्थिता, ता 'अप'। 'वृणाना' सम्भजमाना 'वितनोति' विस्तृणाति वर्षभावेन। 'मायिनी' प्रज्ञावती, माध्यमिका वाक्। ता 'अप' 'वयम्' एवमादिगुणयुक्ता, तासामेव सर्वगतस्य धाम्न प्राप्त्यर्थं 'मनामहे' याचामहे। अभ्रे एव हि अधि आप वर्त्तन्ते इति पाङ्क्ष्यर्थ इत्युपपद्यते॥

अथ चैवमन्यथास्य मन्त्रस्यार्थं स्यात्,—'कदु प्रियाय' सुखाय प्रियाय चैतस्मै 'धाम्ने' स्थानाय, यत्र वय वर्त्तामहे। कथ नामैतत् स्थान सुख च प्रिय च स्वबलञ्च समहत्त्वञ्च स्या दित्येवमर्थं विश्वान् देवान् मनामहे। "मदेमहि, मनामहे" —इति याच्ञाकर्मसु पठितम्। कतमा पुनरपो याचामहे? इति। उच्यते,—'आमेन्यस्य रजस' आभिमुख्येन मननीयस्य रजसोऽन्तरिक्षलोकस्य यदभ्रमुपरि वर्त्तते, तस्मिन्नभ्रे 'अप.'

'वृणाना' सम्भजमाना 'मायिनी' माध्यमिका वाक् 'वितनोति' वृष्टिभावेन, ताः 'मनामहे' याचामहे ॥

"द्युम्नम् (३३)"—इति, अनेकार्थम्। "यशो वा अन्नं वा"—इत्यभिधेयवचनम्। "शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु। जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि।"—इति (ऋ० सं० ५, २, ८, ३)। वसिष्ठस्यार्षम्। त्रिष्टुवेव। महाव्रते महदुक्थे दक्षिणे पक्षे शस्यते। हे 'शिप्रिन्!' इन्द्र! 'शतं' 'ते' तव 'ऊतयः' आगमनानि सन्तु। क? 'सुदासे' सुदाने कल्याणदाने, एतस्मिन् यजमाने, तदेनमनुगृहाण, यथा नित्ययाज्येवायं यजमानः स्यादित्यभिप्रायः। आगतस्य च सतः तव 'सहस्रं शंसा' ब्रह्मणि स्तोत्राणि सन्तु। 'उत रातिः अस्तु' अपि च हविर्दत्तिरस्त्वत्येतदेवानुवर्त्तते। एवञ्च त्वमागत उपहूतः सन् शृणु, यत् कुरुष्व। हे 'वधः' वधयितः! 'वनुषः मर्त्यस्य', योऽस्मान् हन्तुमिच्छति मर्त्यो मनुष्यः, तस्य। यद् वीर्य्यम्, तत् 'जहि'। हत्वा च तस्य वीर्य्यम्, निरुत्साहमकृत्वा 'अस्मे' अस्मासु 'द्युम्नम्' "अन्नं यशो वा" 'रत्नं च' 'धेहि' देहीत्यर्थः। 'रत्नं' धनम्। एवमेतस्मिन् शत्रुवधसम्बन्धात् "द्युम्न"शब्देन "यशो वा अन्नं वा" उच्यत इत्युपपत्तिः, हते हि शत्रौ यशोऽन्नं वा भवतीति। "द्युम्नं द्योततेः"—इति, प्रशंमवाह भुञ्जानस्य दीप्तिर्भवतीति। द्युम्नं द्योतयितृ च, यशस्तु दीप्तं प्रकाशस्वभावादिति ॥ ६ ॥

इति निरुक्तवृत्तौ दशमाध्यायस्य (पञ्चमाध्यायस्य) प्रथमः पादः ॥ ५, १ ॥

---

द्वितीयः पादः ॥

पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यते । येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति । रश्मयः पवित्रमुच्यन्ते । गभस्तिपूत इत्यपि निगमो भवत्यापः पवित्रमुच्यन्ते । शतपवित्राः स्वधया मदन्तीर्बहुदकाः । अग्निः पवित्रमुच्यते वायुः पवित्रमुच्यते सोमः पवित्रमुच्यते सूर्यः पवित्रमुच्यते इन्द्रः पवित्रमुच्यते । अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः । पवित्रं ते मा पुनन्त्वित्यपि निगमो भवति । तोदः सुद्युतेः ॥ १ (६) ॥

"पवित्रम् (३४)"—इति, अनेकार्थम् । "पुनातेः"—इति धातुनिर्देशो निर्वचनाभिप्राय. । "मन्त्रः पवित्रमुच्यते"—
१ २ ३ २  ३ १ २ ३  १ २  १ २३ १ २
इत्यभिधेयवचनम् । "येन देवाः पवित्रेणात्मानं पुनते सदा ।
३ २  ३ १ २  ३ १  २
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥"—इति (सा० सं० उ० आ० ५, २, ८, ५) । मन्त्रस्य पवित्रत्वप्रख्यापको नियमः पवित्रस्य वसिष्ठसहितस्य वा आर्षम् । पावमानी सौमी 'येन' 'पवित्रेण' मन्त्रेण 'देवा.' ऋत्विग्यजमानाः 'आत्मानं पुनते' 'सदा' सततमेव । प्रस्तुते कर्मणि यस्य मन्त्रस्य तत् सामर्थ्यम्, 'तेन' मन्त्रेणैवं वीर्यवता 'सहस्रधारेण' बहुप्रकारेण

प्रविरलेन 'पवमानः' पूयमानः, सोमो मां पुनातु ॥ मन्त्रेणैव देवा ऋत्विग्यजमाना आत्मानं पुनन्ति, तस्मादुपपद्यते तेषां देवत्वमिति, न हि एतरेषां देवानां पापमस्ति, यत् पूयेत। "न च वै देवान् पापं गच्छति"—इति विज्ञायते। तस्माद्देवशब्देनात्र ऋत्विग्यजमाना उच्यन्ते। ते हि हविषां दातारः, याचनेन च अर्थिनः तस्मादुपपद्यते तेषां देवत्वम् ॥

"रश्मयः पवित्रमुच्यन्ते" ते हि स्पर्शनेनैव पावयन्ति। "वाचस्पतये पवस्व वृष्णः अंशुभ्यां गभस्तिपूतः। देवो देवेभ्यः पवस्व येषां भागोऽसि"—इत्येषा उपांश्वन्तर्यामग्रहग्रहणे विनियुक्ता। हे सोम! वाचस्पतिरिन्द्र, त्वां पश्यतीत्येतमर्थं पुरस्कृत्य 'वृष्णः' वर्षितुः, अग्नौ प्रास्ताहुत्या वृष्टिं कर्तुरादित्यस्य चार्थे 'पवस्व' पूयस्व, यावेतावन्तर्हितौ सन्तौ सकलयज्ञं व्याप्नुवानौ निषिच्यमानस्यैव ताभ्यां पवस्व। अपि च त्वं प्रागप्यभिषवात् 'गभस्तिपूतः' एव रश्मिपूतः। किञ्च, 'देवः' त्वं दानादिगुणयुक्तः। देवानामेव दानादिगुणयुक्तानां पवित्रमसि पावयितासि। किं सर्वेषामेव? नेत्युच्यते,—'येषां भागोऽसि' ये त्वामभिषवादिक्रियया भजन्ति ऋत्विग्यजमानाः, ते ह्यत्र देवत्वेनाभिप्रेताः पापसम्बन्धात्, न ह्येतरेषां देवानां पापमस्ति। पूर्ववत् किञ्चित् ॥

"पवमान मह्यर्णो वि धावसि सूरो न चित्रो अव्यानि पव्यया। गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्वसि ॥"—इति। एतं मन्त्रं व्याचष्टे। ऋषिगणैरष्टमायादिभिर्व्यस्तैः समस्तैश्च त्रिभिः "प्र ते मागवः"—इत्येतस्मादष्टाचत्वारिंशदृचस्य सूक्तस्य चत्वारिंशतामृचां दशदशर्चा दृष्टाः, तत्रैषा चतुस्त्रिंशत्तमी। हे 'पवमान' पूयमान! सोम! 'अव्ययानि' 'पव्यया' पवित्रयेन, चौर्णेन पवित्रेण पूयमानः,

त्वम् 'मंहि' 'अर्णः' उदकम्, उदकत्वेनाभिसम्पन्न, ततस्तद्भावमुपगतः, निर्दोषः, स्वच्छो भूत्वा ततो द्रोणकलशं प्रति 'विधावसि'। कीदृशः पुनः पूर्वं भूत्वा एतां रसावस्थामापद्यते त्वम्? इति, उच्यते,—पूर्वं तावदरण्येऽवस्थितः, 'गभस्तिपूतः' रश्मिपूतः सन्। ततः आहृत्य क्रीत्वा सोमस्तूपविक्रयविधानेन, 'नृभिः' ऋत्विग्यजमानैः 'अद्रिभिः' ग्रावभिः 'सुतः' अभिषुतः। ततो 'महे' 'वाजाय' अन्नाय 'धन्वसि' कृत्स्नं जगद्धारयित्वेऽर्थाय। कथं नाम कृत्स्नजगदुपकारित्वमभिनिष्पद्येत, वृष्टिनिमित्तेनेत्येतमर्थं पुरस्कृत्य रसभावमापन्नो द्रोणकलशं प्रति 'धन्वसि' प्राप्नोषीत्यर्थः? 'सूरो न चित्रः' सूर्य इव पूजनीयः। एवमस्ति "गभस्तिपूतः"—इत्येतस्मात् पावनसम्बन्धाद्रश्मीनां पवित्रत्वमुपपद्यते। केचित् "युविर्चवन्तः परि वार्यमामते"—इति (ऋ० सं० ७, २, २८, ३)। एष निगमो विधीयते॥

"आपः पवित्रमुच्यन्ते" ता अपि हि पावयन्ति। "शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः। ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत॥"—इति (ऋ० सं० ५, ४, १४, २)। अब्देवत्या। त्रिष्टुप्। वसिष्ठस्यार्षम्। 'शतपवित्राः' बहुपावयित्र्यः, याः देव्यः, 'स्वधया' अन्नेन सहिता भूत्वा 'मदन्तीः' 'देवीः' दानादिगुणयुक्ताः, 'देवानां' दानादिगुणयुक्तानामिव 'पाथः' पानं सोमाख्यम्, 'अपि यन्ति' अपि गच्छन्ति। ताः, एवंलक्षणा आपः, 'इन्द्रस्य न मिनन्ति' न हिंसन्ति च तानि कर्माणि? येनाभ्रवधानन्तरमविलम्बमाना वर्षभावेन प्रचरन्तीत्यभिप्रायः। या एताः, एवङ्गुणयुक्ता आपः, ताभ्योऽत्र 'सिन्धुभ्यः' स्यन्दमानाभ्यः 'हव्यं' हविः, 'घृतवत्' घृतमिश्रम् 'जुहोत' हे ऋत्विजः! अर्चन्ति ता

द्रविरित्यभिप्रायः । एवमत्रापः "पवित्र"शब्देनोच्यन्ते, अब्दे-वतत्वादस्य मन्त्रस्य ॥

अग्न्यादयोऽपि ह्येते पवित्रशब्देनोच्यन्ते, तेऽपि हि सर्व एव पावयन्ति । "अग्निः पवित्रं स मा पुनातु, वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु ॥"—"इत्यपि निगमो भवति" । निगदप्रसिद्ध एवैष निगमः ॥

"तोदः (३४)"—इति, अनवगतम् । "तुदः"—इत्यवगमः । *"तुदते." व्यथनार्थस्येति (तु० उ०) धातुनिर्देशः ।* भूमेर्विलं तोद इत्युच्यते, तद्धि तुन्नं भवति दीर्घत्वात् । कूप इत्येके ॥ २ (६) ॥

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥ बहुदाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेरीश्वरोऽप्यरिरेतस्मादेव यदन्यदेवत्या अग्नावाहुतयो ह्रियन्त इत्येतद् दृष्ट्वैवमवक्ष्यत् । तोदस्येव शरण आ महस्य । तुदस्येव शरणेऽधि महतः स्वञ्चाः सु अञ्चनः । आजुह्वानो घृतपृष्ठः स्वञ्चा इत्यपि निगमो भवति । शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥ २ (७) ॥

"पुरु त्वा दाश्वान् वोचे ०—० महस्य" इति (ऋ० सं० २, २, १८, १) । दीर्घतमस आर्षम् । उष्णिक् । प्रातरनुवाकाश्वि-नयोः शस्यते । 'पुरु त्वा दाश्वान्' बहुदानवान् अहं भूत्वा हे

अग्ने ! त्वामहं 'वोचे' त्वामाह्वयामीत्यर्थः । किं पुनः कारण-मन्या देवता उत्सृज्य त्वामाह्वयामि ? इति, उच्यते,—यस्मात् 'अरिः अग्ने ! तव स्वित् आ'—इत्येतद् विवक्षार्थं सुचिरमपि विचार्य तवाहमरिरिव स्तोमानामुच्चारणे । अर्थ्यः, ईश्वर एव, समर्थोऽहमाह्वयामि त्वां स्तोतुं बहु च दातुमित्यभि-प्राय. । किं पुन. कारणमन्या देवता उत्सृज्य त्वामेवाह्व-यामि ? इति, उच्यते—इतः,—यस्मात् 'तोदस्य इव शरणे आ महस्य' तुन्नस्येव विदीर्णस्य कस्यचिच्छ्वभ्रस्य कूपस्योपरि । आङ् अध्यर्थः । 'महस्य' महत इत्यर्थ । 'शरणे' विले । "शॄ" हिंसायाम् (क्र्या० प०), तस्य शरणं विलम्, तद्विदारितं भवति, तथाहि श्वभ्रे विले कस्मिंश्चिद् बह्वय आपो गच्छन्ति, न च तस्य श्वभ्रस्य महतो ग्रहणशक्तिपरिहाण भवति, एवं तवानेकाधानेकदेवताया आहुतीरस्माभिः प्रदत्ता. प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति, अतो देवतानामस्माकं त्वमेवातिविशि-ष्टोपकारे प्रवृत्तः, अतः त्वामेवाह्वयामि ॥ एवमत्र शब्दसारू-प्यादुपमार्थोपपत्तेश्च "तोद"शब्दस्य भूप्रदेशस्याभिधायकत्व-मित्युपपद्यते । तथा चोक्तम्, "तोदमध्ये निङ्क्त्वार्द्रचतुर्दश-शङ्कु निखन्यात्"—इति सदसो निर्माणे ।

स्त्रिया अपि च अमत्प्रदेशः तोद इत्युच्यते । तस्मादेत-दपि तुन्नस्य भूप्रदेशस्याभिधायकमित्युपपद्यते ॥

"अरिः, अमित्रम्, ऋच्छतेः."—इति निगमप्रसक्तम् । ऋच्छतेः हिंसार्थस्य (भू० प०) । "ईश्वरोऽप्यरिः एतस्मादेव" धातोः । यदन्यदेवत्या अग्नावाहुतयो ह्रियन्ते, यस्मादन्यदेव-ताश्च अग्निदेवताश्चापरिसङ्ख्यया अग्नावाहुतयो ह्रियन्ते, न चाग्नेः स्वाता ग्रहणशक्तिपरिहाणमस्ति, न च म्रायते श्वभ्रे, विल इव निविक्ता आपः क्वापि गच्छन्ति, ता आहुतय इत्ये-

तत् सामान्य इष्टैवमवोचन्मन्त्रदृक,—"तोदस्येव शरण आ मह्स्य"—इति, "तुदस्येव शरणेऽधि महत"—इत्यर्थ ॥

"स्वश्वाः (३६)"—इति, अनवगतम् । "सु—अश्वन"—इत्यवगम । "स भानुना यतते सूर्य्यस्याजुह्वानो घृतपृष्ठ स्वञ्चा । तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह ॥"—इति (ऋ० स० ४, २, ८, १)। अग्नेरार्षम् । ऐन्द्री । त्रिष्टुप् । यस्य यजमानस्य नित्यपापयुक्तत्वात् तेषु तेषु कर्मसु ज्वलित अग्नि 'आजुह्वान' आहूयमान, अभिहूयमानो वा, 'घृतपृष्ठ' घृताक्तपृष्ठ, 'स्वञ्चा' शोभनगमन, स्वेन प्रकाशेन 'भानुना' सता सूर्य्येण 'सयतते' सङ्गच्छते, ससर्द्धते वा, सूर्य्येण अतिदीप्तत्वात् । तस्य यजमानस्य किम्? इति, उच्यते,—'तस्मै' एव 'अमृध्रा' अमृता, अम्लाना, 'उषस' 'व्युच्छान' विभान्तीत्यर्थ । यस्यैवमभिहूयमानोऽग्नि नित्यकालमेव सूर्य्येण सयतते, तस्यैव पुण्यकृत सुप्रभाता रात्रयो भवन्ति,—नेतरस्य यज्वन इत्यभिप्राय । अपि च य एवम 'आह' अयज्वापि शूद्रादितीयो दरिद्र कश्चित् 'इन्द्राय' इन्द्रार्थ 'सुनवाम' अभिषुणुम सोमम् 'इति' तस्यापि कल्याणाभिव्याहारिण सुप्रभाता एवोषस,—किमुत य सुनोतीत्यभिप्राय ॥ एवमस्मिन् "सूर्य्येण सयतते"—इत्यनेन सम्बन्धात् "स्वञ्चा = स्वञ्चन" अञ्चते (भू० र०) गत्यर्थस्य दर्शनादित्युपपद्यते ॥

"शिपिविष्ट, विष्णु"—"इति" एते "विष्णो" एव "द्वे नामनी भवत"। अत्र "शिपिविष्ट (३७)"—इति, एतद् गुणपदमनवगतम पक्षेण चानेकार्थम् । शिपिविष्ट, शेप इव निर्वेष्टित इत्यर्थप्रतोति.। अस्य सम्बन्धादत्र "विष्णु (३८)" शब्द समाम्नात । यथा "अत्रा"—इत्यस्य मन्त्र-

म्नात् "सोम"शब्दः "सोमो यथा"—इति। न ह्यत्र माधान्येन विष्णुशब्दः समाम्नातः, देवतापदत्वात्। अनयोर्द्वयोरपि नाम्नोः यत् "पूर्वं" तत् "कुत्सितार्थीयं भवति"—"इति" "औपमन्यवः" आचार्यो मन्यते। यथा च कुत्सितार्थीयं तथो दाहरणार्थमेव निर्ब्रुवन् दर्शयिष्यति॥ २ (७)॥

किमित्ते विष्णो परिचक्ष्यं भूत् प्रयद्ववक्षे शिपिविष्टः अस्मि। मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ॥ किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मा वर्पो अस्मदप गूह एतत्। वर्प इति रूपनाम वृणोतीति सतो यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिस्तस्योत्तरा भूयसे निर्वचनाय॥ ३ (८)॥

"किमित् ते" "प्रतत्ते अद्य"—इति (ऋ० स० ५, ६, २६, ६, ५)। वसिष्ठस्यैते आर्षे। विष्णोः शिपिविष्टस्याम्नारम्भणीये चरुः, तस्यैते याज्यानुवाक्ये, वाजपेये च सप्तदशे यज्ञे प्रणवे, सोमातिरेकभक्षे च तृतीयसवने च विकल्पः

त्वम् ? इति पृष्ट. शिपिविष्टोऽस्मीत्युक्ते अनन्तरं प्रक्रियते, "किमित् ते विष्णो."—इति । किमेतदेवैकं विगतरश्मिरूपं 'परिचक्ष्य" परिख्याख्यापनीयं भवति, नान्यानि रूपाणि तव सन्ति, येनैव "प्रववचे" पुनः पुनर्ब्रूषे । अस्माकमयत. "शिपिविष्टः अस्मि"—इति, "शेप इव निर्वेष्टितोऽस्मीति" "अप्रतिपन्नरश्मिः" हि सूर्य्यः, उदयकाले निर्वेष्टितः शेपस्वरूपो भवति, तस्य तद्रूपगुणयोगित्वमकुत्सितार्थमित्युपपद्यते । "अपि वा" "प्रशंसानामैवाभिप्रेतं स्यात्" प्रशंसायुक्तगुणमेवैतन्नाम स्यात् "शिपिविष्ट."—इति । आह,—कथम् ? इति, उच्यते,— "शिपयः" "अत्र" अस्मिन् प्रशंसापक्षे "रश्मयः उच्यन्ते" । स च सूर्य्यो मुहूर्त्तं तः "तै." शिपिसञ्ज्ञैः बालरश्मिभिः "आविष्ट." तस्मात् "शिपिविष्ट."—इत्युच्यते । एवमेतद् व्युत्पाद्यमानं प्रशंसानामैव भवति, नाश्लीलोपमासम्बद्धमित्यभिप्राय. । हे 'विष्णो !' किमेतदेवैकं रूपं तव 'परिचक्ष्य" "प्रख्यापनीयम्" अस्ति, यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु नान्यानि रूपाणि प्रख्यापनीयानि सन्ति । "यद्धत" एवं "प्रब्रूषे—शिपिविष्टोऽस्मीति प्रतिपन्नरश्मि." प्रतिपन्नमात्रेषु रश्मिष्विति । विजानीमस्त्वेतद्रूपद्वयम् । अतो ब्रूमः,—"मा वर्पो अस्मदपगूह एतत्" । 'मा' एतत् 'वर्पः' रूपम् 'अस्मत्' अस्माकमयतः प्रख्यापय । किं तर्हि ? 'अपगूह एतत्' संवृतं कुरुष्वैतद् "शिपिविष्ट"शब्दवाच्यमुपमेयरूपम्, अथवा बालरश्मिसंयुक्तम् । किं तर्हि ? "यदन्यरूपः" येनान्येन रूपेण 'समिथे' "संग्रामे" 'बभूथ' "भवसि" । "संयतरश्मिः" सम्बद्धानेकरश्मिजालः, तदेव नो माध्यन्दिनं रूपमनेकरश्मिविकचं प्रकाशयस्वेत्यभिप्राय । तदप्रनाष्टष्ट संग्रामेषु भवति ॥ "तस्य" एवार्थस्य प्रकृतस्य

यया प्रशंसानामैतदिति, "उत्तरा" ऋगस्या एव प्रज्ञाताया ऋच "भूयसे निर्वचनाय" अत हि स्वशब्देनैवास्य प्रशंसानामत्वमुच्यते। ३ (८) ॥

प्र तत्ते अद्य शिपिविष्ट नामार्य्यः शंसामि वयुनानि विद्वान्। तन्त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ तत्तेऽद्य शिपिविष्टनामार्य्यः प्रशंसाम्यर्थ्योऽहमस्मीश्वरः स्तोमानामर्य्यस्त्वमसीति वा तन्त्वा स्तौमि तवसमतव्यांस्तवस इति महतो नामधेयमुदितो भवति निवसन्तमस्य रजसः पराके पराक्रान्ते आघृणिरागतहृणिः। आघृणे संसेचावहै। आगतहृणे संसेवावहै। पृथुज्रयाः पृथुजवः। पृथुज्रया अमिनादायुर्दस्योः प्रामापयदायुर्दस्योः ॥ ४ (९) ॥

"प्र तत् ते अद्य"—इति (ऋ० म ५, ६, २५, ५)। हे 'शिपिविष्ट!' विष्णो। 'तत्' 'ते' तव 'नाम' 'प्रशंसामि' तत्प्रशंसार्थीयमेव पश्यामि, यदन्ये कुत्सितार्थीयं पश्यन्ति। 'वयुनानि' युष्मद्विषयाणि प्रज्ञानानि 'विद्वान्' जानानः। किञ्च, "अर्य्योऽहमस्मि" यस्मादीश्वरः स्तुतीनामुदीरणे, युष्मद्गुणाभिज्ञ, तस्मादहं प्रशंसामि। अथ"वा" "अर्य्यस्त्वमसि" अर्य्य ईश्वर., मदनुग्रहाय समर्थः, तस्मात् प्रशंसामि। तत्ते नामिति विस्फुटतर प्रशंसानामत्वमिति। यस्त्व' सर्वगुणसम्पन्न ईश्वर, 'तं' 'त्वा' त्वामह 'गृणामि' स्तौमि। 'तवसं'

संक्रान्तम् । 'अतव्यान्' अमन्नानहम्, आत्मनिन्दया सूयते। क वर्त्तमानं निवसन्तम् ? 'अस्य रजसः' अन्तरिक्षलोकस्य 'पराके' पराक्रान्ते स्थाने, दूराद् दूरतरे निवसन्तं स्तौमि ॥

"आघृणिः (३८)"—इति, अनवगतम्। "आगतघृणिः"—इत्यवगमः। आगतदीप्तिरागतक्रोधो वाभिधेयः। "एहि वां विमुचो नपादाघृणे सं सचावहै। रथीर्ऋतस्य नो भव ॥"—इति (ऋ० सं ४, ८, २१, १)। भरद्वाजस्येयमार्षम्। गायत्री। पौष्णं सूक्तं। 'एहि' आगच्छ। हे 'विमुचः' विमोचयितः! प्रजानाम् तमोभ्यः, पूषन्! सूर्य! 'नपात्' नमः! अग्नेरोऽग्निर्जायते, अग्नेरादित्यः—इत्यनयापेक्षया नपात्त्वं सूर्यस्य। अथवा मनुष्याणामिव नप्ता स्यात्, नृभ्य ऋत्विग्भ्यो मनुष्येभ्यो जायतेऽग्निः, अग्नेरपि च सूर्यो जायते, यदुक्तमग्न्युपस्थाने,— "एष प्रातः प्रसवति"—इति। 'आघृणे' आगतदीप्ते। 'संसचावहै' "ससेवावहै"। 'वाम्' आवां परस्परतः। 'रथीर्ऋतस्य' रंहयिता, गमयिता, मोक्षयिता त्वं यज्ञस्य 'नः' 'भव'। त्वदुदयप्रतीक्ष एवाहं यज्ञप्रारम्भं प्रत्याशासे। यत् त्वमुदिहि, त्वय्युदिते मोक्षार्पतासयं यज्ञ इत्यभिप्रायः। स एवमयमत्र सूर्यसम्बन्धात् "आघृणि"शब्दो दीप्तिवाचकः। दीप्तिकर्मसु च पठित एवायं "हरः (८), घृणिः (१०)"—इति। क्रोधोऽपि घृणिरित्युच्यते,—"हेलः (१), हरः (२), घृणिः (३)" —इति, तदपि प्रकरणवशादुपेक्षितव्यम् ॥

"पृथुज्रयाः (४०)"—इति, अनवगतम्। "पृथुजवः"—इत्यवगमः। "यं नु न किः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम्। इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः।"—इति (ऋ० सं० ३, ३, १३, २)। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य

द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'य नु न किः' यमिन्द्रं न कश्चिदपि 'पृतनासु' संग्रामेषु 'स्वराजम्' अपराधीनराज्यं 'द्विता' द्विविधेनापि बलेन सांयोगिकेन औरसेन च, 'तरति' जयति, सर्वथा यो जेतुं न शक्यत इत्यर्थः। अथवा, 'द्विता तरति' द्विधैकधा वा, बहुधा वा वर्त्तमानं 'पृतनासु' 'य नु न किः' य न कश्चित् हन्तुं शक्नोति 'नृतमं' मनुष्यतमं 'हरिष्ठां' हर्य्योः स्थातारम्। 'इनतमः' ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः, 'सत्वभिः यो ह शूषैः' अनेकसत्वसयुतैः हस्त्यश्वरथपदातिलक्षणैः सांयोगिकैः बलैः, शूषैश्च बलविशेषैरेव। अथवा, सत्वशब्दविशेषणमेव "शूष"-शब्दः स्यात्,—सत्वयुतैः शूषैः बलैरिति। 'पृथुज्रयाः' विस्तीर्णजवः 'अमिनात् आयुः'। कस्य? 'दस्योः' मेघस्य, असुरस्य, तमहं स्तौमि। स इदं नाम करोत्वित्यभिप्रायः॥ एवमत्र शब्दसारूप्यात् बधाधिकाराच्च "पृथुज्रयाः = पृथुजवः" —इत्युपपद्यते॥ ४ (८)॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्। दूरेदृशं गृहपतिमथर्युम्॥ दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मसु। अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा हस्तच्युती हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम्॥ ५ (१०)॥

"अथर्युम् (३८)"—इति, अनवगतम्। "अतनवन्तम्" —इत्यवगमः॥ "अग्निं नरो ०—० मथर्युम् इति (ऋ० सं० ५, ३, २१, १)। वसिष्ठस्यार्षम्। विराट् त्रिष्टुप्। महाव्रते आग्नेये

सूक्ते प्रथमैवेयम्। व्यूढस्य दशरात्रस्य चतुर्थेऽहनि आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते च प्रथमैव। 'नरः' मनुष्याः 'दीधितिभिः' अङ्गुलिभिः योक्त्रं परिगृह्य, उत्तराणि च 'हस्तच्युती' हस्तप्रच्युत्या हस्ताभ्यां प्रच्यावयन्तः 'अरण्योः' सकाशादग्निं 'जनयन्त'। 'प्रशस्तं' प्रशस्यमित्यर्थः। 'दूरेदृशं' दूरे दर्शनम् 'गृहपतिम्' 'अथर्युम्' "अतनवन्तम्" गमनवन्तमित्यर्थः ॥ एवमत्र अततेः गत्यर्थस्य (भू० प०) सारूप्यादत्यधिकाराच्चापि "अथर्युः" अतनवानित्युपपद्यते। "दीधितयोऽङ्गुलयो भवन्ति" ता हि "धीयन्ते" "कर्मसु" अनुष्ठीयमानेषु। "अरणी" "प्रत्यृतः" प्रतिगतः। "एनं" "अग्निं" वा स्यात् "समरणाज्जायते—इति वा" अरण्योः हि 'समरणात्' समागमनादग्निर्जायते ॥ ५ (२०) ॥

एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम्। इन्द्रः सोमस्य काणुका ॥ एकेन प्रतिधानेनापिबत् साकं सहेत्यर्थः। इन्द्रः सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति (वा कृतकानीति) वेन्द्रः सोमस्य कान्त इति वा कणे घात इति वा कणे हतः कान्तिहतस्तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्येति नैरुक्तास्तद्या एताश्चान्द्रमस्य आगामिन्य आपो

भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति तथापि निगमो भवति । यमक्षितिमक्षितयः पिबन्तीति । तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति । यथा देवा अंशुमाप्याययन्तीति ॥ ६ ॥

"काणुका (४२)"—इति, अनवगतम्, अनेकार्थं च । "कान्तकानीति वा, क्रान्तकानीति वा, कृतकानीति वा" —इत्येवमाद्या शब्दसमाधय । "एकया प्रति॰—काणुका" इति (ऋ॰ सं॰ ६, ५, २८, ४)। काण्वस्य कुरुसुतेरियमार्षम् । गायत्री । ऐन्द्री । 'एकया प्रतिधा' एकेन प्रतिधानेन सकृत्प्रतिहितेनैव चेतसा 'पबत्' पिबतीन्द्र 'साक' सहेत्यर्थ । कानि पुन पिबति ? 'सरांसि' । कियन्ति ? 'त्रिंशतम्' । कस्य पूर्णानि पिबति ? 'सोमस्य' । किङ्गुणयुक्तानि ? 'काणुका' "कान्तकानि" प्रियाणीत्यर्थ । अथ "वा" सोमस्य "क्रान्तकानि" अधिक्रान्तानि सरांसि सोमस्य पूर्णानीत्यर्थ । अथ "वा" "कृतकानि" संस्कृतानि, ऋत्विग्भि इत्यर्थमेव । अथ "वा" "इन्द्र" यस्मात् "सोमस्य कान्त" तस्मादपिबत् । इत्यथेन्द्रविशेषणमेव स्याद सरोविशेषणम् । आह, कथम् ? इति, उच्यते,—"कणेघात इति वा" स कणे घात पिबतीति यावत्, कणे हन्यत इत्यर्थ, "कणे हत"="कान्तिहत"—इत्यर्थ । काम, प्रार्थना, कणे,—इति समानार्थो, कामे योऽभिहत, स "कणे हत"—इत्युच्यते, हतपानाभिलाष इत्यर्थ । एवमेतत् काणुकेति सरोविशेषणमिन्द्रविशेषण वा ? प्राक-

विशेषणं वा ? सर्वयानस्मिन्मन्त्रे प्रकृतत्वात्। एवं चास्य विकल्पमानस्यानेकार्थतापि दर्शितैव भवति ॥

यदेतदुक्तमस्मिन्मन्त्रे "सरांसि त्रिंशतम्"—इति, अस्या-भिधेयविषयप्रख्यापनप्रसक्तमिदमुच्यते,—"तत्रै तथाज्ञिका वेद-यन्ते" तत्रैतस्मिन् त्रिंशच्छब्दे एतदभिधेयमर्थवस्तु याज्ञिका: 'वेदयन्ते' कथयन्ति । "त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि"—इति, तत्र हि माध्यन्दिने सवने उक्थ-पर्य्याया: त्रयोऽप्यैन्द्रा एव भवन्ति, त्रिष्वपि चैतेषु दश चमसा:, तदभिप्रायेण त्रिंशत्सरांसीत्युक्तं मन्त्रदृशा । ते ह्यत्रेन्द्रस्य "सरका:" अभिप्रेता: । सोधुसरका इवेतरस्य कस्यचित् क्षत्रियस्य यानि तान्युक्थमस्त्रहानि च सोमपात्राणि "एकेन" प्रतिधानेन "पिबन्ति" पीयन्ते, "तान्यत्र सरांस्युच्यन्ते"— इत्येष याज्ञिकानामभिप्राय: । "त्रिंशदपरपक्षस्याहोरात्रा:, त्रिंशत् पूर्वपक्षस्येति नैरुक्ता:" । "तत्" तत्रैवं सति "या: एता:" "चान्द्रमस्य:" चन्द्रमसि भवा: चान्द्रमस्य:, "आगा-मिन्य:" प्रतिपद्दितीयाद्यासु तिथिष्वागच्छन्तीति । किं तासाम् ? इति, उच्यते,—"रश्मयस्ता अपरपक्षे पिबन्ति" । यथा चैतदेवं "तथापि" तथैष "निगम:"—"यमक्षितिमक्षि-तय: पिबन्ति"—इति । चन्द्रमसमपरपक्षे पीत्वा ते सूर्य-रश्मय: "पूर्वपक्षे" प्राप्ते पुन: "आप्याययन्ति" आपूरयन्ति । यथा चैतदेवं "तथापि" तथैव: "निगम:"—"यथा देवा अंशु-माप्याययन्ति"—इति ॥

"यथा देवा अंशुमाप्याययन्ति, यमक्षितिमक्षितय: पिबन्ति । तेन च इन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुव-नस्य गोपा: ॥"—इति । राजयज्ञगृहीतस्य वैश्वदेवयहर्वि-रुप्यते, तत्र प्राक् स्विष्टकृतोऽनेन याज्याहुतिर्हूयते । 'यथा'

येन प्रकारेण, 'देवाः' सूर्यरश्मयः 'अंशुं' सोमम् 'आप्याय-यन्ति' पूर्वपक्षे। एवमनेन प्रकारेण हे यजमान! त्वाम् 'इन्द्रः' 'वरुण' 'बृहस्पतिः' च एते 'भुवनस्य' भूतजातस्य 'गोपाः' गोप्तारः। 'आप्याययन्तु' आयुषा धनेन च। किञ्च, 'यथा' येन प्रकारेण 'अक्षितिम्' अक्षीणं सोमम्, 'अक्षितयः' सूर्यरश्मयः 'पिबन्ति' तथा त्वामपि हविर्दातारं सन्तं पिबन्तु, उपजीवन्तु एते देवाः इति। येषान्तु एते "यमक्षितिम्"—इति पाठः, तेषां यमक्षितिमक्षितयः पिबन्ति, स च त्वामाप्याययन्त्वित्येवं योज्यम् ॥

आह,—"एकया प्रतिधापिबत्"—इत्येतस्मिन्मन्त्रे, "साकं सरांसि त्रिंशतमिन्द्र" पिबतीत्युक्तम्। नैरुक्तपक्षेणोक्तम्,—"तद् या एतास्चान्द्रमसं आगामिन्य आपो भवन्ति रश्मयः, ता अपरपक्षे पिबन्ति"—इति, तदेतद्रश्मिषु पात्रषु, चन्द्रमसि च पीयमाने, सर्वमेवेदमसम्बद्धं भवति?—इति, "एकया प्रतिधापिबत्"—इत्येतस्य मन्त्रस्यैन्द्रत्वात्। इतरस्मिन् "यमक्षितिमक्षितय. पिबन्ति"—इति रश्मीनां पानसम्बन्धादादित्य उच्यते, आदित्योऽपि हि इन्द्रशब्देनोच्यत एव—"असावादित्य इन्द्र"—इति विज्ञायते। तदवयवभूताश्च रश्मयः, आदित्येन सह समासव्यासस्तुतिभाजः। सरःशब्दः खल्वपि उदके एव वर्त्तते, "पयः (२७), सरः (२८), भेषजम् (२९)"—इत्युदकनामसु पठितम्। तस्मिन्नेव सति यानि तान्युदकानि सरांसि पक्षद्वयाहःसम्भृतानि साकमवस्थितानि भवन्ति चन्द्रमसि, तानि सूर्य,=इन्द्रो रश्मिभिरपरपक्षे पिबतीति। एवमेतत् सर्वमुपपद्यते एव नैरुक्तपक्षे ॥ ६ ॥

**अभिर्गुर्मन्त्रो भवति गव्यधिकृतत्वादपि वा**

प्रशासनमेवाभिप्रेतं स्यात्तच्छब्दवत्त्वादध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगवित्य-ग्निरप्यध्रिगुरुच्यते । तुर्यं स्तोतन्यध्रिगो शचीवः । अपृतगमनकर्मवन्निन्द्रोऽप्यध्रिगुरुच्यते । अध्रिगव ओहमिन्द्रायेत्यपि निगमो भवति । अङ्कूपः स्तोम आघोषः । एनाङ्गूषेण वयमिन्द्रवन्तः । अनेन स्तोमेन वयमिन्द्र-वन्तः ॥ ७ (११) ॥

"अध्रिगुः (४२)"—इति, अनवगतम्, अनेकार्थञ्च । "अध्रिगुर्मन्त्रो भवति" । आह, किं कारणम् ? उच्यते,—"गवि अधिकृतत्वात्" । सोऽयमधिगुः सन् अध्रिगुरित्यर्थः । गवि योऽधिकृतो मन्त्रः स अध्रिगुः । "अपि वा" गौरनित्यत्वात् "प्रशासनमेव" एतत् "अभिप्रेत" स्यात् । अध्रिगुर्नाम कश्चिदस्ति दैव्यः शमिता, तस्यैतत् प्रशासनं स्यात्, सम्प्रेषण-मित्यर्थः । किं कारणम् ? "तच्छब्दवत्त्वात्" । तथाह्यस्य मन्त्रस्य अध्रिगुशब्दवत्त्वं यदेतदुक्तमुपपद्यते । तदनेनैव निगमेन "अध्रिगो शमीध्वम्"—इति । हे 'अध्रिगो !' सर्व एव यूयं 'शमीध्वम्' "शमयध्वम्" एनं पशुमिति । "दैव्याः शमितार आरभध्वम् ०—० आशासाना मेधपतिभ्यां मेधम् ०—० नेहस्तोके तनये रवितारवच्छमितारः०—०अध्रिगो शमीध्वम्" —इति प्रैषः । हे 'दैव्याः !' 'शमितारः !' अपि च हे 'मनुष्याः !' 'आरभध्वम्' 'उपनयत' च एनं पशुम् । एताः 'मेध्याः' 'दुरः' यज्ञगृहद्वार इत्यर्थः । 'आशासानाः' प्रार्थय-

माना:, 'मेधपतिभ्याम्' आभ्यामग्नीषोमाभ्यां मेधम् एनं पशुं शमयितुम्। किञ्च, 'प्र अस्मै अग्निं भरत' प्रभरतास्मै पशवे सञ्ज्ञप्यमानाय अग्निमुल्मुकम्, पुरस्ताद्धारयतेत्यर्थः। किञ्च, 'स्तृणीत बर्हिः' अस्मै पशवे सञ्ज्ञप्यमानाय, उपाकरणेन दर्भमपास्यतेत्यर्थः। किञ्च, 'अन्वेनं माता मन्यताम्' एनं सञ्ज्ञप्यमानं माता अनुमन्यताम्। 'अनु' मन्यतां 'पिता'। 'भ्राता सगर्भ्यः' 'अनु'मन्यतां सहगर्भीयः, सहोदर इत्यर्थः। 'अनुमन्यतां' चैनं 'सखा सयूथ्यः' सहयूथचारी, 'अनु' मन्यतामेनमेभिः सञ्ज्ञपयतेत्यभिप्रायः। किञ्च, 'उदीचीनाम् अस्य पदो निधत्तात्' उदक्पादमेनं सञ्ज्ञपयतेत्यर्थः। किञ्च, सूर्य्यप्रभवमस्य चक्षुः, ततः 'सूर्य्यम्' एव 'गमयतात्'। 'वातम्' अनु 'प्राणम्' अन्ववसृजतात्'। 'असुं' शरीरविधारकं प्राणम् 'अन्तरिक्षम्' अन्ववसृजत। 'दिशः' 'श्रोत्रम्' अन्ववसृजत। किञ्च, 'उपाकरणेन' दर्भेण 'सह' साकम् 'एकधास्य त्वचम्' 'आच्छ्यतात्' आच्छ्यतेत्यर्थः। ततोऽनन्तरमेव 'पुरा' 'नाभ्या अपि शसः' तस्माच्छसः प्रशस्तात् प्रदेशात् 'वपाम्' 'उत्खिदतात्' उद्धरत। किञ्च, 'अन्तरेव' अभ्यन्तरत एव, 'ऊष्माणम्' अस्य शस्यमानस्य 'वारयध्वात्'। 'श्येनमस्य' श्येनाकृति श्येनवर्णं वा पाकेन 'वक्षः' उरः 'कृणुत'। 'प्रशसा बाहू' 'शला दोषणी'—इति बाह्वोरेवैतदभिधानम् अवयवशः, अत्र बाहुशब्दः प्रायेणांसयोः वर्त्तते, ता आरत्निसन्धानौ बाहू प्रशस्तौ कुरुत। खभित्त्याकृती,—इत्येकः। शलाशब्दः अरत्निमेव वर्त्तते। तौ च शलादोषणी द्रवणसमर्थौ प्रशस्तौ कुरुत। शलाकाकृती निर्माणौ कुरुतेत्येके। "श्येनशलाकश्यपा कवषा स्रेकपर्णेष्वाकृति-विशेष वचन निष्टसाधनं स्यात्"—इति हि नैयायिकाः पठन्ति। 'कश्यपे-

श्यांसा' कश्यपाविव यशी कुरुत। किञ्च, 'अच्छिद्रे' श्रोणी' अविकले कुरुत। 'कवषोरू' कवषे गतिसमर्थे कुरुत, कवतिर्गत्यर्थः, "च्यवते, कवते, गवते"—इति गतिकर्माणः। पिण्डिकाख्ये-उरू अच्छिद्रे एव कुरुतेत्यर्थः। 'श्येनपर्णी' करवीरपत्राणीव 'अष्ठीवन्ता' अस्थिसंयुक्तौ कुरुत। 'षड्विंशतिरस्य वङ्क्रयः, ता अनुष्ठ्योच्यावयतात्' या एता वङ्क्रयः पर्शवः, ता अनुष्ठ्या अनुष्ठानक्रियया प्रच्यावनसमर्थयैव प्रच्यावयत। किञ्च, 'गात्रम्' 'अस्य' 'अनूनम्' अविकलं 'कृणुतात्' कुरुत। किञ्च, 'ऊवध्यगोहम्' ऊवध्य यः पार्थिवो गर्त्तः, प्रकृष्टं संवृणोति, तम्, उत्तरश्चाल्यालस्य 'खनतात्'। 'अस्ना रक्षः संसृजतात्' असृग्भाज्ञि रक्षांसि कुरुतेत्यर्थः। किञ्च, 'वनिष्ठुम्' दृष्ट्वा 'मा राविष्ट' मा शब्दं करिष्यथाः। 'उरूक मन्यमानाः' उलूकवत् वनिष्ठुं मन्यमानाः, उलूको हि भयङ्करत्वात् दृष्ट्वा जनैः विराव्यते,—अयमुलूकोऽयमुलूक इति। तदाशङ्कया उलूकसारूप्याद्वनिष्ठोर्मा राविष्टेत्युच्यते। हे शमितारः! नेदस्तोके तनये रवितारवच्छमितार.' नैतत् कर्म कुर्वतां, रवितारवत्, पुत्रेषु पौत्रेषु वः स्यात्, अरवणशीलं वः पुत्रपौत्रं भविष्यतीत्यभिप्रायः। हे 'अध्रिगो!' 'शमीध्वम्' एनं पशुं 'सुशमि शमीध्वम्' यथा चायं सुशमितः स्यात्तथैनं 'शमीध्वं' हे 'अध्रिगो!' मा प्रमादं करिष्यथ॥ एवमेतस्मिन् दैव्यस्य शमितुः अध्रिगो. प्रशासनमित्ये तदुपपद्यते, तस्य सर्वोध्यत्वादस्मिन् प्रैषे यथासम्भवं प्रशासनानि द्रष्टव्यानि,—"प्रास्मा अग्निं भरत"—इत्येवमादीनि॥

"अग्निरप्यध्रिगुरुच्यते" अधृतगमनोऽसावित्यध्रिगुः। "तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य। कवि-

ग्रस्तो बृहता भानुना भागा हव्या जुषस्व मेधिर ॥"—इति (ऋ० सं ३, २, २१, ४)। कुशिकपुत्रस्यार्षम्। विराट्। पाशु-हस्तोके सूक्ते विनियुक्ता। हे 'अध्रिगो' अप्रहतगमन। 'शचीव.' कर्मवन्। 'तुभ्य' त्वदर्थमेते 'स्तोकास' विन्दवो वपामतीत्य च्योत चरन्ति। 'मेदस.' च 'घृतस्य' च। यस्य तवैतदर्त्तते, स त्व 'कविशस्त' प्रचरणे प्रचरणे कविभिरभिष्टुत', 'बृहता' महता 'भानुना' 'भासा' 'आगा' आगच्छ। आगत्य चेमानि 'हव्या' हवींषि यानि स्तोकाख्यानि, त्वदर्थमेव चरन्ति 'जुषस्व' सेवस्व। हे 'मेधिर' यज्ञवन्। इत्यर्थ। एवमत्र "अध्रिगो"—इत्यग्निरुक्त, तस्मादग्नेरध्रिगुत्वमुपपद्यते ॥

"इन्द्रोऽप्यध्रिगुरुच्यते"। तस्यापि न कश्चिद् गमनधारयितास्ति "अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोम माहिनाय। ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥"—इति (ऋ० सं० १, ४, २७, १)। नोधस इयमार्षम्। अहीनसूक्ते शस्यते। 'अस्मै' इन्द्राय 'प्र हर्मि' प्रभरामि 'स्तोमम्' 'प्रयो न' प्रय इव, अन्नमिव, य स्तोम' स्तुति करोति, त प्रभरामि। 'तवसे' महते 'तुराय' त्वरमाणाय 'माहिनाय' महनाय चोत्रे। किञ्च, 'ऋचीषमाय' ऋक्समाय, स्तुतिसमाय, यावती स्तुतीरदीर्य ते तावानेवासौ भवति, माहाभाग्यात्। 'अध्रिगवे' अप्रहतगमनाय, अप्रतिहतगमनाय, एवलक्षणाय 'इन्द्राय' 'ओहम्' अह प्रापयामि 'ब्रह्माणि' हवींषि 'राततमा' दातव्यतमानि यान्यसावेवाऽऽहति, तानीत्यभिप्राय ॥ एवमस्मिन्नध्रिगुमन्त्रे इन्द्राभिधानत्वादिन्द्राभिधानमित्युपपद्यते ॥

"आङ्गूषः (४४)"—इति, अनवगतम्। "स्तोम" अभिधेय.। "आघोष"—इति मन्दसमाधि ॥ "एना ङ्गूषेण वय-

मिन्द्रवन्तोऽभिष्याम वृजने सर्ववीरा । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥"—इति (ऋ० सं० १, ७, २२, ४)। त्रिष्टुप्। कुत्सस्य त्रितस्य वा कूपे पतितस्यार्षम्। वैश्वदेवस्य चरोभ्रातृव्यवतो याज्यैषा। 'एनेन' अनेन 'वयम्' 'आङ्गूषेण' आघोषणीयेन स्तोमेन 'इन्द्रवन्त' इन्द्रसंयुक्ता 'स्याम' वयम्। 'तत्' ततो विश्वे 'सर्वे' एव अनवखण्डिता सन्त, सर्वान् भ्रातृव्यान् 'अभि' भवेम। तदेतत् 'न.' सर्वमपि 'मित्र' 'वरुण' च 'मामहन्ताम्' पुन.-पुनर्महयन्ता पूजयन्तु। 'अदितिः' च पूजयतु। 'सिन्धु' च पूजयतु। 'पृथिवी' च पूजयतु। 'उत द्यौ' पूजयत्विति तदेवानुवर्त्तते॥ एवमत्र स्तोमोऽयम् "आङ्गूष"शब्देनोक्त, शब्दसारूप्यादर्थोपपत्तेश्च ॥ ७ (११) ॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ आपातितमन्युस्तृप्रप्रहारी (क्षिप्रप्रहारी तृप्रप्रहारी) सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमो यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमोऽप्यार्थेन्द्रो निगमो भवति। ऋजीषी वज्रीति। हर्य्योरस्य स भागो धानाश्चेति धाना भ्राष्ट्रे हिता भवन्ति

फले हिता भवन्तीति वा। बभ्रां ते हरी धाना उप ऋजीषं जिघ्रतामित्यपि निगमो भवत्यादिनाभ्यासेनोपहितेनोपधामादत्ते बभस्ति-रत्तिकर्मा सोमः सर्वाण्यतसानि वनानि नार्वा-गिन्द्रं प्रतिमानानि दभ्नुवन्ति यैरेनं प्रतिमि-मते नैनं तानि दभ्नुवन्त्यर्वागेवैनमप्राप्य विनश्य-न्तीतीन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मोभय-प्रधानेत्यपरं प्रसखा सु अनुत इति वा प्रसान्नुत इति वा। अवं प्रसखा रुंधद्राः। अवारयत्क्र-मशा वारिति ॥ ८ (१२) ॥

इति पञ्चमाध्यायस्य द्वितीयः पादः ॥ ५, २ ॥

"आपान्तमन्यु (४५)"—इति, अनवगतम, पक्षेण चाने कार्यम्। "आपातितमन्यु"—इत्यवगम। "आपान्तमन्यु" —इति (ऋ० स० ८, ४, १४, ५)। वेश्वामित्रस्य रणोरिय मार्षम। त्रिष्टुप। सूर्यस्तुत्येकाहे निष्केवल्ये विनियुक्ता। आपादितदीप्ति, उत्पादितमन्युर्वा अत्रुभि समासे, 'तृपल प्रभर्मा "क्षिप्रहारी चिप्रप्रहारो, सोमा वेन्द्रा वा"। 'धुनि' धूनयिता कम्पयिता अशूणा पाषाणाम्। 'श्रिमीवान्' स्वाधि-कारविहितेन कर्मणा कर्मवान्। 'शकमान्' द्दिमावान्। 'ऋजीषी' यदि सोमोऽभिप्रेत, तस्य ऋजीषित्वमुपपद्यते, अथेन्द्रोऽभिप्रेत, तस्य तयारश्वयो ऋजीषभागा इत्यनया-पेक्षया ऋजीषित्वम। एवमयमर्द्धर्चं, सोमस्येन्द्रस्य वा, यस्मिंश्च पक्षे सौम्य एषोऽर्द्धर्चं, तस्मिन् पक्षेऽय बतीयः

पादः सोमेनाभिसम्बन्धयितव्यः,—य एवङ्गुणयुक्तः 'सोमः' स एतानि 'विश्वानि' सर्वाणि 'अतसा' अनुपक्षीणानि 'वनानि' उदकानि, इतराणि वा वनानि वनस्पत्याख्यानि, स्वेन महिम्ना व्याप्नोति, स हि तेषामधिपतिः। एवमेते त्रयोऽपि पादाः सौम्या भवन्ति। उत्तर ऐन्द्र एव,—"नार्वागिन्द्रं प्रतिमानानि देभुः"—इति। नैनम् इन्द्रं प्रतिमानानि, यैः प्रतिमीयन्ते स्तोत्राणि, न तानि दभ्नुवन्ति, नाभिभवितुं शक्नुवन्ति। किन्तर्हि? अर्वागेव तान् पुनात्येव। तस्मादिन्द्राद् भूत्वा "एनम्" इन्द्रम् "अप्राप्य" एव "विनश्यन्ति" नोपमार्थं कुर्वन्ति, स हि तेषां विनाशः। एवमेष पाद ऐन्द्रः। एवमुभयप्रधानत्वमस्या ऋचः॥

अथवैवमन्यथास्या ऋच उभयप्रधानत्वम्। द्वौ प्रथमौ पादावैन्द्रत्वेन व्याख्यायेते, तृतीयपादमुत्क्रम्य चतुर्थः पादः आद्याभ्यामभिसम्बन्धयितव्यः। योऽयमेवङ्गुणविशिष्ट इन्द्रः, आपादितमन्युः द्रुमहारी, धुनिः, शिमीवान्, शरुमान्, ऋजीषी च, तमेनमिन्द्रमेवम्प्रभावं न प्रतिमानानि दभ्नुवन्ति। किन्तर्हि? अर्वागेवैनमप्राप्य वर्त्तमानानि विनश्यन्ति। एवमेते त्रय ऐन्द्राः पादाः,—द्वावाद्यौ चतुर्थश्च। अयं तृतीयः सौम्यः,—"सोमो विश्वान्यतसा वनानि"—इति। यः "सोमः, सर्वाण्यतसानि वनानि" महिम्ना व्याप्नोति, यश्च "इन्द्रं न प्रतिमानानि दभ्नुवन्ति" तौ सोमेन्द्राविदं नाम कुरुतामित्याशीर्योज्या॥

"एके" पुनः "इन्द्रप्रधाना" एवेयमृक् "इति" एवं मन्यन्ते,—"नैघण्टुकम्" अस्या "सोमकर्म"—इति, तेषामियं योजना,—य इन्द्र आपादितमन्युः, द्रुमहारी, धुनिः, शमीवान्, शरुमान्, ऋजीषी च, स सोम इव अतसानि वनानि

इदं सर्वं व्याप्नोति। न चैनं प्रतिमानानि दभ्नुवन्ति। किन्तर्हि? एनमिन्द्रमप्राप्यैव विनश्यन्ति। एवमिन्द्रप्रधानैव भवति। एवमस्या ऋचः त्रिधा समासार्थो बोद्धव्यः। तथाहि भाष्यकारेण दर्शितम्। सोमस्य ऋजीषित्वोपपादनार्थमाह भाष्यकार,—"यत्सोमस्य पूयमानस्यातिरिच्यते" रसादन्यदसारमतिरिच्यते, "तदृजीषम्"—इत्युच्यते। तत् "अपार्जितम्" अपवर्जितं "भवति" फल्गुभूतत्वात् "तेन" संयोगात् "ऋजीषी सोमः" उच्यते॥

"अथ" यस्मिन् पक्षे "ऐन्द्रः" अर्धर्चो भवति, एतस्मिन् पक्षे इन्द्रस्य ऋजीषित्वाभिधायकः एषः "निगमः भवति"। इन्द्रस्य ऋजीषित्वमनुपपन्नं मन्यमानो निगमं पठति,—"ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा युक्त्वा हरिभ्यामुपयासदर्वाङ्माध्यन्दिने सवने मत्सदिन्द्रः॥" —इति (ऋ० सं० ४, २, ११, ४)। अत्रेयमार्षम्। त्रिष्टुप्। ऋजीषेण तद्वान् 'ऋजीषी' वज्रेण तद्वान् 'वज्री' 'वृषभ' वर्षिता कामानाम्, 'शुष्मी' बलवान्, 'राजा' अधिपतिः, 'वृत्रहा' शत्रुहा, 'सोमपावा' सोमस्य पातेत्यर्थः। य एवङ्गुणयुक्त इन्द्रः, सः 'युक्त्वा' 'हरिभ्याम्' अश्वाभ्यां रथं तम् अधिरुह्य 'उपयासत्' उपागच्छत्। 'अर्वाङ्' अस्मानाभिमुख्येन, 'माध्यन्दिने सवने' एतस्मिन् प्राप्ते 'उप' उपगम्य च 'मत्सत्' माद्यताम्, अस्मत्प्रदत्तेन सोमेनेत्यर्थः॥

एवमेतस्मिन् मन्त्रे 'ऋजीषी' इन्द्र उक्तः। तत् पुनरेतदृजीषित्वमिन्द्रस्य न विज्ञायते, केन कारणेत्यतस्तदुपपादनार्थमाह,—"हर्य्योरस्य स भागः"—इति। हर्य्योरेवाश्वयोरप्येन्द्रस्य स भागो यदृजीषम्। "धानाश्च"। प्रसङ्गादत्र धाना उक्ताः। यदुक्तम्,—"हर्य्योर्धाना हरिवतोः"—इति। तेन

हरिसंयोगेन ऋजीषेण लक्षितलक्षणया हृत्वा इन्द्रस्य ऋजीषित्वम् ॥

आह,—"धानाः" कस्मात् ? उच्यते,—ता हि "भ्राष्ट्रे हिताः" भवन्ति, अथ "वा" भ्राष्ट्राद्वक्तार्थे "फले" फलके "हिताः" निहिताः "भवन्ति"। तत्र हि ता विमार्ज्यन्तेति दाहभयात्। यथा ऋजीषं धानाश्च हर्य्योरश्वयोरिन्द्रस्य च भागस्तथैव निगमः,—"बब्धां ते हरी धाना उप ऋजीषं जिघ्रताम्"—इति। अत्र 'बब्धाम्'—इत्येतस्मिन् पदे य एषः "बभस्तिः" धातुः, "अत्तिकर्मा" भक्षणार्थः। सः "घादिनाभ्यासेनोपहितेनोपधामादत्ते" आदावभ्यासेनोपहितेनोपधामादत्ते, भकारेण निमित्तभूतेन उपधामकारमादत्ते, लुम्पति। "घसिभसोर्हलि च (पा० ६, ४, १००)"—इत्यकारलोपः, ततो धत्वे कृते, जश्त्वे च कृते, बब्धामित्येतद्रूपं भवति॥ "धानाः सोमानामिन्द्राद्धि च पिब च बब्धां ते हरी धना उप ऋजीषं जिघ्रतामा रथचर्पणे सिञ्चस्व। यत्त्वा पृच्छाद् हृपन् पत्नी कामीमदया इत्यस्मिन् सुन्वति यजमाने तस्मै किमराय्याः सुष्ठु सुवीर्य्यं यज्ञस्यागुर उद्गृचं यद्यदचीकमतां तत्तथाभूद्वीतयेज"। हारियोजनास्याय प्रैषः। हे 'इन्द्र!' 'अद्धि' भक्षय 'धानाः'। 'सोमानाम्' एतेषाम् स्वभूतं रसम् 'पिब च' अस्य हारियोजनस्य सोमस्य। किञ्च, 'बब्धाम्, भक्षयतां 'ते' तव एतावश्वौ 'हरी' एताः 'धानाः' 'उप ऋजीषं जिघ्रताम्' उपजिघ्रतामृजीषञ्च। 'आ रथचर्पणे सिञ्चस्व' जठरे सोममेनम् हे 'रथचर्पणे' रथगमन! आसिञ्चस्व। किञ्च, 'यत्त्वा पृच्छात्' यदि त्वां पृच्छेत् ऋत्वमनुमाममद्यज्ञात् हे 'हृपन्' वर्णितः! 'पत्नी कामीमदया.' क पीतवास्त्वम्? अतो ब्रूयाः,—त्वमस्य यजमानस्य नाम गृहीत्वा, 'अस्मिन्'

'सुन्वति' सोममभिषुण्वति 'यजमाने'। तत सा यदि पुनरपि पृच्छेत् 'तस्मै' परितुष्ट त्वं 'किमदास्या' किं दत्तवानसि? तत ता प्रति ब्रूया,—'सुष्ठु' 'सुवीर्य्य' शोभनवीर्य्यम् अहमस्मै दत्तवान्। 'यज्ञस्य आगुर उद्गृचम' यदसावनन यज्ञेन आगूर्णवान् प्रार्थितवान् अभूत्, तत् सर्वमहमदाम, 'यज्ञस्य' चोत्कृष्टा रुच दीप्तिमहमदामस्मै। किं बहुना, 'यद्यत्' 'अचीकमताम्' यद्यत्कामितवानय यजमान फलमस्य कर्म्मणः, 'तत् सर्वमतत् 'सघा' प्रार्थितमेव 'अभूत' न कश्चिदस्य मृषा कामो बभूवेत्यभिप्राय। हे 'होत' त्वमपि याज्यमेवङ्गुणविशिष्ट इन्द्र, त सहरिभ्या 'यज'—इति॥ एव मत्र "हरी उपसिष्णताम्"—इत्येतस्माद् विशेषलिङ्गात् ऋजीषित्वमश्वयो, अश्वयोगाच्च ऋजीषित्व लक्षितलक्षणया इन्द्रस्योपपद्यते॥

"श्मया" (४६)—इति, अनवगतम। "श्वाशिनी" "श्माशिनी"—इति वाचगम। श्वाशिनी=शीघ्राशिनी=शीघ्रव्यापिनी कुल्या, नदी वा। श्माशिनी पुनर्नाडी, सा हि श शरीर व्याप्नोति। एवमेतदिह विगृह्यमाणमनेकार्थमपि भवत्येव॥ "कदा वसो स्तोत्र हर्य्यत आव श्मशा रुधद्वा। दीर्घं सुत वाताप्याय।"—इति (ऋ॰ सं॰ ८, ५, २६ १)। कुत्सपुत्रस्य दुर्मित्रस्यार्षम्। उष्णिक्। ऐन्द्रस्य सूक्तस्य प्रथमेयम। हे 'वसो' वसुमन्! इन्द्र! 'कदा' कस्मिन् काले 'स्तोत्रम् एतन्मयोदीरितम् 'अस्य' यजमानस्य 'हर्य्यत' कामयत, कामान् मार्ययत, त्वाम् 'रुधत्' उपरोत्स्यति। 'श्मशा इव वा' कुल्येवोदक विसर्पमाणम्, नाडीव वा, यथा आध्यात्मिकी नाडी, शरीराश्रित रसम्। आह, कतमत् स्तोत्रम्? इति, उच्यते,—यदेतत् 'दीर्घं सुत' सोमं सवार्थं

सततमभिषुतं प्रवर्त्तते, 'वाताप्याय' तत्कार्यम् ॥ एवमेतस्मिन् "अमा"—इत्येतत् नामाभिधानं कुल्याभिधानं वा शब्दोपयत्ते वेति ॥ ८ (१२) ॥

इति निरुक्तवृत्तौ दशमाध्यायस्य ( पञ्चमाध्यायस्य ) द्वितीयः पादः ॥ ५, २ ॥

---

तृतीयः पादः ॥

उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्यामश्नुत उरुर्वा वशोऽस्या अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिर्यदप्स इत्यभक्षस्याप्सो नामेति व्यापिनस्तद्रा भवति रूपवती तदनयात्तमिति वा तदस्यै दत्तमिति वा तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादिन्येषर्ग्भवति ॥ १ (१३) ॥

"उर्वशी" (४७)—इति, अनवगतम् । "अप्सराः"—इत्यभिधेयवचनम् । "उर्वभ्यश्नुते"—इति व्युत्पत्तिः । उरु, महद् यशोऽभिव्याप्नोति । अथवा "ऊरुभ्यां" मैथुने धर्मे पुरुषम् "अश्नुते" व्याप्नोतीति उर्वाशिनी सती उर्वशीत्युच्यते । अथ "वा" "उरुः" महान् "अस्याः" "वशः" कामः, सेयमुरुवशिनी सती उर्वशीत्युच्यते । एता. शब्दसमाधयः ॥

अधुना "अप्सराः"—इत्येतं शब्द समाख्यानप्रसङ्गं निर्ब्रवीति । आह,—"अप्सराः" कस्मात् ? उच्यते,—मा हि

"अप्सारिणी" भवति, अपः प्रति नित्यमेव सरति, तत्प्रभव त्वात् तदेव तस्या प्रियमुदकम्, तस्मादप्सरा । अथवा अप्सु सृतेत्यप्सरा । "अपि" चैवमन्यथा स्यात्,–"अप्स —इति" एतद् "रूपनाम"। "अप्सा.ति" प्रतिषेधपूर्वस्य प्सातेः भक्षणार्थस्य (अदा० प०), तद्धि "अप्सानीयम्" अनदनीय "भवति" न हि तद्भक्ष्यते, किन्तर्हि ? "आदर्शनीय" तदाभिमुख्येन स्थित्वा द्रष्टव्यमेव भवति चक्षुषा, न पुनर्मुखेन भक्षयितव्यमित्यर्थः । "व्यापनीय वा" व्यापनमर्हति । "आप्लृ व्याप्तौ (स्वा० प०)" तस्य वा अप्स, तद्धि नायनेन रश्मिना आत्मनः प्रत्ययाधानार्थे व्यापयितव्यं भवति । "स्पष्ट दर्शनायेति" "शाकपूणि." आचार्यो मन्यते, न ह्येतदस्पष्टं दर्शनाय, किन्तर्हि ? स्पष्टमेवेत्यर्थः । "यदप्स —इत्यभक्षस्य" पुरस्तादुक्तम्,–"अपि वाप्स इति रूपनाम, अप्साते" न हि तद्भक्ष्यते, किन्तर्हि ? दृश्यते तदिति । तत्र "अभक्षस्य" अप्स शब्दवाच्यत्वप्रख्यापक एव निगमः,–"यदेनश्चकृम यदप्सश्चकृमा वयम्"—इति । "यद्ग्रामे यदरण्ये यत्सभाया यदिन्द्रिये । यदेनश्चकृमा वय यदप्सश्चकृमा वय यदेकस्यापि धर्मणि एनस्ततोऽवयजनमसि स्वाहा"—इति (य० वा० स० ३० १७)। वरुणप्रघासेषु करम्भपात्रहवने पत्नीयजमानयोर्मन्त्र, 'यद्ग्रामे' 'वय' किञ्चित् 'एन' चकृम, 'यत्' च 'अरण्ये' 'यत् सभायाम्' 'यत्' च 'इन्द्रिये' प्रजनने निमित्तभूते सति, 'यत्' च अन्यत्रापि क्वचिद्ग्रामादिष्व 'वयम्, 'एन.' 'चकृम' कृतवन्तः, 'यत्' च 'अप्स' 'चकृम' यदभक्ष्यभक्षण कृतवन्त, 'वय' किञ्चित्तदेवानेकप्रकारमेकैकस्यापि आवयोश्चेतसि निमित्तभूतं तत्पक्षं किञ्चित्, 'यदेकस्यापि धर्मणि' तदनेकप्रकारमेकस्यावयो कर्मणि निमित्तभूतम्,–यच्च महत् कृतम्, यच्च पृथक् कृतम्, यच्च

मानसम्, यच्च शारीरम्, तस्य सर्वस्य एनसोऽस्माकं अपनयनं कृत्वा ततः 'अवयजनमसि' महतां हे हवि । कस्मात्पात्रात् प्रघासान् हवामहे । "मरुत "—इत्यतो विशेषलिङ्गान्मारुतत्वमस्यावसीयते ॥ यत् "अप्स "—इत्येष शब्द अभक्ष्यस्याभिधायको दृष्ट, तस्मात्साधूक्त "अपि वाप्स इति रूपनामाप्नाते "—इति (८८१ पृ० ८ प०) ॥

अधुना यदुक्त "व्यापनीय वा"—इति (८८१ पृ० १० प०), "आप्लृ व्याप्तौ (स्वा० प०) इत्येतस्य वाप्स इति तस्यार्थस्य व्यापक निगम ब्रवीति,—"अप्सो नामेति व्यापिन "—इति । यथा आप्नोति अभिव्याप्त्यर्थं, तस्या इत्येतदुपनाम भवति, तथैव निगम,—"पृथिव्याः पुरीषमस्यप्सो नाम, तां त्वा विश्वे अभिगृणन्तु देवा । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा यजस्वाश्विनाध्वर्यू सादयतामिह त्वा"—इति (य० वा० म १४, ४) । अग्निचयने द्वितीयायां चितावाश्विन्यो नामेष्टका, तासामेकस्यामयमुपधानमन्त्र । 'पृथिव्याः' 'पुरीषमसि' पूरमित्यसि । हे इष्टके । 'अप्सो नाम' 'तां' 'त्वाम्' एवङ्गुणयुक्ता सती 'विश्वे' सर्वे 'अभिगृणन्तु' अभिष्टुवन्तु 'देवा' । किञ्च, सा त्वं स्तोमपृष्ठादेव उदीरितेन स्तोमेन स्पृष्टा 'घृतवती' उदकमज्जिता 'इह' अग्निचयने 'आसीद' । किञ्च, 'अश्विना' अश्विनौ देवौ 'अध्वर्यू' 'सादयताम् इह त्वाम्' तौ हि सम्राजौ यथा त्वं सादयितव्येत्यभिप्राय: । एवमत्रापि व्याप्त्यर्थमप्स इत्युपपद्यते, इह लक्षणार्थासम्भवात् ॥

एव तावदप्सरा इत्यस्याभिधानस्याप्स इत्ययमेकदेश उपपादित, अधुना 'रा'—इत्येकदेशमुपपादयिष्यन्नाह— "तद्रा भवति रूपवती" । रो मत्वर्थे, तेनाप्सशब्दवाच्यत्वेन रूपेण तद्वती सा भवत्यप्सरा: तद्रा भवतीत्येवमुक्तेऽपि मात

रेफस्य मत्वर्थता न गम्यत इति मन्यमानो भाष्यकार, ... मेव मत्वर्थमाह, यदुक्तं रूपवतीति रूपसंयुतेत्यर्थः। तथा एव सर्वयोषिद्भ्यः प्रति विशिष्टं रूपमित्यभिप्रायः। अथ "वा" एवमन्यथा स्यात्,—"तदनया" अप्सरःशब्दवाच्यं रूपम "आत्त" गृहीतमेव कुतश्चित्। एतस्मिन् पक्षे 'रा'—इत्यय-मादानार्थः। अथ 'वा' एवमन्यथा स्यात्,—"तत्" अप्सरःशब्द-वाच्यं रूपमतिरिक्तमिव "अस्मै" "दत्तम्" विधात्रा। तथाहि ते तस्मादतिशयेनानवद्यापि च लक्ष्यते। एतस्मिन् 'रा'—इत्ययं दानार्थः॥

"तस्याः" एवङ्गुणविशिष्टाया उर्वश्या अप्सरसः "दर्शनात्" "मित्रावरुणयोः रेतः" "चस्कन्द" स्कन्नम्। "तत्" तस्यार्थस्य "अभिवादिनी" "एषा ऋग् भवति"—॥ १ (१३)॥

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्म-नसोऽधिजातः। द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त॥ अप्यसि मैत्रा-वरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन द्रप्सः संभृतः प्सानीयो भवति सर्वे देवाः पुष्करे त्वाधारयन्त पुष्कर-मन्तरिक्षं पोषति भूतान्युदकं पुष्करं पूजा-करं पूजयितव्यमिदमपीतरत् पुष्करमेतस्मादेव पुष्करं वपुष्करं वा पुष्पं पुष्पतेर्व्यसनं वेतेः का-न्तिर्वा मत्ता वा॥ २ (१४)॥

१ "उतासि मैत्रावरुण."—इति। वसिष्ठस्य सपुत्रस्य य-

भार्यम्। तस्यैव स्तुतिरिन्द्रस्य वा। 'उत'—इति, अयम् 'अपि'शब्दार्थे वर्त्तमानोऽस्यायामृचि ये जन्मनी वसिष्ठस्योक्ते, ते सम्भावयति। सा पुनरियमृक्,—"विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार ॥"—इति (ऋ० सं० ५, ३, २२, ५)। 'विद्युतः' विशेषेण, द्योतते देदीप्यते इति विद्युत्=उर्वशी—इति, अस्मात्। 'ज्योतिः' प्रकाशः। तस्मात् 'परि' परितोऽधिकं 'सञ्जिहानम्' उत्तिष्ठन्तम्, जायमानमित्यर्थः। 'मित्रावरुणौ' देवौ 'यत्' 'अपश्यतां' 'त्वा' 'त्वाम्' 'तत्' 'ते' तव 'जन्म' एकम् हे 'वसिष्ठ'। 'उत' अपि च 'यत्' 'त्वा' "अगस्त्यो विश आजभार" 'अगस्त्यः' ऋषिः 'विशः' मनुष्यान् प्रति, मनुष्यलोकम् 'आजभार' आहृतवान्, 'तत्' 'ते' तव द्वितीयं जन्म ॥

'उतासि' अपि असि 'मैत्रावरुणः' हे 'वसिष्ठ!'। कथं पुनर्मित्रावरुणयोरपत्योऽसि—किं सहर्षेण? न, इत्युच्यते,—'उर्वश्याः' सकाशात्। हे 'ब्रह्मन्!' 'मनसोऽधिजातः' न सहर्षणेन। किञ्च, निर्बीज एवासि, मनोऽभिधानमात्रादुत्पन्नः? न, इत्युच्यते। किन्तर्हि? 'द्रप्स' शुक्रम्, उर्वशीदर्शनात् 'स्कन्न' मित्रावरुणयोः। 'ब्रह्मणा' 'दैव्येन' देवानां स्वभूतेन, ऋग्यजुःसामाख्येन स्तुवन्तः 'विश्वेदेवाः' मा एतद् भूमौ पतेदिति कुम्भस्योपरि 'पुष्करे' उदके, अन्तरिक्षे वा 'त्वा' त्वाम्, तेन शुक्रेण सहैकतामुपगतम् 'अददन्त' अधारयन्नित्यर्थः। एवमेतस्मिन् "द्रप्सं स्कन्नम्"—इत्यादिना सम्बन्धेन "उर्वशी"शब्देन "अप्सराः"—इत्युपपद्यते।

"ऐन्द्रेण किल तेजसा निदधे वसिष्ठ', मित्रपरिग्रही-

मार्षम्। तस्यैव स्तुतिरिन्द्रस्य वा। 'उत'—इति, प्रथम 'अपि'शब्दार्थे वर्त्तमानोऽस्यामृचि ये जन्मनी वसिष्ठस्योक्ते, ते सम्भावयति। सा पुनरियमृक्,—"विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार॥"—इति (ऋ० सं० ५, ३, २३, ५)। 'विद्युतः' विशेषेण, द्योतते देदीप्यते इति विद्युत्—उर्वशी—इति, मध्यात्। 'ज्योति' प्रकाश। तस्मात् 'परि' परितोऽधिक 'सञ्जिहानम्' उत्तिष्ठन्तम्, जायमानमित्यर्थः। 'मित्रावरुणौ' देवौ 'यत्' 'अपश्यतां' 'त्वा' 'त्वाम्' 'तत्' 'ते' तव 'जन्म' एकम् हे 'वसिष्ठ'। 'उत' अपि च 'यत्' 'त्वा' "अगस्त्यो विश आजभार" 'अगस्त्यः' ऋषिः 'विशः' मनुष्यान् प्रति, मनुष्यलोकम् 'आजभार' आहृतवान्, 'तत्' 'ते' तव द्वितीय जन्म॥

'सः' त्वम् 'इत्' एतत् ग्रावरं 'तमः' 'अवयुनम्' अप्रज्ञानकरं 'ततन्वत्' स एव तं सर्वमेवेन लोकं स्वेन प्रकाशाख्येन सम्मनोति 'सूर्य्येण वयुनवत्' "प्राणो हीन्द्रः, तस्मात्सूर्य्य उदेति, प्राणाद्दा एष उदेति, प्राणेऽस्तमेति"—इति ह्युक्तम्। तस्मात् प्राण इन्द्र, सूर्य्यस्योदयहेतुः, स तं सूर्य्यमुद्गमयत्। तेन 'सूर्य्येण' 'वयुनवत् चकार' एतज्जगत् ज्ञानवत् करोति। तस्मात् स एवेन्द्र एवमुच्यते,—सूर्य्येण त्वमेतज्जगद्वयुनवत्प्रज्ञावत् चकार कृतवानसीत्यर्थः। यस्त्वमेवम्प्रभावः तस्य 'कदा' कस्मिन् काले 'मर्त्ता.' मरणधर्माणो मनुष्याः 'अमृतस्य' अमरणधर्मिणः 'धाम' स्थानं 'इयचन्तः' यष्टुमिच्छन्तः 'न मिनन्ति' न श्रयन्ति हे 'स्वधावः!'। अत्र च न सर्वदेवतं चापरिक्लिष्टं स्थानम्, कृतावकाशस्त्वं यज्ञेष्वित्यभिप्रायः॥ एवमिह "तमः ततन्वत् सूर्य्येण" "वयुनवत् चकार"—इति अनेन सम्बन्धात् "वयुन"शब्देन प्रज्ञानमित्युच्यत इत्युपपत्तिः। कान्त्यर्थत्वमपि क्वचिदुपेक्ष्यम्, इहैव वा पक्षेण योज्यम्॥

"वाजपस्त्यम् (४१)"—इति, अनवगतम्। "वाजपतनम्"—इत्यवगमः। "तं सखायः पुरोरुच यूयं वयं च सूरयः। अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्॥"—इति (ऋ॰ सं॰ ७, ४, २१, ६)। पावमानो सौमो। अम्बरीष ऋजिश्वा च सूक्तं ददृशतुः, तयोरा। 'तम्' एनं सोमं हे 'सखायः!' ऋत्विजः। 'पुरोरुचम्' अग्रतो दीप्तम्, 'यूयं वयं,च' सम्भूताः सन्तः, हे 'सूरयः!' मेधाविनः! 'अश्याम' व्याप्नुयाम वयम् 'वाजगन्ध्यम्' प्रति विशिष्टावयमानगन्धम्, अथवा वाजप्रहोतारम्, अथवा वाजमन्नमिश्रयितारम्। किञ्च, 'सनेम' सम्भजेमहि "वाजपस्त्यम्" वाजमन्नम्, तदस्माकमिति सम्भजामः

सन्नो यमाभिमुख्येन देवाः पतन्ति गच्छन्ति, स वाजपस्त्यः सोमः, तं नित्यकालमेव वयं भजेमहि ॥ एवमत्र शब्दमा-कृष्यादर्थोपपत्तेश्च "वाजपस्त्य"शब्देन सोम उक्तः ॥

"वाजगन्ध्यम् (५०)"—इति, एतदपि पदमेकस्मिन्नेव निगमे निरुक्तम्, केवलं समाम्नायानुक्रमविपर्यासः,—"वाजपस्त्यम्, वाजगन्ध्यम्"—इत्येष समाम्नायानुक्रमः, निगमे पुनः "श्रश्याम वाजगन्ध्यम्, सनेम वाजपस्त्यम्"—इति (ऋ० सं० ७, ४, २५, ६) ॥

*"गध्यम् (५१)"—इति, अनवगतम्। ग्रहणीयमित्यर्थ-*प्रतीतिः। "यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्य्योरीशानः। ऋज्रा वाजं न गध्यं युयूषन् कविर्यदहन् पार्य्याय भूषात् ॥"—इति (ऋ सं० ३, ५, १८, १)। वामदेवस्यार्षम्। ऐन्द्री। त्रिष्टुप्। अहीनसूक्तं चतुर्विंश सकृथे माध्यन्दिने सवने मैत्रावरुणस्येय शस्त्रे शस्यते। हे भगवन्निन्द्र! 'यासि' 'कुत्सेन' ऋषिणा स्तूयमानः, अथवा 'कुत्सेन' वज्रेणाभ्युद्यतेन, 'सरथं' समानगमनम्, अभिवहनरथमारुह्य, अथवा 'सरथं' रथसयुक्तं परानीकम्। 'अवस्युः' रिरक्षिषुः आत्मीयान्, ममर्दिषुश्च परकीयान्। 'तोदः' तुन्न इव केनचित् 'वातस्य' जवेन यासि। तथापि च गच्छन् 'हर्य्योः' अश्वयोः 'ईशानः' ईश्वरो न धावति त्वयि अन्यत एव त्वामूहतुः। स त्वं भज 'ऋज्रा' ऋजुनैव मार्गेण न काञ्चिदन्यां गतिं धावमानः, 'वाजं न गध्यम्' वाजमिव ग्रहणार्हं भोक्तृसाभिमुख्येन। 'युयूषन्' पुनः पुनः सम्मिश्रयिषन्, आत्मानं शत्रुभिः युङ्क्ते। 'कविः' क्रान्तदर्शनः। 'यदहन्' यस्मिन्नहनि 'पार्य्याय' पारणाय शत्रूणामुपरि चेतः करोषि, पारयितव्यायेत इति वा, तस्मिन्नेवाहनि तान् सर्वान् 'भूषात्' अतिक्रम्य वर्त्तसे

इत्यर्थः । पर्य्यगृह्णात्, पर्य्यष्वजत्, अभ्यक्रामत्—इत्येते मूषतेरर्थाः ॥ एवमेतस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च "मथम्" —इत्येष शब्दः "गृह्णातेः"—इत्युपपद्यते ॥

"गध्यतिः (५२)"—इति, अप्रतीतार्थः । न पुनरेष "मिश्रीभावकर्मा" । "आगधिता परिगधिता या कशीकेव जङ्गहे । ददाति मह्यं यादुरी याशूनां भोज्या शता ।" —इति (ऋ० सं० २, १, ११, ६)। भावयव्यस्यार्षम् । 'आगधिता' आगृहीता आमिश्रिता च । 'परिगधिता' च परिमिश्रीकृता बाहुभ्यां मया परिष्वक्तेत्यर्थः । 'या' 'कशीकेव' प्रतिक्षणं कशीकेव, सा हि नकुलजातिः काचित्, कशामिति श्रूयतेऽश्वमेधे । सा यथा मदकाले प्रतिक्षणमतितरां परिष्वजति, स हि तस्याः परिष्वजनस्वभावः । एवं याम् 'मा जङ्गहे' परिगृह्णाति बाहुभ्याम् । परिगृह्य च 'ददाति' । 'यादुरी' आदरवती, अथवा यादसा रेतःसेकेन तद्वती । "यादः"—इत्युदकनामसु पठितम् । आह, किं ददाति 'मह्यम्' ? इति, उच्यते,—'याशूनां' मैथुनाख्यानां 'शता' शतानि बहूनि इत्यर्थः । या एवम्प्रकारा, सा मम 'भोज्या' पत्नीत्यभिप्रायः । एवमत्र मैथुनसम्बन्धात् शब्दसारूप्याच्च "गध्यतिः" मिश्रीभावकर्मेत्युपपद्यते ॥

"कौरयाणः (५३)"—इति, अनवगतम् । "कृतयानः"—इत्यवगमः । "यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः । विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥"—इति (ऋ० सं० ५, ०, २८, १)। मेध्यातिथेः काण्वस्यार्षम् । यानमनया प्रशस्यते । 'यं' 'मे' मम 'दुः' दत्तवन्तः, 'मरुतः' 'इन्द्रः' च । 'पाकस्थामा' विपक्वप्राणः, 'कौरयाणः' कृतयानः 'विश्वेषां त्मना' सर्वेषामपि यानानां अत्यप्रतिमहीक-

शक्त्रानां मध्ये आत्मना तदेव 'शोभिष्ठ' शोभनतमम्, अनेकरत्नविचित्रत्वात् 'दिवि इव' ज्योतिश्चक्रम् 'उपधावमानं' दृश्यते ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "कौरयाण:=कृतयान:"—इत्युपपद्यते ॥

"तौरयाण:(५४)"—इति, अनवगतम्। "तूर्णयान."—इत्यवगम:। "जात यत् त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे। स तौरयाण उपयाहि यज्ञं मरुद्भिरिन्द्र सखिभि: सजोषा: ॥"—इति (ऋ० सं० ३, २, १६, ३)। 'जातं' जातमात्रं विश्वेदेवा: 'यत्' 'त्वा' त्वां 'पर्य्यभूषन्' परिगृहीतवन्त:, 'महे' महति 'भराय' भरणाय, महान्तमसुरै: सह संग्रामं करिष्यतीत्यनेनाभिप्रायेण। 'स:' त्वं हे 'पुरुहूत।' इन्द्र! 'तौरयाण:' त्वरितयानो भूत्वा 'उपयाहि' उपगच्छैनं 'यज्ञम्' 'मरुद्भि.' 'सखिभि.' सह 'सजोषा.' सम्प्रीयमाण:। उपागत्य च अस्माकमाशिष: समर्द्धयेत्यभिप्राय: ॥ एवमत्रागमनसम्बन्धात् "तौरयाण:=तूर्णयान."—इत्युपपद्यते ।

"अह्रयाण:(५५)"—इति, अनवगतम्। "अह्रीतयान."—इत्यवगम:। "त्वया वय संघन्व १ स्त्वोतास्तव प्रणीत्यश्याम वाजान्। उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृण्ह्यह्रयाण ॥"—इति (ऋ० सं० ३, ४, २५, ४)। वामदेवस्यार्षम्। त्रिष्टुप्। अग्नये रक्षोघ्ने अष्टाकपाल:, तत्र स्विष्टकृत: पुरोऽनुवाक्येषा, मैत्रायणीयके। हे भगवन्! मे 'त्वया वयं' 'सधन्व.' समानधनिन: यदेतदस्मद्गृहे धनमेतदावयो: तत्सहेत्यभिप्राय:। यत एवमतो ब्रूम:,—'त्वोता:' त्वयैव रक्षिता: सन्त:, 'तव' 'प्रणीती' प्रणीत्या तवैव प्रणयेन 'अश्याम वाजान्' प्राप्नुयामोऽन्नानि। किञ्च, 'उभा शंसा' उभावपि शंसितारौ,—यथा-

यतो नः पापानि शंसति, यश्च पृष्ठतः, तावुभावपि 'सुदव' जहि। हे 'सत्यताते' यथातनितः! किञ्च, 'अनुष्टुया' अनुष्ठानेन 'कृणुहि' कुरु कर्मणैतत्सम्पादय यदहं ब्रवीमि। हे 'अङ्कयाण! अलज्जितयानेत्यर्थः॥ एवमत्र "अङ्कयाण."—इत्यनेन अक्लीतयानोऽग्निरुच्यते। उपपद्यते हि देवताया अलज्जितयानत्वम्॥

"हरयाणः(५६)"—इति, अनवगतम्। "हरमाणयान."—इत्यवगमः। "ऋज्रमुक्षण्यायने रजत हरयाणे। रथं युक्तमसनाम सुषामणि॥"—इति (ऋ० म० ८, २, २५, २)। विश्वमनसो वैयश्वस्येयमार्षम्। उष्णिक्। यानमनया स्तूयते। 'ऋज्रम्' ऋजुगामिनम् 'रथम्' 'रजतम्' रजतमय रजतविकृतं वा, 'युक्तम्' अश्वैः। 'असनाम' लब्धवन्तो वयम्। क्व पुनर्लब्धवन्तः? 'उक्षण्यायने'। उक्षण्यायन इति कश्चिदासीत, तस्मिन् यजमाने, 'हरयाणे' "हरमाणयाने" नित्यकालमेवाभिप्रस्थितयाने, सुषामणि' शोभनं सामास्य सुषामा, तस्मिन् यजमाने। तादृग. स दघी दातेत्यभिप्रायः॥ एवमत्र शब्दमाहात्म्यादर्थोपपत्तेश्च 'हरयाणः=हरमाणयानः"—इत्युपपद्यते॥

"आरित (५७)"—इति, अनवगतम्। प्रतीत्यस्य स्थाने आङ्, "प्रत्यृतः"—इत्यर्थप्रतीतिः। "यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः। वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्त सख्याय हवामहे॥"—इति (ऋ० मं० १, ७, १२, ४)। कुत्सस्येयमार्षम्। व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते। 'यः' इन्द्रः 'अश्वानां' 'गवां' च 'गोपतिः'। किञ्च, 'यः' 'आरितः कर्मणि कर्मणि स्थिरः' आरित' सर्वान् स्तोमान्

प्रति योऽवस्थित.। केन ? देवतारूपेण सर्वेषु स्तोमेषु चाव-स्थानात्। यः 'कर्मणि' अग्निहोत्रादौ 'स्थिरः' नित्यः, यस्ते न किञ्चन कर्म प्रवर्त्तते इत्यभिप्राय । 'वीडोश्चित्' मंस्तब्धस्यापि दर्पितस्यापि 'य.' इन्द्र' 'असुन्वतः' अभिषवमकुर्वाणस्य 'वध.' वधयिता । तमेवङ्गुणयुक्तं 'मरुत्वन्त' मरुद्भिर्हितम्, इन्द्रम्, 'सख्याय' सखिभावाय एतस्मिन् कर्मणि 'हवामहे' आह्वयाम इत्यर्थः॥ एवमयम् "आरित"शब्दोऽर्थोपपत्त्या "प्रत्यृत."—इत्युपपद्यते ॥

"ब्रन्दी(५८)"—इति, अनवगतम् । "ब्रन्दतेर्मृदुभावार्थस्य" धातुरेवायमप्रतीत. ॥ ३ (१५) ॥

नि यद् वृणक्षि श्वसनस्य मूर्द्धनि शुष्णस्य चिद् ब्रन्दिनो रोरुवद्वना । निवृणक्षि यच्छ्वसनस्य मूर्द्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितु रोरूयमाणो वनानीति वा वधेनेति वा । अब्रदन्त वीळितेत्यपि निगमो भवति वीळयतिश्च ब्रीळयतिश्च संस्तम्भकर्माणौ पूर्वेण संप्रयुज्येते निष्षपी स्त्रीकामो भवति विनिर्गतसपः सपः सपतेः स्पृशतिकर्मणः। मा नो मघेव निष्षपी परा दाः। स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः। तूर्णाशमुदकं भवति तूर्णमश्नुते। तूर्णाशं न गिरेरधी-

**त्यपि निगमो भवति। ऋम्पमहिच्छत्रकं भवति यत् ऋुभ्यते ॥ ४ (१६) ॥**

एष एव निगमः,—"नि ०—० वर्ना। प्राचीनेन मनसा बर्हणावता यदद्या चित् कृणवः कस्त्वा परि ॥"—इति (ऋ० स० १, ४, १७, ५)। सव्यस्येयमार्षम्, आङ्गिरसस्येयम्। जगती। ऐन्द्री। स पुनरिन्द्र एवाङ्गिरसः पुत्रत्वमापन्नं 'निवृणक्षि' निवर्षयसि। 'यत्' यस्त्वं हे भग-न्निन्द्र! मेघं हत्वा 'श्वसनस्य' "शब्दकारिणः" वायोः 'मूर्द्धनि' उपरि 'शुष्णस्य चित्' "शोषयितुः" अपि भगवतः "आदित्यस्य" 'व्रन्दिनः' मृदुभावकर्त्तुः, आदित्येन हि परिपच्यमानं संस्तब्धमपि च दरतिन्दुकादि मृदु भवति, तस्मादसौ व्रन्दी। तस्याप्येव कर्मकारिणो मण्डलं प्रत्यूर्ध्वं 'रोरुवत्' स्तनयितुशब्दं कुर्वाणः। 'वना' "वनानि" विक्षिपसि। ऊर्द्धमधश्च "वनानि" उदकानि विक्षिपतो न ते शक्तिप्रतिघातोऽस्तीत्यभिप्रायः। यस्मिंस्तु पक्षे "वधेन"—इति निर्वचनम्, तस्मिन् पक्षे 'वना' —इत्येष शब्दो मेघवधेनेति योज्यः। उदकशब्दस्य तस्मिन् पक्षेऽध्याहार्य्योऽभिवर्जनसम्बन्धात्। 'प्राचीनेन' प्रागवस्थितेन, अदीनेन, तस्मिन् कर्मण्याभिमुख्येन, 'मनसा' 'बर्हणावता' हिंसावता। 'यत्' 'अद्या चित्' अद्यापि त्वं कर्म 'कृणवः' करोष्येव, अद्भुतकरमन्यैः, तस्माद् ब्रवीमि,—'कः त्वा परि'? कोऽन्यस्त्वा उपरि वर्त्तते, त्वमेव सर्वभूतानि परिगृह्य वर्त्तस इत्यर्थः॥ एवमत्र "व्रन्दि" शब्देनादित्य उक्तः। तत् पुनरेतदस्पष्टं मृदुभावकरणादादित्यस्य व्रन्दित्वमिति। अतो व्रन्दिशब्दस्य मृदुभावार्थोपपिपादयिषया श्रौडयतिना संस्तम्भार्थवाचिना सह सम्बन्धोऽत्र व्रन्दतेः प्रयोगः॥

३

ततो निगमात् व्रन्दतेर्हि मृदूभावार्थता स्पष्टतरेति दर्शयति,—"अव्रदन्त वीडितेत्यपि निगमो भवति"। अपिपूर्वोऽप्यय स्पष्टतर इत्यपिशब्द वीडयतिश्च "वीडयतिश्च व्रीडयतिश्च" एतौ द्वावपि "संस्तम्भकर्माणौ" "पूर्वेण" अनेनैव अनन्तरेण व्रन्दिना, यस्मात् समानवाक्यतामुपगतौ "प्रयुज्येते"। तस्मात् व्रन्दिशब्दस्य मृदूभावार्थत्वमुपपद्यते। "तद्देवानां देवतमाय कर्त्वमश्रथ्नन् दृढाव्रदन्त वीडिता। उद् गा आजदभिनद् ब्रह्मणा वलमगूहत् तमो व्यचचयत् स्वः।"—इति (ऋ० स० २, ७, १, ३)। गृत्समदस्यार्षम्। जगती। बार्हस्पत्ये, सूक्ते। 'तत् कर्त्वं' तत् कर्म 'देवाना' 'देवतमाय' देवतमस्य ब्रहस्पते, यत् 'अश्रथ्नन्' श्लथान्यभवन्, 'दृढा' दृढान्यपि सन्ति मेघवृन्दानि। किञ्च, 'अव्रन्दन्त' मृदून्यभवन्। कानि पुन स्तानि मृदून्यभवन्? इति, उच्यते,—'वीडिता' यानि वीडितानि व्रीडितानि सन्नद्धानि दर्पितानि, असुरकुलानि, अन्यानि वा यानि कानिचित्, तानि मृदून्यभवन्निति। किञ्च, 'उद् गा आजत्' उदाजद् गा, उद्गमयदप। 'अभिनत्' 'वलम्' मेघम्, 'ब्रह्मणा' स्तूयमान। किञ्च, 'अगूहत्' अना शयत् 'तम' बंधुतात्मना। किञ्च, 'व्यचचयत् स्व' व्यदर्शयत् आदित्यम्। अव्ययधानकारणेन व्रीडयतिना सह प्रयोगात् व्रीडतेरर्थवैपरीत्येन व्रन्दतेर्मृदुतार्थत्वमुपपद्यते नभस। एवमव्राव्रदन्त वीळितेति व्रन्दतेः, व्रीडयतेर्व्रन्दिना सह प्रयो गोऽन्यत्र क्वचित् द्रष्टव्य॥

"निष्पपी(५८)"—इति, अनवगतम्। "विनिर्गतपसा"—इति शब्दसमाधि। "स्त्रीकाम" पुरुषोऽभिधेय, स हि नित्य निर्गतपेप एव भवति। "स्पृश स्पर्शने" "स्पृशतिकर्मण" स्पृशत्यर्थे वर्त्तमानस्य,—पेप, तेन हि स्त्री स्पृश्यते।

"प्रति यत् स्या नीथा दर्शि दस्योरोको नाच्छा सदनं जानती गात्। अध मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः॥"—इति (ऋ० सं० १, ७, १८, ५)। कुत्सस्यार्षम्। ऐन्द्री। त्रिष्टुप्। हे भगवन्निन्द्र! 'यत्' यस्मात् 'प्रत्यदर्शि' प्रतिपश्यतीव, 'स्या' सा 'नीथा' स्तुतिः। "नीथाविदो जरितारः"—इति (ऋ० सं० ३, १, ११, ५)। एतस्मान्निगमात् स्तुतिर्नीथेति प्रतीयते। 'दस्योः' शत्रोः दासयितुस्तव 'ओको न' ओक इव, निवासमिव। 'अच्छ' आभिमुख्येन, हृदयमनुप्रविश्य। 'सदनं' स्थानम्, यत्र तया नीथया स्तुत्या आसत्व्यम्,—यस्तवाभिमतो गुणः, अनेन यदि नाम मामेष स्तोता स्तुयात्, साधु स्यादिति, तमर्थमनुप्रविश्येव भवतो हृदयम्, तेनार्थेनात्मानमभिसम्बन्धयित्वा एतस्मिन् सदनमित्येवं 'जानती' च तदेव 'अगात्' नित्यकालमेवागच्छति। अतः एवमतः स्तुत्युदीरितारो वय भवतः। 'अध' एतस्मात् कारणात् वयं ब्रूमः,—हे 'मघवन्!' 'चर्कृतात्' पुन पुनः क्रियमाणात् एतस्मात् कर्मणः, आत्मस्तुत्याश्रयभूतात्मानमस्मान् 'परा दाः' पराङ्मुखान् दधीथाः, उपनामय तत् कर्मसाधनानि। कथ च पुनः कर्मसाधनानि? कथ च पुनर्मा परा दाः? 'मघेव निष्षपी' स यथा धनानि नित्यविनिर्गतप्रेपी विनाशयति। एवम् 'नः' अस्मान् त्वम् 'मा' अवसादयिष्टाः धनभूतास्तव वयमतो रक्षस्वेत्यभिप्रायः। एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च धननामसम्बन्धात् निष्षपी" निर्गतपसाः, स्त्रीकाम इत्युपपद्यते।

"तूर्णाशम् (६०)"—इति, अनवगतम्। "उदकं भवति"—इत्यभिधेयवचनम्। "तूर्णाश" हि क्षिप्रम्, तत् "अश्नुते" व्याप्नोति, तूर्णाशमिति प्राप्तम्। अपठितं चैतदुदकना-

मस्तु, तेनाप्रतीतार्थम्। प्रतिश्रुताय वो धृषत् तूर्णाशं न गिरेरधि। हुवे सुशिप्रमूतये॥"—इति (ऋ० सं० ६, ३, १, ४)। मेधातिथेरार्षम्। गायत्री। ऐन्द्री। रात्रिपर्य्याये शस्यते। मैत्रावरुणस्य प्रथमे शस्त्रे विनियुक्ता। हे ऋत्विग्यजमानाः! यस्मया प्रतिश्रुतमार्त्विज्यमुपगच्छता अहमिन्द्रं स्तुतिभिराह्वयिष्यामीति, तस्मै 'प्रतिश्रुताय' 'वः' युष्माकमुपकरणार्थमेतस्मिन् कर्मणि 'धृषत्' धृष्टं प्रगल्भम्। 'हुवे' आह्वये। 'सुशिप्रं' सुहनु सुनसं वेन्द्रमहम् 'ऊतये' तर्पणाय, अथवा भवतामात्मनश्च रक्षणायेति स्यात्। कथम्पुनराह्वयामि? "तूर्णाशं न गिरेरधि"। यथा 'तूर्णाशम्' 'गिरेः अधि' मेघस्योपरि वर्त्तमानमाह्वयन्ति वर्षार्थिनो जनाः। एवमाह्वयामीति॥ एवमत्र गिरिसम्बन्धात् "तूर्णाशम्" उदकमित्युपपत्तिः॥

"चुम्पम् (६१)"—इति, अनवगतम्। "अक्षिक्षुब्धकं भवति"—इत्यभिधेयवचनम्। "यत्" यस्मात्तत् स्पृष्टमात्रं "क्षुभ्यते" चलति, तस्मात् चुपं क्षोभणमिति न्याय्यम्॥४ (१६)॥

कदा मर्त्तमराधसम्पदा क्षुम्पमिव स्फुरत्। कदा नः शुश्रवद्गिर इन्द्रो अङ्ग। कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः शृणोति च गिर इन्द्रो अङ्गाङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति॥५ (१७)॥

१। "कदा मर्त्तमराधसं०—०इन्द्रो अङ्ग" इति (ऋ० सं० १,

६, ६, ३)। गौतमस्येयमार्षम्। उष्णिक्। ऐन्द्री। तार्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'कदा' कस्मिन् काले 'मर्त्तं' मनुष्यम् 'अराधसम्' अनाराधयन्तम्, य. तमिन्द्र नाराधयति, स्तुत्या हविषा च, तम्। 'पदा' पादेन 'स्फुरत्' अवस्फुरिष्यति, अभिहनिष्यति स इन्द्रः। "स्फुरति (१५), स्फुलति (१६)"—इति वधकर्मसु पठितम्। किञ्च। 'कदा न.' कदा अस्माकं परिचरणमानाना स्तुतिभिर्हविर्भिश्च 'शुश्रवत्' श्रोष्यति 'गिरः' स. 'इन्द्र.' 'अङ्ग' क्षिप्रमित्यर्थ। कदास्माकं परिचरितॄणामिन्द्रः श्रोष्यति गिरः, श्रुत्वा च समर्द्धयिष्यत्यास्मिष.। अनाराधयितृंश्च कदा पादेनाभिहनिष्यति ? कदा अनाराधयित्राराधयित्रोर्विशेष ज्ञास्यतीत्यभिप्राय.। स्वरूपेण तावदेषोऽस्य मन्त्रस्यार्थो मया लक्ष्यते, भाष्य पुनरत्र लोक. "पादेन क्षुम्पमिवावस्फुरसि"—इत्येवमधीतं, तथाच,—"कदा न. शृणोति गिर."—इति, तदेतत् "क्षुम्पमिवावस्फुरसि"—"शृणोति गिरः"—इत्यनयोर्भाष्यवाक्ययो. पुरुषो वैलक्षण्यात् दुर्योज्यो मन्त्रार्थं प्रति "गिर. अवस्फुरसि"—इति मध्यमपुरुषयोग प्रत्यक्षकृतलक्षणाभिसम्बन्धी। मन्त्रस्य "कदा न. शृणोति च गिरः"—इत्येतत् परोक्षकृतः। एवमेतद्भाष्य दुर्योज्यम्, यद्येष भाष्यस्य सम्यक् पाठ. ? अथ पुनरसम्यक् पाठ ? सम्यक्पाठोऽन्वेष्टव्य.। अहन्तु लक्षये,—यद्येष मया मन्त्रो व्याख्यात, स एव सम्यक् पाठः स्यात्।—"पादेन क्षुम्पमिवावस्फुरिष्यति" —"श्रोष्यति च गिरः"—इति, तथाहि मन्त्रार्थस्याविरोधो लक्ष्यते। सूक्तेऽपि चास्मिन् काश्चित् परोक्षकृता ऋच., काश्चित् प्रत्यक्षकृता.। अतोऽपि दुरवधार्योऽस्य भाष्यस्याभिप्राय.। अहिच्छत्रक हि पादेन सन्दष्टमात्रं गौश्चेत।

तथावानाराधयितुर्विनाशोऽभोष्ट इति। "तुम्प"शब्देना-
स्मिन्कृत्वमभिधीयते ॥

"निचुम्पुण. (६२)"—इति, अनवगतम्, अनेकार्थञ्च।
"निचुम्पुण सोमो भवति"—इत्यभिधेयवचनम्। "निचान्त-
पृण."—इति शब्दसमाधि:। स हि निचान्तो भवित.
"प्रीणाति" ॥ ५ (१७) ॥

पत्नी॑वन्तः सु॒ता इ॒म उ॒शन्तो॑ यन्ति
वी॒तये॑। अ॒पां जग्मि॑र्निचुम्पु॒णः ॥ पत्नीवन्तः
सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये
पानायापां गन्ता निचुम्पुणः समुद्रोऽपि निचु-
म्पुण उच्यते निचमनेन पूर्यत आवभृथोऽपि
निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचै-
र्दधतीति वा। अवभृथ निचुम्पुणेत्यपि निगमो
भवति। निचुम्पुण निचुङ्कुणेति च पदिर्गन्तु-
र्भवति यत् पद्यते ॥ ६ (१८) ॥

"पत्नी॑वन्तः सुता इमे॰—॰निचुम्पुणः। कक्षी नाम
आङ्गिरस', तस्येयमार्षम्। गायत्री। ऐन्द्री। रात्रिपर्य्या-
येषु मध्यमे पर्य्याये होतुः शस्त्रे विनियुक्ता। 'पत्नीयन्तः'
पत्नीभि. अद्भि, तद्वन्त'। 'सुता' अभिषुता.। 'इमे' सोमा।
'उशन्त.' "कामयमानाः" इव 'यन्ति' देवान् प्रति, 'वीतये'
कथ नामास्मान् देवाः पिबेयुरित्येवमर्थं कामयमाना इव
यन्ति। किमेतदेव ? नेत्युच्यते। पुन पुनरेव. 'निचुम्पुण.'
सोम. "अपां" वीर्येण सहित, तासु तासु क्रियासु प्रदीय-

मान. अस्माभिर्देवान् प्रति 'जग्मि.' एव भवति, गन्तैव भविष्यति ॥ एवमिह सोमाधिकारात् "निचुम्पुण"शब्देन सोम उच्यत इत्युपपद्यते ॥

"समुद्रोऽपि निचुम्पुण."—इति "उच्यते"। स हि "निचमनेन" उदकेन "पूर्यते" उदकं हि निचम्यत इति निचमनम्। भृग्योऽत्र निगमः ॥

"अवभृथोऽपि निचुम्पुण उच्यते"। "नीचैरस्मिन् क्वणन्ति", शब्दं कुर्वन्ति। तत्र ह्युक्तमवभृथेष्वोपांश्वेव चरन्तीति निचुम्पुणः। अथ "वा" "नीचै." अस्मिन् यज्ञपात्राणि "दधतीति" निचुम्पुणः, तानि हि तत्राप्सु निधीयन्ते। "अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। . अव देवैर्देवकृतमेनो यासिषमव मर्त्तैर्मर्त्त्यकृतं पुरुराव्णो देवरिषस्पाहि ॥"—इति (य० वा० सं० ३, ४८)। अनेनाभिसाद्याप्सु प्रक्षीयन्ते सोमपात्राणि। हे 'अवभृथ' अवभृथदेव! हे वरुण। नीचक्वणन! 'निचेरुरसि' नीचैश्चरणशीलोऽसि। निचुम्पुणो नीचक्वणनो भूत्वा गृहे गृहे यज्ञगृहेऽवतिष्ठसे। स त्वमेवङ्गुणविशिष्टः "अव देवै देवकृतम् एनः यासिषम्" अवयजि नः देवैः सहितो देवकृत देवनिमित्तम् देवापराधम्, तमेन.। 'अव' यजि 'मर्त्तैः' सहितः 'मर्त्त्यकृतम्' मनुष्यकृतम्, एनः, 'पुरुराव्ण' पुरोः महतोऽपि 'देवरिष.' देवरोषणादस्मात् पाहि ॥ एवमत्र "निचुम्पुण"शब्देनावभृथ उच्यते।

निचुङ्कुणोऽप्यनेनैव व्याख्यातः ॥

"पदि (६३)"—इति, अनवगतम्। "गन्तु" एष निर्देशः कृतः "भवति"। "यत् पद्यते" यस्मादसौ पद्यते गच्छतीत्यर्थ.। अभिधेयः पक्षी, स हि नित्यकालमेव पतितो भवति। ६ (१८) ॥

सु॒गुर॑सत् सुहि॒र॒ण्यः स्व॒श्वो॑ बृ॒हद॑स्मै॒ वय॒ इन्द्रो॑ दधाति । यस्त्वा॒ यन्त॒॑ वसु॑ना प्रातरित्वो मु॒क्षीज॑येव॒ पदि॑मुत्सि॒नाति॑ ॥ सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति यस्त्वा यन्तमन्नेन प्रातरागामिन्नतिथे मुक्षीजयेव पदिमुत्सिनाति । कुमारो मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च पादुः पद्यतेः । आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते । आविष्कुरुते भासमादित्यो गूहते बुसम्बुसमित्युदकनाम ब्रवीतेः शब्दकर्मणो भ्रंशतेर्वा यद्वर्षन् पातयत्युदकं रश्मिभिस्तत् प्रत्यादत्ते ॥ ७ (१८) ॥

इति पञ्चमाध्यायस्य तृतीयः पादः ॥ ५, ३ ॥

सुगुरसत्०—०सिनाति”—इति (ऋ० सं० २, १, १०, २)। कक्षीवत आर्षम् । य एव ‘सुगु’ भवति, शोभनगु । स एव ‘सुहिरण्य’ भवति । स एव ‘स्वश्व’ भवति । ‘बृहत्’ च महच्च ‘अस्मै’ ‘वय’ ‘इन्द्र’ ‘दधाति’ ददाति । आह, तस्य किम् ? इति । उच्यते,—“यस्त्वा॒ऽऽयन्तं वसु॑ना प्रातरित्व” । प्रातरागामिन्नतिथे ! स हि प्रात प्रातरन्यानि गृहाण्यभ्येति, तेनैवमामन्त्रयते—‘प्रातरित्वः !’—इति । ‘आयन्तम्’ आधावन्तं ‘वसुना’ अन्नेन क्षुधाविमग्नेन प्राणरक्षणेन । ‘मुक्षीजयेव पाशयेव, “कुमार” ‘पदि’ पतितार पक्षिणम्

'उक्षिनाति' उद्रम्य सिनाति, बध्नाति, प्राणांस्त्वपि तीत्यर्थः। यथा हि—अतिचिरध्वगो भवति, स पतन् क्वचित् तोऽवसंयोगेन कस्यचिद् गृहिणो गृहेऽवतिष्ठते, एवमेतत् स्यात्॥ एवमत्र पक्षी "पदि"शब्देनोच्यते, स हि अतिक्रममाणः पाशया बध्यत इत्युपपद्यते॥

"मुचीजा मोचनाच्च" सा हि अवमुच्यते प्रक्षिप्तः पादे। "सयनाच्च" सीयते बध्यते हि तया पक्षी। "तननाच्च" सा हि पक्षिणो बधार्थं तन्यते। एताभ्यः क्रियाभ्यो यथासम्भवं "मुचीजा"—इत्येतदभिधानं भवति॥

"पादु. (६४)"—इति, अनवगतम्। "पद्यते."—इत्यर्थं प्रतीति। सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगपगूहः समर्ये।०—०मुच्यते॥"—इति (ऋ० सं० ७, ७, १८, ४)। वसुक्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। हे यजमान! 'सा' 'ते' तव 'जीवातुः' जीविका, या भगवतः सूर्यस्य तापप्रकाशवृष्ट्युदयास्तमयरसादानादिलक्षणा प्रवृत्तिः, अनेन सौर्येण कर्मणा सर्वभूतानि त्वं जीवसि इत्यभिप्रायः। यत एवमथैतस्मात् कारणात् ब्रवीमि,—'तस्य' सूर्यस्य 'विद्धि' विजानीहि, यत्त्वया स्तुतिहविर्दानादिलक्षणः प्रत्युपकारः कर्त्तव्यः। 'मा' त्वम् 'अस्मै' सूर्याय, 'एतादृक्' एतादृशमुपकारम् 'अपगूहः मा सद्वृतं कार्षीः। प्रत्युपकारायास्मै त्वमभ्युद्यच्छस्वेत्यभिप्रायः। अपि च 'समर्ये' संग्रामे एतस्मिन्, मृत्युना सह वर्त्तमाने, सर्वभूतानाम्, श्वः अद्य वा म्रियेथाः, को हि तद् वेद?—कस्य कदा मृत्युरिति। स त्वं तत्कृतानि शोभनकार्य्याणि मन्यमानः, शीघ्रं प्रत्युपकुरुष्वास्मै सूर्यायेत्यभिप्रायः। आह,—का पुनः सूर्यस्य प्रवृत्तिः जीवातुः? इति। "आविः स्वः

क्रणुते गूहते बुसम्" । 'आविष्कुरुते' प्रकाशीकरोति खभासा सर्वमिदमुपभासितं व्यवहाराय कल्पते, 'स' आदित्यः । 'गूहते' संहृणोति रश्मिभिः 'बुसम्' उदकम् । किञ्च, 'सः' 'पादु' तत्पदनं तद्गमनमवभासनेन चरणदानादिकर्त्तुः 'अस्य' सूर्य्यस्य 'निर्णिजः' उपनिर्णेजयतुः तमःपङ्कदिग्धानि स्वरूपाणि स्वेन प्रकाशोदकेन धौतानीव करोतीति निर्णिक् सूर्य्यः, तस्य निर्णिजः । 'न मुच्यते' नोपरमतीत्यर्थः । अत एवमयमद्य च तवोपकारे प्रवृत्तः । अतः प्रत्युपकर्त्तव्यास्मा. इत्यभिप्रायः ॥ एवमेव शब्दार्थोपपत्तेः "पादुः=पदनम्"— इत्युपपद्यते । "बुसमित्युदकनाम" । "अवीतेः" शब्दार्थस्य (अदा॰ प॰), तद्धि यस्त्वद्भवति । "अंशयतेर्वा" तद्धि अश्नुते (दि॰ प॰) मेघात् । "यद्वर्षन् पातयत्युदकम्" आदित्यः, "तत्" "रश्मिभिः प्रत्यादत्ते"—इति समासतो भाष्यकारेणाय-मस्यार्थचैस्यार्थं उक्तः । ७ (१८) ॥

इति निरुक्तवृत्तौ दशमस्याध्यायस्य (पञ्चमाध्यायस्य)
तृतीयः पादः । ५, ३ ॥

—:○:—

चतुर्थः पादः ।

हकश्चन्द्रमा भवति विहतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा ॥ १ (२०) ॥

"हकः(६५)"—इति, अनवगतम्, अनेकार्थञ्च । "हकः" तावत् "चन्द्रमा भवति" स हि "विहतज्योतिष्कः" प्रकाशितज्योतिष्को भवति, तस्माद् हकः । अथ "वा" "विहतज्यो-

'छ्लिनाति' उदस्य सिनाति, बध्नाति, प्राणांस्त्वपि तीत्यर्थः। यथा हि—अतिथिरध्वगो भवति, स पतन् क्षुधि तोऽन्नसयोगेन कस्यचिद् गृहिणो गृहेऽवतिष्ठते, एवमेतत् स्यात्॥ एवमत्र पक्षी "पदि"शब्देनोच्यते, स हि अति-क्रममाणः पाशया बध्यत इत्युपपद्यते॥

"मुचीजा मोचनाच्च" सा हि अवमुच्यते प्रक्षिप्तः पादे। "सयनाच्च" सीयते बध्यते हि तया पक्षी। "तननाच्च" सा हि पक्षिणो बधार्थं तन्यते। एताभ्यः क्रियाभ्यो यथासम्भवं "मुचीजा"—इत्येतदभिधानं भवति॥

"पादुः (६४)"—इति, अनवगतम्। "पद्यते"—इत्यर्थ-प्रतीति। सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगपगूहः समर्य्ये।०—०र्मुच्यते॥"—इति (ऋ० सं० ७, ७, १८, ४)। वसुक्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। हे यजमान! 'सा' 'ते' तव 'जीवातु.' जीविका, या भगवतः सूर्य्यस्य तापप्रकाशवृष्ट्युदयास्तमयर-सादानादिलक्षणा प्रवृत्तिः, अनेन सौर्य्येण कर्मणा सर्वभूतानि त्व जीवसि इत्यभिप्रायः। यत एवमथैतस्मात् कारणात् ब्रवीमि,—'तस्य' सूर्य्यस्य 'विद्धि' विजानीहि, यस्त्वया स्तुति-हविर्दानादिलक्षणः प्रत्युपकारः कर्त्तव्यः। 'मा' त्वम् 'अस्मै' सूर्य्याय, 'एतादृक्' एतादृशमुपकारम् 'अपगूह. मा सहृतं कार्षीः। प्रत्युपकारायास्मै त्वमभ्युद्यच्छस्वेत्यभिप्राय.। अपि च 'समर्य्ये' संग्रामे एतस्मिन्, मृत्युना सह वर्त्तमाने, सर्वभूतानाम्, श्वः अद्य वा म्रियेथाः, को हि तद् वेद?—कस्य कदा मृत्युरिति। स त्व तत्कृतानि शोभनकार्य्याणि मन्य-मान, शीघ्रं प्रत्युपकुरुष्वास्मै सूर्य्यायेत्यभिप्रायः। आह,—का पुनः सूर्य्यस्य प्रवृत्तिः जीवातु.? इति। "आविः ऋजु

शृणुते गूहते कुसम्"। 'आविष्कुरुते' प्रकाशीकरोति स्वभासा सर्वमिदमुपभासितं व्यवहाराय कल्पते, 'स.' आदित्यः। 'गूहते' संवृणोति रश्मिभिः 'कुसम्' उदकम्। किञ्च, 'सः' 'पादु.' तत्पदनं तद्गमनमवभासनेन चरणदानादिकर्त्तुः 'अस्य' सूर्यस्य 'निर्णिजः' उपनिर्णेजयतः तमःपद्धदिग्धानि स्वरूपाणि स्वेन प्रकाशोदकेन धौतानीव करोतीति निर्णिक् सूर्य्यः, तस्य निर्णिजः। 'न मुच्यते' नोपरमतीत्यर्थः। अत--एवमयमस्य च तवोपकारे प्रवृत्तः। अतः प्रत्युपकुरुष्वास्मा, इत्यभिप्रायः॥ एवमत्र शब्दार्थोपपत्तेः "पादु = पदनम्"—इत्युपपद्यते। "कुसमित्युदकनाम"। "स्रवीतेः" शब्दार्थस्य (अदा० प०), तद्धि शब्दवद्भवति। "भंशतेर्वा" तद्धि भ्रश्यते (दि० प०) मेघात्। "यद् वर्षन् पातयत्युदकम्" आदित्यः, "तत्" "रश्मिभिः प्रत्यादत्ते"—इति समासतो भाष्यकारेणायमस्यार्द्धर्चस्यार्थ उक्तः॥ ७ (१८)॥

इति निरुक्तवृत्तौ दशमस्याध्यायस्य (पञ्चमाध्यायस्य) तृतीयः पाद.॥ ५, ३॥

—:○:—

चतुर्थः पादः।

**वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा ॥ १ (२०)॥**

"वृक.(६५)"—इति, अनवगतम्, अनेकार्थञ्च। "वृकः" तावत् "चन्द्रमा भवति" स हि "विवृतज्योतिष्का." प्रकाशितज्योतिष्को भवति, तस्माद् वृकः। अथ "वा" "विकृतज्यो-

तिष्कः"—इति वृकः, तद्धि तस्य विक्रान्तं ज्योतिः, शीतत्वात्, इतराणि उष्णानि ज्योतींषि सूर्यादीनि, तान्यपेक्ष्य। यद्वा "वा" विक्रान्तज्योतिष्कः वृकः, तस्य हि विक्रान्तं ज्योतिः, इतरेभ्यो ग्रहनक्षत्रतारकादिभ्यो ज्योतिर्भ्यः सकाशात्। एते शब्दसमाधयः॥ १ (२०)॥

अ॒रु॒णो मा॑स॒कृद्वृकः॑ प॒था य॒न्तं द॒दर्श॒ हि। उज्जि॑हीते नि॒चाय्या॒ तष्टे॑व पृष्ट्याम॒यी वि॒त्तं मे॑ अ॒स्य रो॑दसी॥ अरुण आरोचनो मासकृन्मासानां चार्द्धमासानां च कर्त्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी जानीतं मेऽस्य द्यावापृथिव्याविन्यादित्योऽपि वृक उच्यते यदावृङ्क्ते॥ २॥

"अ॒रु॒णो मा॑स॒कृत् •—• रो॑दसी"—इति (ऋ॰ सं॰ १, ७, २३, ३)। त्रितस्यैव आप्त्यस्य कूपे पतितस्य, कुत्सस्य वा आर्षम्। पङ्क्तिः। वैश्वदेवी। 'अरुणः' "आरोचनः" आभिमुख्येन सर्वस्य जगतो रोचयिता स्वया ज्योत्स्नया। 'मासकृत्' "मासानां च अर्द्धमासानां च कर्त्ता"। मासशब्दसम्बन्धादर्द्धमासशब्दोऽध्याहृतः, तानपि ह्यसौ निर्मिमीत इति। "चन्द्रमाः" 'वृकः'। आह,—किं करोति? इति, उच्यते,—"प॒था य॒न्तं द॒दर्श॒ हि" नक्षत्रमण्डलस्याधोऽवस्थितः 'पथा', स्वेन मार्गेण 'यन्तं' 'ददर्श' पश्यति "नक्षत्रगणम्"—स हि

मन्धकूपे पतितं पश्यति, यदि नाम पश्येत् कथञ्चिदवश्य-मस्मान्त्रायेतापदो मामित्यभिप्रायः। किञ्च, "उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तम्"। यथा कश्चित् 'तष्टा' तक्षा "पृष्ठरोगी" कश्चिद्दृक्षं "तक्ष्णुवन्" तच्छेदनास्पदे वयं योग्या न वा?—इत्यनेनोत्कटो भूत्वा 'निचाययति' पश्यति, एव "चन्द्रमाः" अप्युज्जिहीते "येन" नक्षत्रेण "योक्ष्यमाणः" —अमुना मयाद्य योक्ष्य इति। एवं 'निचाय्य' "तष्टा" स्वेन दृष्टात् दर्शनेन। ततस्तदेव "अभिजिहीते" तेनैव सहो-देतीत्यर्थः। एवमस्य येनार्थ, तमयमादृरेणोर्द्धकायो हि भूत्वा पश्यति, मया त्वस्यार्थो नास्तीति मा न पश्यत्यधोवर्त्त-मानम्। एवमतो ब्रवीमि,—अपि तावत् हे 'रोदसी!' 'वित्त' विजानीतं 'अस्य' वितस्यार्त्तिप्रलापस्य योऽर्थः। विदित्वा उत्तरत मामस्मात् कूपात् इत्यभिप्रायः॥ एवमत्र अरुणशब्दात् मासकृच्छब्दाच्च "वृकः=चन्द्रमाः"। चन्द्रमः-शब्दाच्च नक्षत्रगणोऽध्याहृत, तथार्थोपपत्त्यविरोधात्॥

येषां तु शाखिनां "मा सकृत्"—इत्येतत् पददयं भवति, तेषां सकृत् मा ददर्श चन्द्रमाः, यदि पुनःपुनः पश्येदवश्य-मोचयेदस्या आपदः, यथा तु यन्त नक्षत्रगणं पुनःपुनः पश्यति न मामित्येवमादि योज्यम्।

"आदित्योऽपि वृका उच्यते"। "यद् आवृङ्क्ते" यस्मा-दसौ तम आवृङ्क्ते, तस्माद्वृकः॥ २॥

अमों हवीदश्विना वर्त्तिका वामास्नो यत्सीममुञ्चत हकस्य। आह्वयदुषा अश्विना-वादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरि-

त्याख्यानं श्वापि वृक उच्यते विकर्त्तनात्। वृकश्चिदस्य वारण उरामथिः। उरणमथिः। उरण ऊर्णावान् भवत्यूर्णा पुनर्वृणोतेरूर्णोतेर्वा। वृद्धवाशिन्यपि वृक्युच्यते। शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकारेत्यपि निगमो भवति। जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति॥ ३ (२१)॥

“अजोहवीदश्विना०—०वृकस्य। वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण॥”—इति (ऋ० सं० १, ८, १६, १)। कक्षीवत आर्षम्। आश्विनी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। ‘अजोहवीत्’ “आह्वयत्” आह्वानवती “उषा.”। हे ‘अश्विनौ!’ युवाम्। वर्त्तनशीला ‘वर्त्तिका’। कदा पुनराह्वयत्? इति, उच्यते,—‘आस्नः’ आस्याद्यदेनां ‘वां’ युवाम् ‘अमुञ्चतम्’। ‘वृकस्य’ आदित्यस्य; उषाः किल “आदित्येनाभिग्रस्ताश्विनौ” आह्वतवती, “तामश्विनौ प्रमोचितवन्तावित्याख्यानम्”—एतमिमर्थं वेदयन्ते निदानविदो बह्वृचाः, तदप्युपेक्षितव्यं मन्त्रार्थनिर्णयाय। ‘यास्नो वृकस्य वर्त्तिकामभीके युवं नरा नासत्यामुमुक्तम्।”—इति (ऋ० सं० १, ८, १०, ४)। एतच्च युवयोर्माहाभाग्यम्। किञ्चान्यत्। “विजयुषा ययथुः सान्वद्रेः”। ‘विजयुषा’ विजयमिच्छन्तौ युवां ‘ययथुः’ गच्छथः, ‘सानु’ समुच्छ्रितम् ‘अद्रेः’ मेघस्य विषयमारुह्य। किञ्च, युवामेव ‘जातम्’ उपद्रवं दुर्भि-

व्याप्य कृत्स्नस्य जगतः, 'विश्वाचः' विश्वगञ्चनौ, सर्वतो गतौ भूत्वा,—मेघजालेनेदं सर्वमभिप्रच्छाद्य, ततः 'अहतं' हतवन्तौ स्थ, 'विषेण' उदकेनेत्यर्थः॥ यथाऽस्मिन् वृक-शब्देनादित्य उच्यते, तथाऽऽख्यानादुपेक्षितव्यम्॥

"श्वापि वृक उच्यते" "विकर्त्तनात्" विविधमसौ कृन्तति तस्माद् वृकः। "वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति। सेमं नः स्तोमं जुजुषाण आगहीन्द्र प्र चित्रया धिया॥"—इति (ऋ० सं० ६, ४, ४८, २)। प्रगाथपुत्रस्य कलेरार्षम्। सतो बृहती। महाव्रते तृचाशीतिषु विनियुक्ता। 'वृकश्चित्' वृकोऽपि, 'श्वा' सारमेयोऽप्यस्येन्द्रस्य विद्यत एव। 'वारणः' धारयिता शत्रूणाम्। किमुतान्यान्युपकरणानि? 'उरामथिः' "उरणमथिः" उरान् मेषान् यो मथ्नाति स उरामथिः। स पुनरप्यस्येन्द्रस्य 'आभूषति' 'वयुनेषु' प्रज्ञानेषु, यदैवासौ विजानीते आभूषत्वय शत्रूनिति, तदैवासौ आभूषति। यस्य तवैव सर्वोपकरणसम्पन्नत्वम्, हे 'इन्द्र!' 'सः' त्वम् 'इमम्' 'नः' अस्माकं 'स्तोमम्' उपश्रुत्य 'आगहि' आगच्छेमं यज्ञं 'प्र' प्रकर्षेण 'चित्रया' चायनीयया कमनीयया 'धिया' बुद्ध्या॥ सरमा हि देवशुनी श्रूयते। तत्पुत्रनप्तृभिश्च देवानां भवितव्यम्, तस्मात् श्वापि वृक उच्यत इत्युपपद्यते, इतरेषामारण्यकानां परिग्रहाभावात् अस्य मन्त्रस्य पूर्वोऽर्द्धर्चः परोक्षकृतः,—वृकश्चिदस्येत्यस्मात् षष्ठीयोगात्। उत्तरस्तु प्रत्यक्षकृतः,—आगहीन्द्रेत्यस्मान्मध्यमपुरुषयोगात्, सम्बोधनाच्च। देवता किल परोक्षा स्तूयमाना प्रत्यक्षीभवति। तदेतत् सर्वेष्वेवलक्षणेषु मन्त्रेषूपेक्षितव्यम्॥

निगमप्रसङ्गमुच्यते,—"उरणः—ऊर्णावान्" ऊर्णया तद्वान् "भवति"। "ऊर्णा पुनर्वृणोतेः"। इति निगमप्रसङ्गम्। ता

अपि शीतत्राणार्थं विक्रियन्ते। "ऋर्जातिर्वा" आच्छादनार्थं स्यात्, ताभिराच्छन्न उरणो भवति।

"हृद्धवाशिन्यपि हृक्युच्यते" येषा हृद्धं वाश्यते,—शिवा, सापि हृक्युच्यते, विकर्त्तनादेव। "शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार। तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्॥"—इति (ऋ० सं० १, ८, ११, १)। अजीहवीदित्यनया समाम्नायेयम्। 'शतं मेषान्' 'वृक्ये' शिवायै, तया वाशिते सति परितुष्ट 'चक्षत्' व्यादिष्टवान् 'दानम्'। येयमेव शोभनमभिप्रस्थितानामस्माकमर्थसिद्धये वाश्यते, तस्यै, शतं मेषाणां दीयतामित्येवमाज्ञापितवान्। 'ऋज्राश्वम्' ऋज्राश्वो नाम राजपुत्र, तम्। 'तं च' पुनरेवं व्यादिष्टवन्तमतिसाहसिकोऽयमिति 'पिता' कुपित, शापेन 'अन्धं' 'चकार' कृतवानित्यर्थ। 'तस्मै' एवमन्धीभूताय पितुरभिशापेन, 'अक्षी' अक्षिणी, 'नासत्या' अश्विनी देवी विचक्षे विगतदर्शनाय 'आधत्तम्'। 'दस्रा' दर्शनीयौ अश्विनौ। 'भिषजौ देवभिषजौ। भयसादयितारौ, 'अनर्वन्' चक्षु आधत्तम् अनाश्रितमन्यत्र कचित्, स्वप्रधानमित्यर्थ॥ एवमत्र मेषसम्बन्धात्, व्याख्याने च तथार्थतोपपत्तिदर्शनात् "हृद्धवाशिनी हृक्युच्यते"—इत्युपपद्यते॥

"जोष (६६)"—इति, अनवगतम्। "अविज्ञातनामधेयम्"—इत्यभिधेयवचनम्। "जोषयितव्य भवति"—इति शब्दसमाधि। जोषयितव्य विज्ञापयितव्य परस्मै तद्वत्त्वस्पष्टत्वात्॥ ३ (२२)॥

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृताद्वृधा। जोषवाकं वदतः पज्रहोषिणा न देवा भसथ-

श्न ॥ य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्यान्नौयोऽथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्यान्नीथः कृत्तिः कृन्ततेर्यशो वा अन्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेतीयमपीतरा कृत्तिरेतस्मादेव सूत्रमयुपमार्थे वा। कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति। श्वघ्नी कितवो भवति स्वं हन्ति स्वं पुनराश्रितं भवति। कृतं न श्वघ्नी विचिनोति देवने कृतमिव श्वघ्नी विचिनोति देवने कितवः किं तवास्तीति शब्दानुकृतिः कृतवान्वाशीर्नामकः समामिति परिग्रहार्थीयं सर्वनामानुदात्तम् ॥ ४ (२२) ॥

"य इन्द्राग्नी सुतेषु वां०—०भुसर्थयुन"—इति (ऋ० सं० ४, ८, २५, ४)। भरद्वाजस्येषमार्षम्। बृहती। हे 'इन्द्राग्नी!' 'यः' यजमानः 'सुतेषु' अभिषुतेषु सोमेषु 'वां' युवां 'स्तवत्' "स्तौति" 'तेषु' कर्मसु 'ऋतावृधा' सत्यवर्द्धयितारौ, यज्ञवर्द्धयितारौ वा। "तस्य" युवाम् "अन्नीथः" स युवयोः बहुमत इत्यभिप्रायः। "अथ" पुनः "योऽयम्" "जोषवाकम्" अविज्ञातं किमपि उपांशु "वदति" "विजञ्जपः" केवलमुदकतीरेऽवस्थितोऽन्यत्र वा अपनयोन्न एव, न कर्मकारीत्यभिप्रायः।

तस्य 'जोपवाकं वदत.'। 'पक्थहोषिणा' हे "प्राजितहोपिणौ!" प्रभूतयागौ। "यदिन्द्रश्च अग्निश्च भूयिष्ठभाजौ देवतानां तस्माद् ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणामिति ह विज्ञायते"। 'देवा' हे "देवौ!" 'न भक्षयथ' न कदाचिदपि तस्य हवींषि भक्षयथ', तेन युवयोर्नासौ बहुमत इत्यभिप्रायः। अत्र "जोपवाक वदत." "न भक्षथ."—इत्येतद् दृष्टा य. सुतेषु सोमेषु स्तौति, तस्य न भक्षथ इत्येतदध्याहृत भाष्यकारेण। एवमत्र विजञ्जपस्य भक्षयितव्याभावात्तस्य चोपांशुत्वाभाव्यात् "जोपवाक"शब्दोऽविज्ञातनामधेयमित्युपपद्यते॥

"कृत्ति (६७)"—इति, अनवगतम्, अनेकार्थञ्च। "कृन्ततेः"—इति धातुनिर्देशः। "यशोऽन्नं वा"—इत्यर्थवचनम्। कर्त्तनमिति न्याय्यम्, यशो हि द्विषतां मर्माणि कृन्तति, अन्नमप्यसम्यगुपयुक्तमायुरेव कृन्तति। "तमु॑ त्वा नूनम॑सुर॒ प्रचे॑तस॒ं राधो॑ भा॒गमि॑वेमहे। म॒हीव॒ कृत्ति॑ः श॒रणा॑ त इन्द्र॒ प्र ते॑ सु॒म्ना नो॑ अश्नवन्॥"—इति (ऋ० सं० ६, ६, १२, ६)। नृमेधसः प्रियमेधमथेयमार्षम्। सतो बृहती। ऐन्द्री। चतुर्विंशादिषु सात्त्विकेष्वहःसु माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे स्तोत्रियानुरूपवर्गे विनियुक्ता। 'तम् उ त्वा' हे 'असुर' प्रज्ञावन्! 'प्रचेतस' विद्वत्प्रज्ञानं 'राध.' धनं त्वमिव पित्र्यं 'भागम्' उत्पन्नप्रणयत्वात् 'ईमहे' तत्रोदेहि स्थिरशरीराणां नदेतदस्तु नः। किञ्च, 'महीव कृत्ति.' महदिव यशः, महद्वा अन्नम् 'शरणा' शरणम्, गृहम्। 'ते' तव हे 'इन्द्र!' यत् "अन्तरिक्षलोके" इदह 'प्राश्नवम्'। किञ्च, 'ते' तव 'सुम्ना' सुम्नानि धनसम्बन्धानि सुखानि, त्वद्योग्यानीत्यर्थः। यद्वा, सुम्नानि, सुखसाधनानि, अप्सरःप्रभृतीनि प्राप्नुया-

गृहम्। तदहं सोमं सुन्वानः तस्याभिषवकर्मणो माहात्म्येन, येन लब्धायुज्यमश्नु याम्, देहपातोत्तरकालमिह चामुत्र चैतत् नः फलद्वयमस्तु त्वत्त इत्यभिप्रायः। यशो हि विस्तीर्णं भवति, तेन हि गृहस्योपमानमुपपद्यते। यदनुप्रविष्टानाम् अशनापिपासे न स्तः, तदहं तव गृहम् प्राप्नु यामित्येवमनेनाप्युपपद्यते॥

"इयम् अपि इतरा कृत्तिः एतस्मादेव"। सूत्रमयी कर्त्तिर्या प्रसिद्धा, साप्येतस्मादेव कृन्ततेः, सा हि वस्त्रावयवैः सूत्रैर्ग्रथिता भवति। "उपमार्थे वा" चर्मापि कृत्तिरित्युच्यते। तयेतरा सूत्रमयी उपमीयते, विकर्त्तनसामान्यात्। कृत्तिरिव कृत्तिः कन्था। "कृत्तिवासाः पिनाकहस्तोऽवततधन्वा"—इति। व्याख्यातोऽयमष्टमेऽध्याये निगमः॥

"श्वघ्नी (६८)"—इति, अनवगतम्। "कितवो भवति"—इत्यभिधेयवचनम्। "स्वं हन्ति"—इति शब्दव्युत्पत्तिः। स्वघ्ना इति न्याय्यम्। विग्रहप्रसक्तमुच्यते,—"स्वं पुनराश्रितं भवति" तद्धि स्वामिनमाभिमुख्येन श्रितं भवति स्वत्वेन। "कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत्। न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः॥"—इति (ऋ० स० ७, ८, २४, ५)। कृष्णस्याङ्गिरसस्येयमार्षम्। ऐन्द्री। जगती। तार्त्तीयसवनिकेषु उकथपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। यथाव कृतादीनां दायानां मध्ये कितवः 'कृतं विचिनोति' 'देवने' आस्तारे, अपि नामात्र कृतं यस्मात् ततो जयेयमहमित्येवम्। 'मघवा' इन्द्रः 'संवर्गम्' उदकसंवर्जयितारम्, अन्तरिक्षे, बहूनां मेघानां मध्ये, विचिनोति,—कतमस्त्वेषां मेघानामुदकदाने समर्थः? इति,

स विज्ञाय यदजहत् । 'सूर्य्यम्' सुष्ठु ईरयितारमपाम् । 'न' 'तत्' 'ते' तव 'अन्यः' कश्चित् 'अनुवीर्य्यं' अकृत्' । तद्वीर-कर्म तावकम् अन्यः कश्चिदनुकर्त्तुमशक्तः । 'न' अपि 'पुराणः' 'न चत' नापि 'नूतनः' नव इत्यर्थः । न पूर्वे चक्रु, नापरे करि-ष्यन्तीत्यभिप्रायः । कृतसम्बन्धाद् देवनसम्बन्धाच "श्वघ्नी = कितव."—इत्युपपद्यते ।

अस्य मन्त्रस्य पूर्वोऽर्द्धर्चः परोक्षकृतः, स एव विपरिणम-यितव्यः, अत्र चोक्तः समाधिः ।

निगमप्रसक्तमुच्यते,—"कितवः"—इत्यस्य शब्दस्य "किं तवास्तीति" एवा "शब्दानुकृति." स हि नित्यकालमेव दिदे-विषुः प्रतिदेविभिः, कितवैः पृच्छ्यते,—किं तवास्तीति, तस्माच्छब्दानुकरणात्कितव एवासौ बभूव । अथवा "कृत-वान्" अयं यथा स्यादित्येवमसौ आशास्यते सुहृद्भिरन्यैः कितवैः, स हि तस्मादेवमाशासनात् "आशीः"निमित्त-"नामक." कितव एवासौ बभूव ।

"समम् (६८)"—इति, एतत् "परिग्रहार्थीयं सर्वनाम" । तत् पुनरेतत् "अनुदात्तम्" "त्वत्वसमसिमेत्यनुच्चानि"—इति ह्युक्तम् । विप्रतिपन्नस्वरत्वादत्र भाष्यकारेण स्वरोऽवधृतः, पक्षेण चाप्यनेकार्थताप्यस्य भवतीत्येतत् प्रदर्शितं भाष्य-कारेण ॥ ४ (२२) ।

मा नः समस्य दूढ्यः १ परिद्वेषसो अंहु-तिः । ऊर्मिर्न नावमावधीत् ॥ मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसो अंहतिरूर्मि-रिव नावमावधीदूर्मिरूर्णोतेर्नौः प्रणोत्तव्या

भवति नमतेर्वा तत् कथमनुदात्तप्रकृति नाम स्याद् दृष्टव्ययं तु भवति। उतो समस्मिन्नाशिशीहि नो वसो इति सप्तम्यां शिशीतिर्दानकर्मा। उरुष्या णो अघायतः समस्मादिति पञ्चम्यामुरुष्यतिरक्षाकर्मा। अथापि प्रथमाबहुवचने। नभन्तामन्यके समे॥ ५ (२३)॥

"मा नः समस्य०—०मावधीत्"। विरूप आङ्गिरस एतामाग्नेये सूक्ते ददर्श। गायत्री। आग्नेयी। दशरात्रस्य तृतीयेऽहनि प्रातःसवने आद्ये सूक्ते विनियुक्ता। हे भगवन् अग्ने! युष्मत्प्रसादात् 'मा नः' माऽस्मान्, 'समस्य' सर्वस्यैव, 'दूढ्यः' दुर्धियः पापधियः, 'परिद्वेषसः' सर्वतो द्वेष्टुः, स्वभूतः, 'अंहतिः' वध इत्यर्थः। 'ऊर्मिर्न' ऊर्मिरिव, यथोर्मिर्नावमभिमुख्येन गत्वा वधयति, नैवमंहतिरस्मान् द्वेष्यप्रहितोऽवधीदिति॥ एवमत्र सर्वस्मादेव द्वेष्टुर्बाधानभीष्टत्वात् "समस्य"—इत्येतत् सर्वनामेत्युपपद्यते॥

"ऊर्मिः, ऊर्णोतेः" आच्छादनार्थस्य, सा ह्याच्छादयति तीरमुदकमध्ये वा यदन्यद् भवति। "नौः प्रणोतव्या भवति" पारगमनाय, "नमतेर्वा" स्यात्, सा हि प्रह्वीभूतेव भवति, पारगमनाय॥

आह, यदेतत् समस्मिति शब्दरूपम् "अनुदात्तप्रकृति" अनुदात्तस्वभावम्, "तत् कथं नाम स्यात्"? "अनुदात्तप्रकृतयो हि निपाताः, उदात्तप्रकृतीनि नामानि भवन्तीति। दृश्यते,

—"द्रष्टव्यं तु" एतत्, यस्मादनुदात्तप्रकृतित्वेऽपि सति, तस्मादाद्युदात्तमेवैतत् "भवति" ॥

आह, क्व पुनरस्य व्ययो दृष्टः? इति, उच्यते,—"उतो समस्मिन्ना शिशीहि नो वसो:—इति सप्तम्याम्" व्ययो दृष्टः। "विद्मा सखित्वमुत शूर भोज्य१मा ते ता वज्रिन्नीमहे। उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥"—इति (ऋ० सं० ६, २, २, ३)। सौभरेरार्षम्। सतो बृहती। ऐन्द्री। आख्याने विनियुक्ता। 'विद्म' विजानीमो वयं 'सखित्व' सखिभावम्। 'उत' अपि च। हे 'शूर' वज्रिन्! इन्द्र! 'भोज्यं' भोग्यम् अंशोपजीव्यत्वं मित्राणाम्, यतो वयं 'आ ईमहे' आभिमुख्येन स्थित्वा याचामहे,—'ते' तव यानि धनानि। किञ्च, 'उतो' अपि च 'समस्मिन्' सर्वस्मिन् 'शिशीहि नः' देहि अस्माकं हे 'वसो' वसुमन्! इन्द्र! क्व पुनराशिशीहि नः? इति,—'वाजे' अन्ने इत्यर्थः। हे 'सुशिप्र' हे सुनस! अथवा हे सुहनो! 'गोमति' गोभिस्तद्वति अन्ने, अस्मान् प्रतिष्ठापयेत्यर्थः ॥ एवमत्र समस्मिन्निति सप्तम्या व्ययो दृष्टः ॥

"उरुष्याणो अघायतः समस्मात्—इति पञ्चम्याम्" व्ययो दृष्टः। "तं त्वा०—०सखिभ्य। स न. बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात्॥"—इति (य० वा० सं० ३, २६)। श्रुतबन्धोरार्षम्। आग्नेयी। द्विपदा। अग्न्युपस्थाने विनियुक्ता। यः त्वमेवम्प्रभावः, यथाप्रभावं त्वां वयमवोचाम। 'स' त्वं हे भगवन्नग्ने! 'बोधि' बुध्यस्व 'न' अस्माकमभिप्रायम्। 'श्रुधी' शृणु च 'हवम्' आह्वानमिदम्। आहूतश्च 'उरुष्याण' उपगम्यास्मान्, 'अघायतः' पापमिच्छतः 'सम-

स्मात्' सर्वस्मात् पाहि। एवमत्र समस्मादिति पञ्चम्या व्ययो दृष्ट ॥

तस्मात् व्ययदर्शनाद् दृष्टानुविधिश्छन्दसि भवतीति कृत्वाऽनुदात्तप्रकृतित्वेऽपि सति नामैतद्भवतीत्युपपद्यते ॥ ५(२३) ॥

हविषा जारो अपां पिपर्ति पपुरिर्नरा।
पिता कुटस्य चर्षणिः ॥ हविषापां जरयिता पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा। उग्रो यः शम्बः पुरुहूत तेनेत्यपि निगमो भवति। केपयः कपूया भवन्ति कपूयमिति पुनाति कर्म कुत्सितं दुष्पूयं भवति ॥ ६(२४) ॥

"कुटस्य (७०)" "चर्षणिः (७१)"—इति, एते अनवगते। "कृतस्य" "चायिता"—इत्येतौ शब्दसमाधी। एक एव निगमः।—"हविषा जारो०—०चर्षणि"—इति (ऋ० सं० १, ३, ३३, ४)। प्रस्कण्वस्यार्षम्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। हे 'नरा' नरौ। अश्विनौ। युवाम्। एष "आदित्य" 'पिता' पाता, कृत्स्नस्य जगतः। 'कुटस्य' "कृतस्य कर्मणः" सार्वभौमस्य साध्वसाधुनः। 'चर्षणिः' "चायिता" द्रष्टा, बुद्ध्यधिदेवताभावेनावस्थितः सर्व-

भूतानाम्। 'अपां जारः' अपां सर्वभूतान्तर्गतानां प्राणभावेनावस्थितो जरयिता, शोषयिता। 'पपुरिः' च पूरयिता च। प्राप्ते काले 'ऋविया' उदकेन 'पिपर्त्ति' पूरयति वा प्रीणयति वा। यौ युवामिवङ्गुणयुक्तेनादित्येन पूर्य्येथे, प्रीणेथे वा, तौ युवामिमा नामास्माकमाशिषं समर्द्धयतमित्येवमाशीर्योज्या॥ एवमत्र "कुटस्य—चर्षणिः"—इत्येते कृतस्य चायितेत्येवमुपपद्येते। नरावत्र द्यावापृथिव्यावभिप्रेते, तयोर्योदकेनादित्यः पूरयिता। तस्मादादित्यविषययिता चर्षणिशब्दस्य, तस्य च बुद्ध्यधिदेवताभावेन कृतस्य कर्मणो द्रष्टृत्वमुपपद्यते। 'पिपर्त्ति'—'पपुरिः'—इत्येवमेतौ निगमस्थौ शब्दौ "पृणात्यर्थौ वा प्रीणयत्यर्थौ वा"॥

"शम्बः (७२)"—इति, अनवगतम्। "वज्रनाम"—इत्यभिधेयवचनम्। "शमयिता वा शातयिता वा"—इति शब्दसमाधौ। "आराच्छत्रुमपबाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन। अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्॥"—इति (ऋ० सं० ७, ८, २३, २)। कृष्णस्याङ्गिरसस्यार्षम्। त्रिष्टुप्। माध्यन्दिने सवने स्तोमातिशंसने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। हे 'पुरुहूत' बहुभिराहूत। 'य' एषः, 'आरात्' समीपे अस्माक वर्त्तते शत्रुः, तं दूरम् 'अपबाधस्व' नाशयस्वेत्यर्थः। आराच्छब्दोऽत्र समीपार्थवाची। अन्यत्रापि चोक्तम्,—"आरात् प्राग्वंशादुदयास्तमयौ"—इति। किं पुनरपबाधस्व? 'उग्रो यः शम्बः' उद्गूर्णो यो वज्रः तेन अपबाधस्व। किञ्च, तं दूरमपबाध्य 'अस्मे' अस्मभ्य 'धेहि' देहि 'यवमत्' यवैस्तद्वत्—व्रीहिगोधूमाद्यन्नम्। अपि च 'गोमत्' गोभिस्तद्वत्—पश्वादिभिः। किञ्च, स त्वमेतदेवङ्गुणकमस्मभ्यमन्न ददन् 'कृधि' कुरुष्व इमां

'धियम्' एतत् कर्म, 'वाजरत्ना वाजरमणीयां, मधुरेणान्नेन यथैतस्मिन् कर्मणि वर्त्तमाना रमेमहि, तथा कुरुष्वेत्यभिप्राय'। धीरिति कर्मनामसु पठितम्,—"धीः, शची"—इति। एतमतापवाधनमस्वस्मात् "शस्वः"—इत्येतद् वचनामेत्युपपद्यते। अपठितमेतद्वचनामसु,—इत्यतोऽप्रसिद्धार्थम्, तस्यैवम्प्रकरणादर्थसिद्धिर्भवति॥

"केपय.(७३)"—इति, अनवगतम्। "कपूयाः" इति सन्तः केपय इत्युच्यन्ते। आह,—"कपूयम्"—"इति" किमुक्तं भवति? उच्यते,—यदेतत् पापकारी प्रायश्चित्तेन "पुनाति कर्म कुत्सितम्" यत्र तत् "दुष्पूयं" दुष्पावं "भवति" पूयमानमपि, एतत् कपूयमित्युच्यते॥ ६ (२४)॥

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा। न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥ पृथक् प्रायन् पृथक् प्रयतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन् यज्ञियां नावमारोढुमथ ये नाशक्नुवन् यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वेर्म इति बाहुनाम समीरिततरो भवति। एता विश्वा सवना तूतुमा कृपे स्वयं सूनो

**महसो यानि दधिषे। एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्वांसवम इसस्त्राणां धनुर्वा कवचं वा कवचं कु अञ्चितं भवति काञ्चितं भवति कायेऽञ्चितं भवतीति वा ॥ ७ (२५) ॥**

"पृथक् प्रायन्०—०केपय"—इति (ऋ० सं० ७, ८, २७, १)। पूर्वयैव समानार्थविनियोगा, इयन्तु जगती। 'पृथक् प्रायन्' 'पृथक्' भूत्वा एव विद्याकर्मानुरूपेण, देवयानेन पथा, पितृयानेन वा 'प्रायन्'। हे इन्द्र! त्वत्प्रसादाद् देवलोकं गन्धर्वलोकं पुनः स उच्यते। 'प्रथमाः देवहूतयः' ये मुख्या देवानामाह्वातारो यत् कर्मसु। किञ्च, 'दुष्टरा' "अन्यैः" असङ्गदुस्तराणि। 'अवस्यानि' "अवणीयानि यशांसि" 'अकृण्वत' अकुर्वत। किञ्च, 'ये' त्वत्प्रसादरहिताः जना', 'यज्ञियां नावम्' 'आरुहम्' "आरोढुम्" 'न शेकु' नाशक्नुवन्। अथ पुनर्ये नाशक्नुवन् यज्ञियां नावमारोढुं किन्तर्हि? विषयप्रधानाः, कपूयमेव दुष्पूयमेव कर्म चक्रिरे, तेनैव कपूयेन कर्मणा प्रेर्यमाणाः 'ते' 'ईर्मैव' "इहैव" लोके यथा कर्मानुरूपायां योनौ 'न्यविशन्त'। तदुक्तम्,—"अथ य इह कपूयचरणा अभ्याशो ह यत्, ते कपूयां योनिमापद्येरन्,—श्वयोनिं वा, शूकरयोनिं वा, चण्डालयोनिं वा"—इत्येवमादि॥ एवमत्र न ये शेकुः यज्ञियां नावमारोढुमित्येतेन सम्बन्धात् "केपयः=कपूयाः"—इत्युपपद्यते॥

शब्दसारूप्यप्रसङ्गादुच्यते,—"ईर्मे इति बाहुनाम"—इति, स हि "समीरिततरो भवति" एतेभ्योऽङ्गेभ्यः॥

मौखरोऽपि सवतिक्रामतीत्यर्थः ॥

"उदकमपि पाथ उच्यते" "पानात्"। "अ॒भि वो॒ दे॒वीं धियं॑ दधिध्वं॒ प्र वो॑ देव॒त्रा वाचं॑ कृणुध्वम्॥ आ च॑ष्ट आसां॒ पाथो॑ न॒दीनां॒ वरु॑ण उ॒ग्रः स॒हस्र॑चक्षाः॥"—इति (ऋ० सं० ५, ३, २५, ८, १०)। वसिष्ठस्यार्षम्। व्यूढस्य दशरात्रस्य चतुर्थेऽहनि तृतीये सवने वैश्वदेवशस्त्रे शस्यते। हे ऋत्विजः। 'अभि' वदामि 'वः'—एनां 'देवीं धियं' यूयम् एतान् विद्वान् देवान् 'प्रति दधिध्वम्' धारयध्वम्। किञ्च, "प्र वो॑ देव॒त्रा वाचं॑ कृणुध्वम्"। 'प्र' ब्रवीमि च एतत् 'देवत्रा' देवगामिनीम् एतां 'वाचं' स्तुतिलक्षणाम् 'कृणुध्वम्'। किञ्च, "आ च॑ष्ट आसां॒ पाथो॑ न॒दीनां॒ वरु॑णः"। वरुणोऽपि देवः आदित्यः, 'आचष्टे' इव, प्रकाशयतीव जनानां वर्षम्, जनयञ्जन् 'आसां' 'नदीनां' स्वभूतम्, उदकं 'पाथः'। किंलक्षणः पुनर्वरुणः ? आचष्टे,—'उग्रः' उदगूर्णः, 'सहस्रचक्षाः' बहुदर्शन इत्यर्थः॥ एवमत्र 'पाथः'-शब्देन "उदकम्"—इत्युच्यते, नदीसम्बन्धात्॥

"अन्नमपि पाथ उच्यते" "पानादेव"। "वन॑स्पते रश॒नया॑ नि॒यूया॑ दे॒वानां॒ पाथ॒ उप॑ वक्षि वि॒द्वान्। स्वदा॑ति दे॒वः कृ॒णव॑द्ध॒वींष्यव॑तां॒ द्यावा॑पृथि॒वी हवं॑ मे॥"—इति (ऋ० सं० ८, २, २२, १)। आप्रीसूक्ते वाध्र्यश्वस्य सुमित्रस्यैतमार्षम्। हे 'वनस्पते!' 'रशनया' 'नियूय' निबध्य 'देवानाम्' एतत् स्वभूतं 'पाथः' अन्नं हविर्लक्षणम् 'उप वक्षि' समीपं वहसि 'विद्वान्' जानानः। कस्मात् पुनरेवं ब्रवीमि ? इतः,—यस्मात् 'स्वदाति' स्वादयति, सः 'देवः' त्वयोढानि एतानि 'हवींषि'। यानि 'कृणवत्' अकरोत्, एष यजमानः। वनस्पतिमिवमुक्त्वा पुनर्द्यावापृथिव्यावाह,—हे 'द्यावापृथिव्यौ!' 'वां' युवामपि 'अवताम्' अवगच्छताम्, एतं 'हवम्' आह्वानं 'मे' मम॥

"सवीमनि (३१)"—इति, अनवगतम् । "प्रसवे"—इत्यवगमः । "देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने । यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥"—इति (ऋ० सं० ५, १, १५, २)। भरद्वाजस्यार्षम् । जगती । गवामयने चतुर्विंशं नाम द्वितीयमहः, तत्रेयं तृतीयसवने वैश्वदेवशस्त्रे शस्यते । 'देवस्य' 'सवितु' सर्वार्थप्रसवितुस्तस्य वयं 'सवीमनि' 'श्रेष्ठे' प्रसवे सर्वार्थाभ्यनुज्ञाने, नित्यकालं 'वयम्' एव 'स्याम' । 'वसुनश्च' धनस्य च 'दावने' दाने श्रेष्ठे प्रवृत्ते, वयमेव लब्धारः स्याम । हे सवितः ! 'यः' त्वं 'विश्वस्य' सर्वस्यास्य 'द्विपदः' मनुष्यादेः, 'यः' 'चतुष्पदः' गवादेः, 'भूमनः' भूम्नः, 'निवेशने' च स्थितौ, 'प्रसवे च' सृष्टौ, प्रभुः 'असि' । तस्य तव एवङ्गुणविशिष्टस्य प्रसवे च दाने च वयमेव अङ्गभूताः स्यामेति ॥ एवमत्र 'सवितुः'—इत्यनेन सम्बन्धात् 'सवीमनि'—इत्यस्य "प्रसवे" —इत्येव विपरिणाम उपपद्यते ॥

"सप्रथाः (३२)"—इति, अनवगतम् । "सर्वतः पृथुः"—इत्यवगमः । "त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते ॥"—इति (ऋ० सं० ४, १, ५, ४)। सुतम्भरस्यैयमार्षम् । गायत्री । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । हे अग्ने ! त्वमेव 'सप्रथाः' "सर्वतः पृथु." विस्तीर्णः । 'जुष्टः' च आसेवितो यजमानैः । 'होता' आह्वाता देवानां भवसि । 'वरेण्यः' वरणीयः सर्वथापि । किं बहुना 'त्वया' एव हेतुभूतेनैते यजमानाः एतं 'यज्ञं' 'वितन्वते' विविधं तन्वते, विस्तारयन्ति । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "सप्रथाः=सर्वतः पृथुः"—इत्युपपद्यते ॥

"विदथानि (३३)"—इति, अनवगतम्। "वेदनानि"—इत्यवगम। "होता देवो अमर्त्यः पुरस्तादेति मायया। विदथानि प्रचोदयन्॥"—इति (ऋ० सं० ३, १, २८, २)। विश्वामित्रस्यार्षम्। गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। अग्नीषोमप्रणयने विनियुक्ता। 'होता' आह्वाता, 'देवः' अग्नि, 'अमर्त्यः' अमरणधर्मा, 'पुरस्तात्' अस्य यज्ञकर्मण, सोमस्य वा प्रणीयमानस्य 'एति' गच्छति, 'मायया' स्वया प्रज्ञया। एषाम् ऋत्विजाम् 'विदथानि' विज्ञानानि 'प्र' प्रकर्षेण 'चोदयन्' अनुशासन्नित्यर्थः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "विदथानि=वेदनानि"—इत्युपपद्यते॥ ३(७)॥

श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम॥ समाश्रिताः सूर्यमुपतिष्ठन्ते अपि वोपमार्थे स्यात् सूर्यमिवेन्द्रमुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः स यथा धनानि विभजति जाते च जनिष्यमाणे च तं वयं भागमनुध्यायामौजसा बलेनौज ओजतेर्वौब्जतेर्वाथीराश्रयणाद्वाश्रपणाद्वापेयमितराशीराशास्तेः। इन्द्राय गाव आशिरमित्यपि निगमो भवति। सा मे सत्याशीर्देवेष्विति च॥ ४॥

"आयन्त. (२४)"—इति, अनवगतम्। "समाश्रिता."—इत्येवमर्थप्रतीतिः। "आयन्त इव०—०न दीधिम."—इति (ऋ० सं० ६, ७, २, २)। बृहती। नृमेधस्य आङ्गिरसस्यैयमार्षम्। अनर्थरातिमितीयमनन्तरा चास्याः महाव्रते बृहतीसहस्रे विनियोगः। 'आयन्त इव सूर्यम्' इत्येऽनर्थक एतस्मिन् प्रथमेऽर्थे। "समाश्रिताः" समन्तादाश्रिताः 'सूर्यम्' "उपतिष्ठन्ते" रश्मयः। किम्? इति,—"विश्वेदिन्द्रस्य भक्षत"। 'इत्'—इत्यनर्थक एव। 'विश्वा' विश्वानि "सर्वाणि" 'इन्द्रस्य' "धनानि" सूर्यस्य स्वभूतानि, उदकानि, तेन प्रहृत्तानि "विभक्ष्यमाणाः" विभक्तुमिच्छन्तः। अथ "वा" 'इत्'—इत्ययम् "उपमार्थे स्यात्" नानर्थकः। आह,—कथम्? इति, उच्यते,—"सूर्यमिवेन्द्रमुपतिष्ठन्ते" यथा सूर्यमहन्यहनि रश्मय उपतिष्ठन्ते, एवं मध्यस्थानमिन्द्रमुदकेश्वरमुपतिष्ठन्ते। तस्य "इन्द्रस्य" स्वभूतानि "सर्वाणि धनानि" उदकानि तेन प्रहृत्तानि, आत्मनो जनानां वा विभक्तुमिच्छमानाः। किञ्च "वसूनि जाते जनमान ओजसा"। यथेन्द्र आदित्यो वा 'वसूनि' धनानि 'जाते' "च" उत्पन्ने च 'जनमाने' "जनिष्यमाणे च" स्वेन 'ओजसा' ऐश्वर्य्य "बलेन" "विभजति"। तथैव यथाविभक्तः तेन, "तं" 'भागं' भूतानि उपजीवन्ति, तदैश्वर्य्यानुप्रहस्यैव। यत एवमतः "वयम्" अपि "तम्" एव 'भागं' 'प्रति' 'न दीधिम.'। अत्र 'न'—इत्यनर्थकः, धनोर्वा स्थाने। "तं वय भागमनुध्यायाम."—इति भाष्यकारो निराह॥ एवमत्र 'आयन्त इव सूर्यम्—इति सूर्यसम्बन्धात् रश्मयोऽध्याहृता, रश्मिसम्बन्धाच 'आयन्तः'—इत्येव शब्दः, समाङावुपसर्गावध्याहृत्य "समाश्रिताः"—इत्येवमुपमार्थे भवतीत्युपपद्यते॥

"ओजः"—"ओजतेर्वा" वृद्ध्यर्थस्य (तु॰ भ॰ प॰), "उब्ज-तेर्वा" न्यग्भावार्थस्य (तु॰ प॰) ॥

"आशीः (२५)"—इति, अनवगतमनेकार्थञ्च । "आशि-रम्"—इत्यर्थप्रतीतिः । या यजमानस्य व्रतधुक्, तामाशिर दुहन्ति । एतस्मिन् पक्षे दध्यभिधेयम्, तेन हि सोम उप-श्रीयते, तस्मात्तदाशिरमित्युच्यते । अथ "वा" "आश्रय-णात्" ईषद्धि तच्छ्रुतं भवति दधिभावात् ॥

"अथ" पुनः या "इयम्,—इतरा आशीः" ? इयम् "आशास्तेः" आङ्पूर्वस्य शास्तेः ( अदा॰ प॰ ) अभिलाषा-र्थस्य ॥

"इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु । यत् सी-मुपह्वरे विदत् ॥"—इति (ऋ॰ सं॰ ६, ५, ६, १) । प्रियमे-धस आङ्गिरसस्येयमार्षम् । मध्यमे रात्रिपर्याये ब्राह्मणा-च्छंसिनः शस्त्रे विनियुक्ता । 'इन्द्राय' 'वज्रिणे' अर्थाय 'गाव' 'आशिर' श्रपणार्थं पय, यस्मै पुन. 'दुदुह्रे' । 'मधु' मध्वास्वादम् । 'यत्' 'सीम्' सर्वतः 'उपह्वरे' उपगूहे ऊध-प्रदेशे, दोग्धा 'अविदत्' तत् स्वयमेव दुदुह्रे ॥ एवमत्र गोसम्बन्धात् 'आशी.'शब्देन "आशिरम्" उच्यत इत्युपपद्यते ॥

"अथेयमितराशीराशास्ते."—इति यदुक्तम्, तस्येदमुदा-हरणम्,—"सा मे सत्याशीर्देवान् गम्यात् । जुषन्तु ते समर्ध-यन्तु । जुष्टात् जुष्टतरा पण्यात् पण्यतरा । अहेडता मनसा नु गच्छ यज्ञो देवान् गच्छतु" ॥ प्रस्तरे प्रक्रियमाणे यजमानो जपत्येतम् । 'सा' 'मे' मम 'आशी.' 'सत्या' यथाप्रार्थितैव 'देवान्' 'गम्यात्' प्राप्नोतु । 'शृण्वन्तु' 'ते' देवाः । श्रुत्वा च 'समर्धयन्तु' 'जुष्टात्' अपि 'जुष्टतरा प्रियादपि प्रियतरा, पण्यादपि 'पण्यतरा' स्तुतादपि स्तुततरा । किञ्च, 'अहेडता

मनसा' अक्रोधवता मनसा प्रक्षितोऽस्माभिः हे प्रस्तर ! त्वमपि 'देवान्' 'गच्छ'। 'यज्ञः' अपि 'देवान्' 'गच्छतु'। त्वमपि चान्य यज्ञम्। तदय याचामोऽसावपि देवान् गम्यात् ॥ एवमत्र आशीरेव 'आशो.'शब्देनाभिधीयते, आशिषो हि देवान् प्रति गमनमभीष्टमिति ॥ ४ ॥

यदा ते मर्त्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥ यदा ते मर्त्तो भोगमन्वापद्य ग्रसिष्ठतम ओषधीरगारीर्गिरतिकर्मा वा गृणातिकर्मा वा गृह्णातिकर्मा वा। सूरा असूर न वयञ्चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ॥ मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेत्थ शशमानः शंशमानः। यो वां यज्ञैः शंशमानो ह दाशतीत्यपि निगमो भवति। देवो दूं वाच्यो दूपा। देवो देवान् प्रत्यक्तया क्षमा क्षप् क्षपतेर्वा कल्पतेर्वा ॥ ५ (८) ॥

"अजीग (३६)"—इति, अनवगतम्। "अगारी"—इत्यवगम। "अर्वा ते रूपमुत्तममपश्यं जिगीषमाणमिष आपदे गोः। यदा•——• रजीगः।"—इति (ऋ० सं० २, ३, १२, २)। दीर्घतमस इयमार्षम्। अश्वमेधेऽश्वस्तुतौ विनियुक्ता। 'अत्र' एतस्मिन् काले 'ते' तव हे अश्व! 'रूपम्' अहम् 'उत्तमम्' उत्कृष्टम् 'अपश्यम्'। 'जिगीषमाणं' जेतुमिच्छमानम् 'इषः' अन्नं जेतव्ये निमित्तभूते 'आ पदे गोः' उपरि भूम्याः

शरपथे वेद्यां वा। यज्ञेनापि स्वर्गमेवामुष्मिन् लोके जीयते, तस्माद् वेद्यामित्येवमुपपद्यते। किञ्च, 'यदा' यस्मिन् काले 'ते' तव 'मर्त्तः' मनुष्यः 'अनुभोगम्' 'आनट्' प्राप्नोति, व्याप्नुयन् वा, अथ परिश्रान्तस्त्वम् 'ओषधीः अगारीः' ओषधीर्ग्रससि गिरसि वा। अन्ये हि प्राणिनः परिश्रान्ताः चरितुं न शक्नुवन्ति, त्वं तु सुतरामोषधीर्भक्षयसीत्येतदधिकं तव॥ एवमत्र ओषध्यग्रसम्बन्धात् "जिगर्त्तिः, गिरतिकर्मा वा गृह्णातिकर्मा वा"—इत्युपपद्यते॥

"अमूरः (२९)"—इति, अनवगतम्। "अमूढः"—इत्यवगमः। "मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से। शये वव्रिश्चरति जिह्वयादन् रेरिह्यते युवतिं विश्पतिः सन्॥"—इति (ऋ० स० ७, ५, ३२, ४)। त्रितस्याप्तस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्नग्ने! 'अमूर!' अमूढ! 'मूराः' मूढाः 'वयं' स्मः। भवतो माहाभाग्यपरिज्ञानं प्रति मन्दबुद्धित्वात् 'न वयं चिकित्वः' न वयं भवतः प्रभावस्यान्तं विजानीमः। हे 'अग्ने!' 'त्वम्' एव आत्मनो महिमानं "महित्वम्" माहाभाग्यम् 'वित्से' वेत्सि, कस्तवान्यो माहाभाग्यस्यान्तं वेत्तुमर्हतीत्यभिप्रायः। किञ्च, 'शये' शयपरिमाणे प्रदेशे उत्तरवेद्याख्ये 'वव्रिः' विग्रहात्मा, तत्र रूपाख्यः 'चरति' समिद्धत्वात् मुहुर्मुहुश्चरति। स त्वमनेन रूपेणोत्तरवेद्यामवस्थितः 'जिह्वया' ज्वालया तानि तानि हवींषि 'अदन्' भक्षयन् 'रेरिह्यते'। 'युवतिं' तां तामाहुतिं पुनः पुनः आस्वादयसि। 'विश्पतिः' विश्वस्य सर्वस्य पतिः, मनुष्यपतिर्वा 'सन्' यज्ञमेव करोषि हितैषित्वात् यजमानानाम्, सोऽस्माकमिदं नाम कुर्वित्यभिप्रायः॥ एवमत्र 'मूढाः'—इत्यात्मनिन्दाद्वारेण

अग्निः "अमूढः"—इत्यनेन स्तूयते इत्यस्य 'अमूर'शब्दस्य "अमूढ."—इत्येष विपरिणाम उपपद्यते ॥

"शशमानः (३८)"—इति, अनवगतम् । "शंसमानः"—इत्यवगमः । "यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः । उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥"—इति (ऋ० सं० २, २, २१, २)। दैर्घतमस आर्षम् । जगतीच्छन्दः । 'यः' यजमानः, युवां हे मित्रावरुणौ ! 'यज्ञैः' निमित्तभूतैः 'शशमानः' "शंसमानः" स्तुवन् 'दाशति' ददाति हवींषि युवाभ्याम् । 'कविः' क्रान्तदर्शनः, 'होता' आह्वाता 'यजति' । 'मन्मसाधनः' मननसाधनः, विज्ञानसाधन इत्यर्थः । आह,—तस्य किम् ? इति, उच्यते,—'उपाह तं गच्छथः' प्रत्युपागच्छथः युवाम्, 'वीथः' च 'अध्वरम्' अध्वाश्रितानि हवींषि । वयमपि च एवङ्गुणविशिष्टा एव । यतो ब्रूमः,—'सुमतिं' शोभनप्रज्ञं यजमानम् अनुलक्ष्य 'अच्छा गिरः' एताः अस्मद्गिरः आभिमुख्येन 'गन्तम्' गन्तुमिच्छथो युवाम् । 'अस्मयू' अस्मान् कामयमानावित्यर्थः ॥ एवमेव 'यज्ञैः शशमानः'—इति यज्ञसम्बन्धात् शब्दसारूप्याच्च "शशमानः = शंसमानः"—इत्येवमुपपद्यते ॥

"देवो देवाच्या, कृपा(३९)"—इति, एते अनवगते । देवशब्दोऽनयोरेव उपलक्षणार्थोऽत्र समाम्नातः । देवः, देवाच्या, कृपा,—इति त्रीणि एतानि पदानि । 'देवाच्या'—इत्यस्य "देवान् प्रत्यञ्चितया"—इत्यर्थप्रतीतिः । 'कृपा'—इत्यस्यापि "कल्पितया"—इत्येवमर्थप्रतीतिः । "अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टि-

मनुवष्टि शोचिषासुह्वानस्य सर्पिषः ॥"—इति (ऋ० सं० २; १, १२, १)। एतच्चैपस्यार्षम्। अतिच्छन्दाः अत्यष्टिः। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अग्नि' 'होतारम्' आह्वातारम् देवानाम् 'मन्ये'। 'दास्वन्त' दानवन्त दातृतमम्, 'वसु' वासयितार सर्वस्य जगत.। 'सूनु'—'सहस' बलस्य पुत्रम्, 'जातवेदस' जातप्रज्ञानम्। 'विप्र' न जात वेदसम्' विप्रमिव जातप्रज्ञानम्, यथा हि कश्चित् कश्चिम नुष्य समानपृष्ठोदरपाणिपाद विप्राप्रज्ञाम यथावत् जानीयात्, एवमहमग्निं यथावज्जाने। 'यः' अग्नि, स्वध्वर.' शोभनयज्ञ 'देव.'। 'ऊर्ध्वया' 'कृपा' कृपया सामर्थ्यान्वया कल्पितया, 'देवाच्या' देवान् प्रत्यञ्चितया गत्या, 'घृतस्य' 'विभ्राष्टि' विभ्रमम् 'अनुवष्टि' आहुतिप्रक्षेपम्। 'शोचिषा' ज्वालया अनुकामयते वाञ्छति। "वष्टि"—इति कान्तिकर्मसु पठितम्। 'आजुह्वानस्य' उपरि हूयमानस्य 'सर्पिषः' सर्पणशीलस्य। यमग्निमहमेव जाने, यश्चैवङ्गुणयुक्त, स इद नामास्मा.क करोत्विल्यभिप्राय.॥ एवमत्र "देवाच्या, कृपा" —इत्येतौ शब्दौ देवान् प्रत्यक्तया कल्पितयेत्येवमुपपद्येते, शब्दसारूप्यादर्थोपपत्तेश्च ॥ ॥ ५ (८) ॥

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥

अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुर्विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो

जामाता वा अपत्यं तन्निमीतीत वा या स्याला-
दपि च स्यालात् स्याल आसन्नः संयोगेनेति
नैदानाः स्याल्लाजानावपतीति वा लाजा लाजतेः
स्यं शूर्पं स्यतेः शूर्पमशनपवनं शृणातेर्वाथ सो-
मस्य प्रदानेन युवाभ्यामिन्द्राग्नी सोमं जन-
यामि नव्यं नवतरं सोमास इत्युपरिष्टाद्
व्याख्यास्यामः॥ ६ (८)॥

इति षष्ठाध्यायस्य द्वितीयः पादः॥ ६, २॥

"विजामातुः (४०)"—इति, अनवगतम्। उपसर्गस्या-
परिसमाप्त्यर्थे वृत्तिरवानवगमः। "असुसमाप्त इव वरोऽभि-
प्रेतः"—इति भाष्यकारो निराह विगतजामातृभाव इव च,
यो ह्यप्राप्तजामातृभावः स विजामातेत्युच्यते, स हि दाक्षि-
णात्येषु प्रसिद्ध। "अश्रवं हि०—०जनयामि नव्यम्॥"—इति
(ऋ० सं० १, ७, २८, २)। कुत्सस्यार्षम्। त्रिष्टुप्। "अश्रवम्"
अहम् युवाम्। हे 'इन्द्राग्नी!' 'भूरिदावत्तरा' भूरिदातारौ।
कुतः? 'विजामातुः' "असुसमाप्तात् जामातुः" यो हि अस-
माप्तजामातृभावो भवति, स जामातृगुणहीनत्वात् बहुदानेन
कन्या पितॄनाराध्य तेभ्य आत्मानं रोचयति। ततोऽपि बहु-
तरस्य धनस्य दातारावहमश्रौषं भवन्तौ। "उत वा घा
स्यालात्"। "घा"—इत्यनर्थकः। 'स्यालात्' अपि बहु-
दातारौ युवामहमश्रौषं भवन्तौ, स्यालोऽपि हि भगिनीप्रिय-
चिकीर्षया बह्वेव ददाति। यत एवमहमश्रौषं भवन्तौ,
एतस्मात् कारणात् 'सोमस्य' 'प्रयती' प्रदानेन, हे इन्द्राग्नी

मनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥"—इति (ऋ॰ सं॰ २, १, १२, १)। परुच्छेपस्यार्षम्। अतिच्छन्दा अत्यष्टिः। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अग्निं' 'होतारम्' आह्वातारम् देवानाम् 'मन्ये'। 'दास्वन्तं' दानवन्तं दातृतमम्, 'वसुं' वासयितारं सर्वस्य जगतः। 'सूनुं'—'सहसः' बलस्य पुत्रम्, 'जातवेदसं' जातप्रज्ञानम्। 'विप्रं न जातवेदसम्' विप्रमिव जातप्रज्ञानम्, यथा हि कश्चित् कश्चिन्मनुष्यं समानपृष्ठोदरपाणिपादं विप्रमन्ज्ञाय यथावत् जानीयात्, एवमहमग्निं यथावज्जाने। 'यः' अग्निः, 'स्वध्वरः' शोभनयज्ञः 'देवः'। 'ऊर्ध्वया' 'कृपा' कृपया सामर्थ्याख्यया कल्पितया, 'देवाच्या' देवान् प्रत्यञ्चितया गत्या, 'घृतस्य' 'विभ्राष्टिं' विभ्रंशम् 'अनुवष्टि' आहुतिप्रक्षेपम्। 'शोचिषा' ज्वालया अनुकामयते वाञ्छति। "वष्टि"—इति कान्तिकर्मसु पठितम्। 'आजुह्वानस्य' उपरि हूयमानस्य 'सर्पिषः' सर्पणशीलस्य। यमग्निमहमेव जाने, यश्चैवङ्गुणयुक्तः, स इदं नामाख्यातं करोत्वित्यभिप्रायः ॥ एवमत्र "देवाच्या, कृपा" —इत्येतौ शब्दौ देवान् प्रत्यञ्चया कल्पितयेत्येवमुपपद्यते, शब्दसादृश्यादर्थोपपत्तेश्च ॥ ॥ ५ (८) ॥

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥ अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुर्विजामातेति शाखदाक्षिणात्याः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो

जामाता जा अपत्यं तन्निर्मातेति वा या स्याला-दपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः स्याल्लाजानावपतीति वा लाजा लाजतेः स्यं शूर्पं स्यतेः शूर्पमशनमवनं श्टणातेर्वाथ सो-मस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जन-यामि नव्यं नवतरमोमास इत्युपरिष्टाद्व्याख्यास्यामः ॥ ६ (८) ॥

इति षष्ठाध्यायस्य द्वितीयः पादः ॥ ६, २ ॥

"विजामातुः (४०)"—इति, अनवगतम्। उपसर्गस्या-परिसमाप्त्यर्थे वृत्तिरवानवगमः। "असुसमास इव वरोऽभि-प्रेतः"—इति भाष्यकारो निराह विगतजामातृभाव इव च, यो ह्यप्राप्तजामातृभावः स विजामातेत्युच्यते, स हि दाक्षि-णात्येषु प्रसिद्ध। "अर्यव्रं हि०—०जनयामि नव्यम् ॥"—इति (ऋ० सं० १, ७, २८, २)। कुत्सस्यार्षम्। त्रिष्टुप्। "अश्रौषम्" अहम् युवाम्। हे 'इन्द्राग्नी !' 'भूरिदावत्तरा' भूरिदातारौ। कुतः ? 'विजामातुः' "असुसमाप्तात् जामातुः" यो हि अस-माप्तजामातृभावो भवति, स जामातृगुणहीनत्वात् बहुदानेन कन्या पितृनाराध्य तेभ्य आत्मानं रोचयति। ततोऽपि बहु-तरस्य धनस्य दातारावहमश्रौषं भवन्तौ। "उत वा घा स्यालात्"। "घा"—इत्यनर्थकः। 'स्यालात्' अपि बहु-दातारौ युवामहमश्रौषं भवन्तौ, स्यालोऽपि हि भगिनीप्रिय-चिकीर्षया बह्वेव ददाति। यत एवमहमश्रौषं भवन्तौ, एतस्मात् कारणात् 'सोमस्य' 'प्रयती' प्रदानेन, हे इन्द्राग्नी

'युवाभ्यां' 'स्तोमं' 'जनयामि' उच्चारयामि, 'नव्य' नवतरं मन्त्रेभ्यः स्तोमेभ्यः ॥ एवमत्र 'विजामातृ'शब्देन "असुसमाप्तः जामातृभावः" उच्यते, तस्य बहुदातृत्वादित्युपपत्तिः ॥

"विजामातेति" "शश्वत्" प्रसिद्धमेतत् "दाक्षिणात्याः क्रीतापतिमाचक्षते" तस्य निर्गुणत्वादात्मनः क्रीणाति कन्यामात्मनो भार्य्यार्थे। तस्मात् "असुसमाप्त इव" असौ "वरोऽभिप्रेतः"। "जामाता"। "जा अपत्यम्, तन्निर्माता" जामाता, स्त्रीत्वं हि मैथुनेन व्यवहारेणासौ निर्मिणोति, तेनासौ दुहितुः पतिर्जामाता भवति। "स्यालः आसन्न. संयोगेनेति" "नैदाना." निदानविदो मन्यन्ते। अथ "वा" "स्यम्"—इति "शूर्पम्" उच्यते, "स्यात्" तस्मादसौ स्तहोत्वा विवाहे "लाजा मावपति" तस्मात् स्याल उच्यते। "स्यं शूर्पम्" "स्यतेः (दि० प०)" धातो. प्रक्षेपणार्थस्य, तेन हि तुषा. क्षिप्यन्ते ॥ "शूर्पम् अशनपवनम्" तेन ह्यशनं पूयते। "शृणातेः (क्र्या० प०)" तद्धि शरमयं भवति ॥

"सोमास (४१)"—"इति" एतत् पदम् "उपरिष्टाद् व्याख्यास्याम." सप्तदशेऽध्याये "सोमासश्चर्षणीधृत."—इत्यत्र ॥ ६ (८) ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)
द्वितीयः पादः ॥ ६, २ ॥

---

तृतीयः पादः।

**सोमानं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः ॥** सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव

य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते॥ १ (१०)॥

"सोमानम् (४२)"—इति, अनवगतम्। "सोतारम्"—इत्यवगमः। "सोमानं स्वरण ०——० य औशिजः"। मेधातिथेः काण्वस्यार्षम्। मन्युपस्थाने विनियुक्ता, "सोमानं स्वरणमिति ब्राह्मणस्पत्ययोपतिष्ठेत"—इति धृतम्। सोमानम्' अनेकेषां "सोमानां" "सोतारम्" अभिषोतारम्, माम्. 'स्वरण' शब्दयितारम्, सुयशस्विनं 'कृणुहि' कुरु हे 'ब्रह्मणस्पते।' कथं च पुनः "प्रकाशनवन्तं कुरु"? इति,—"कक्षीवन्तं य औशिजः"। लुप्तोपममेतत्। 'यः' 'औशिजः' कक्षीवान्, तमिव। अत्र करोतिसम्बन्धात् "प्रकाशनवन्तम्"—इत्येतदध्याहृतं भाष्यकारेण। 'कक्षीवान्' "कक्ष्यावान्" कक्ष्यया तद्वान्। "अपि त्वं मनुष्यकक्ष एवाभिप्रेतः स्यात्" स हि कक्षे उत्पन्न, तदुत्पत्तिसंयोगात् कक्षीवान्। 'औशिजः' "उशिजः पुत्रः"। "उशिक्" पुनः "वष्टेः" कान्त्यर्थस्य। एवमत्र 'सोमानम्'—इत्यस्य शब्दसारूप्यात् "सोतारम् सोमानाम्"—इत्येव विपरिणाम उपपद्यते॥

अपि चैवमन्यथा स्यात्,—योऽह सोमानां सोता, कक्षीवान् औशिजः, तमेवङ्गुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते!॥ १ (१०)॥

इन्द्रासोमा समघशंसमभ्य१ घं तपुर्ययस्तु

चरुरग्निवाँ इव। ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने॥ इन्द्रासोमावघस्य शंसितारमघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति तपुस्तपतेश्चरुर्मृच्चयो भवति चरतेर्वा समुच्चरन्त्यस्मादापो ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे क्रव्यमदते घोरचक्षसे घोरख्यानाय क्रव्यं विकृत्ताज्जायत इति नैरुक्ता द्वेषो धत्तमनवायमनवयवं यदन्ये न व्यवेयुरद्वेषस इति वा किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा पिशुनाय चरते पिशुनः पिंशतेर्विपिंशतीति॥ २ (११)॥

"अनवायं (४३)" "किमीदिने (४४)"—इति, एते अनवगते। 'अनवायम्'—इत्यस्य "अनवयवम्"—इत्यवगमः। 'किमीदिने'—इत्यस्य "किमिदमिदमिदङ्कारी पिशुनः"। "इन्द्रासोमा समघशंस०—०मनवाय किमीदिने॥"—इति (ऋ० स० ५, ७, ५, २)। वसिष्ठस्यार्षम्। हे "इन्द्रासोमौ!" संस्तापयन्त भवन्तौ, 'अघशंसं' पापस्य "शंसितारम्" 'अभ्यघं' पापमेव कर्त्तुमाभिमुख्येन नित्यकालमेव योऽवस्थितः, तं सन्तापयत्यम्। स च 'तपुः' युवाभ्यां सन्ताप्यमानः, "चरुरग्निवाँ इव" चरुरिव अग्निसंयुक्तः 'ययस्तु' क्षयं यात्वित्यर्थः। किञ्च, 'ब्रह्मद्विषे' "ब्राह्मणद्वेष्ट्रे" 'क्रव्यादे' क्रव्यमदते पुरुषमांसभक्षयित्रे, 'घोरचक्षसे' घोरदर्शनाय, 'द्वेषः' सर्वलोक-

इवेयतां 'धत्तम्' युवाम् । 'अनवायम्' "अनवयवं" सकल-मित्यर्थः ॥ अथ "वा" "यदन्ये" 'अतद्रुहः' "अद्वेषसः" अहङ्कारः "न व्यवेयुः" व्यवेतुं वियोजयितुं घटमाना अपि न शक्नुयुः, तादृशं द्वयो धत्तम् । 'किमीदिने' "पिशुनाय"—इत्यर्थः । एवमत्र 'अनवायम्'— इत्यस्य "अनवयवम्" अवि-योजनं वा—इत्यर्थप्रतीतिः, तथाभीष्टत्वात् ॥

किमिदी च पिशुनः, स हि "किमिदानीम्" वर्त्तते "इति" एवमन्वेषमाणः "चरति" अथ "वा" "किमिदं" वर्त्तते "इति" एवमन्वेषमाणः "चरति" स हि तस्य स्वभावः ॥ "यतः, अन्वयो भवति" सदादिस्थितो भवति । "चरतेर्वा" "समुचरन्ति" हि "अस्मादापः" । "क्रव्य" मांसम्, तद्धि "विकृत्ताज्जायते" ॥ "पिशुनः" "पिशतेः (जु० प०)" धातोः, स हि स्वल्पमपि पापं "विपिंशति" पिपुष्यतीत्यर्थः ॥ २ (११) ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ कुरुष्व पाजः पाजः पालनात् प्रसितिमिव पृथ्वीं प्रसितिः प्रसय-नात्तन्तुर्वा जालं वा याहि राजेवामात्यवानभ्य-मनवान् स्ववान्वेराऽऽस्टता गणेन गतभयेन हस्ति-नेति वा तृष्व्यानु प्रसित्या द्रूणानस्तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वासितासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः प्रपिष्टतमैरिति

वा। यस्ते गर्भममीवा दुर्णामा योनिमाशये। अमीवाभ्यसनेन व्याख्यातो दुर्नामा क्रिमिर्भवति पापनामा क्रमिः क्रव्ये मेद्यति क्रमतेर्वा स्यात् सरणकर्मणः क्रामतेर्वा। अतिक्रामन्तो दुरितानि विश्वा। अतिक्रममाणा दुर्गतिगमनानि सर्वाण्यप्वा यदेनया विद्धोऽपवीयते। व्याधिर्वा भयं वा। अप्वे परेहीत्यपि निगमो भवत्यमतिरमामयी मतिरात्ममयी। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनीत्यपि निगमो भवति। श्रुष्टीति क्षिप्रनामाशु अष्टीति॥ ३ (१२)॥

"अमवान्(४५)"—इति, अनवगतमनेकार्थञ्च। "कृणुष्व पाजः •——• तपिष्ठैः।"—इति (ऋ॰ स॰ ३, ४, २३, १)।, वामदेवस्यार्षम्। अग्निचयने पुरुषव्याघारणे विनियुक्ता, "राक्षोघ्नेन व्याघारयेत्"—इति ह्युक्तम्। हे भगवन्नग्ने! 'कृणुष्व' "कुरुष्व" एतदात्मीय 'पाजः' बलम्, 'प्रसितिं न' "प्रसितिमिव" वागुरातन्तुमिव, जालमिव वा। 'पृथ्वी' विस्तीर्णाम्। तत एवमेतत् विस्तीर्णं कृत्वा 'याहि' त्वं रक्षांस्यभिमुखः। कथं च पुनर्याहि? राजा इव' यथा राजा यायात् 'अमवान्' "अमात्यवान्" रीतियुक्तो विजयाय, तथा त्वं याहि। अथवा यथा "अभ्यमनवान्" रोगभूत परेभ्यो भयदाता यायात, तथा याहि। अथवा यथा "स्ववान्" आत्मवित्तवान् सुभृतसैन्यो यायाद् विजयाय, तथा याहि। 'इभेन' "इराभृता" अन्नभृतेन

"गवेन" सुपुष्टेन युक्तो यथा राजा यायात्, तथा याहि । अथ वा 'इभेन' "गतभयेन" भूरेण "हस्तिना" यथा यायात् तथा याहि । किञ्च, "तृष्वीमनु प्रसितिं द्रूणानः" । चिप्रमनु प्रसृतया गत्या, मल्लतया गत्या । 'द्रूणानः' रचांसि हिंसन् याहि । कस्मात् पुनरेवमुच्यते ? इतः,—यस्मात् 'अस्ता असि' "असिता" चेप्ता त्वं रचांसि प्रति दीप्तायाः अर्चिषः । स त्वमेवमागत्य 'विध्य' एतान् "रचस." अस्मच्छत्रून् 'तपिष्ठैः' "ततमैः" अर्चिभिः ॥ एवमत्र राजोपमानसम्बन्धात् "अमवान्— अमात्यवान्"—इत्येवमाद्युपपद्यते ॥

'पाजः'—इति बलनाम, "पालनात्" तेन हि पाल्यते । 'प्रसितिः'—"प्रसयनात्" "तन्तुर्वा जालं वा" उभाभ्यामपि ताभ्यामभिभूयन्ते मृगाश्च मत्स्याश्च ॥

"अमीवा (४६)"—इति, अनवगतम् । "अभ्यमनेन" "अभ्यमनवान्"—इति यदुक्तमाधस्त्ये मन्त्रे, अनेनैव तत् "व्याख्यातम्" । "यस्ते गर्भममीवा दुर्णामा योनिमाशये । अग्निष्ट ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥"—इति (ऋ० सं० ८, ८, २०, २) । रचोहा नाम ब्राह्मण, तस्येयमार्षम् । पुत्रकामस्य पडाहुतो नाम स्थालीपाक, तत्रेयं विनियुक्ता । 'यः' 'ते' तव हे स्त्रि ! 'गर्भम्' 'अमीवा' रोगभूतः, 'दुर्णामा' "पापनामा क्रिमि." पापप्रदेशे नतः परिणतः उत्पन्नः, 'योनिम्' 'आ' गत्य 'शये' शेते गर्भहिंसिता । 'तम् अग्निः' ब्रह्मणा सह 'निर् अनीनशत्' नाशयतु । 'क्रव्यादं' मांस-भक्षयितारम् ॥ एवमत्र 'अमीवा'—इत्यस्य "क्रिमि." अभि-धेयः, क्रिम्युपहते हि योनौ गर्भो न सम्भवतीत्युपपत्तिः ॥

"दुरितम् (४७)"—इति, अनवगतम् । "दुर्गतिगमनम्"—इति अर्थप्रतीतिः । "वैश्वदेवीं सूनृतामारभध्वं दुडाभयन्ती

यज्ञियासः पावकाः । अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम"। 'वैश्वदेवीं' वाचं 'सूनृतां' सत्याम् 'आरभध्वम्' उपक्रमध्वम् वक्तुम्। तयैवलक्षणया वाचा 'युष्मा' इह अनभिशस्ता पूताश्च परलोके भवथ। 'यज्ञियास' यज्ञिया यज्ञसम्पादिनः। किञ्च, 'अतिक्रामन्त' अतिक्रममाणा वयम्। तस्या वाचो माहाभाग्येन। 'दुरितानि' दुर्गतिप्रापकाणि कर्माणि, 'विश्वा' विश्वानि। 'शतं हिमा' शतं हेमन्तानाः 'सर्ववीरा' अनवखण्डितपुत्रपौत्रा 'मदेम' हृष्येमेत्यर्थः। एवमत्रातिक्रमणसम्बन्धात् "दुरितम्=दुष्कृतम्"—इत्युपपद्यते, तस्य हि अतिक्रमणमभीष्टमिति॥

"अपूा (४८)"—इति, अनवगतम्। 'अपव्ययति'—इत्यवगमः। रोगजातिर्वा अभिधेया भयजातिर्वा, तया हि "चित्तः अपवीयत" अपविध्यते प्राणैः। "अमीषां चित्तम् (ऋ० सं० ८, ५ २२, ६)"—इति उपरिष्टाच्छेषः॥

"अमति (४८)—इति, अनवगतम्। "अमामयी मति" अमति। एवमपि न प्रतीयत इत्याह,—"आत्ममयी" यस्य मति असावमतिरित्युच्यते। कश्चासौ? आदित्य, तस्य

२ ३उ २१ २ ३ १ २ ३क २र
हि आत्मप्रकाशमयी मतिः। "अभि त्य देव सवितारमोण्योः

२ ३ १ २ ३ १ २ २ ३ २ ३ २ ३ २ २ ३ २ ३ २
कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिम्।

२३उ ३ २ ३ १ २र ३ १ २ २ ३ १
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत

३ १ २ ३ १ २
सुक्रतुः कृपा स्वः॥"—इति (सा० छ० आ० ५, २, ३, ८)। नकुलस्यार्थम्। अतिच्छन्दा, अष्टि। प्रवर्ग्ये शस्यते, सोम-

मन्त्रानि चाध्वर्य्यवे विनियुक्ता। 'अभि अर्चामि' 'त्य' तम् अहम्, 'देवं' 'सवितारम्'। 'ओख्योः' द्यावापृथिव्योः यान्यन्तरा भूतानि वर्त्तन्ते, तेभ्यः सर्वेभ्यः सकाशात्। 'कविक्रतुं' क्रान्तप्रज्ञानम्, 'सत्यसवं' सत्याभ्यनुज्ञम्, 'रत्नधां' रमणीयानां धनानां दातारम्, 'अभि मतिम्' अभिमन्तारं सर्वार्थानाम्, ईश्वरत्वात्, 'प्रियं' च सर्वभूतानाम्। 'ऊर्द्धो' 'यस्य' सवितुः 'अमतिः' आत्मप्रकाशमयी मतिः। आह,—कतमा पुनरसावूर्द्धा ? इति,—'भाः' या 'अदिद्युतत्' अद्योतयत्। तम् अभ्यर्चामि। किञ्च, 'सवीमनि' प्रसवे यस्य सर्वमिदं प्रवर्त्तते, 'हिरण्यपाणिः' रश्मिपाणिः, सर्वमिदं जगत् 'अमिमीत' निर्मितवान्। 'सुक्रतुः' सुकर्मा। 'कृपा' कृपया सामर्थ्यकल्पनया। 'स्वः' आदित्यः, सु अरण इत्यर्थः॥ एवमत्र 'अमति'शब्देन आत्मप्रकाशगत आदित्यस्य विज्ञानमुच्यते, स हि प्रकाशसतत्त्व एव नान्यत् प्रकाशान्तरमपेक्षत इत्युपपत्तिः॥

"स्युष्टी(५०)"—इति, अनवगतम्, "पुरन्धिः(५१)"—इति च। स्युष्टीत्यस्य 'स्वशनम्'—इत्यवगमः, पुरन्धिरित्यस्यापि पुरा धीः—इत्यवगमः॥ ३ (१२)॥

तां स्वध्वर उशतो यच्चयन्ते स्युष्टी भगन्नासत्या पुरन्धिः। तानध्वरे यज्ञ उशतः कामयमानान् यजाम्ने स्युष्टी भगन्नासत्यौ चाश्विनौ सत्यावेव नासत्याविन्त्यौर्णवाभः सत्यस्य प्रणेतारावित्याग्रायणो नासिकाप्रभवौ बभूवतुरिति वा पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येकमिन्द्र इत्यपरं स बहु-

कर्मतमः पुरां च दारयितृतमो वरुण इत्यपरं तं मन्त्र्या स्तौति। इमामू नु कवितमस्य मायामित्यपि निगमो भवति। रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः॥ समिद्धस्य रुशदर्दर्शि पाज इत्यपि निगमो भवति॥ ४ (१३)॥

ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभिसन्ति देवाः। ताँ अध्वर०——० पुरन्धिम्॥"—इति (ऋ० सं० ५ ४, ६, ४)। वसिष्ठस्यार्षम्। वैश्वदेवी। त्रिष्टुप्। 'ते' ये 'विश्वेदेवाः' 'यज्ञेषु' 'यज्ञियासः' यज्ञसम्पादिनः, 'ऊमाः' अवितारो रक्षितारः, अवनीया वा तर्पणीयाः, 'सधस्थं' वैश्वदेवं समानं स्थानम् 'अभि सन्ति' अभितिष्ठन्ति। किं तेषाम्? इति,—'तान्' विश्वान् देवान् हे "अग्ने!" एतस्मिन् 'अध्वरे' "यज्ञे" 'उशतः' स्वमत, "कामयमानान्" 'श्रुष्टी' "क्षिप्रम्" अविलम्बमानः 'यक्षि' "यज" 'नासत्या' "नासत्यौ चाश्विनौ" यज, 'पुरन्धिम्' च यज॥ एवमत्र यागस्य विघ्नभयात् क्षिप्रस्येष्टत्वात् "श्रुष्टि-इति क्षिप्रनाम"—इत्युपपद्यते। अन्यत्र हि वक्ष्यति "श्रुष्टीवरी,—सुखवरीः" इति, तस्मादेतदनेकार्थमपि भवति।

"सत्यौ एव नासत्यौ—इति" "और्णवाभः" आचार्यो मन्यते। तौ हि सत्यमेव ब्रूत, न कदाचिदप्यसत्यम्। तस्मान्नासत्याविल्युच्यते। हि. प्रतिषेधः प्रकृतिमापादयति। अथवा "सत्यस्य" उदकस्य, यज्ञस्य वा "नेतारौ" नासत्यौ, तथाहि "आग्रायणः" आचार्यो मन्यते। अत्र "वा" ऐतिहासिकपक्षेण "नासिकाप्रभवौ बभूवतुरिति"।

"पुरन्धिः"। पुरन्धिशब्दोऽत्र गुणपदत्वात् सन्दिह्यते इति, विचार्य्यते।—"तत्कः पुरन्धिः?"—इति। "भग." अत्र "पुरस्तात्"—'भुष्टी भगम्'—इति, "तस्य" अयम् "अन्वादेशः"—"इत्येकम्" आचार्य्यमतम्। नासत्यावनन्तरावपि सन्तौ न सन्दिह्येते द्विवचनवांच्यत्वात् तयोः,—एकवचनान्तत्वात् 'पुरन्धि'शब्दस्य च। "इन्द्रः" उक्तः स्यात् पुरन्धिशब्देन,—"इत्यपरं" मतम्। किङ्कारणम्? "सः" हि इन्द्रः "बहुकर्मतमः" अन्येभ्यो देवेभ्यः। "धीः"—इति कर्मनामसु पठितम्, तदस्य पुरु बहु स पुरन्धिः, स चेन्द्रः। तस्मात् पुरन्धिः इन्द्रः—इत्युपपद्यते। अथवा अन्येन पुरन्धित्वमिन्द्रस्य स्यात्,—"पुरां च दारयितृतमः" मेघपुरो ह्यसावेव दारयति। "वरुणः" पुरन्धिशब्देनोच्यते,—"इत्यपरम्" मतम्। किङ्कारणम्? "तं" हि अन्यत्रापि मन्त्रदृक् "प्रज्ञया" बुद्धा "स्तौति"। तद्यथा,—"इमामू नु कवितमस्य मायां मही देवस्य न किरा दधर्ष। एकं यदुद्रा न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्॥"—इति (ऋ० सं० ४, ४, ३१, १)। अत्रेदार्थम्। वारुणी। त्रिष्टुप्। 'इमां' 'मायां' प्रज्ञां 'कवितमस्य' मेधावितमस्य द्योतमानस्य 'महीं' महतीं मायां 'न किरा दधर्ष' न कश्चिदप्याधर्षयितुं शक्नोति। कतमां मायाम्? इति,—'एकम्' एतं सन्तं वरुणम् आदित्यम्, 'यत्' एता 'उद्रा' उदकेन रश्मिना नद्यः 'एनीः' गमनशीलाः सततमुदकमादाय आदित्यमण्डलं गच्छन्ति। एवं नामाहर्निशमेता गच्छन्त्यः 'अवनयः' नद्य इव 'समुद्रं' सिञ्चन्त्यः 'न पृणन्ति' न प्रीणयन्ति बुद्धा। तेषां रश्मीनाञ्च मायाम् एवलक्षणां भगवतो वरुणस्य 'आधर्षयितुम्' अभिभवितुं विज्ञातुं न शक्नोति कश्चिदपि कथयितुम्। कथमप्ययं न सम्मूर्च्छत इति॥

एवमत्र वरुणः प्रज्ञया स्तूयते, धौरिति च प्रज्ञानाम, सा यस्य पुर्वी बन्ती, स पुरन्धिः। वरुणश्च प्रज्ञया स्तूयते, तस्मात् "वरुणः = पुरन्धिः"—इत्युपपद्यते ॥

"रुशत् (५२)"—इति, अनवगतम्। "रोचतेर्ज्वलतिकर्मणः"—इति निर्वचनम्। "रोचनम्"—इत्यवगमः। "अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात्। समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि॥"—इति (ऋ॰ सं॰ ४, ८, १२, २)। गविष्ठिरबुधयोरार्षम्। आग्नेयी। त्रिष्टुप्। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अबोधि होता' बुध्यते होता 'अग्निः' 'यजथाय' यजमानाय, यष्टव्यतया 'देवान्'। 'ऊर्ध्वः' ज्वलनक्रियायोगात्। 'प्रातः अस्थात्' अग्निहोत्रिणां गृहेषु योऽवतिष्ठते, 'सुमनाः' च शोभनमनाः। 'समिद्धस्य' च यस्य 'रुशत्' रोचिष्णुवर्णः 'अदर्शि' दृश्यते। 'पाजः' च बलं यस्य 'अप्रमितम्' यत्र प्रभावतः 'महान्'। 'तमसः' च सर्वमिदं 'निरमोचि' निर्मोचयति, बुध्यते देवान् यष्टव्यतया॥ एवमन्यधिकारादत्र शब्दसाक्ष्यात् "रुशत्"—"इति" एतत् "वर्णनाम"—इत्युपपद्यते ॥ ४ (११)॥

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम्। अस्ति हि वः समानजातिता रेशयदारिणो देवा अस्त्याप्यमाप्यमाप्नोतेः सुदत्रः कल्याणदानः। त्वष्टा सुदत्रो विदधातु राय इत्यपि निगमो भवति। सुविदत्रः कल्याणविद्यः। आग्ने याहि सुविदत्रे-

भिर्वाङित्य॒पि निगमो भवत्यानुषगिति नामानुपूर्वस्यानु॑षक्त॑ भवति। स्तृणन्ति॑ ब॒र्हिरा॑नु॒षगित्य॒पि निगमो भवति। तुर्वणिस्तूर्णवनिः। स तुर्वणिर्मह्राँ अरे॒णुपौंस्ये॒ इत्य॒पि निगमो भवति। गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति। जुष्ट॑ गिर्व॑णसे बृ॒हदित्य॒पि निगमो भवति ॥ ५ (१४) ॥

"रिशादसः (५३)"—इति, अनवगतम्। "रेशयदासिनः"—इत्यवगमः। "सन्ति॒ ह्यर्य आ॒शिष॒ ... अर्यम्। प्राणः पूर्व॑स्मै सुवि॒तार्य वोचत म॒क्षु सु॒म्नार्य नव्य॑से ॥"—इति (ऋ० सं० ६, २, २२, ५)। मनोर्वैवस्वतस्येयमार्षम्। सतो बृहती। वैश्वदेवे सूक्ते। हे 'रिशादसः' "रेशयदासिनः"। 'देवासः' देवाः। यो हि रेशयति हिंसावान् भवति, तमुं त आयुधान्यस्यन्ति। "रेशयदारिणः"—इति केचिदधीयते निर्वचनम्, तेषां रेशयन्तं हिंसन्तं दारयन्तीत्यर्थः। 'सन्ति' 'वः' युष्माकं 'सजात्यं' "समानजातिता" देवत्वम्, 'सन्ति' च युष्माकम् 'आप्यम्' आप्तव्यं मनुष्ये, ईश्वरा यूयमित्यभिप्रायः। यत एवमतो ब्रवीमि,—'प्रवोचत' यूयम् अस्मभ्यमनुजानीत। 'सुविताय' सुगताय, 'सुभोगाय' स्नानाय, 'सुम्नाय' सुखाय च पूर्वस्मै स्वभूताय, 'नव्यसे' नवतराय। कथं च पुनः प्रवोचत? इति,—'मक्षु' क्षिप्रमित्यर्थः। एवमत्र शब्दमात्रव्याख्योपपत्तेय "रिशादसः=रेशयदासिनः, रेशयदारिणो वा"—इत्युपपद्यते ॥

"सुदत्रः (५४)"—इति, अनवगतम् । 'सुदानः'—इत्यवगमः । "ता नो रासन्नातिषाचो वसून्या रोदसी वरुणानी शृणोतु । वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो विदधातु रायः ॥"—इति (ऋ० सं० ५, ३, २७, २) । वसिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि तृतीयसवने वैश्वदेवशस्त्रे द्विपदा एता शस्यन्ते । 'ताः' देव्यः, 'नः' अस्मभ्यं 'रासन्' 'वसूनि' ददत्वित्यर्थः । किंलक्षणाः देव्यः ? 'रातिषाचः' हविर्दानं याः सचन्ते सेवन्ते । किञ्च, आभिमुख्येन स्थित्वा 'रोदसी' रुद्रस्य पत्नी 'शृणोतु' 'वरुणानी' च । किञ्च, 'वरूत्रीभिः' वरयितव्याभिः सहितः 'सुशरणः' स्वाश्रयणः 'नः', अस्माकम् 'अस्तु' । 'त्वष्टा' 'सुदत्रः' "कल्याणदानः" 'विदधातु' च अस्माकम् 'रायः' धनमित्यर्थः ॥ एवमत्र 'रायः'-सम्बन्धात् "सुदत्रः=कल्याणदानः"—इत्युपपद्यते ॥

"सुविदत्रः (५५)"—इति, अनवगतम् । 'सुविद्यः'—इत्यवगमः । "कल्याणविद्यः"—इत्यभिधेयवचनम् । "ये तातृपुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः । आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥"—इति (ऋ० सं० ७, ६, १८, ४) । शङ्खस्य यामायनस्यार्षम् । त्रिष्टुप् । पैत्री । पितृयज्ञे स्विष्टकृद्याज्येषा । 'ये' 'तातृपुः' स्तीर्णवन्तः, 'देवत्रा' देवान् प्रति 'जेहमानाः' गच्छन्तः, 'होत्राविदः' स्तुतिविदः, 'स्तोमतष्टाः' स्तोमकर्त्तारः 'अर्कैः' मन्त्रैः स्तोमकर्त्तारः । य एवंलक्षणाः पितरः, तैः साकम् 'आ याहि' । हे 'आग्ने !' 'सुविदत्रेभिः' "कल्याणविद्यैः" 'अर्वाङ्' अस्मानभिमुख्येन, तैश्च साकम् । एवङ्गुणयुक्तैः 'पितृभिः' आगत्य 'सत्यैः' एतैः यथावदस्कृतैः 'कव्यैः' पितृदेवत्यैः 'घर्मसद्भिः' यज्ञमादिभिः हविर्भिस्तृप्तिमुपयाहि । अथवा सत्य-

वादिभिः पितृभिः कव्यवाहैः साकमायाहीति। एव पितृविशेषणत्वेनैव योज्यमेतदपि पदद्वयम्॥ एवमत्र शब्दसामर्थ्यात् 'सुविदत्र'शब्दः "कल्याणविद्य"वाचीत्युपपद्यते॥

"आनुषक् (५६)"—इति, अनवगतम्। "अनुषक्तम्"—इत्यवगमः। "नामानुपूर्वस्य"—इत्यर्थवचनम्। "आ ष्वा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा॥"—इति (ऋ० सं० ६, ३, ४२, १)। त्रिशोकस्यार्षम्। बृहतीसहस्रे द्व्याशीतिषु विनियुक्ता। 'ये' एव नित्यमग्निम् 'आ' आभिमुख्येनावस्थिताः 'इन्धते' यजमानाः, य एव यज्ञेषु 'बर्हिः' 'आनुषक्' "अनुषक्तं" 'स्तृणन्ति' तेषामेव 'इन्द्रः' 'युवा' नित्य. 'सखा' समानख्यानो याज्ञे कर्मणि भवति, नेतरेषामयज्वनाम्। बर्हिःसम्बन्धात् 'आनुषक्'—इति "नाम" एतत् "आनुपूर्वस्य नाम"—इत्युपपद्यते॥

"तुर्वणिः (५७)"—इति, अनवगतम्। "तूर्णवनिः"—इत्यर्थवचनम्। तूर्णं हि यः सम्भजते, स तूर्णवनिता सन् तूर्णवनिरित्युक्तः। "स तुर्वणिर्महाँ अरेणुपौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः। येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि॥"—इति (ऋ० सं० १, ४, २१, ३)। इन्द्रस्य सव्यस्यमापत्यस्येयमार्षम्। जगती। ऐन्द्री। वैषुवतेऽहनि निष्केवल्ये शस्त्रे शस्यते। स इन्द्रः 'तुर्वणिः' तूर्णवनिता, इन्द्रो हि स्तोतारं तूर्णं सम्भजते। 'महान्' प्रभावतः। 'अरेणुपौंस्ये' अन्तरिक्षे हि यत् बलं भवति, तत्र न रेणवः सन्ति, तस्मादरेणुपौंस्यमित्युच्यते। "पौंस्यम्"—इति बलनामसु पठितम्, तस्मिन् 'अरेणुपौंस्ये' बले अन्तरिक्षे, सङ्ग्रामे वा। 'गिरेः भृष्टिः' गिरिश्टङ्गमिव उच्छ्रितः भ्राजते। 'तुजा' बलेन प्रगृहीतेन 'शवः' शविष्ठो बलिष्ठ इन्द्रः।

'येन' वज्रेण 'शुष्णं' शोषयितारम्, 'असुरं' मेघम्, 'मायिनं' प्रज्ञावन्तम् 'आयसः' देवान् प्रति अयनशीलस्य सोमस्य 'मदे' प्राप्ते 'दुध्रः' दुर्द्धरः शत्रूणाम् 'आभूषुः' उपर्युपरि आत्मनो भवतुमिच्छन् 'रामयन्ति दामनि' दाम्नीव न्यरमयत्, सुबध्नादित्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "तुर्वणिः— तूर्णवनिः"—इत्युपपद्यते ॥

"गिर्वणसे (५८)"—इति, अनवगतम् । 'गीर्वणनीयः'—इत्यवगम । "गीर्भिः" स्तुतिभिः "एनं वनयन्ति"—इति अर्थवचनम् । "आमासु पक्वमैरय आ सूर्यं रोहयो दिवि । घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥"—इति (ऋ० मं० ८, ६, १२, ७)। नृमेधस. प्रियमेधसो वा इयमार्षम् । बृहती । ऐन्द्रे सूक्ते । 'आमासु' अपक्वासु गोषु चीरं 'पक्वम्' 'ऐरयः' त्वम् इन्द्र !। तस्मादामा सतो पक्वं दुग्धे इति च विज्ञायते। तदिदमामायां सत्यां गवि शृतं पय इति। किञ्च, "आ सूर्यं रोहयो दिवि" 'आ रोहयः' 'सूर्यं' 'दिवि' द्युलोके इत्यर्थः। एवमिन्द्रमुक्त्वा स्तोतॄनाह,—अस्मै इन्द्राय एवङ्गुणविशिष्टाय 'घर्मं न' घर्ममिव सुतप्तं सुष्ठु सुगुर्वं 'सामन्' साम 'तपत' स्थानकरणानुप्रदानवदुच्चारयतेत्यर्थः। 'सुवृक्तिभिः' शोभनाभिः स्तुतिभिः 'जुष्टं' प्रियं 'गिर्वणसे' इन्द्राय स्तुतिसम्भक्ते। कतमत् पुनस्तत्साम ? इति,—'बृहत्' तद्धि प्रियमिन्द्रस्य। एवमत्र "गिर्वणाः—देवः" उच्यते, शब्दसारूप्यादित्युपपद्यते ॥ ५ (१४) ॥

**असृत्तं सृत्ते रक्षसि निषृत्ते ये भूतानि समकृण्वन्निमानि ॥ असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमका देवगणास्ते रक्षेव**

दृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति त आयजन्तेत्यतिक्रान्तं प्रतिवचनम् । अभ्यक् सा त इन्द्र ऋष्टिः । अमाक्तेति वाभ्यक्तेति वा यादृश्मिन् धायि तमपस्यया विदत् । यादृशेऽधायि तमपस्ययाविदत् । उस्रः पितेव जारयायि यज्ञैः । उक्ष इव गोपितार्गायि यज्ञैः ॥ ६ (१५) ॥

"असूर्त्ते सूर्त्ते (५८)"—इति, एते अनवगते । "असुसमीरिताः" "सुसमीरिते"—इत्यवगमः । "त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूमना । असूर्त्ते सूर्त्ते ०—० इमानि ॥"—इति (ऋ० सं० ८, ३, १७, ४ ) । विश्वकर्मणो भौवनस्येयमार्षम् । वैश्वकर्मणीभ्यां जुहोतीति ह्युक्तमग्निप्रणयने, तत्र विनियोग. । 'असूर्त्ते' असुः प्राणः, प्राणश्च वायुः, "योऽयं वायुः पवत एष प्राणः"—इति ह्युक्तम्, तेन समन्तात् ईरिता. "असुसमीरिता." वातसमीरिताः इत्यर्थः । के पुनस्ते ? "माध्यमका देवगणाः" मेघाः, इतरे च मरुदादयः । ते वातेन समीर्य्यन्ते, वात एव हि तान् वहति । क्व पुनरेतेऽवस्थिताः समीरिताः ? इति,—'सूर्त्ते' "सुसमीरिते" विचित्रे विस्तीर्णे इत्यर्थः । 'रजसि' अन्तरिक्षलोके 'निषत्ते' निषण्णे इत्यर्थः । समीरिताः किं कुर्वन्ति ? इति,—'ये भूतानि समकृण्वन्' समस्तानि कृतवन्तः 'इमानि' । तेषां किम् ? इति,—'त आयजन्ते' इति । "अतिक्रान्त प्रतिवचनम्" प्रतिनिर्देशः प्रतिवचनमुच्यते, स एव पूर्वकाले प्रयोगार्हो यच्छन्दः पश्चात् प्रयुक्तः पश्चात्प्रयोगार्हश्च तच्छन्दः

पूर्वं प्रयुक्तो मन्त्रपाठक्रमेण,—तदेतत् भाष्यकारेण प्रदर्शित-मस्मिन् मन्त्रे "त आयजन्त इति अतिक्रान्तं प्रतिवचनम्"—इति। त आयजन्तेत्यस्य पादस्य समासेनैतद्भाष्यकारेण निर्वचनमुक्तम्। "ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति" ते मेघाः, रसेन उदकेन, पृथिवीं तर्पयन्तः, भूतानि सर्वाण्युत्पादयन्ति, स्थितिं च एषां कुर्वन्ति। 'आयजन्त' 'द्रविणम्' उदकम्, आभिमुख्येन ददति मवमुदकम् 'समस्मै' सर्वस्मिन् भूतजाते। एव भूतान्युदकेन कुर्वन्ति अनुगृह्णन्ति च। अधुना दृष्टान्तमाह,—'ऋषयः पूर्वे' विश्वसृजः, 'जरितारः न' 'भूमना' भूम्ना कर्मणा वार्षमहत्त्विकेण सर्वेण, तैर्हि सर्वो भूतग्रामः पूर्वं सृष्टोऽनुगृहीतश्च। एवमत्र शब्दसाह-प्यादर्थोपपन्ने च 'असूर्तं'-'सूर्तं'—इत्येतयोः "असुसमीरिता."-"सुसमीरिते"—इत्येते शब्दसमाधी उपपद्येते।

"अम्यक्(६०)"—इति, अनवगतम्। "अमात्ता इति वा, अभ्यक्ता इति वा" शब्दसमाधी। 'ऋष्टिः' अभिधेया, ता हि सग्रामे शवयो मन्यन्ते,—मामेषा प्रत्यञ्चिता चिन्ता मामेषा प्रत्यञ्चितेति। अथवा "अभ्यक्तेति वा" अभिगतैव नित्यकालं शत्रून् प्रति भवतीति अभ्यगित्युच्यते। "अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति। अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि॥"—इति (ऋ० सं० २, ४,८,३)। अगस्त्यस्यार्षम्। त्रिष्टुप्। ऐन्द्री। छन्दोमेषु द्वितीये-ऽहनि मरुत्वतीये शस्त्रे शस्यते। 'अम्यक् सा ते' यदैवत्लक्षणा रेषणा ऋष्टिः आभिमुख्येन, मेवमञ्चिता त्वया चिन्ता भव-त्यात्मनस्तव या स्वभूता, अथ तदा मरुतोऽपि तदनुरक्तायैव हे इन्द्र! 'अस्मे' अस्मदर्थं 'सनेमि' चिरन्तनम् 'अभ्वं', बहु-दकमिह पातयितव्यमिति स्वान्यायुधानि मेघविदारणाय

'जुनन्ति' गमयन्ति। किञ्च, सर्वेषामेवायुधानां मध्ये भावत्येव यस्मि 'अग्निरिव' 'अतसे' काष्ठे 'शुशुक्वान्' देदीप्यमान एतस्मिन् मेघे आस्ते। किञ्च, 'आपो न द्वीपम्' यथा ता ईप्या आपो द्वीपं परिवार्य्यास्मान धारयन्ति, एवमेतानि मेघ्यानि 'प्रयांसि' उदकानि महत्त्वाद् दृष्टे तानि मज्जयितुमशक्नुवन्ति द्वीपमिव परिवार्य्य धारयन्ति॥ एवमत्राश्नतेर्गत्यर्थस्य (भू० प०) 'अस्यक्'—इत्येतद् दृष्टिसम्बन्धादित्युपपद्यते॥

"याहृश्मिन् (६१)"—इति, अनवगतम्। "याहृशे"—इत्यवगम। "ज्यायासमस्य यतुनस्य केतुना ऋषिस्वरं चरति यासु नाम ते। याहृश्मिन् धायि तमपस्यया विदद् य उ स्वयं वहते सो अरं करत्॥"—इति (ऋ० म० ४, २, २४, ३)। अवत्सारस्यैयमार्षम्। जगती। आग्नेयी। "तम्नुवर्या"—इत्येतस्मिन् सूक्ते। उपदव्ये तृतीयसवने वैश्वदेवे शस्यते। 'ज्यायास' महत्तरम्। 'अस्य' 'यतुनस्य' कर्मणि षष्ठी वा यतनशीलस्य भगवत सूर्य्यस्य, 'केतुना' कर्मणा प्रज्ञया वा, 'ऋषिस्वरम्' ऋषिभि स्वर्य्यते स्तूयते इत्यृषिस्वर, तमृषिस्वरम्, स्तुवन् 'चरति' प्रचरति। "यासु नाम ते" 'यासु' क्रियासु 'नाम' नमन 'ते' तव हे भगवन् अग्ने। स एव चरन् तासु क्रियासु, 'याहृश्मिन्' "याहृशे" कामे 'धायि' मनो धत्ते, 'तम्' ताहृश कामम् 'अपस्यया' क्रियया हवि स्तुत्या ह्विलक्षणया तव प्रसादात् 'अविदत्' अलभतेत्यर्थ। किञ्च, 'य उ स्वय वहते' त्वा प्रति आदरवान् प्रापयति स्तुती, 'स' एव 'अर करत्' पर्य्याप्तमात्मनोऽभिप्रेतमर्थं करोति॥ एवमत्र शब्दसाहृप्यात् 'याहृश्मिन्'—इत्यस्य "याहृशे"—इत्येवं विपरिणाम उपपद्यते॥

"जारयायि (१२)"—इति, अनवगतम् । "अजायि"—इत्यवगम. । "साध्याकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः । द्रुन्नो वन्वन्क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥"—इति (ऋ० सं० ४, ५, १४, ४) । भरद्वाजस्यार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । "साध्याकेभिः"—इति छान्दसमात्वम् । 'स.' 'अग्नि.' 'अध्याकेभिः' 'शूषैः' सुखैः स्तोत्रैः 'स्तवे' स्तूयते । 'एतरी न' अतिथिरिव । 'दमे' यज्ञगृहे यज्ञे 'आ' आभिमुख्येनावस्थितैः स्तूयते 'जातवेदा.' जातविद्यो वा जातधनो वा 'द्रुन्नः' द्रुमान्नः 'वन्वन्क्रत्वा' वननीयकर्मा वननीयप्रज्ञानो वा । 'अनार्वा' अनर्वा, अनाश्रितः कश्चिदन्यम् । 'उस्रः पिता इव' साण्ड इव "गोपिता" गवां पिता 'जारजायि' "अजायि" । यथा साण्डः पुत्रपौत्रादिभिरनेकधा प्रजायते एवं यज्ञेषु विक्रियमाण. अनेकधा जायतेऽग्निः ॥ एवमत्र 'जारजायि' —इत्यस्य "अजायि"—इत्यर्थप्रतीतिः ॥ ६ (१५) ॥

प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति वाग्रगरणेनेति वाग्रसम्पादिन इति वापि वाग्रमित्येतदनर्थकमुपबन्धमाददीत । अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् । अद्धीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व चन इत्यन्ननाम पचतिर्नामीभूतः । तं मेदस्तः प्रति

पञ्चताग्रभीष्टामित्यपि निगमो भवत्यपि वा मेदसश्च पयसश्च सात्त्वं द्विवचनं स्यादाव स्वेक-वचनार्थः प्रसिद्धं तद्भवति। पुरोळा अग्ने पचत इति यथा। शुरुध आपो भवन्ति शुचं संरुन्धन्ति। ऋतस्य हि शुरुधः सन्ति पूर्वीरित्यपि निगमो भवत्यमिनोऽमितमात्रो महान् भवत्यभ्यमितो वा। अमिनः सहोभिरित्यपि निगमो भवति। जञ्झतीरापो भवन्ति शब्दकारिण्यः। प्रदिवो जञ्झतीरिवेत्यपि निगमो भवत्यप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा। अस्माकमप्रतिष्कुत इत्यपि निगमो भवति। शाशदानः प्राशाद्यमानः। प्र स्वां मतिमतिरच्छाशदान इत्यपि निगमो भवति ॥ ७ (१६) ॥

इति षष्ठाध्यायस्य तृतीयः पादः ॥ ६, ३ ॥

“अपिया (६३)”—इति, अनवगतम्। “अपगमनेन” अपिया। अप्रमेव अपिया, अनर्थक एवायमशब्दे 'या'कार उपजन्य उपात्त—“अपि वाप्रमित्यं तदनर्थकमुपयमप्रमाद द्योत”—इत्युक्तं भाष्यकारेण। “प्र य वो शुभ्र कर्मणोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे। प्रतोऽश्वा अनुपुत्राणामा अस्तुरभूत विश्वे अपियीत वाजा. ॥”—इति (ऋ० सं० ३, ७, ३, १)। वामदेवस्यार्षम्। आर्भवे त्रिष्टुप्। ऋदध्व दश

यागस्य पञ्चमेऽहनि तृतीये सवने वैश्वदेवे शस्यते। हे 'ऋभवः!' युष्माकम् 'श्रयं' 'यज्ञः' 'यम्' वयमाकर्षम्। तम्-आगत्य 'मनुष्वत्' मनुष्यवत्, 'प्रदिवः' प्रकर्षेण द्योतमानाः सन्तः, 'आदधिध्वे' धारयध्वे। एतत् 'वः' प्रब्रवीमि। किञ्च, "प्रवोऽच्छा जुजुषाणासो अस्थुः" प्रस्थितानि यान्येतानि हवींषि, तानि यूयं "जोषयमाणाः" देवैः सेव्यमाना वा आत्मना 'अग्रिया' 'अभूत' "अभवत"। 'उत वाजाः' अपि च हे वाजाः! यूयमप्येवमेव भवत। एवम् "अग्रगामिनः अग्रसम्पादिनो वा अग्रमेव वा=अग्रिया" तथार्थोपपत्तेः छन्दसारूप्याच्च॥

"चनः (६४)—इति, अन्ननाम" "पचता (६५)"—इति, "पचतिः नामीभूतः"—इति भाष्यकारो ब्रवीति। "युद्धीन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचुतोत सोमम्। प्रयस्वन्तः प्रति हर्यामसि त्वा सुत्याः सन्तु यजमानस्य कामाः॥"—इति (ऋ० सं० ८, ६, २१, ३)। इयमग्नियुतस्य वाग्नियूपस्य वार्षम्। त्रिष्टुप्। ऐन्द्री। 'अद्धि'भक्षय। हे 'इन्द्र!' 'प्रस्थिता' "प्रस्थितानि" 'इमा' "इमानि" "हवींषि" 'चनः' अन्नम्, एतत् हविर्लक्षणम् 'दधिष्व' प्रक्षिप जठरे। 'पचता' पक्वानि इमानि हवींषि, अत एवं ब्रवीमि दधिष्वेति। 'उत सोमम्' अपि च सोमं दधिष्व। 'प्रयस्वन्तः' अन्नवन्तो वयं हवींषि कामयमानं 'त्वा' त्वां 'प्रति हर्यामसि' प्रतिहर्यामः, कामयामहे। "सुत्याः सन्तु यजमानस्य कामाः"—इत्यभिप्रायेण। 'हवींषि'—इत्यनेन सम्बन्धात् 'पचता'—इत्येतदत्रविषये बहुवचनमुपपद्यते॥ "पचतिर्नामीभूतः"—इति धातुनिर्देशः॥

द्वितीयमुदाहरणं ब्रवीति, अर्थविशेषदर्शनादस्येति,—

"तं मेदस्तः प्रति पचताग्रभोष्टाम्"—इति । 'तं' पशुं 'मेदस्तः' यतस्तस्य मेदो वपासहयोगि, ततः, तेन प्रदेशेन 'प्रत्यग्रभोष्टाम्' इन्द्राग्नी 'पचता' पक्कमित्यर्थः ॥ एवमेतदेकवचनं भवति ॥

"अपि वा" "मेदश्च" वपासहयोगिनः "पशोः" पशुवदामस्य चाभिधायकमेतत्, "साच्च" सत्त्वविषयं "द्विवचनं स्यात्"। सन्ति ह्येवंरूपाणि द्विवचनान्यपि । तद्यथा,—'दैव्या होतारा भिषजा" ॥

किं कारणमुच्यते "द्विवचनम्" एतत् "स्यात्"—इति ? अत,—यस्मात् "यत्र हि एकवचनार्थः प्रसिद्धम्" एव, निःसन्देहमेव "तद् भवति,—'पुरोला अग्ने पचतः'—इति यथा"। "पुरोला अग्ने पचतस्तुभ्यं वा घा परिष्कृतः। तं जुषस्व यविष्ठ ॥"—इति (ऋ० सं० ३, १, ३१, २)। विश्वामित्रस्यार्षम्। गायत्री। आग्नेयी। आश्विनस्य द्विकपालस्य अतिरात्रे यदि श्लिष्टकृद् भवति, तस्येयं पुरोऽनुवाक्या भवति। 'पुरोडाः' पुरोडाशः 'पचतः' पक्क इत्यर्थः। 'तुभ्यं' त्वदर्थम्। भगवन् 'अग्ने!' 'वा'-'घा'—इति अनर्थकौ। न केवलं पक्कः, किन्तर्हि ? 'परिष्कृतः' सुसंस्कृत इत्यर्थः। तं 'जुषस्व' सेवस्व हे 'यविष्ठ' युवतम ! अथवा मिश्रयितम ! ॥ एवमत्र 'परिष्कृतः'—इत्येतस्मादेकवचनसम्बन्धात् 'पचतः'—इत्येकवचनमेव सिध्यति ॥

"शुरुधः (६६)"—इति, अनवगतम्। "आपो भवन्ति"—इति अभिधेयवचनम्। "शुचं संरुन्धन्ति"—इति निर्वचनम्। "शुरुधः"—इति न्याय्यम्। "ऋतस्य हि शुरुधः ॥"—इति (ऋ० सं० ३, ६, १०, ३)। दैवते शेषः ॥

"अमिनः (६७)"—इति, अनवगतम्। "अमितमात्रः"—इत्यत्र-

गम, न यस्य मात्राणां मानमस्ति, सोऽमिन इत्युच्यते।
"अभ्यमितो वा" अनभिहिंसितो यः केनचिदसौ अमिनः।
"महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्रयग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्॥"—इति (ऋ० सं० ४, ६, ७, १)। भरद्वाजस्यार्षम्।
त्रिष्टुप्। ऐन्द्री। दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते, माहेन्द्रय यज्ञोऽनयैव स्तूयते। 'महान्' प्रभावतः, 'नृवत्' मनुष्यवत्, 'आचर्षणिप्राः' आपूरयिता 'चर्षणीनाम्' मनुष्याणां कामैः, यथा हि मनुष्य ईश्वरः परितुष्टः कामैरवश्यं भृत्यमापूरयति, एवमिन्द्रोऽपि स्तोतारम्। 'उत द्विबर्हाः' अपि च द्वयोः स्थानयोः मध्यमोत्तमयोः परिवृढः 'अमिनः' च अमितसत्त्वः, अथवा अनभिहिंसितः केनचित्। केन पुनरमिनः? इति, उच्यते,—'सहोभिः' बलैरित्यर्थः, न हीन्द्रस्य बलमात्रा केनचिन्मितपूर्वा इत्यर्थः, अनभिहिंसितपूर्वो वा केनचिदिन्द्रः। 'अस्मत्' अस्मदनुग्रहाय अस्मद्दर्शनाय 'वावृधे' वर्द्धते। 'वीर्याय' वीरकर्मणे वर्थार्थम् 'उरुः' महान् परिमाणतः, 'पृथुः' विस्तीर्णो यः, सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामर्थानां 'सुकृतः' स्तुतिभिः एतैः 'कर्तृभिः' ऋत्विग्भिः 'भूत्' भूयादित्यर्थः॥ एवमत्र 'अमिन'शब्देन "अमितमात्रः" अनभिहिंसितमात्रो वा—इत्युच्यते शब्दसारूप्यादर्थोपपत्तेश्च॥

"जज्झती: (६८)"—इति, अनवगतम्। शब्दानुकरणात् "आपः"—इति प्रतीयन्ते। "प्र रुक्मेभिरायुधा नरं ऋष्वा ऋष्टीरसृक्षत। अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः॥"—इति (ऋ० सं ४, ३, ८, ६)। श्यावाश्वस्यार्षम्। मारुती। पङ्क्तिः। 'प्र' आभिमुख्येन

'शत्रून्' शातयितव्यान् मेघान् प्रति 'आयुधा' एतान्यायुधानि 'दर्कोः' विकर्तनानि, एताश्च 'ऋष्टीः' शक्तीः 'असृक्षत' असृजन्त हे 'नरः' मरुतः। किञ्च, 'अन्वेनान्' प्रहारान् 'विद्युतः' 'भानुः' आदित्यः 'इव' 'त्मना' आत्मना 'दिवः' द्युलोकात् 'अर्त्त' अपगच्छन्तु। मेघेभ्यो हन्यमानेभ्यः तदन्वेव चापोऽपि 'अर्ण' आगच्छन्तु। कथम्? इति,—'जञ्झतीः इव' "शब्दकारिण्यः" इव स्रोतस्याः "आपः" 'ऋष्वः' प्रभूता इत्यर्थः॥ एवमत्र शब्दानुकरणात् "आपः=जञ्झतीः"—इत्युपपद्यते।

"अप्रतिष्कुतः (६८)"—इति, अनवगतम्। "अप्रतिष्कुतः, अप्रतिस्खलितः वा"—इति शब्दसमाधौ। "स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि। अस्मभ्यमप्रतिष्कुतः॥"—इति (ऋ० सं० १, १, १४, १)। मधुच्छन्दस आर्षम्। गायत्री। ऐन्द्री। पृष्ठ्याभिप्लवयोः प्रातःसवनिके आवापे विनियुक्ता, ब्राह्मणाच्छंसिनः शस्त्रे शस्यते। हे 'वृषन्' इन्द्र! वर्षितः! यः त्वम् अनुग्रहीता 'नः' अस्माकम्, 'सः' त्वं शृणु यत् कुरुष्व। 'अमुं चरुम्' अमुमन्तरिक्षचरणशीलं मेघम्। हे 'सत्रादावन्' सततदान! 'अपावृधि' अपावृणु, उदकदानार्थमस्मभ्यम्। 'अप्रतिष्कुतः' न ह्येन्द्रः "प्रतिष्कुतः" परान् प्रति पराङ्मुखः कृतपूर्वः केनचित्, अथवा "अप्रतिस्खलितः" संग्रामेषु॥ एवमत्र 'अप्रतिष्कुत'शब्दः "अप्रतिष्कुत"वाची अथवा "अप्रतिस्खलित"वाची, तथार्थाविरोधः॥

"शाशदानः (७०)"—इति, अनवगतम्। "शाशायमानः"—इत्यवगमः। "शुभि सिप्रो अजिगादस्य शत्रून् वितिग्मेन वृषभेणा पुरोऽभेत्। सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः॥"—इति (ऋ० सं० १, ७, १, ३)। हिरण्यस्तूपस्यार्षम्। गोसवविषुवयोर्निष्केवल्ये शस्यते।

'अभि अजिगात्' अभ्यगच्छत्। 'अस्य' इन्द्रस्य सम्भूतः 'तिग्मः' उत्साहवान् वज्रः 'शत्रून्' प्रति 'सिध्रः' साधयिता शत्रूणाम्। 'वितिग्मेन' तीक्ष्णेन 'वृषभेण' वर्षप्रवर्त्तकेन। 'पुरः' मेघपुरः असुरपुरी वा 'अभेत्'। किञ्च, 'समसृजत् वज्रेण इत्रमिन्द्रः'। स च भिद्यमानः 'प्रातिरत् स्वां मतिं' "न दातव्यमुदकमेषाम्"—इत्येतां मतिं स्वां 'प्रातिरत्' प्राजहादित्यर्थः। 'शाशदानः' पुनः पुनः "शाशाद्यमानः" इन्द्रेण। एवमत्र "शाशदानः = शाशाद्यमानः"—इत्युपपद्यते, प्रसङ्गसारूप्यादर्थाविरोधाच्चेति॥ ७ (१६)॥

इति निरुक्तवृत्तौ एकादशस्याध्यायस्य (षष्ठाध्यायस्य) तृतीयः पादः॥ ६, ३॥

---

चतुर्थः पादः।

सृप्रः सर्पणादिदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा। सृप्रकरस्नमूतय इत्यपि निगमो भवति। करस्नौ बाहू कर्मणां प्रस्नातारौ सुशिप्रमेतेन व्याख्यातम्। वाजे सुशिप्र गोमतीत्यपि निगमो भवति शिप्रे हनू नासिके वा हनुर्हन्तेर्नासिका नसतेः। विष्यस्व शिप्रे विसृजस्व धेने इत्यपि निगमो भवति। धेना दधातेः रंसु रमणात्। स चित्रेण चिकिते रंसु भासेत्यपि निगमो भवति। द्विबर्हा द्वयोः स्थानयोः परिवृढो मध्यमे च स्थान उत्त-

मे,च.। उत द्विबर्हा अमिनः सहो भिरित्यपि निगमो भवत्यक्रू आक्रमणात्। अक्रो न बभ्रिः समिथे महीनामित्यपि निगमो भवत्युराण उरु कुर्वाणः। दूत ईयसे प्रदिव उराण इत्यपि निगमो भवति ॥ १ ॥

"सृप (७१)"—इति, अनवगतम्। 'सर्पः'—इत्यवगमः। "सर्पणात्"—इति निर्वचनम्। "इदम् अपि इतरत् सृप्रम्" "एतस्मादेव" स्यात्, यदेतत् "सर्पिर्वा तैलं वा" तदपि हि सर्पति। "सृप्रकरस्नमूतये"—इति (ऋ० सं० १, ३,२, ५)। निगमः। "बृहदुक्थं हवामहे"—इति व्याख्यातः शेषः। "करस्नौ बाहू, कर्मणां प्रस्नातारौ" निर्वर्त्तयितारावित्यर्थः।

"सुशिप्रः (७२)"—इति, अनवगतम्। तत् पुनः "एतेन" एव सृप्रशब्देन "व्याख्यातम्" सर्पतेरेवैतदपि, "शिप्रे = हनू, नासिके वा" ते यस्य प्रसृप्ते, स सुशिप्रः।' "वाजे सुशिप्र गोमति"—इति (ऋ० सं० ६, २,२, ३)। निगमः. "विद्मा सखित्वम्"—इति व्याख्यातः। नास्मिन् मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्गमस्तीति, अतः "शिप्रे हनू नासिके वा"—इत्युक्त्वा विशिष्टतल्लिङ्गमन्यदुदाहरणं ब्रवीति,—"विष्यस्व शिप्रे"—इति। "मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे विसृजस्व धेने। आ त्वा सुशिप्र हरयो वहन्तूशन् हव्यानि प्रति नो जुषस्व॥"—इति (ऋ० सं० १, ७, १३, ४)। कुत्सस्यैयमार्षम्। ऐन्द्री। जगती। दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'मादयस्व' हर्षयस्व 'स्वम्' आत्मानम् हे 'इन्द्र!' 'हरिभिः' अश्वैः, 'ते' तव

स्वभूताः, तैः सह। कथं च पुनर्मादयस्व ? इति,—'विष्यस्व' विमुञ्चस्व 'शिप्रे' सृप्रे' दीर्घे हनू हविर्भक्षणाय, नासिके वा गन्धाघ्राणाय, एवं मादयस्वात्मानमिति। 'विष्यस्व धेने' आधस्ये दंष्ट्रे वा, 'जिह्वोपजिह्विके' वा,—इत्येके, तयोर्हि भवं धीयते। किञ्च, 'आ त्वा वहन्तु हरयः' इष्टाः सप्त आवहन्तु त्वां हरयः अस्मान् प्रति। हे 'सुशिप्र !' 'उशन्' कामयमानः 'हव्यानि' हवींषि एतानि अस्मत्प्रत्तानि। स्तुतिभिरस्माभिरासीमितः 'प्रतिजुषस्व नः' प्रतिसंसेवस्व नः कामैरित्यभिप्रायः॥ एवमत्र मादनसम्बन्धात्, हविःसम्प्रदानसम्बन्धाच्च "शिप्रे=हनू नासिके वा"—इत्युपपद्यते॥

यत्तदुक्तम्,—"शिप्रे इत्युपरिष्टाद् व्याख्यास्याम"—इति, एतद् व्याख्यातम्,—"शिप्रे=हनू नासिके वा"—इति॥

"हनुः, हन्तेः (षष्ठा० ५०)" धातोः। "नासिका, नसतेः" "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति हि वक्ष्यति॥

"रंसु (७२)"—इति, अनवगतम्। 'रमणीयेषु'—इत्यवगमः। "रमणात्"—इति निर्वचनम्। "आयमे अभ्व वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्। स चित्रेण चिकिते रंसु भासा जुजुर्वान् यो मुहुरा युवा भूत्॥"—इति (ऋ० सं० २, ५, २४, ५)। सोमाहुतेर्भार्गवस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'आ पनन्त' आभिमुख्येन पनन्त, अस्तुवत। 'मे' मम स्वभूते कर्मणि। 'अभ्व' महान्तम् अग्निम्, 'वनदः' वननीयस्य हविषो दातारः ऋत्विजः, य 'वर्णं' वरं हरन्ति अस्मदर्थम्, तेभ्यः 'उशिग्भ्यः' मेधाविभ्यः। तमसौ वरणं प्रार्थनां 'न अमिमीत' न हिनस्ति। किन्तर्हि ? यथाप्रार्थितमेव समर्द्धयतीत्यर्थः। किञ्च, 'सः' अग्निः 'चित्रेण' चायनीयेन भासा युक्तः 'रंसु' रमणीयेषु

स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा 'चिकिते'। किंलक्षण: 'यः' अग्निः ? इति,—'जुजुर्वान्' पुनः पुनः जरावान् अपि भूत्वा, 'मुहुरा युवा भूत्' इन्धनचयात् पुनरिन्धनं प्राप्य तस्योपरि दीप्यमानो मुहुर्मुहुः युवैव भवति ॥ एवमत्र शब्द-सारूप्यादर्थाविरोधाच्च 'रंसु'—इत्यस्य 'रमणीयेषु'—इति विपरिणाम उपपद्यते ॥

"द्विबर्हाः (७४)"—इति, अनवगतम्। 'द्विपरिवृढः'—इति न्याय्यम्। मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्यात्मना। "उत द्विबर्हाः"—इति (ऋ० स० ४, ६, ७ १)। निगमः। "मुहाः दुन्द्रः"—इति व्याख्यातः शेषः ॥

"अक्रः (७५)"—इति, अनवगतम्। 'आक्रमणः'—इति न्याय्यम्। "आक्रमणात्"—इति निर्वचनम्। प्राकारोऽभि-धेयः। "अक्रो न बुभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः। उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः॥"—इति (ऋ० सं० २, ८, १५, २)। विश्वामि-त्रस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'अक्रो न' अक्र इव, प्राकार इव। 'बभ्रिः' भर्त्ता, धार-यिता। क्व ? 'समिथे' संग्रामे। कस्य ? 'महीनां' महतीनां शत्रुसेनानाम्। एवंलक्षणो योऽग्निः। किञ्च, 'दिदृक्षेयः' दृश्यते यः। 'सूनवे' सोमाभिषवकर्त्रे यजमानाय नित्यकाल-मेव। 'भाऋजीक' प्रसिद्धभाः, प्रसिद्धदीप्तिः, नित्यो ज्वलित इत्यर्थः। किञ्च, सर्वस्य लोकस्य 'जनिता' जनयिता। 'उस्रिया उज्जजान' उस्रिया आहुती. आत्मनि प्रक्षिप्ताः ततोः देवतादृप्तिसमर्थेन रूपेण ऊर्ध्वाः 'यः' जनयति। अथवा गाव एव वोस्रियाः स्युः, ता अपि ह्यसौ पशुकामकर्मणि अङ्गभाव गच्छन् जनयति। यश्च 'अपां गर्भः' यश्च 'नृतमः' मनुष्यतम,

यत्र 'यह.' महान्, 'अग्निः' स इदं नामाख्याकं करोतीति ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "चक्रः=प्राकारः"—इत्यु-पपद्यते, असौ हि आक्रम्यते जनैः ॥

"उराणः (७६)"—इति, अनवगतम्। "उरु कुर्वाणः" —इत्यवगमः। "वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान्। दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥"—इति (ऋ० सं० ३, ५, ७, ३)। वामदेव-स्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्नग्ने। 'वे' त्वं जानीषे। किम्? 'अध्वरस्य' यज्ञस्य 'दूत्यानि' दूतकर्माणि, यानि दूतेन कर्त्तव्यानि। किञ्च, 'उभे अन्ता' उभावप्यन्तौ 'रोदसी' रोदस्योः 'विद्वान्' असि विजानीषे। किञ्च, समस्तमप्येतज्जगत् 'चिकित्वान्' असि, न ते विज्ञानप्रतीघातोऽस्ति क्वचिदपि जगति, विजानीषे सर्वाणि देवतास्थानानि। 'प्रदिव.' एव असि 'दूत.' चिर-न्तन. सर्वेषां यजमानानाम्। यतोऽस्मासिस्त्वमेतस्मिन् कर्मणि 'दूत.' दूतत्वेन 'ईयसे' याच्यसे, स त्वम् 'उराणः' अल्पमपि हुतं हविः देवताप्तिसमर्थं बहु कुर्वाण.। 'विदुष्टरः' विद्व-त्तर, मनुष्यहोतुः सकाशात्। 'दिव आरोधनानि' आरोढ-व्यानि देवतास्थानानि प्रति वह एतानि हवींषीत्यभिप्रायः। एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'उराण.'—इत्यस्य "उरु कुर्वाण."—इत्येष विपरिणाम उपपद्यते ॥ १ ॥

स्त्रिया आपो भवन्ति स्त्यायनात्। वृषा सिन्धूनां वृषभ स्त्रियानामित्यपि निगमो भव-ति। स्त्रिपा स्त्रियापालन उपसिताम् पालय-तीति वा। स नं स्त्रिपा उत भवा तनूपा

इत्यपि निगमो भवति ॥ जवाव जवमानरोहि जरमाणरोहि गरमाणरोहीति वा । अग्रे कृप आचपितं जबावित्यपि निगमो भवति । जरूथं गरूथं गृणातेः जरूथं हन्यर्चिं राये पुरंधिमित्यपि निगमो भवति । कुलिश इति वज्रनाम कूलशातनो भवति । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः । स्कन्धो वृक्षस्य समास्कन्नो भवत्ययमपीतरस्कन्ध एतस्मादेवास्कन्नं काये-ऽहिः शयत उपपर्चनः पृथिव्यास्तुञ्जस्तुञ्जते-र्दानकर्मणः ॥ २ (१७) ॥

"स्तियाः (७७)"—इति, अनवगतम् । 'स्त्यायनाः'—इति न्याय्यम् । "आपो भवन्ति"—इत्यभिधेयवचनम् । "स्त्यायनात्" सङ्घननात् इत्यर्थः, आप एव हि पार्थिवाना मवयवानां संहनने हेतुभूता भवन्ति, अथवा हिमप्रभावेण च ता आत्मनैव संहता भवन्ति । "वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम् । वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥"—इति (ऋ० सं० ४, ७, २०, १) । अयमर्वाहित्यमार्षम् । ऐन्द्री । हे इन्द्र ! 'वृषा असि' वर्षितासि 'दिवः' 'पृथिव्याः' च वर्षिता । 'सिन्धूनां' स्यन्दमानानाम् अपाञ्च वर्षिता । 'स्तियानां' संहन्तीणाम् अपाम्, अथवा संहतानामात्मनैव हिमप्रभावेण ।

यावत् किञ्चित् सेचकर्म, तत् सर्वं त्वदधीनमित्यभिप्रायः। तस्मै ते एवगुणविशिष्टाय 'वृष्णे' वर्षित्रे 'ते' तुभ्यम्। एव 'इन्दु' सोम हे 'वृषभ' वर्षित। 'पीपाय' पुनः पुनः आप्यायते, अथवा पानाय संस्कृत, 'स्वादु रस' स्वादुरससयुक्त', 'मधुपेय' मधुरपेयः, 'वराय' तुभ्य श्रेष्ठायेत्यर्थः। एवमत्र 'स्त्रिया'शब्देन 'सहन्त्या', सहता वा आप' उच्यन्ते, शब्द साम्यात् "स्त्वै शब्दसङ्घातयो (भू० प०)"—इत्यस्य॥

"स्त्रिपा (७८)"—इति, अनवगतम्। "स्त्रियापालन" —इत्यवगम'। 'कूप' अभिधेय, स हि "उपस्थितान्" पातृन् "पालयति"। "य त्वा पूर्वमीडितो वध्र्यश्वः समीधे अग्ने स इद जुषस्व। स न स्त्रिपा उत भवा तनूपा दात्र रक्षस्व यदिद ते अस्मे॥"—इति (ऋ० सं० ८, २, १८, ४)। वाध्र्यश्वस्य सुमित्रस्येयमार्षम्। त्रिष्टुप्। आग्नेयी। 'हे अग्ने।' 'य त्वा' वध्र्यश्व 'ईडित' अपि सर्वैर्महर्षिभि, 'पूर्व' 'समीधे' समेधितवान्, उपचीर्णवान्, त त्वामहमपि समिन्धे, को हि नाम त्वां न समिन्ध्यात्। 'स' त्वमिध्यमान अस्माभि 'इद' हवि 'जुषस्व' संसेवस्व। किञ्च, य एवमस्माभि ईध्यसे त्वम्, 'स' 'न,' 'स्त्रिपा' कूप इव 'तनूपा' भव, कूपो हि तृष्णयार्त्तान् पातृन् पात्युदकसम्प्रदानेन। किञ्च, 'दात्रम्' दानम् 'रक्षस्व'। कतमत्? 'यदिद ते' 'अस्मे' अस्मासु वर्त्तते इत्यर्थः॥ एव मताविरोधाच्छब्दसाम्याच्च "स्त्रिपा = कूप"—इत्युपपद्यते॥

"जबारु (७८)—इति, अनवगतम्। "जवमानरोहि"—इत्येवमाद्या शब्दसमाधय। "त मित्रस्य वरुणस्य समुद्रा संमुद्रमभि कर्त्वा पुनती धीतिरश्या.। सुतस्य चर्मबहि

चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥" इति—(ऋ० सं० ३, ५, २, २)। वामदेवस्यार्षम्। "मूर्द्धानुराये मीळ्हुषे मुजोषाः"—इत्यं तस्मिन् वैश्वानरीये सूक्ते। 'तम्' एव हे यजमान ! त्वम् 'अभ्यस्याः' प्राप्नुयाः वैश्वानरं सूर्य्यम्। 'समाना' समानयैव, तदनुरूपयैव स्तुत्या 'समानम्'। केन पुनरभ्यस्याः ? 'क्रत्वा पुनती' स्वात्मपवनसमर्थेन कर्मणा प्रज्ञानेन वा। किंलक्षणः पुनर्यो वैश्वानरः तमभ्यस्याः ? 'मसस्य पृश्नेः' स्वपनस्य द्युलोकस्य 'पृश्नेः' प्राष्टवर्णस्य 'अधि' उपरि, स्वपन्नीव हि द्युलोको निश्चलत्वात्। 'चर्मन्' चरणार्थम्। कथं नाम मौर्य्येण प्रकाशेन जनाश्चरेयुरित्यनेनाभिप्रायेण। 'चारु' दीप्तिमत्। 'अग्रे' पूर्वसर्गादौ 'रुपः आरुपितम्' 'रिपः'—इति विपरिणामः, भूम्या इत्यर्थः, 'आरुपितम्' आरोपितं देवैः, 'जबारु' मण्डलं यस्य। तं त्वमभ्यस्याः। इह वा आदित्य आसीत्, तमाभ्यां परिगृह्योपरिष्टात् तासां प्रजानां न्यदधुरिति विज्ञायते॥ एवमत्र "जबारु=आदित्यमण्डलम्" उच्यते, तद्धि जवमानं गच्छन् नभसो मध्यमारोहति, जायते वा उदेतीत्यर्थः, जवमानमेव हि तत्र तत्रोदेति। "जरमाणरोहि" वा स्यात्, तद्धि जरमाणं सर्वभूतानि रोहति। "गरमाणरोहि वा" तद्धि गरमाणं रसानारोहति॥

"जरूथम् (८०)"—इति, अनवगतम्। "गरूथम्"—इत्यवगमः। "गृणातेः (क्रा० प०)"—इति धातुनिर्देशः। "त्वामग्ने समिधानो वसिष्ठो जरूथं हन् यक्षि राये पुरन्धिम्। पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः॥" —इति (ऋ० सं० ५, २, १२, ६)। वसिष्ठस्यार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन् 'अग्ने !' 'वसिष्ठः' 'त्वां' 'समिधानः' सन्दीपयन् 'जरूथं' स्तोत्र

'इन्' गमयन् त्वा प्रति, "इन्ति, मेधति"—इति गतिकर्मसु पठितम्। 'यजि' यजति। 'राये' धनप्राप्त्यर्थम्। 'पुरुन्तिम्' बहुकर्मतम धनसम्बन्धाद्वा बहुदातृतममिति स्यात्। यस्त्वं वसिष्ठेन एवमिज्यसे, तं त्वा वयमपि यजाम एव। स त्वं 'पुरुणीथा' बहुस्तुत। 'जातवेद' अस्माभिरिज्यमान. 'जरस्व' जुषस्वैतदपि अस्मत्स्तम्। किञ्च, 'यूयम्' अस्मान् 'पात' रक्षत। एकस्यैव पूजनार्थं बहुवचनम्। 'स्वस्तिभिः' स्वस्त्ययने, आशीःप्रयोगे पात 'नः'। 'सदा' नित्यमेवेत्यर्थः। एवमत्र जरते स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च "जरूथम्=स्तोत्रम्" उपपद्यते॥

"कुलिशम् (८१)"—इति, अनवगतम्। "वज्रनाम"—इत्यभिधेयवचनम्। "कूलशातन"—इति शब्दसमाधिः।

"अर्हन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन। स्कन्धांसीव॰—०पृथिव्याः॥"—इति (ऋ॰ सं॰ १, २, ३६, ५)। ऐन्द्री। त्रिष्टुप्। हिरण्यस्तूपस्यार्षम्। अग्निष्टोम निष्केवल्ये शस्यते। 'अहन्' हतवान्, हन्ति वा इन्द्र 'वृत्रं' मेघम्। 'वृत्रतरम्'—इति तस्यैव वा विशेषणम्, अन्यो वा वृत्रतरो यः तमपि हन्ति। कथ पुनर्हन्ति? इति,—'व्यंसम्' विच्छिन्नसन्धिबन्धनं कृत्वा। केन पुनर्हन्ति? इति,—'वज्रेण महता' प्रहारेण। किञ्च, स्कन्धांसि इव' वृक्षशाखा इव, 'कुलिशेन' "कूलशातनेन वज्रेण" 'विवृक्णा' विछिन्नानि। स एवम् 'अहिः' अगमनो मेघः, छिद्यमानोऽस्याः पृथिव्याः 'उपपृक्' "उपपर्चनं" सम्पर्कस्य कर्त्ता भूत्वोदकभावेन, अस्यामेव पृथिव्याम् 'अहिः' 'शयते' अगमयत्। एवस्थानमात्रमेव स्वशोऽधभवत॥ एवमत्र अर्थसम्बन्धात् "कुलिश=वज्र."—इत्युपपद्यते॥

"तुञ्जे(८२)"—इति, अनवगतम्। "तुञ्जति." दानार्थस्येति निर्वचनम्। 'तुञ्जनम्'—इति स्यात् ॥ २ (१७) ॥

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम् ॥ दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेर्बर्हणा परिवर्हणा। वृहच्छ्रवा असुरो बर्हणा कृत इत्यपि निगमो भवति ॥ ३ (१८) ॥

"तुञ्जे तुञ्जे०—०सुष्टुतिम्"—इति (ऋ० मं० १, १, १४, २)। मधुच्छन्दस आर्षम्। ऐन्द्री। गायत्री। प्रातःसवने ब्राह्मणाच्छंसिनः आवापे विनियुक्ता। 'तुञ्जे तुञ्जे' "दाने दाने" 'ये' 'उत्तरे' उत्तरोत्तरे दानपरितुष्टेन मया 'स्तोमाः' 'इन्द्रस्य वज्रिणः' चिन्त्यन्ते,—एतैः स्तोमैरसौ योग्यः स्तोतुमिति। किं तेषाम्? 'न 'विन्धे' न 'अस्य' सर्वैरपि "तैर्विन्दामि" "सुष्टुतिं" "समाप्तिं स्तुतेः" इत्यर्थः। यावन्त एव स्तुतय उपादीयन्ते, ताः सर्वा एवेन्द्रं प्राप्य न्यूना भवन्तीत्यभिप्रायः ॥ एवमत्र स्तोमसम्बन्धात् 'तुञ्जे' शब्दो दानपर्य्यायवचनः, तुञ्जतेश्च दानार्थस्य दर्शनात् ॥

"बर्हणा(८३)"—इति अनवगतम्। "परिवर्हणा"—इत्युपमर्गाध्याहारेणार्थप्रतीतिः। परिवर्हणा = परिवृढि, परिहिंसा वा। "अर्चा दिवे बृहते शूष्य१ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः। बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥"—इति (ऋ० मं० १, ४, १०, ३)। सव्यस्याङ्गिरसस्यार्षम्। जगती। ऐन्द्री। चतुर्थे पादे 'रथः, हि,

म:"—इति पदानि। हे स्तोतः! 'अर्च' प्रोच्चारय इन्द्राय 'दिवे' द्योतनवते 'बृहते' च महते, 'शूषं' धनसंयुक्तं बलकृतिसंयुक्तं वा वचः। किंलक्षणायेन्द्राय अर्च? इति,—'स्ववं यस्य' स्वमेव चलं धनं बलं वा यस्य:, न कदाचिदपि यः परकीयमाकाङ्क्षतीत्यभिप्रायः। किञ्च, यस्य 'धृषतः' धर्षयतः, प्रभून् 'धृषत्' एव धृष्टं 'मनः' भवति, तदर्थमर्चेति। किञ्च, येनेन्द्रेण 'श्रवस्कवाः' वृत्तकोपः, 'असुरः' मेघो वा। 'बर्हणा' परिबर्हणा परिहृदेन वधेन परिहिंसया वा 'पुरः' अर्वाक् 'हरिभ्यां' प्राप्तैनैव तावदश्वौ हरी रथे युक्तौ तमसुरं प्राप्नुतः। अथेन्द्रेण प्रोप्रास्तत्वाद् दूरपातित्वाच्च 'वृषभः' वर्षिता 'कृतः'। अथच तावत् 'रथो हि सः' रंहणो हि प्रोप्रः स मेघः। तथाहि,—येनेन्द्रेण पुरैव हरिभ्यां प्राप्तैः प्रहारैर्जर्जरीकृत्य वर्षिता कृतो मेघः, तमभ्यर्च। एवमत्र शब्दसारूप्यादसुरसम्बन्धाच्च "बर्हणा=परिबर्हणा"—इत्य पपद्यते॥३ (१८)।

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह। अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः॥ घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन्रसा गोरूध उद्धततरं भवत्युपोन्नद्धमिति वा स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते स योऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति भवति ह द्योतनवानपोहत्यपोहति शक्रस्ततनिषुं धर्मसन्तानादपेतमलङ्करिष्णुमयज्वानं तनूशुभ्रं

तनूशोभयितारं मघवा यः कवासखो यस्य कपूयाः सखायः । न्यविध्यदिलीबिशस्य दृढा विशृङ्गिणमभिनच्छुष्णमिन्द्रः । निरविध्यदिलाबिलशयस्य दृढानि व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः ॥ ४ (१८) ॥

"ततनुष्टि (८४)"—इति, अनवगतम् । "ततनिषु"—अथ स्यात् । "यो अस्मै घ्रं स०——०कवासख,"—इति (ऋ० सं० ४, २, ३, ३) । प्राजापत्यस्य सवरणस्यार्षम् । ऐन्द्री । जगती । 'य' 'अस्मै' इन्द्राय 'घ्रंसे' "अहनि" 'उत वा' "अपि वा" 'य' 'ऊधनि' "रात्रौ" 'सोम' 'सुनोति' अभिषुणोति, नित्यकालमेव य. सोमाभिषवे प्रयतते इत्यर्थ । तस्य किम् ? इति,-स एव निश्चयेन 'द्युमान्' "द्योतनवान्" 'भवति' । अथ पुन. इतो यो विपरीतो भवति, पूर्वैश्च पूर्वतनैश्च "धर्मसन्तानात्" अनुष्ठितात् "अपेतम्" तमस्र कर्मभिरित्येवं-वादिनम् "अलङ्करिष्णुम्" "अयज्वानम्" अयजनशीलम्, आत्ममण्डनपर वा, विषयोपभोगपरतया स्ववित्तं "ततनिषुम्" अनेकैः प्रकारै यो वित्तानि तनितुमिच्छति, तम, अयद्धानम् धर्मे । 'शक्र.' शक्तः इन्द्र, "अप जहति—अप जहति"—उपसर्गाभ्यासदर्शनात् जहतेरप्यभ्यास आदरार्थे क्रतः, पुन पुनरपोहति नाशयतीत्यर्थः । 'तनूशुभ्रम्' "शरीरशोभयितारम्" ततनुष्टेरेवैतद् विशेषणम् । यश्च अन्योऽपि 'कवासख' कपूयसखो भवति, तमप्यपोहति । 'मघवा' धनस्वामी इन्द्र, अवश्यभावो तस्य हि विनाश इत्यभिप्राय ॥ केचित्तु 'कवासख'शब्द 'तनुशुभ्र'विशेषणमेव वर्णयन्ति ।

इतरो विषयप्रधानोऽपि भूत्वा साधुसम्पर्कात् कदाचित् प्रपद्येत, इतरस्त्वसाधुसम्पर्कादत्यन्तनष्ट एवेत्यनेनाभिप्रायेण । एवमत्र 'ततनुष्टि'शब्देन 'विषयोपभोगप्रधान.' उच्यते, शब्दार्थाविरोधादित्युपपत्तिः ॥

"ग्रंसः—इति अहर्नाम" "ग्रस्यन्तेऽस्मिन् रसा." सूर्येण । "गोः 'ऊधः' उद्धततरम्"—इति शब्दमाहृत्यप्रसङ्गम्, तद्धि अन्येभ्योऽङ्गेभ्य उद्धततरं "भवति" । "उपोन्नद्धम्—इति वा" तद्धि विज्ञायते केनचिदुपलिप्य गोरुदरे नद्धमिति । "स्नेहानुप्रदानसामान्यात् रात्रिरप्यूध उच्यते" सापि ह्यवश्यायानोषधिवनस्पतिस्नेहकान् दधाति ॥

"इलीबिशस्य (८५)"इति, एतदेकपदमनवगतम् । "इलाबिलशयस्य"—इत्यवगमः । 'मेघ.' अभिधेयः, स हि इलाहेतोरुदकस्य आत्मीयानि निर्गमनबिलानि संरुध्य शेते, तस्यैव वा बिलेषु इलाहेतुरुदकं शेते इति इलीबिशः । "न्याविध्य०—०मिन्द्रः । यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ।"—इति (ऋ० सं० १, ३, २, २) । हिरण्यस्तूपस्यार्षम् । ऐन्द्री । त्रिष्टुप् । शौनकविंदधयोर्निष्केवल्ये शस्यते । 'न्याविध्यत्' "निरविध्यत्" निरताडयत्, 'इलीबिशस्य' "इलाबिलशयस्य" मेघस्य 'दृढा' "दृढानि" दुर्भेद्यानि उदकसंरोधकर्माणि स्थानानि । न च केवलमेतान्येव, किन्तर्हि ? 'विशृङ्गिणम् अभिनत्' शृङ्गिणं शिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः, 'शुष्णं' बलवन्तं मेघम्, 'इन्द्रः' एवं स्तूयमानः प्रत्यक्षीभूतः । प्रत्यक्षकृत उत्तरोऽर्धर्चः । हे 'मघवन्!' 'यावत्तरः' यावत्तमेतस्मिन् मेघेऽस्ति तावदेनं जहि । 'यावत्' च तव शत्रुहननसमर्थम् 'ओजः' बलमस्ति, या ते शक्तिः, तयैव 'वज्रेण' 'शत्रुं' शातयितव्यम् 'अवधीः'

जहीत्यर्थः । 'पृतन्युम्' पृतनामिच्छन्तम् । एवमत्र "इलौविशः=मेघ." मन्त्रारूप्यादर्थाविरोधाच्च ॥ ४ (१८) ॥

अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः । गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय अर्णांसीत्युदकनाम । अर्णांसीत्युदकनामान्यर्णांसीन्ति गम्यते ॥ अर्मिरन्नुपिक्रम्यर्न्यानामित्यपि निगमो भवति । विप्यितो विप्रासः । प्रारन्तो अस्य विप्रतस्य पर्यन्तियपि निगमो भवति ॥५(२०)॥

"कियेधा (८६)"—इति, अनवगतम् । "कियद्धा." "क्रममाणधा वा"—इत्यवगमः । कियदप्युदकमपरिमाणं धारयतीति कियद्धा मेघः । क्रममाणो वा धारयतीति क्रममाणधा मेघ एव ॥ "अस्मा इदु प्रभरा०—०चरध्यै"—इति (ऋ० मं० १, ४, २८, २) । नोधा नाम गौतमः, तस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । प्रातःसवने माध्यन्दिने च निष्केवल्ये शस्त्रे विनियुक्ता । हे इन्द्र ! एव इव', 'कियेधाः' "कियद्धाः" कियदप्युदकमपरिमाणं धारयति, क्रममाणो वा धारयति । 'अस्मै' त्व 'तूतुजान.' "त्वरमाणः" 'वज्र' 'प्रभर' । 'ईशानः' ईश्वरो यस्मात् त्वमस्माकं तस्मादेवमुच्यसे । किञ्च, प्रहृत्य वज्रं वज्रप्रहारसमूढस्यास्य मेघस्य 'गोर्न पर्व' गोरिव पर्वाणि 'विरद' विदारय, यथा गोविकर्त्ता गोः पर्वाणि 'विरदेत्'

विच्छिन्द्यात्। एवं त्वमप्येतं मेघमवध्यवधः 'विरद' विच्छिन्धि। कथञ्च पुनर्विरद? इति,—'तिरश्चा' वज्रेण तिर्य्यग्गामिना। केन पुनरर्थेन विरद? इति,—'इष्यन् पयांसि' उदकानीच्छन्। 'चरध्यै' "चरणाय" 'अपाम्' प्रजाभ्यो दातुम्। एवमस्मात् द्विशकलीकृतादापो निःसरिष्यन्तीत्यनेनार्थेन विरद॥ एवमत्र "कियेधाः=मेघः" शब्दसारूप्यादर्थाविरोधाच्च॥

"कियेधाः=इन्द्रः"—इत्येवमेके मन्यन्ते, स हि यदपि न ज्ञायते कियत्परिमाणमेतद् बलमिति, तदपि धारयति, क्रममाणो वा शत्रुबलं धारयतीति कियेधाः। एवं सति इयं योजना,—यस्मादीशानस्त्वं कियेधाश्च, तस्मात् प्रहर वज्रमिति॥

"भृमिः (८७)"—इति, अनवगतम्। 'भ्रमणम्'—इत्यवगमः। "भ्राम्यतेः"—इति निर्वचनम्। 'अग्निः'—अभिधेयः। "इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात्। आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम्॥"—इति (ऋ० सं० १, २, ३५, १)। हिरण्यस्तूपस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' 'इमां शरणिं' मरणलक्षणां हिंसाम्, इमां संसृतिं वा 'मीमृषः नः' मार्जयस्व नाशयस्व नः। कतमां शरणिम्? 'इमम् अध्वानम्' 'यम्' एतं संसाराध्वानम् 'अगाम' गतवन्तो वयम्, असुष्माल्लोकादिमं लोकम्। अस्माद् एतां संसारहिंसाम्, एतां वा संसारसृतिम्, एनम् मार्जनं अजीभवन्तमस्माकं मार्जय त्वम्। कस्मात् पुनरेवमुच्यसे? इति,—यस्मात् 'आपिः' त्वमस्माकं प्राप्तः, अथवा व्यापयिता अस्यास्य जगतो महिम्ना। 'पिता' च रक्षिता, 'सोम्यानाम्' सोमसम्पादिनां मनुष्याणाम्। 'प्रमतिः' च प्रकृष्टमतिः। 'भृमिः' च, त्वमेव संसारे

भ्रामयिता पश्चाग्निविद्योक्तेन प्रक्रमेण, त्वदधीन एव संसारो मोक्षश्च। 'ऋचिकित्' च, दर्शनकर्त्तासि त्वम्, त्वदधीनमेव दर्शनं 'मर्त्त्यानां' मनुष्याणाम्। सर्वविज्ञानप्रकाशेनानुगृह्णाऽस्मान् मोचयस्वास्मात् संसारादित्यभिप्रायः। देवयानेनैव पथा गमय, मा पितृयानेनेति॥ एवमत्र "ऋमिः=अग्निः" अर्थाविरोधात् विज्ञेयते॥

"विष्पितः(८८)"—इति, अनवगतम्। "विप्रासः"—इत्यवगमः। विस्तीर्णं इतश्चेतश्च, सर्वतो यः प्रासः, स विष्पितः। "इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति। प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन्॥"—इति (ऋ० सं० ५, ५, २, १)। "यदद्य सूर्यं ब्रवोऽनागाः"—इत्येतस्मिन् सूक्ते, अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः,—अन्याः सर्वा मैत्रावरुण्य इति। 'इमे'—इति द्वयोरेव मित्रावरुणयोः पूजार्थे बहुवचनम्। अर्यमा वा तृतीयः स्यात्, असावपि हि अस्मिन् सूक्ते श्रूयते। शौनकाभिप्रायस्त्वेवं सति परीक्ष्यः। 'इमे' मित्रावरुणार्यमाणः 'दिवः' एत्य 'अनिमिषाः' आदरवन्तः 'पृथिव्याः' पृथिवीलोकादित्यर्थः। 'चिकित्वांसः' सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः, 'अचेतसम्' अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं 'नयन्ति'। यत एवमतस्तानहं ब्रवीमि,—'प्रव्राजे' प्रकृष्टे एतस्मिन् व्रजने मरणाख्ये मृत्युकाले उपस्थिते, यदि 'गाध' संसारगाहनसमर्थं कर्म, विज्ञानं वा 'अस्ति नः' अस्त्यस्माकम्, ततः 'अस्य' 'विष्पितस्य' "विप्रासस्य" संसाराध्वनो नद्या इव 'पारं पर्षन्' पारं यन्त्वित्यर्थः॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "विष्पितः=विप्रासः," संसाराध्वा—इत्युपपद्यते॥ ५ (२०)॥

तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना।
त्वष्टा पोषाय विष्यतु राये नाभानो अस्मयुः॥
तन्नस्तूर्णापि महत्सर्वमाप्तमात्मना त्वष्टा धनस्य पोषाय विष्यत्विति अस्मयुरस्मान् कामयमानो रास्निनो रास्नौ रमतेर्वा रंसतेर्वा रास्निन-स्यायोरित्यपि निगमो भवत्यद्भुतिः प्रसाधन-कर्मा अा वं ऋञ्जसे ऊर्जां व्युष्टिष्वित्यपि निगमो भवति ऋजुरित्यर्थस्य भवति। ऋजुनीती नो वरुण इत्यपि निगमो भवति। मतद्वस्य मासुवस्य। हरी इन्द्र मतद्वस्य अभि स्व-रेत्यपि निगमो भवति॥ ६ (२१)॥

"तुरीपम्(८८)"—इति, अनवगतम्। "तूर्णापि"—इत्य-वगमः। 'उदकम्'—अभिधेयम्, तद्धि तूर्णमाप्नोति। "तन्नस्तु-रीपु ०——० नाभानो अस्मयुः॥"—इति (ऋ० म० २, २, ११, ४)। दीर्घतमस आर्षम्। त्वाष्ट्री। अनुष्टुप्। आप्री सूक्तं। 'तत् नः तुरीपम्' तदस्माकं तुरीपमुदकम्, 'अद्भुतं' च "महत्" इत्यर्थः। "अद्भुते, वर्हिष्ठ"—इति महन्नामसु पठितम्। 'पुरुवारं' च बहुदेशान्तरमाहणोत्युदकम्, 'पुरु-त्मना' बह्वात्मना। यदेवंलक्षणमुदकम्, तत् 'नः' अस्माकं 'नाभा' नाभौ मध्ये 'त्वष्टा' 'विष्यतु' विमुञ्चतु वर्षभावेन। 'अस्मयु' अस्मान् अनुगृह्णीत "कामयमानः", 'राये पोषाय' "धनस्य पोषाय" इत्यर्थः, वर्षे हि सति पशवः पुष्यन्ति।

अथवा 'नाभान'—इति त्वष्टुरेव विशेषणं स्यात्, 'नाभान' न भदीप्यमान, किन्तर्हि ? दीप्यमान एव विद्युत्। एव मत्र माध्यमिकस्त्वष्टेति विद्युत्त्वेन सम्बन्धात्, "तुरीपम = उदकम्"—इत्युपपद्यते ॥

"रास्पिनः (८०)"—इति, अनवगतम्। 'रापी'—इति वा स्यात्, 'रासी'—इति वा, "रपतेः वा" शब्दार्थस्य, "रसते वा" शब्दार्थस्यैव। रपणशीलो वा रमनशीलो वा यः, स 'रासी'। "उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै। प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्या यो ॥"—इति (ऋ० सं० २, १, १, ४)। कक्षीवत आर्षम्। त्रिष्टुप्। वैश्वदेवे सूक्ते। 'उत त्यौ' अपि तौ, अश्विनौ। 'मे' मम 'यशसा' हविर्लक्षणेन धनेन तर्प्यमाणौ, 'श्वेतनायै' उषस काले प्राप्ते 'व्यन्ता पान्ता' वीताम् भक्षयेतां पुरोडाशम्, पिबेतां सोमम्। यतो ब्रवीमि,—हे 'औशिज' मेधाविन ! ऋत्विज ! 'हुवध्यै' आह्वयस्व तावश्विनौ। किञ्च, 'प्र' ब्रवीमि 'व'—'कृणुध्वम्' 'अपां नपातम्' अपि, एतस्मिन् कर्मणि भागिनम्। किञ्च, 'प्रमातरो' द्यावापृथिव्यावपि सर्वभूतनिर्मात्री कृणुतैव, एतस्मिन् कर्मणि भागिन्याविति एतच्च वो ब्रवीमि। क च पुनरर्थं पुरस्कृत्य एतत् कुरुध्वम् ? इति,—'रास्पिनस्य आयो' रपणशीलस्य वा रमनशीलस्य वा शब्दकारिणो वर्षभूतस्योदकस्य प्राप्त्यर्थम्, अथवा स्तोतुः पुत्रस्य प्राप्त्यर्थम्। "आयव"—इति मनुष्यनाम ॥ एदमत्र 'रास्पिन'-शब्देन उदकं स्तोता वाभिधीयते, शब्दसारूप्याद र्थाविरोधाच ॥

"ऋञ्जति (८१)" "प्रसाधनकर्मा"। "भाऋजीक"—इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते।

केचित्त्वत्र एत अेषमधीयते। "दूत वो विश्ववेदसं हव्यवाहममर्त्यम्। यजिष्ठमृञ्जसे गिरा॥"—इति (ऋ० सं० ३, ५, ८, १)। वामदेवस्यार्षम्। गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयो शस्यते। 'व'—इत्येतस्य 'त्वम्'—इति विपरिणाम। हे यजमान। त्वं 'दूतम्' विश्ववेदसम्' सर्वप्रज्ञानम्, 'हव्यवाहम्' हविषा वोढारम्, 'अमर्त्यम्' अमरणधर्माणम्, 'यजिष्ठम्' यष्टृतमम् 'ऋञ्जसे' प्रसाधयसि 'गिरा' स्तुत्येत्यर्थः॥ एवमत्र "ऋञ्जति प्रसाधनकर्मा" दूतसम्बन्धात्॥

"ऋजु'(८२)"—"इत्यपि" "अस्य" एव ऋञ्जतेः "भवति"। "ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः॥"—इति (ऋ० सं० १, ६, १०,१)। गोतमस्यार्षम्। वैश्वदेवसूक्ते। गायत्री। गवामयनस्य द्वितीयेऽहनि शस्यते मैत्रावरुणस्य शस्त्रे। 'ऋजुनीती' ऋजुनयनः, ऋजुप्रज्ञो वा 'वरुण' 'न' अस्मान् इतो लोकादमु लोकं कर्मफलप्राप्त्यर्थं 'नयतु'। 'मित्र' च 'विद्वान्' नयतु। 'अर्यमा' 'देवैः' 'सजोषाः' सहप्रीयमाणः नयतु॥ एवमत्र 'ऋजु' शब्देन प्रसिद्ध नयनम्, प्रसिद्धा वा मतिरुच्यते॥

"प्रतद्वसू(८३)"—इति, अनवगतम्। "प्राप्तवसू"—इत्यवगमः। 'अश्वौ' अभिधेयौ। "इह त्या सधमाद्या युजानः सोमपीतये। हरी इन्द्र प्रतद्वसू अभिस्वर॥"—इति (ऋ० सं० ६, १, १२, २)। नारदस्येयमार्षम्। उष्णिक्। महाव्रते चौष्णिहो तृचाशीति, तस्यां शस्यते। हे 'इन्द्र।' 'इह' कर्मणि 'त्या हरी' तावश्वौ 'प्रतद्वसू' "प्राप्तवसू" प्राप्तधनौ, ययोर्हि ऋजीषं धानाख्यं धनम्, स हि ताभ्यां सह भागः प्राप्तः। 'सधमाद्या' सहमदनौ 'युजानः' युञ्जन् रथे, ततः

'सोमपीतये' सोमपानार्थम् 'अभिस्वर' अभ्यान् प्रयाग इव ॥ एवमत्र "हरी"-इत्यनेन सम्बन्धात् "प्रतद्वसू=प्राप्तवसू" अश्वौ —इत्युपपद्यते ॥ ६ (२१) ॥

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् । ऋतस्य योगे विष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥ प्रहिणुत नोऽध्वरं देवयज्यायै प्रहिणुत ब्रह्म धनस्य सननाय ऋतस्य योगे यज्ञस्य योगे याज्ञे शकट इति वा शकटं शकृदितं भवति शनकैस्तकतीति वा शब्देन तकतीति वा । श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्यो भवतास्मभ्यमापः चोष्कूयमाण इन्द्र भूरि वामम् । ददिन्द्र बहु वननीयम् । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ व्युदस्यत्येधमानानसुन्वतः सुन्वतोऽभ्यादधात्युभयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तं सुसमुर्यमित्यर्थः । उप प्रागात्सुमन्मे धायि मन्म । उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञे नेत्याश्वमेधिको मन्त्रो दिविष्टिषु दिव एषणेषु ॥ ७ ॥

"हिनोत(४४)"—इति, अनवगतम् । "प्रहिणुत"—इत्य-

वगमः। "हिनोता नो॰—॰भूतनाश्चभ्यं मापः।"—इति (ऋ॰ सं॰, ७, ७, २६, १)। कवषस्यैवमार्षम्। अपोनप्त्रीयाऽऽज्य ग्रस्यते। "हे ऋत्विजः। 'हिनोत' "प्रहिणुत"—प्रयमयत, प्रोत्सर्पयत। एतम् 'अध्वरं' यज्ञम् 'देवयज्या' "देवयज्यायै" देवयजनार्थम्। किञ्च, प्रहिणुत 'ब्रह्म' स्तुत्याख्यं यथायाक्र इष्टकमिव। 'सनये' लब्धये 'नः' अस्माकं धनानाम्। किञ्च, 'ऋतस्य' "यज्ञस्य" 'योगे' अयोगे यदेतत् 'ऊधः' इव सोम-पूर्णम् अधिषवणचर्म वर्त्तते, अथवा योगसम्बन्धाच्छकट योग, तद्धि तत्र युज्यते, तेनाधिषवणचर्मैव ऊधसोऽधस्तादवस्थि-तेनेति मन्यमानो भाष्यकारो ब्रवीति,—"यज्ञे शकटे—इति वा" यदेतद् यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म, एतत् 'विष्यध्वम्' विमुञ्चध्वम्। यद्वचनसस्थात्यादिषु यो निषेकः सोमस्य, एतद् विमोचनम् अधिषवणचर्मोधस, तद्धि सोमे उक्षिप्यमाने ऋधीभवति, यथेतरद्धोरुधो दुह्यमानायां गवि। एवमृत्विज उक्त्वा अधुना ता एव सोमसम्मिश्रा अपो ब्रवीति, —यूयमपि हे 'आपः!' एभिः ऋत्विग्भिः उक्षिप्यमाना, 'श्रुष्टी-वरीः' "सुखवत्यः" 'भूतन' "भवत" 'अस्मभ्यम्'। एवमत्र 'प्र'शब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण 'प्र'-शब्दोऽध्याहृतः, 'अध्वरम्'—इत्यनेन सम्बन्धाद्धिनोतेर्मत्वर्थत्व-मुपपद्यते।"

"प्रहिणुत"—इति 'आपः' उच्यन्त इति केचित्।

"शकटम्" "शकृदित भवति"। यदा अनड्वान् युक्तः, शकृत् मुञ्चति, तेनैतमिति। "शनकैस्तकतीति वा" तद्धि भाराक्रान्तं शनकैर्गच्छति "शब्देन तकतीति वा" तद्धि शब्देन गच्छति॥

"गौल्य समाधः (८१)" "गौल्यते (८६)"—इति, इति

मनवगवे। मातुरेवायमप्रतीत.। एते सुबन्ततिङन्ते, नद-नयो पूर्वं 'सुबन्तम्' उत्तरं तिङन्तम्। दानार्थे वर्त्तमानस्य "चोष्कूयमाण इन्द्र भूरि वामम्"—इति (ऋ० सं० १, ३, १, ३)। निगमसुक्का "ददिन्द्र"—इति हि पूर्वस्य निर्वचनं चकार भाष्यकार ॥ व्युदसने वर्त्तमानस्योत्तरस्य "चोष्कूयते विश्व इन्द्रो मनुर्ष्यान्"—इति (ऋ० सं० ४, ७, २२, १)। निगममुक्का 'चोष्कूयते'—इत्यस्य शब्दस्य "व्युदस्यति" —इति निर्वचनमाह भाष्यकार ॥ उभयत्रापि तु चोष्कूयति शब्दस्यकरीतहृत्तेन द्रष्टव्य ॥

"चोष्कूयमाण इन्द्र भूरि वामम्"—इत्यस्य शेष,—"नि सर्वसेन इषुधीरसक्त समर्य्यो गा अजति यस्य वष्टि। चोष्कूयमाण इन्द्र भूरि वाम मा पणिर्भूरस्मदधि प्रवृद्ध ॥"—इति (ऋ० सं० १, ३, १, ३)। हिरण्यस्तूपस्यार्षम्। ऐन्द्री। त्रिष्टुप्। ऋग्रिहलभिदोनिष्क्वल्ये गस्यते। 'न्यसक्त' न्यबध्नात् 'इषुधीन्' तूणान्, पृष्ठे रथस्य, 'सर्वसेन' समग्रसेन इन्द्र। एव तूणान् सनह्य वद्ध्वा, गोधाङ्गुलित्रवान् भूत्वा "समर्य्यो गा अजति" इषुभिर्येधान् छिन्दन् 'सम् अजति' समस्ता क्षिपति, 'गा' अप, 'अर्य्य' ईश्वर इन्द्र। कस्मै समजति? यस्य वष्टि। यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे कामयते, क्षेमम्, तस्यैव क्षिपति, वर्षं प्रवर्त्तयत इत्यर्थ.। एव स्तूयमान स इन्द्र प्रत्यक्षीभूत, यत प्रत्यक्षवत उत्तरोऽर्द्धर्चं। हे इन्द्र। चोष्कूयमाणस्त्व ददत् उदकं जनेभ्य 'भूरि' "बहु" 'वाम' "वननीय" ग्रम्यसम्पत्करम, शृणु यत् कुरुष्व। 'मा पणि, भू' मा वणिक्शीलोऽस्मान् प्रति मन्दोदकदाता क्रपणो भू। किन्तर्हि? प्रहृष्टोदक उन्नतचित्त., अस्मान् प्रति बहूदक दाता भव। एवमत्र 'मा पणिर्भूर्भूरि वामम्'—इत्येभि:

पदे. सम्बन्धात् 'चोष्कूयमाणः'—इत्यस्य "ददत्"—इत्येवमर्थं उपपद्यते ॥

- एवमत्र दानार्थः 'चोष्कूयति.' "एधमानद्विळुभयस्य"—इत्यत्र व्युदसनार्थः । अस्य शेषः,—"शुष्मे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥"—इति (ऋ० सं० ४, ७, २३, १)। गर्गस्य बार्हस्पत्यस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । 'दमायन्'—इत्येकं पदम् । 'शुष्मे वीरः' अत्रौपमिकं वीरमिन्द्रम्, 'उग्रम्' उद्गूर्णवन्तम् । आदरार्थो द्विरभ्यासः आदरं चार्थभूयस्त्वम्, "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति । अथवा 'उग्र' शत्रुं प्रति उद्गूर्णवन्तम् । 'दमायन्' दमयितारं शत्रूणाम् । कथं पुनरन्यौपम् ? इति,—'अन्यमन्यम्' देवताविशेषम्, 'अतिनेनीयमानः' अतिशयेन स्वाभीष्टेन कामेन तुष्टूषया 'अमुष्मात् सुतात् कामान् प्राप्नुथ'—इत्येवं पुनः पुनः नयमानः । किम्पुनर्लक्षणं वीरमन्यौपम् ? इति,—'एधमानद्विट्' "एधमानान्" दीप्यमानानपि "द्वेष्टि" "असुन्वतः" सोमाभिषवमकुर्वाणान् यजन् इत्यर्थः । अत एव वैपरीत्येन "सुन्वतोऽभ्यादधाति"—इत्यध्याजहार भाष्यकारः । क्व पुनरादधाति ? 'सुकृतस्य लोके'—इति सामर्थ्याद्गम्यते । ये हि सुन्वते, त इष्टा इन्द्रस्य, ये न सुन्वन्ति, ते द्वेष्याः, इत्यभिप्रायः । 'उभयस्य राजा' "दिव्यस्य च" धनस्येश्वरः "पार्थिवस्य च" मानुषस्य च । किञ्च, 'चोष्कूयते' व्युदस्यति,—यो 'विशः' एधमानानसुन्वत इतरांश्च सुन्वतः 'मनुष्यान्' अभ्यादधाति सुकृतस्य लोके इति ॥ एवमत्र 'एधमानद्विट्'—इत्यनेन सम्बन्धात् "चोष्कूयति, व्युदसनार्थः"—इति उपपद्यते ॥

"सुमत् (८७)"—इति, अनवगतम् । "स्वयम्"—इत्यवगमः । "उप प्रागात् सुमन्मे ऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥"—इति (ऋ० स० २, ३, ८, २) । दीर्घतमस आर्षम् । त्रिष्टुप् । अश्वदेवताका । अश्वमेधेऽश्वस्तोमीयेन षोडशाहुतयो हूयन्ते, तत्रेयं विनियुक्ता । 'उपप्रागात्' "उपैतु" "मा" प्रकर्षेण एतु । 'सुमत्' "स्वयम्" एव । 'यत्' यदनेन "यज्ञेन" प्राप्नुयाम् "इति" । 'मे' मम 'मन.' अपि "अध्यायि" अनेकविधान् सङ्कल्पविकल्पान् चकार, तत्तदृष्टमेव, अह मनसा ध्यातवानित्यर्थ. । किम्पुनस्तत् ? 'मन्म' मननीयमर्थजातम् । किञ्च, अयमपि 'वीतपृष्ठः' कान्तपृष्ठोऽश्वः 'उपप्रागात्' उपगच्छतु । 'देवानाम्' 'आशा.' यम् एत वयं देवाना 'पुष्टे' पोषणाय 'चकृम' कृतवन्तः । 'सुबन्धुम्' शोभनयूपबन्धनम् । तमेतमुपगच्छन्तम् 'अनुमदन्ति' अनुमन्यन्ताम् 'विप्राः ऋषय.' मेधाविनः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'सुमत्'—इत्यस्य "स्वयम्"—इत्येष विपरिणाम उपपद्यते ॥

"आश्वमेधिकोऽयं मन्त्र."—इति प्रकरणोपप्रदर्शनार्थमाह, मन्त्रार्थे निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमिति, एतदेनेन प्रदर्शितं भवति ॥

"दिविष्टिषु (८८)"—इति, अनवगतम् । "दिव एषणेषु"—इत्यवगमः । याभिः क्रियाभिर्दिवमिच्छन्ति गन्तुं ता दिविष्टयः ॥ ७ ॥

**स्यूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।**

**स्यूरः समाश्रितमात्रो महान् भवत्यणुरनु स्यवीयांसमुपसर्गो लुप्तनामकरणो यथा सम्प्रति .**

कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा । कुरुः कृन्ततेः क्रूरमित्यप्यस्य भवति कुलं कुष्णातेर्विकुषितं भवति दूतो व्याख्यातो जिन्वतिः प्रीतिकर्मा । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इत्यपि निगमो भवति ॥८ (२२)॥

इति षष्ठाध्यायस्य चतुर्थः पादः ॥ ६, ४ ॥

"स्थूरं०——०दिविष्टिषु । राधस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥"—इति (ऋ० सं० ५, ७, ३३, ४)। मेधातिथेरार्षम्। बृहती। दानमनया प्रशस्यते। 'स्थूरं' स्थूलं महत्, 'राधः' धनम्, 'शताश्वं' बह्वश्वसंयुक्तम्। 'कुरुङ्गस्य' 'राज्ञः' 'त्वेषस्य' महतः, 'सुभगस्य' शोभनस्य 'दिविष्टिषु' क्रियासु दक्षिणाभूतं सर्वेष्वपि 'तुर्वशेषु' मनुष्येषु याः रातयः दत्तयः, तासु च, एतदेव स्थूलमित्येवं वयम् 'अमन्महि' मन्यामहे इत्यर्थः॥ एवमत्र 'दिविष्टि'शब्देन 'क्रिया' उच्यते, ताभिर्हि द्युलोकमिष्यते गन्तुम्॥

"स्थूरः, समाश्रितमात्रो महान् भवति" समस्ता हि तत्र मात्रा आश्रिता भवन्ति। स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते,—"अणीयांसमनु" यो वर्त्तते, सः "अणुः"—इत्युच्यते। अन्वित्ययम् "उपसर्गः" "लुप्तनामकरणः" येन प्रत्ययेन न्याय्यमितथाम स्यात्, सोऽत्र लुप्तो न श्रूयत इत्यर्थः। कथं लुप्तः? इति,—"यथा सम्प्रति"—इति। अस्मिन्नामकरणलोपेन प्रयोगसिद्धिः, साम्प्रतम्—इति हि न्याय्यम्, तथापि सम्प्रतीत्येवमपि वर्त्तमानकालविषयप्रयोगः प्रसिद्धः, एवमिहाप्यनुसन्धेयम्। "कुरुङ्गो नाम राजा बभूव"। "कुरुगमनाद्वा" कुरवः,

स हि कुरून् प्रति युवत्वेन गतो जेतुं वा। "कुलगमनाद्वा" शत्रुकुलानि हि स नित्यमेव याति विजेतुम्। "कुरुः कृन्ततेः" स हि शत्रून् कृन्तति। "क्रूरम्"—"इति" एतत् "अपि" "अस्य" एव कृन्ततेः "भवति"। "कुर्च कुश्चतेः (क्रा० प०)" तर्हि "विकुञ्चितम्" इव "भवति" विस्तीर्णत्वात्॥

"दूतः (९९)"—इति, अनवगतम्। "जूतः"—इति न्याय्यम्। "जवतेर्वा द्रवतेर्वा"—इति व्याख्यातम्॥

"जिन्वतिः (१००)" "प्रीतिकर्मा"—इति अर्थवचनम्, अप्रतीतार्थत्वात्। "समानमेतत्"—इत्यत्र उपरिष्टाद् व्याख्यास्यामो द्वादशेऽध्याये॥ ८ (२३)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य) चतुर्थः पादः॥ ६, ४॥

---

पञ्चमः पादः॥

अमचोऽमावो महान् भवत्यभ्यमितो वा। महान् अमत्रो वृजने विरप्शीत्यपि निगमो भवति। स्तवे वज्र्यृचीषमः। स्तूयते वज्र्यृचा समोऽनर्शरातिमनश्लीलदानमश्लीलं पापकमश्रिमद्विषमम्। अनर्शरातिं वसुदामुपस्तुहीत्यपि निगमो भवत्यनर्वाप्रत्यृतोऽन्यस्मिन्। अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः। अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा

बृहस्पतिं वर्द्धय नव्यमर्कैरर्चनीयैः स्तोमैरमामि सामिप्रतिषिद्धं सामि स्तुतैः। असाम्योजो बिभृथा सुदानवः। असुसमाप्तं बलं बिभृत कल्याणदानाः॥ १ (२३)॥

"अमवः (१०१)"—इति, अनवगतम्। "अमात्रः"—इति ग्रन्थसमाधिः। "महान् भवति"—इत्यर्थवचनम्, यो हि महान् भवति, न तस्य मात्राः प्रमातुं शक्यन्ते, अतोऽसावमत्र इत्युच्यते। "अभ्यमितो वा" स्यात्, अनभिहिंसितः केनचित्। "महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृषण्वोजः। नाह विव्याच पृथिवी चु नैनं यत् सोमासो हर्य्यश्वममन्दन्॥"—इति (ऋ॰ स॰ ३, २, १८, ४)। विश्वामित्रस्यार्षम्। त्रिष्टुप्। ऐन्द्री। एतस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवने अच्छावाकस्य शस्त्रे सम्पातं नाम सूक्तम्, तत्रैव विनियुक्ता। 'महान्' प्रभावतः। 'अमत्रः' च अपरिमाणमात्रः, 'इन्द्रः' 'वृजने' संग्रामे 'विरप्शी' विरावणशीलः, 'उग्रम्' उद्‌गूर्णम् अभ्युद्यतम्, 'शवः' शवबलम् 'पत्यते' पातयते। 'धृषण्वोज' धर्षयितृ यस्य ओजः, बलम्, तत् 'पत्यते'। किञ्च, 'नाह विव्याच' 'नैनं' व्याप्नोति 'पृथिवी' नापि द्यौः, उपमानत्वेन। कदा पुनरेवं भवति? 'यत्' यदा 'सोमासः' सोमाः 'हर्य्यश्वम्' इन्द्रम् 'अमन्दन्' अतर्पयन्नित्यर्थः। एवमत्र 'शवः' 'पत्यते' 'वृजने'—इत्यनेन सम्बन्धात् "अमात्रः=महान्"—इत्युपपद्यते।

"ऋचीषमः (१०२)"—इति, अनवगतम्। ईकारोऽत्रानवगतः। "ऋचा समः"—इत्यवगम। "इह श्रुत इन्द्रो युक्ते

भवत आगलना धमनीनामित्यत्रार्थः ॥२ (२४)॥

'गल्दया (१०६)—इति, अनवगतम्। 'गलितधानी स्यात्' गलित हि तस्या धीयते। "धमनिर्भवति"—इत्यभिधेयवचनम्, नाडीत्यर्थ। "मा त्वा सोमस्य०—०न याचिषत्॥"—इति (ऋ० स ५, ७, १२, ५)। मेधातिथेरार्षम्। ऐन्द्री। बृहती। महाव्रते बृहतीसहस्रे विनियुक्ता। हे इन्द्र। 'मा चुक्रुध त्वा' मा क्रोधयेयम् 'अह' 'सोमस्य' 'गल्दया' "गालनेन" धमनेन, पूरणेन सोमस्य 'सदा' नित्य कालमपि 'याचन्' 'गिरा' गीत्वा स्तुत्वा च 'सवनेषु' यज्ञेषु। कायस्व पुनर्मा चुक्रुधम्? इति। 'भूर्णि न' 'मृगम्' इव। भ्रमणशीलो भूर्णि। कः पुनरसौ? व्याघ्रो वा सिंहो वा, स हि भ्रमणशीलो विभर्त्ति च शृगालादीन्। तेनेन्द्र उपमीयते। यथा शृगालादयो लाङ्गूललालनादिनोपचारेणोपसर्पमाण' त न क्रोधयन्त्येवमह सोमसम्प्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुध भवन्तमिति। अथ मतम्,— यदि मम क्रोधात् बिभेषि, माऽस्मान् याचेथा इति। "क ईशान न याचिषत्" को हि नाम सोऽस्ति लोके, य ईशानमीश्वर न "याचिष्यते"? न ह्ययाचता वृत्तिः सिध्यति॥ एवमत्रेन्द्रस्य या 'गलना' धमनि, यया सोम आगल्यते सा, तेनैव आगलनेन उपलक्ष्यमाणा "गल्दा"—इत्युच्यते, न ह्येवमर्थविरोधोऽस्ति।

"गल्दा धमनिर्भवति"—इत्यस्य भाष्यकारवाक्यस्य मन्त्रे नात्र धमनिर्लिङ्ग विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यदुदाहरण ब्रवीति,—"आ त्वा विशन्त्विन्दव०"—इति। हे इन्द्र! 'आविशन्तु' 'त्वा' त्वाम् 'इन्दव.' सोमा.। कथम् पुनराविशन्तु त्वामिन्दव.? 'आगल्दा धमनीनाम्' या "आग-

लना" धमनय, याभिरनुप्रविष्टा. सन्तो नव मदमुत्पादयन्ति, मधोवाहिन्यो या, ताभिराविशन्तु। शेषो मन्त्र ॥ एवमिह 'धमनी'शब्दसहयोगो 'गल्दा'शब्द इति कृत्वा "आगल्दा—धमनि"—इति उपपद्यते ॥

"नानाविभक्तीत्येते" पदे "भवत"—'गल्दया' 'गल्दा' —इति, न तु नानार्थे। आह,—कोऽभिप्राय: ? इति, उच्यते, —पूर्वस्मिन् मन्त्रे यद्यपि धमनिशब्दो नास्ति, तथापि निगमे 'गल्दा'शब्देन धमनिरेवोच्यते। तत्र "गल्दा धमनीनाम्" —इत्येतदेव ज्ञापकमित्यभिप्राय। 'गल्दया'—इति तृतीयान्तम्, 'गल्दा'—इति प्रथमाबहुवचनान्तम्। एतदनयो र्नानाविभक्तित्वम् ॥ २ (२४) ॥

न प्रापासो मनामहे नारायासो न जल्हवः। न पापा मन्यामहे नाधना न ज्वलनेन ह्रीना अस्त्यस्मासु ब्रह्मचर्य्यमध्ययनं तपो दानकर्मेत्यृषिरवोचद्व बकुरो भास्करो भयङ्करो भासमानो द्रवतीति वा ॥ २ (२५) ॥

"अल्हव: (१००)"—इति, अनवगतम्। "ज्वलनह्रीना:" —इत्यवगम। "न प्रापासो मनामहे नारायासो न जल्हव। यदिन्न्विन्द्र वृषण सचा सुते सखाय कृणवामहै।" —इति (ऋ० स० ६, ४, ३७, ६)। भर्गो नाम प्रगाथपुत्र तस्येयमार्षम्। ऐन्द्री। बृहती। तस्यामेव सयाशीष्या विनियुक्ता। 'न' वय 'पापास' "पापा" इत्येव 'मनामह' "मन्यामहे"। किङ्कारणम् ? अस्त्यस्मास्वपापत्वे हेतु,— 'ब्रह्मचर्य्यम्, अध्ययनम्, तप, दानकर्म' च। अत्र मतम्,—

एतैरपि युक्तो यो निर्धनः, स पाप एवेति ? तच्च न । किङ्कारणम् ? 'न अरायासः' न वयमधनाः । अथापि स्यादनवत्वेऽपि सति अनाहिताग्नित्वात् ज्वलनहीनत्वेन पापवत्त्वमिति ? तदपि न । किङ्कारणम् ? 'न जलहवः' न वयं "ज्वलनहीनाः" किन्तर्हि ? आहिताग्नयो वयम् । तदेतदध्ययनाद्यपापत्वहेतुभूतं सर्वमस्मास्वस्ति । किञ्च, 'यदिमिन्द्रं' यस्माद् वयम् इन्द्रं 'वृषणं' वर्षितारम्, एतस्मिन् यज्ञकर्मणि 'सखायं' सहभूतस्य सोमपानस्य व्यापयितारम्, अमीभिः सह मया सोमः पीत इत्येव वक्तारं 'कृणवामहै' । तस्मात् न वयं पापाः, नापि वयमरायासः, नापि जलहवः,—इत्येवमात्मानं मन्यामहे, न हि पापानामधनानामनाहिताग्नीनां च इन्द्रः सखा भवतीत्यभिप्रायः । एवमत्र "जलहव = ज्वलनहीना." शब्दसारूप्यादर्थाविरोधाच्च ॥

"बकुरः (१०८)"—इति, अनवगतम् । "भास्करः, भयङ्करः, भासद्‌वणो वा"—इति शब्दसमाधय. । २ (२५) ॥

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा । अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं भवति विकर्त्तनाल्लाङ्गलं लङ्गतेर्लाङ्गूलवद्वा लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वान्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ दस्युं बकुरेण ज्योतिषा वोदकेन वार्य ईश्वरपुत्रो वैकनाटाः खलु कुसीदिनो भवन्ति द्विगु-

णकारिणौ वा द्विगुणदायिनौ वा द्विगुणं कामयन्त इति वा। इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि। इन्द्रो यः सर्वान् बेकनाटानहर्दृशः सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति वाभिभवति कर्मणा पणींश्च वणिजः ॥ ३ (२६) ॥

"यवं वृकेणाश्विना०—०रार्य्याय ॥"—इति (ऋ० सं० १, ८, १७, १)। कक्षीवत आर्षम्। आश्विनी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'यव' यवादि धान्यं 'वृकेण' लाङ्गलेन। 'वपन्ता' "वपन्तौ" युवाम् 'अश्विना' हे "अश्विनौ।" तत्कृतौ, यतःकृते मन्त्रानुग्रहे सति वर्षादौ लाङ्गलकर्मणः फलसम्पद् भवतीत्यतः तावेवाश्विनौ वपन्तावित्युच्यते। 'इषम्' "अन्नम्" 'दुहन्ता' "दुहन्तौ" प्रपूरयन्तौ 'मनुषाय' "मनुष्याय"। 'दस्रौ' शत्रूणां दासयितारौ दमयितारौ वा, कर्मणा सस्यादीनां कारयितारौ वा वर्षाद्यनुग्रहेण, एतावेवंविधं कर्म कारयन्तौ कुर्वाणौ वा। 'अभिदस्युम्' दासयितारमनाकाल दुर्भिक्षं 'धमन्ता' धमन्तौ विनाशयन्तौ, कृत्स्नं जगदभिपुष्यन्तौ युवाम्। केन पुनरभिधमन्तौ? इति,—'बकुरेण' जलसमूहेन ज्योतिःसमूहेन, च, मध्यस्थानो ह्युदकसमूहेन, द्युस्थानो ज्योतिषा, शस्यमनुग्रह्णाति, ततो दुर्भिक्षं ध्वस्यते जगच्च पुष्यति। किञ्च, युवामेव 'उरुज्योतिः चक्रथुः' विस्तीर्णमविकलं चक्षुः चक्रथुः। 'आर्य्याय' "ईश्वरपुत्राय" ऋज्राश्वाय, स हि युवाभ्यामन्धीभूतः चक्षुमान् कृत इत्यभिप्रायः। एवमत्र ज्योतिःसमूह

उदकस्मूइव 'वकुर' शब्देनोच्यते, मन्त्रार्थाविरोधात्। "ओ तिषा वोदकेन वा"—इति भाष्यपाठः॥

"वेकनाटान् (१०८)"—इति, अनवगतम्। "द्विगुणका-रिणो वा" "द्विगुणदायिनो वा" 'द्विगुणकामिनो वा'—इति शब्दसमाधय। "इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि। कद्दू मघोरद्द्युत्ता अस्य तविषी कद्दु हत्र्नो अस्तृतम्॥"—इति (ऋ० सं० ६, ४, ४८, ५)। प्रागाथ कलिर्नाम, तस्यार्षम्। ऐन्द्री। बृहती। महाव्रते बाहतत्या ब्राह्मीत्या विनियुक्ता। 'इन्द्र' 'विश्वान्' "सर्वान्" 'बकनाटान्' "कुसीदिन" वृद्धिजीवनान्, 'अह-र्दृश' येरिहैव जन्मनि सूर्यो दृष्टो न पुनर्द्रक्ष्यन्तीत्यर्थ। अथवा "ये इमानि" एव "अहानि पश्यन्ति" विषयभोग प्रधाना, नास्तिकतया, "न" पारलौकिकेष्वहःसु,—अस्य दुष्कृतस्य कर्मण कोऽपि फलपरिणामो भविष्यतीत्येव भावि न पश्यन्ति, तानभिभवति। 'क्रत्वा' स्वेन "कर्मणा"। 'उत पणीन्' अपि पणीन्। "पणिर्वणिग् भवति" न हि विशु द्धेन कर्मणा व्यवहरन्ति। याभिरेतत् कर्म करोति, याभि पुनरेवमादीन् दुष्कृतकारिणो विभवति, 'कत् उ मही' का ता महती सेना? 'अस्य' इन्द्रस्य,'अधृष्टा' अनाधर्षित पूर्वा परै,'तविषो' याथ महत्य। 'कत् उ हत्वन' का च हन्न इन्द्र? यस्य 'अस्तृतम्' अनुपहत बलम्, येनैतान् हन्तीति॥ एवमत "वेकनाटा =कुसीदिन" अर्थाविरो धादित्युपपद्यते॥ ३ (२६)॥

जीगन्ध्नो अभिधेतुनादित्यासः पुरा हथात्। कद्ध स्थ हवनश्रुतः॥ जीवतो नोऽ-

भिधावतादित्याः पुरा हननात् क्व नु स्थ ह्वान-श्रुत इति मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते मत्स्या मधा उदके स्यन्दन्ते माद्यन्ते-ऽन्योन्यं भक्षणायेति वा जालं जलचरं भवति जलेभवं वा जलेशयं वांहुरोऽंहस्वानंहुरण-मित्यप्यस्य भवति। कृण्वन्नं हुरणादुर्वित्यपि निगमो भवति। सप्त मर्य्यादाः कवयस्तत-क्षुस्तासामेकामिदभ्यंहुरो गात्। सप्त मर्य्यादाः कवयश्चक्रुस्तासामेकामप्यधिगच्छन्नंहस्वान् भवति स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातके नृतोद्यमिति वत इति निपातः खेदा-नुकम्पयोः॥ ४ (२७)॥

"अभिधेतन (११०)"—इति, अनवगतम्। "अभिधावत" —इत्यवगम। "जीवाज्जो॰—॰हवनश्रुत।"—इति (ऋ॰ सं ६, ४, ५१, ५)। ७ज्ञमार्यं भाष्यकारेणैवात्रोपप्रदर्शनार्थम्, एव सर्वत्र परिज्ञेयमार्षमिति। गायत्री। आदितेयो। 'आदित्यास' हे "आदित्या।" 'जीवात् न' "जीवत." अस्मान् 'अभिधेतन' "अभिधावत" यूयम् 'पुरा हथात्' "पुरा हननात्" अवतान् अस्मान् सम्भावयतेत्यभिप्राय। 'कत् ह स्थ' "क नु स्थ" यूयम्? येन न शृणुत विप्रनाभिधावत हे 'हवनश्रुत।' ह्वातॄणामाह्वानं शृण्वन्ति

एवमेव 'पुरा इयात्'—इत्यनेन सम्बन्धात् "अभिधेतन= अभिधावत"—इत्येष विपरिणाम उपपद्यते ॥

ऋषिर्वा मत्स्यवधकारुण्याभिभूतस्यैतदार्षम्, मत्स्यानां वा केचिन्मन्यन्ते। "मत्स्याः, मधौ उदके स्यन्दन्ते" मधु इत्युदकनाम, तत्र हि ते स्यन्दन्ते गच्छन्ति। "स्यन्दति, कमति"—इति गतिकर्मसु पठितम्। "माद्यन्ते" द्दृष्यन्ति "अन्योन्य भक्षणाय—इति वा" मत्स्या हि इतरेतर-भक्षजीविनः। "जालम्, जलचरं भवति" तद्धि जले चरति। "जले भव वा" जले वा भवति। "जलेशयं वा" जले वा शेते इति जालम् ॥

"अंहुरः (११९)"—इति, अनवगतम्। "अंहस्वान्"—इत्यवगमः। रो मत्वर्थे। "अंहूरणम्—इत्यप्यस्य भवति" —इति प्रासङ्गिकम्, एवमपि हि प्रयोगो भवतीति। "त्रितः कूपेऽवहितो देवान् हवत ऊतये। तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥" इति (ऋ० सं० १, ७, २२, २)। "सप्त मर्य्यादा"—इत्येतैत्रितस्यैव कूपे पतितस्यार्षम्। एतयो पूर्वा कुत्सस्य वा। वैश्वदेवी। पङ्क्तिः। प्रातरनुवाकाश्विनयोर्विनियुक्ता। 'त्रितः' 'कूपे' 'अवहितः' पतितः, 'देवान्' 'हवते' आह्वयते, 'ऊतये' रक्षणायात्मनः। तस्य आह्वानं 'बृहस्पतिः शुश्राव'। "वित्तं मे अस्य रोदसी" —इत्येतत् पुनःपुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुः। किमित्येतदसौ आवयाञ्चकार? इति,—'कृण्वन्' 'अंहूरणात्' अंहस्वतः कूपात् आत्मनः। 'उरु' विस्तीर्णं त्राणं कुर्वन् ॥ एवमेव "अन्धकूपः=अंहूरणः"—इत्युपपद्यते, प्रकरणाविरोधात् ॥

"सप्त मर्य्यादाः०—०गात्। आयोर्ह स्कम्भ उपमस्य

नीडे पथां विसर्गे धरुणेषु तस्थौ ॥"—इति (ऋ० सं० ७, ५, २३, ६)। 'सप्त मर्य्यादा' सप्त स्थितीः 'कवयः' मेधाविनः, हिरण्यगर्भमनुप्रभृतयः 'ततक्षुः' कृतवन्तः। नित्या एव हि ताः, तैस्तु तत्स्थापकोऽनुस्मरणार्थो ग्रन्थसन्दर्भोऽभिव्यञ्जितः, एतदेव करणमित्युपचर्य्यते। "तासामेकामिदभ्यंहुरो गात्"। 'इत्'—इत्यनर्थकः, अप्यर्थो वा। 'तासां' मर्य्यादानाम् 'एकाम्' "अभिगच्छन्" अभिक्रामन् "अंहुरः पापवान् भवति"। 'गात्'—इत्येतत्, अभेः समीपमाश्रित्य "एकामप्यभिगच्छन्"—इति। कतमाः पुनस्ताः मर्य्यादाः? इति,—"स्तेयम्" "तल्पारोहणम्"—इत्येवमाद्याः। यः पुनरेतानभिगच्छति, तस्य किम्? इति,—सः 'आयोः' अयनस्य सूर्य्यस्य 'स्कम्भे' स्कम्भने मण्डले 'उपमस्य' सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य 'नीडे' निलयने स्थाने, यानि धरुणानि धारयितॄणि स्थानानि 'अप्रध्वंसीनि' आभूतसम्प्लवस्थायीनि, तेषु 'तस्थौ' तिष्ठति। आह,—कस्मिन् काले इति? उच्यते,—'पथां विसर्गे' विषयानुप्रवेशमार्गभूतानामिन्द्रियाणां 'विसर्गे' विसर्जनकाले प्राप्ते, मृत्युकाल इत्यर्थः॥ मर्य्यादामस्यन्त्यात् स्पष्टतर एव निगम इत्यतो द्वितीय उपात्तः, स्मृतिसमाचारस्थानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येष मन्त्रे एवोपन्यस्तः सर्व एव समाचारः विशिष्टैः स्मृतिकारैः सन्दृष्टो न स्वतन्त्र इति॥

"बत—इति निपातः, खेदानुकम्पयोः"। "बत (११०)"—इति, अनवगतम्, अनेकार्थत्वं। "निपातः"—इति पदजात्यवधारणम्। "खेदानुकम्पयोः"—इत्यर्थवचनम्॥४ (२७)॥

बतो बतासि यम नैव ते मनो हृदयञ्चाविदाम। अन्या किल त्वां कक्ष्येव युक्तं परि-

ष्वजाते लिबुजेव वृक्षम्। बतो बलातीतो भवति दुर्बलो बतासि यम नैव ते मनो हृदयञ्च विजानीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षं लिबुजा व्रततिर्भवति लीयते विभजन्तीति व्रततिर्वरणाच्च शयनाच्च ततनाच्च वाताप्यमुदकं भवति वात एतदाप्याययति। पुनानो वाताप्यं विश्वश्चन्द्रमित्यपि निगमो भवति। वने न वायो न्यधायि चाकन्। वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा वेति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थो रथर्यतीति सिद्धस्तत् प्रेप्सू रथङ्कामयेत इति वा। एष देवो रथर्यतीत्यपि निगमो भवति (२८)। धेनुं न इषं पिन्वतमसंक्राम्। असंक्रमणीम् ॥ ५ ॥

इति षष्ठाध्यायस्य पञ्चमः पादः ॥ ६, ५ ॥

"बतो बतासि०—०वृक्षम्"—इति (ऋ०सं० ७, ६, ८, ३)। यमी, यमं ब्रवीति,—"दुर्बलः" 'बत' दुर्बलहृदयः त्वम्, अधर्मभीरुमौढ्यमयस्त्वम्। एवमप्यकम्पया मार्थ्यमानः खेदमुपयासि,—नेच्छसि मया सम्भोक्तुं स त्वं सर्वथा ह्यनुकम्प्यः, शोच्य इत्यर्थः। अथवा 'नैव' 'ते' तव 'मनः' सङ्कल्पम्, 'हृदयं' हृद्गतमध्यवसायञ्च

'विजामीमः'। अथवा अन्यस्तं मयाभिप्रायः,—'अन्या किल त्वां' मत्तो विशिष्टतरा योषित्, 'परिष्वजाते' "परिष्वङ्क्ष्यते" ततः 'किल' त्वं मां तयापहृतचेतस्त्वात् नेच्छसि परिष्वक्तुम् । कथञ्च पुनरन्या त्वां परिष्वङ्क्ष्यते ? 'कक्ष्येव युक्तम्' 'लिबुजेव वृक्षम्'। 'कक्ष्या' कक्षजाता 'इव' सुबद्धा, 'लिबुजा' वल्ली, यथा 'युक्तम्' आत्मना संयुक्तम् समीपजं परिष्वजेत् परिवेष्टयेत्, एवं किल त्वामन्या परिष्वङ्क्ष्यते इति ॥ एवमत्र प्रकरणाविरोधात् 'बत'—इत्येष निपातः खेदानुकम्पयोः ॥ अत्र 'कक्ष्येव युक्तम्'—'लिबुजेव वृक्षम्'—इत्येकः 'इव'-शब्दोऽनर्थकः, अथ वोपमानद्वयमेव स्यात्,—कक्ष्येव च, लिबुजेव च,—यथा कक्ष्या च लिबुजा च परिष्वजनीयौ अश्ववृक्षौ परिष्वजेते, एवं परिष्वङ्क्ष्यते इति ॥

"वाताप्यम् (११३)"—इति, अनवगतम् । "उदकं भवति" इत्यभिधेयवचनम् । "वातः" हि "एतत्" उदकम् "आप्याययति" शीतं करोति । अथवा आप्यायतिर्वृद्ध्यर्थः स्यात्, पुरोवातेन हि वृष्टिभूतमुदकं संवर्द्धते । "नू नो रयिमुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम् । प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ।"—इति (ऋ० सं० ७, ४,१,५) । नोधसो गौतमस्यार्षम् । पावमानी सौमी । हे सोम ! 'नू नः' क्षिप्रमस्माकम् 'रयिम्' धनम् 'उपमास्व' उपनिर्मिमाहि । 'नृवन्तं' पुत्रपौत्रैः सहितम् । 'पुनान' पूयमानः । 'वाताप्यम्' उदकं प्राप्य द्रवीभूतः । 'चन्द्रं' चायनीयमुदकम् । 'विश्व' च सर्वः पूयमानः । किञ्च, 'प्रतारि' प्रतीर्णं दीर्घं कुरु—हे 'इन्दो' सोम ! 'वन्दितुः' स्तोतुः 'आयुः'। किञ्च, तथा उपमास्व, यथा 'प्रातः' नित्यमिव 'धियावसुः' कर्मवसुः । इन्द्रः त्वां पातुमस्माकम् 'आजगम्यात्' आगच्छेदि-

त्यर्थः॥ एवमत्र "वाताप्यम्=उदकम्" अर्थाविरोधाच्छब्दोपपत्तेश्च॥

"चाकन् (११४)"—इति, अनवगतम्। "चायन्"—इति, "कामयमानः"—इति शब्दसमाधौ॥ "वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः। यस्मे दिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्॥"—इति (ऋ० सं० ७, ७, २२, १)। वसुक्रस्यैयमार्षम्। ऐन्द्री। त्रिष्टुप्। 'वने न' "वने इव" वृक्षे इव। शकुनिः, स्वे नीडे वायमात्मीयं पुत्रं 'न्यधायि' निदधाति 'शिशुकम्' अजातपक्षम्। स यथा तत्र निहितः 'चाकन्' "चायन्" पश्यन्, भयाद् दिशो निरीक्षमाणः आसीत्, अथवा "कामयमानः" तदुत्सुकमना आसीत्। एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः, 'शुचिः' व्यपगतसर्वदोषः युवयोः स्वभूतः, 'स्तोमः'। हे 'भुरणौ' भर्त्तारौ अश्विनौ! शीघ्रौ वा, भुरण्युरिति क्षिप्रनामेति। किञ्च, यस्य स्तोमस्य 'पुरुदिनेषु' बहुष्वहःसु 'इन्द्रो होता' इन्द्रोऽप्याह्वाता भवति,—ममायं स्तोमः स्यादिति। किंलक्षणः पुनरिन्द्र आह्वाता? यः 'नृणां नृतमः' मनुष्याणामपि मनुष्यतमः, शूराणामपि मध्ये शूरतम इत्यर्थः। 'नर्यः' च नृभ्यो हितः, यः 'क्षपावान्' च रात्रिपर्यायेषु सोमभागी। एवङ्गुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यते, अस्मासु वर्त्तमानः, स युवां प्रति 'अजीगः' नित्यकालमेव गच्छतीत्यर्थः॥

एवन्तावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते, तदसाधु, ऐन्द्रे हि सूक्ते प्रथमैवेयमृग् भवति। तत्र पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्त्तमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते। हे 'भुरणौ' भर्त्तारौ, देवता-

नां पती ! य एषः स्तोमोऽस्मासु निहितः, 'शुचिः' व्यपगतदोषः, शकुनिपुत्र इव, 'वने' वनावयवे वृक्षे, 'चाकन्' पश्यन्निव कामयमान इव वा इन्द्रम् आस्ते यः स्तोमः, तस्य किम् ? इति,—यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाता अभूत्, अपि नाम मामनेन स्तोमेन सुयुरिति । किंलक्षणः पुनराह्वाता यस्येन्द्रः ? इति,—नृणां नृतमः नर्य्यश्च चषाणांश्च । समानमेतत् पूर्वेणैवार्थेन । यमेवमिन्द्रः प्रार्थयते, स एषः स्तोमः, तं प्रत्यञ्जोगः, गच्छतीत्यर्थः । अथवा स एषः स्तोमोऽस्माभिरुदीर्य्यमाणः, तस्येन्द्रस्य गुणान् गृह्णातीति स्यात्, "जिगर्त्तिः॰—॰गृह्णातिकर्मा वा"—इति, ह्युक्तम् ॥ एवमत्र 'चाकन्'—इत्यस्य "चायन्"—इति, "कामयमानः—इति वा" —इत्येतौ विपरिणामावुपपद्येते, शब्दसारूप्यादर्थाविरोधाच्च ॥

एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, तमाह भाष्यकारः,—"वा—इति च, यः—इति च, चकार शाकल्यः" —इति । शाकल्यः पदकारः । तदेतद् विचार्य्यमाणं न साधु भवति, किङ्कारणम् ? "उदात्तं त्वेवमाख्यातमभविष्यत्" । 'एवम्' एतस्मिन् पदद्वये सति, यदेतत् 'आख्यातं' न्यधायीति, एतत् 'उदात्तम् अभविष्यत्' यद्वृत्तात् परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते, न चेदमुदात्तम्, तस्मात् 'यः'—इति नेदं यद्वृत्तम् । किन्तर्हि ? 'वायः'—इति एकं पदम् । किञ्च, "असुसमाप्तश्चार्थः" असुष्कलः, एवमेतस्मिन् पदद्वये सति मन्त्रस्यार्थोऽसुसमाप्तो भवति । कथम् ? द्विपदत्वे हि सति 'वा'शब्दस्यार्थेन केनचित् भवितव्यम्, न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति। तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे, 'वायः'—इत्ये तदेकपदमेव, "शकुनिपुत्रः" एव चास्या·

मिर्थेय: उपपद्यते ॥

"रयर्य्यति (११५)"—इति, अनवगतम्। 'रयं इच्छति' —इत्यवगमः, इच्छतिशब्दो हि प्रेप्सायाम्, "रय" हि यः "कामयते" स रयर्य्यति। "एष देवो रयर्य्यति पवमानो दशस्यति। आविष्कृणोति वग्वनुम्॥"—इति (ऋ० सं० ६, ७, २०, ५)। शुनःशेपस्यार्षम्। पावमानो सोमो। गायत्री। ग्रावस्तुत आवापे। 'एष.' सोमः 'देवः' 'रयर्य्यति' रंहणमात्मनो गमनमिच्छति। 'पवमानः' 'दशस्यति' दानमात्मन इच्छति, कथं नाम मां देवेभ्यो दद्युरिति। किञ्च, 'आविष्कृणोति' प्रकाशीकरोति 'वग्वनुम्' वचो वननीयम्, दत्त मां देवेभ्य इति॥ एवमत "रयर्य्यति=रयप्रेप्सुः" शब्दसारूप्यादेतदुपपद्यते।

"असक्राम् (११६)"—इति, अनवगतम्। "असंक्रमणीम्" —इति शब्दसमाधिः। "पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम्। स्तुतश्च वा माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन्॥"—इति (ऋ० सं० ५, १, ४, ३)। भरद्वाजस्यार्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। 'पुरु' बहु 'देष्णं' दानं 'वां' युवाभ्यां यत्र यस्मात् हे 'पुरुभुजौ' बहुभोजिनौ! अश्विनौ! तस्मात् युवां ब्रूमः,—'धेनुं न.' तर्पयित्रीमस्मभ्यम् 'इषम्' अन्नलक्षणम् 'पिन्वतम्' प्रक्षारयन्तम् 'असक्राम्' असंक्रमणशीलाम् अनपायिनीम् अस्मत्तः, अथवा असंक्रमणशीलां धाम्, 'इषम्' इड इतूदकमस्मदर्थं प्रक्षारयतमिति स्यात्। किम्पुनः तद्युवयोर्बहुदानम्? इति,—'स्तुतश्च' स्तुतशस्त्रवांश्च सोमो युवयोरवम्। हे 'माध्वी' मधुपौ! 'सुष्टुतिश्च' शोभनाभिः स्तुतिभिः सुष्टु स्तुतः, 'रसाश्च' आज्यादयः, ये एते 'रातिं' पुरो-

छायस्यानुगच्छति, सर्वं एते युवयोरेव। तस्माद् ब्रवीमि,—पिन्वतमिति। एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'असक्रम्'—इत्यस्य शब्दस्य "असंक्रमणीम्"—इत्येष विपरिणाम उपपद्यते। इडभिधेया, द्यौर्वा ॥ ५ ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य) पञ्चमः पादः ॥ ६, ५ ॥

---

षष्ठः पादः ॥

## आधवं आधवनात्। मतीनां च साधनं विप्राणां चाधवमित्यपि निगमो भवत्यनवब्रवोऽनवक्षिप्तवचनः। विजेषकृदिन्द्र इवानवब्रव इत्यपि निगमो भवति ॥ १ (२९) ॥

"आधवः (११७)"—इति, अनवगतम्। "आधवनात्"—इत्यवगमः, आकम्पनादित्यर्थः। "मंसीमहि त्वा वयमस्माकं देव पूषन्। मतीनां च साधनं विप्राणां चाधवम् ॥"—इति (ऋ० सं० ७, ७, १२, ४)। ऐन्द्रस्य विमदस्यार्षम्। अनुष्टुप्। पौष्णी। 'मंसीमहि' त्वां हे 'पूषन्'! 'देव!' 'मतीनां' च प्रज्ञानामस्माकं साधयितारम्, आदित्येन हि प्राज्ञिनां प्रज्ञा अभिव्यज्यन्ते। किञ्च, ये चान्ये 'विप्राः' प्राप्तप्रज्ञाः मेधाविनः, तेषाम् 'आधवम्' आकम्पयितारं स्वयमेव। तथा स्वमात्मनो गुणवत्तां दर्शयसि, यथा मोक्ष्यमाणहृदयास्ते त्वां स्तुवते॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "आधवः—आकम्पयिता"—इत्युपपद्यते ॥

"अनवब्रवः (११८)—इति, अनवगतम्। "अनवक्षिप्तवचनः"—इति अवगमः। "विजेषकृदिन्द्र इवानवब्रवो"-

स्माकं मन्यो अधिपा भव। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥"—इति (ऋ० सं० ८, २, १८, ५)। मन्योरार्षम्। त्रिष्टुप्। मान्यवे सूक्ते। अनेनादिषु निरुक्ते वक्ष्ये प्रस्यते। 'विजेषकृत्' विजयकृत्, 'इन्द्रः इव अनवब्रव.' इन्द्र इवानवच्छिन्नवचनः, न ह्यीन्द्रस्य केनचिदाच्छिद्यते वचः। हे 'मन्यो!' यस्त्वम् अनवच्छिन्नवचनः इन्द्र इव, स त्वमस्माकम् 'अधिपा.' अधिष्ठाय पाता 'भव'। किञ्च, हे 'सहुरे' शत्रूणां सहनशील! 'प्रियं ते' यत् 'नाम' तेन त्वां 'गृणीमसि' नित्यमेव स्तुम इत्यर्थः। किञ्च 'विद्म' जानीमो वयम् 'तम्' 'उत्सम्' उत्स्यन्दनम्, 'यतः' त्वम् 'आबभूथ'॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अनवब्रवः—अनवच्छिन्नवचनः"—इत्युपपद्यते॥ १ (२८)।

अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ अरायिनि काणे विकटे काणोऽविक्रान्तदर्शन इत्यौपमन्यवः कणतेर्वा स्यादणुभावकर्मणः कणतिः शब्दाणुभावे भाष्यतेऽनुकणतीति मात्राणुभावात्कणो दर्शनाणुभावात्काणो विकटो विक्रान्तगतिरित्यौपमन्यवः कुटतेर्वा स्याद्विपरीतस्य विकुटितो भवति गिरिं गच्छ सदानोनुवे शब्दकारिके। शिरिम्बिठस्य सत्वभिः। शिरिम्बिठो मेघः शीर्यते बिठे बिठमन्तरिक्षं बिठं बीरिटेन व्याख्यातं तस्य सत्वै-

वृद्धैरिति स्यात्तैष्टा चातयामोऽपि वा शिरिम्बिठो भारद्वाजः कालकर्णोपेतोऽलक्ष्मीर्निर्णाशयाञ्चकार तस्य सत्त्वैः कर्मभिरिति स्यात्तेष्टा चातयामश्चातयतिर्नाशने पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे । पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवतीन्द्रोऽपि पराशर उच्यते परा शातयिता यातूनाम् । इन्द्रो यातूनामभवत्पराशर इत्यपि निगमो भवति । क्रिविर्दती विकर्त्तनदन्ती । यत्रा वो दिद्युद्रदति क्रिविर्दतीत्यपि निगमो भवति । करूलती कृत्तदती अपि वा देवं कञ्चित् कृत्तदन्तं दृष्ट्वैवमवक्ष्यत् ॥ २ (३०) ॥

"सदान्वे (११८)"—इति, भनवगतम् । "सदानोनुवे" —इति ग्रन्थसमाधिः । "अरायि काणे०——०चातयामसि ॥" —इति (ऋ० सं० ८, ८, १३, १) । शिरिम्बिठस्य भारद्वाजस्य आर्षम् । अनुष्टुप् । दुर्भिक्षाधिदेवतोच्यते, कालकर्णी वा अलक्ष्मीः । हे 'अरायि' "अदायिनि !" दुर्भिक्षाधिदेवते ! अथवा हे अलक्ष्मि ! दुर्भिक्षेण पीडितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याभिभूतानाम् । 'काणे' दुर्भिक्षेण अभिभूतानां मान्द्यं चक्षुषोर्भवति, घनाभावात्, अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते, लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति सोच्यते । 'विकटे' दुर्भिक्षे दुर्बलत्वात् विकटैव प्राणिनां गतिर्भवति, अलक्ष्मीरपि तद्रूपा । 'गिरं

गच्छ' मात्रावस्थानं कार्यौः। 'सदान्वे' "सदानोनुवे शब्दकारिके" दुर्भिक्षे हि क्षुत्पीड़िताः प्राणिनो निःश्वसन्तः सदैव शब्दं कुर्वन्ति, भवन्तीरपि तद्रूपा,—पिशाचादीनि नित्यमव्यक्तं शब्दं कुर्वन्ति,—पिशाचाद्या हि शृण नशुनायन्तस्थेति लोके वक्तारो भवन्ति, एतत् प्रसिद्धम्। 'शिरिम्बिठस्य' मेघस्य सभूतेः 'सत्त्वभिः' "उदकैः" "सत्त्वम्"—इति ह्युदकनामसु पठितम्। "अपि वा शिरिम्बिठो भारद्वाजः" "तस्य सत्त्वै. नामभि." तेन यानि दृष्टानि नामानि, सभवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः। एवमत्र शब्दार्थाविरोधात् "सदान्वे"—इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते॥

निगमप्रसङ्गान्यच्चनोच्यन्ते,—"राति, रासति"—इति दानकर्मसु पठितः, तस्य प्रतिषेधपूर्वस्य 'अरायि'—इति भवति। "कणतिः, शब्दाणूभावे भाष्यते,—अनुकणतीति" "मात्राणूभावात्" "कण." श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्" "काणः"। अथवा "काणः=विक्रान्तदर्शनः"—"इत्योपमन्यवः" विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात्। "काणः=अविक्रान्तदर्शन."—इति वा, मन्दचक्षुष्ट्वात्। "विकटः=विक्रान्तगति." विक्षतगतिरित्यर्थः। अथ-"वा" "कुटते" धातोः "स्यात्" अतौ हि "विकुटितो भवति" कुब्जीभूत इत्यर्थ.। "बिठम्"—इत्यपठितमन्तरिक्षनामसु, तत् पुनरेतत् "बीरिटेन व्याख्यातम्" अत्र ह्युक्तम्,—"बीरिटमन्तरिक्षम्, भियो वा भासो वा ततिः"। तस्मिन् "बिठे" य. "शीर्य्यते" सः "शिरिम्बिठ (१२०) मेघः"। "अपि वा गिरिम्बिठो भारद्वाज." सोऽनेन सूक्तेन "अलक्ष्मीः निर्नाशयाञ्चकार"—इति निदानमन्वाख्यातम्। अथापि योऽस्य

त्मराभिभूतो भवति, स भास्वदश्मे उदकेऽवतीर्य्य सूक्तमेतज्जपति, तस्यालक्ष्मीर्निर्नश्यति ॥

"पराशरः (१२१)"—इति, अनवगतमनेकार्थञ्च। "पराशीर्णः"—इत्यवगमः। "प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान्॥"—इति (ऋ॰ सं॰ ५, २, २८, १)। वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते। त्रिष्टुप्। प्रकर्षेण 'ये' 'अममदुः' हृष्टवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु। हे इन्द्र! 'त्वाया' त्वया सह 'पराशरः' च 'शतयातुः' बहूनां रक्षसां यातयिता, तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते। 'वसिष्ठः' च इत्येवमादयः। किं तेषाम्? इति,—'न' 'ते भोजस्य' भोगिनः तव 'सख्यं' सखिभावं 'मृषन्त' मार्जयन्ते नाशयन्तीत्यर्थः। 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः' 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः। तेषामेव सुप्रभाता रात्रयः इत्यभिप्रायः। एवमत्र "ऋषिः—पराशरः" वसिष्ठसम्बन्धात्॥

"इन्द्रोऽपि पराशर उच्यते" स हि "परा" परितः "शातयिता" "यातूना" यातयितव्यानाम्, असुरादीनामिति। "इन्द्रो यातूनामभवत् पराशरः।"—इति (ऋ॰ सं॰ ५, ७, ८, १)। व्याख्यातः शेषः॥

"क्रिविर्दती (१२२)"—इति, अनवगतम्। "विकर्त्तनदन्ती"—इत्यवगमः। "यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्त्तन। यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा॥"—इति (ऋ॰ सं॰ २, ४, २, १)। अगस्त्यस्यार्षम्। जगती। हे 'मरुतः!' 'उग्राः' उद्गूर्णाः, 'अरिष्टग्रामाः' अनुपहिंसितसङ्घाताः यूयम्, अस्माकं 'सुचेतुना'

शोभनेन प्रश्नानेन, एतां 'सुमतिं' शोभनां मतिम् 'पिपर्त्तन' पूरयत पालयत वा। केन पुनः पूरयत? कुतो वा पूरयत? इति,—"यत्रा वो दिद्युत्"। 'यत्र' यस्मिन् मेघे 'दिद्युत्' आयुधं चित्रं युष्माभिः, तमेव मेघं 'रदति' विलिखति, विदारयति वर्षार्थम्। किंलक्षणा पुनर्दिद्युत्? इति,—'क्रिविर्दती' विकर्त्तनसमर्थैः दन्तैः या रदति। कथम्पुनर्या रदति? "रिणाति पश्वः सुधितेव" इति। यथा 'पश्व.' पश्वोः भङ्गानि 'रिणाति' पृथक् करोति, 'सुधिता' सुधित्या, 'बर्हणा' परिवृढया हिंसया, एवमस्मिन् मेघे दिद्युदः ता रदन्ति। ततः प्रभ्रष्टेनोदकेन सुमतिमस्माकं पिपर्त्तन॥ एवमवार्थाविरोधादायुधं 'क्रिविर्दती'शब्देनोच्यत इत्युपपद्यते॥

"कारूळती(१२३)"—इति, अनवगतम्। "क्षतदती"—इत्यवगमः॥ २ (३०)॥

वामं वामं त आदुरे देवो ददात्वर्यमा। वामं पूषा वामं भगो वामं देवः करूळती॥ वामं वननीयं भवत्यादुरिरादरणात्तत्कः करूळती भगः पुरस्तात्तस्यान्वादेश इत्येकं पूषेत्यपरं सोऽदन्तकोऽदन्तकः पूषेति च ब्राह्मणम्। दन्तो विशो इन्द्र मृभ्रशाचः दानमनसो नो मनुष्यानिन्द्र मृद्वाचः कुरु। अवीरामिव मामयं शरारुरभिमन्यते। अबलामिव मामयं बालोऽभिमन्यते संयियरिषुरिदं

**कामयमानोऽथापि तद्वदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यत्रार्थः। अश्वयुर्गव्यूरथयुर्वसूयुरित्यपि निगमो भवति॥ ३ (३१)॥**

"वामं वामं त०—०द्देवः करूलती॥"—इति (ऋ० सं ३.१, २३, ४)। वामदेवस्यार्षम्। ऐन्द्रे सूक्ते। अनुष्टुप्। रात्रिपर्य्याये प्रमास्तुः शस्त्रे विनियुक्ता। 'वामं वामम्'—इति भूयस्त्वार्थोऽभ्यासः, "अभ्यासः, "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति। यद्यत् सुष्ठु "वननीयम्" इष्टम्, 'ते' तव धनम्, तत्तत् हे 'आदुरे' आदरवन्! यजमान! स हि यागं प्रति नित्यम् आदृतो भवतीत्यत एवं सम्बोध्यते—हे आदुरे!। 'वामं ददातु' 'मा'। यदर्थ्यमृणो 'वामं "वननीयम्" इष्टम्, आत्मनो धनम्, तत् असौ तुभ्यं 'ददातु'। किञ्च, 'वामं पूषा' ददातु। 'वामं भगः' ददातु। 'वामं देवः करूलती' ददात्वित्येतदेवानुवर्त्तते। 'करूलती'—इत्येतद् गुणपदत्वात् सन्दिह्यते, "तत्" एतत् विचार्य्यते—"कः करूलती?"—इति। "भगः पुरस्तात्" 'करूलती' शब्दस्य। "तस्य" एवायम् "अन्वादेशः" सन्निधानसामर्थ्यात्।—"इत्येकम्" आचार्य्यमतम्। "पूषा—इति अपरम्"। किङ्कारणम्? "सः" हि पूषा "अदन्तकः"। आह,—कुत एतत् इति, उच्यते,—"अदन्तकः पूषा—इति च ब्राह्मणम्"। प्राशित्रभागब्राह्मणे हि श्रूयते,—"तत् पूष्णे पर्य्याजह्नुः, तत् पूषा प्राश्नात्, तस्य दतो निर्जघान, तस्मादाहुः,—अदन्तकः पूषा"—इति। यत् पुनरेतदुक्तं सन्निधिसामर्थ्यात् भगः करूलती स्यादिति। अकारणमेतत्,—"यस्य चेतार्थसम्बन्धो दूरस्थमपि तस्य तत्। अर्थतो ह्यसमर्थानामानन्तर्य्यमकारणम्"—इति न्यायविदः पठन्ति॥ तस्मात् पूर्वं 'करूलती'

—इत्युच्यते, शब्दसारूप्यादर्थोपपत्तेश्चेति ।

"दनः (१२४)"—इति अनवगतम् । "दानमनस."—इत्यवगमः । "दनो विश इन्द्र मृध्रवाचः सप्त यत् पुरः शर्म शारदीर्दर्त् । ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ।"—इति (ऋ० सं० २, ४, ६, २) । अगस्त्यस्यार्षम् । हे 'इन्द्र !' 'दनः' "दानमनस." एव एतान् अस्मभ्यं 'विशः' "मनुष्यान्" "कुरु" 'मृध्रवाच.' "मृदुवाचः" । कस्मात् पुनरेवमुच्यते ? इतः,—'यत्' यस्मात् त्वम् 'सप्त' सप्ताः, 'पुर.' मेघपुरः, 'शारदीः' शरत्कालीयाः, सवत्सरीया वा, संवत्सरोऽपि हि शरदित्युच्यते,—"स जीव शरदः शतम्"—इति लिङ्गात् । 'शर्म' सुखमिच्छन् जनानां 'दर्त्' दारयसि । किञ्च, 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' अपगमितवानसि इम लोकं प्रति 'अप.' । स्वभाव एवैष तव लोकानुग्रहीतुमित्यभिप्रायः । किञ्च, "यूने वृत्रम्" । योतिः स्तुत्यर्थः । स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे 'वृत्र'' धनं 'रन्धीः' सम्पादितवानसीत्यर्थः । यत एवमुपकारे प्रवृत्तो भवान् स्तोतॄणामेषाञ्च जनानाम्, तस्मात् ब्रूमोऽस्माकमपि एतान् मृदुवाचः कुरु मनुष्यानिति ॥ एवमत्र 'दन.'—इत्यस्मिन् पदे दकारे "दानमनसः"—इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, 'न'कारयाश्रयोगे विमज्योदाहृत', तथार्थोपपत्तिदर्शनात् । "कुरु"—इत्येतदर्थपरिसमाप्त्यर्थमध्याहृतम् । उत्तराश्चयः पादा हेतुभावेन, 'सप्त यत् पुर.'—इत्येतस्मात् सर्वनामसम्बन्धात् ॥

"शराहः (१२५)"—इति, अनवगतम् । "संमिश्रयिषु."—इत्यवगमः । "अवीरामिव मामयं शरारुरभिमन्यते । उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥"—

इति (ऋ० सं० ८, ४, २, ४)। पङ्क्तिः। ऐन्द्री। इन्द्रपत्नी एवं ब्रवीति —'अवीरामिव' "अबलामिव" अपरिग्रहामिव। 'माम् अयं' 'शराहः' "बालः" मूर्खः "सम्मिशरिषुः" संशरीतुमिच्छन् शरीरं तिरस्कुरित्यर्थः। 'अभिमन्यते' अभिभवितास्म्येतामित्येव मन्यते, मुद्रया बुद्धया। नहुषोऽन्यो वा कश्चित्, "नहुषेण हीन्द्राणमभिभवितुमारब्धासीत्"—इत्याख्यानं सूयते। "उताहमस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी ? 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी,—'मरुत्सखा' यः 'इन्द्रः' 'विश्वस्मात्' सर्वस्माद् यश्च 'उत्तरः' 'जगतः' उदात्ततरः प्रभावेण, स मे वीरः, तदयं बालो न मन्यते, येन मामभिभवितुमिच्छतीत्यभिप्रायः। एवमत्र "शराहः=संशिशरिषु." शब्दसारूप्यादर्थोपपत्तेश्च ॥

"इदंयुः (१२६)"—इति, अनवगतमनेकार्थश्च। इदमिति यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। 'युः'—इत्येष शब्दोऽप्रसिद्धः कामयतेऽर्थे, तेनानवगतमेतत् स्यात्। "नानाधियो वसूयवः"—इत्यनेन गतार्थं मन्यमानो-भाष्यकारो निगमं न ब्रवीति। वार्त्तिककारेणाप्युक्तम्,—"निगमवशादुक्त्यर्थे भवति पदम्" तद्धितः, तथा धातुः, उपसर्गगुणः, निपाताश्च मन्त्रगताः सर्वथा लक्ष्याः ॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थे भाष्यते"। आह,—किमुदाहरणम् ? "वसुयुरिन्द्रः"—इति, वसुमानित्यर्थः। "इन्द्रो' अस्माकं सुध्यो' निरेके पृक्षेषु क्षोमी दुर्यो न यूपः। अश्वयुर्गव्यूरथयुर्वसुयुरिन्द्र इद्रायः क्षयति प्रयन्ता।"—इति (ऋ० सं० १, ४, ११, ४)। अव्यत्वमापन्नस्येन्द्रस्य यमार्षम्। ऐन्द्री। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। यः 'इन्द्रः' 'अस्माकं' भवति, हितस्तोत्रर्थः। 'सुधः' यव-

विक्रमे', अजिष्ठयोधी, अथवा योधयिता योधानां प्रहारैः, सुयोधी स्यात्। क्व पुनः स्थाति? 'निरेके' संग्रामे यत्रैको-ऽप्यन्यः सहायी नास्ति, तत्र एक एव शत्रून् हन्ति। 'पत्येषु' प्राजितायुधेष्वपि परेषु संग्रामेषु। किञ्च, 'स्तोमो न' स्तोम इव। यः प्रधानः त्रिवृत् स्तोमः, पञ्चदश इति हि व्यपदेश', सोमे प्रभवति स्तोमेन तस्य प्राधान्यात्। किञ्च, यः इन्द्रः 'दुर्यो न' दुर्य इव 'यूपः' यः प्रधानः। तस्य किम्? इति, —स इन्द्रः 'अश्वयुः' अश्वैस्तद्वान्। 'गव्युः' गोभिः तद्वान्। 'वसूयुः' अन्यैर्वसुभि' तद्वान्। एवङ्गुणविशिष्ट 'यः इन्द्र' सः 'रायेषु' धनेषु जनानां दातव्येषु 'क्षयति' इष्टे। 'प्रयन्ता' प्रकर्षेण दातेत्यर्थः॥ एवमत्र 'वसूयुः'—इत्ययं युगन्दः "तद्ध-दर्थे"। किङ्कारणम्? न हीन्द्रो वसु कामयते, सुपूर्णत्वात्, परिशेषात् अय "तद्धदर्थे भाष्यते"—इत्युपपद्यते॥ १(२१)॥

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः। किं ते कुर्वन्ति कीकटेषु गावः कीकटा नाम देशोऽना-र्य्यनिवासः कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः प्रमद-को वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः

पगण्डको वा पगण्डकः पगण्डगः प्राईको वा प्राई-यत्याण्डावाण्डावाणी इव व्रीडयति तत्तस्मै नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिरश्नात्तन्नो मघवन्नन्धयेति रन्ध्य-तिर्वशगमने बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥४(३२)

"कीकटेषु (१२०)"—इति, अनवगतम्। "किङ्गुताः"—इति शब्दसमाधिः, "कि क्रियाभि—इति" "वा"। "कि ते कृण्वन्ति०—०रन्धया नः॥"—इति (ऋ० सं० ३, ३, २१, ४)। विश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्। इन्द्र! या. 'कीकटेषु' अनार्य्यदेशनिवासिषु मनुष्येषु 'गावः' ताः 'ते' तव 'किम्' कमुपकारं कुर्वन्ति? न कश्चिदपीत्यभिप्रायः। "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि धर्मे तप्यमानेऽङ्गभावं गच्छन्ति, नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः। यत एवमतो ब्रूमः,—"आ भर नः" ताः गाः, वयं तव, ताभिराशिरादिविनियोगैरुपकारं करिष्याम इत्यभिप्रायः। किञ्च, यदप्येतत् 'प्रमगन्दस्य' कुसिदजीविनो धनम्, एतच्च तथा अस्मभ्यमाहर, तदपि न क्रियासु "ततस्" विनियुज्यते, वयं तद् विनियोक्ष्याम इत्यभिप्रायः। "प्रमदको वा" नित्यप्रमुदितो विषयपरः प्रमगन्दः स्यात्। "पण्डको वा" नपुंसकः प्रमगन्दः स्यात्। तयोर्हि धनानि क्रियासु न विनियुज्यन्ते, शब्दसारूप्याच्च प्रमगन्दशब्दे उभयोरस्ति, तस्मात् तावप्युपपद्येते। "नैचाशाखं मघवन्नन्धया नः"। यदेतेषामन्यतमस्य नीचशाखाप्रसूतस्य

नीचवंशप्रसूतस्य दीनतुल्यस्य धनम्, तत्। हे 'मघवन्!' शीघ्र 'रन्धय' संसाध अस्मद्वश कुर्वित्यर्थः।

एवमत्र 'कीकटा' "किं कृता" किं ते कृता? इत्येव मभिव्याहारमर्हन्ति, न ते कश्चिदर्थोऽस्ति, न ते देवपित्र मनुष्याणामुपकारं कुर्वन्तीत्यर्थः। अथ "वा" "किं क्रियाभिः?" —"इति" एव "प्रेप्सा" ते नास्तिका एवमभिप्राया इत्यर्थः। एतस्माच्छब्दसाहच्यादर्थोपपत्तेश्च "कीकटा =अनार्यदेशनिवासिन"—इत्युपपद्यते॥

"मगन्द =कुसीदी"—इत्युच्यते, स हि "माम्"—इयात् अद्यतनोऽर्थः, अयश्च "आगमिष्यति"—इत्येवमनुचिन्त्य, परेभ्यो धनानि "ददाति"। "तदपत्य प्रमगन्दः, अत्यन्त-कुसीदिकुलीन" तद्धितार्थे प्र, प्रमगन्द, 'प्रकृत्वस्य'—इति यथा। "प्रमदक" प्रमादशील —"अयमेवैको लोकोऽस्ति, न पर"—"इति" एव "प्रेप्सु" नास्तिक। "पण्डक। तृतीया प्रकृति, स हि "पण्डग" पण्ड गच्छति, स्त्रीरूपत्वात्। "प्रादक"—इति "वा" स्यात्, "प्र" प्रकर्षेण ह्यसौ "अर्दयति" अण्डानि सह स्त्रीलेन गच्छति "आण्डौ"। कस्मात् तौ "आण्डौ"? "आणी इव व्रीडयति" तौ ह्यसौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्तमान "आणी इव व्रीडयति" सम्भुमतीत्यर्थः॥

"बुन्द (१२८)"—इति, अनवगतम्। "इषुर्भवति"—इत्यभिधेयवचनम्। "भिन्दो वा भयदो वा भासमानो इव तौति वा"—इति शब्दसमाधय। ४ (१२)॥

तुविच॑ते॒ सुकृ॑तं सू॒मयं॒ धनु॑: साधुबु॒न्दो हि॑र॒ण्ययः॑॥ उभा ते॑ बा॒हू रण्या॒ सुसं॑स्कृत ऋ-

न्निरविध्य आधारयत्पक्वमोदनमुदकदानं मेघम्। इन्द्रो बृन्दं स्वाततं इन्द्रं बृन्देन व्याख्यातं वृन्दारकश्च ॥ ६ (३४) ॥

"निराविध्य०—०स्वाततम् ॥"—इति ( ऋ० सं० ६, ५, ३०, १ )। 'पक्वम्' बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, 'इन्द्रः' 'निरविध्यत्'। विद्धा च तावत् 'आधारयत्' यावन्निरुदकः सवृत्त इति। कथं निरविध्यत्? इति,—'बृन्द' 'स्वाततम्' स्वाकृष्टमाकर्णीकृत्वा। एवमत्राकर्षणसम्बन्धात् "इषु'=बृन्द."—इत्युपपद्यते ॥

"वृन्दम् ( १२९ )"—इति, एतत् पदम् "बृन्देन" एव "व्याख्यातम्" अस्यापि हि ता एव व्युत्पत्तयो या बृन्दशब्दे ॥

"वृन्दारकश्च" 'बृन्देन' एव "व्याख्यात."। इत्थो वृन्दारकः प्रकरणवशाद्धान्य. कश्चित् ॥ ६ (३४) ॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः। अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्नमभिवहति यत्समन्नुवन्ति देवा अहरहर्जायते मासे मासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहमुलबमूर्णोतेर्वृणोतेर्वा। मलवत्तुल्बं स्थविरं तदासीदित्यपि निगमो भवत्यूर्वीसमपगतभाससमपह्वतभासमन्तर्हितभासं गतभासं वा ॥ ७ (३५) ॥

"कि (१३०)"—इति, अनवगतम् । "कर्त्ता"—इत्यवगम. । "अय यो होता०—०हव्यवार्षम् ॥"—इति (ऋ० सं० ८, १, १२, ३) । ऋचीकप्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्रैयं विश्वेदेवानामार्षम् । आग्नेयो । 'य अयम्' अग्नि, 'होता' आह्वाता देवानां पृथिवीस्थान । कि तस्य ? इति—'कि उ स' 'यमस्य' भगवत आदित्यस्य, अग्ने हि सकाशात् प्रातरादित्य प्रसूयते । तदुक्तम्,—"एष प्रात प्रसुवति, तस्मात् प्रातर्वोपतिष्ठन्त इति । "यस्मिन् वृक्षे सुपलाशे (ऋ० स० ८, ७, २३, १)"—इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति । किञ्च, 'याम् अपि ऊहे' "कमप्यन्नम् अभिवहति" । "कम्"—इत्यन्ननाम, अन्नमपि चायमेवाभिवहति । कतमत् ? 'यत' एतत् हविर्लक्षण 'समञ्जन्ति' "समश्नुवन्ति" 'देवा' । अञ्जतिरत्र प्रकरणवशात् भोजनार्थ । किञ्च, अयमेव 'अहरह' अहन्यहनि अग्निहोत्रिणां गृहेषु उद्बोध्यमानो सन् 'जायते' । 'मासि मासि' जायते पितृयज्ञेषु, "अर्द्धमासेऽर्द्धमासे" च दर्शपूर्णमासेषु च । यस्मादेवङ्गुणविशिष्टोऽयमग्नि, 'अथ' एतस्मात् कारणात् एतमग्नि सर्वे 'देवा' 'दधिर' "निदधिरे" 'हव्यवाहम्' हविषां वोढारमित्यर्थ । एवमत्र शब्दसारूप्यात् 'यमस्य'—इत्येतस्माच्च षष्ठीयोगात् 'कि'—इत्यस्य "कर्त्ता"—इत्येष निर्वचनम् उपपद्यते ॥

"उल्बम (१३१)"—इति, अनवगतम् । 'जरायु'—इत्यवगम । "ऊर्णोते"—इति धातुनिर्देश । 'ऊर्णम्'—इति स्यात् । "वृणोतर्वा" स्यात, तेन हि गर्भ आवृतो भवति । "मुहत्तदुल्बं स्थविरं तदासीद्येनाविष्टित प्रविवेशिथाप । विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एक"—इति ऋ० सं० ८, ६, १०, १) । 'महत्' परि...

निरविध्य आधारयत्पक्वमोदनमुदकदानं मेघम् । इन्द्रो बुन्दं स्वाततं वृन्दं बुन्देन व्याख्यातं वृन्दारकस्य ॥ ६ (३४) ॥

"निराविध्य०—०स्वाततम् ॥"—इति ( ऋ० सं० ८, ५, ३०, १ )। 'पक्वम्', बहूना मेघाना मध्ये य पक्वो मेघ, उदकदाने समर्थ, तम्, 'इन्द्र' 'निरविध्यत्'। विद्धा च तावत् 'आधारयत्' यावदिरुदक स्रवत्त इति। कथ निरविध्यत ? इति,—'बुन्द' 'स्वाततम्' स्वाकृष्टमाकर्णीकृत्वा । एवमत्राकर्षणसम्बन्धात् "इषु = बुन्द"—इत्युपपद्यते ॥

"वृन्दम् ( १२८ )"—इति, एतत् पदम् "बुन्देन" एव "व्याख्यातम्" यस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दे ॥

"वृन्दारकस्य" 'बुन्देन' एव "व्याख्यात"। इत्थं वृन्दारक प्रकरणवशाद्धान्य कश्चित् ॥ ६ (३४) ॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः । अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्नमभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासेमासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहमुल्बमूर्णोतेरूर्णोतेर्वा । महत्तदुल्बं स्थविरं तदासीदित्यपि निगमो भवत्यूर्ध्वमपगतभासमपह्नुतभासमन्तर्हितभासं गतभासं वा ॥ ७ (३५) ॥

"किं (१३०)"—इति, अनवगतम्। "कर्त्ता"—इत्यवगमः। "अथ यो होता०—०हव्यवाहम्॥"—इति (ऋ० सं० ८, १, १२, ३)। ऋचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्रेयं विश्वेदेवानामार्षम्। आग्नेयी। 'य अयम्' अग्निः, 'होता' आह्वाता देवानां पृथिवीस्थानः। किं तस्य? इति—'किं उ स' 'यमस्य' भगवत आदित्यस्य, अस्मै हि सकाशात् प्रातरादित्यः प्रसूयते। तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्वोपतिष्ठन्त इति। "यस्मिन् वृक्षे सुपलाशे (ऋ० सं० ८, ७, २३, १)"—इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति। किञ्च, 'कम् अपि ऊहे' "कमप्यन्नम् अभिवहति"। "कम्"—इत्यन्ननाम, अन्नमपि चायमेवाभिवहति। कतमत्? 'यत' एतत् हविर्लक्षणं 'समञ्जन्ति' "समश्नुवन्ति" 'देवाः'। अञ्जतिरत्र प्रकरणवशाद् भोजनार्थः। किञ्च, अयमेव 'अहरहः' अहन्यहनि अग्निहोत्रविधौ गृहेषु ऊर्ध्वमानो महान् 'जायते'। 'मासि मासि' जायते पितृयज्ञेषु, "अर्द्धमासेऽर्द्धमासे" च दर्शपूर्णमासेषु च। यस्मादेवङ्गुणविशिष्टोऽयमग्निः, 'अथ' एतस्मात् कारणात् एतमग्निं सर्वे 'देवाः' 'दधिरे' "निदधिरे" 'हव्यवाहम्' हविषां वोढारमित्यर्थः। एवमत्र शब्दसारूप्यात् 'यमस्य'—इत्येतस्माच्च षष्ठीयोगात् 'किं'—इत्यस्य "कर्त्ता"—इत्येवं विपरिणाम उपपद्यते॥

"उल्बम् (१३१)"—इति, अनवगतम्। 'जरायु'—इत्यन्ननाम। "ऊर्णोति"—इति धातुनिर्देशः। 'ऊर्णम्'—इति स्यात्। "वृणोतेर्वा" स्यात्, तेन हि गर्भः आवृतो भवति। "महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः। विश्वा अपश्यद् बहुधा ते अग्ने जातवेदस्तन्वो देव एकः॥"—इति ऋ० सं० ८, १, १०, ३। 'महत्' परिमाणतः 'तत्'

'उल्ब' जरायु 'आसीत्' 'स्थविर' चिरन्तनञ्च तदासीत्। येन त्वम् 'आवेष्टित' आवृत, हे भगवन्! अग्ने! 'प्रविवेशिथ' प्रविष्टवानसि 'पूर्वम्' आदिसर्गे 'अप'। किञ्च, 'विश्वा' सर्वा 'तन्व' तव, हे 'जातवेद.!' 'बहुधा' बहुरेषु अभिधानेषु वर्त्तमाना. 'अपश्यत्' 'एक: देव' प्रजापति', कोऽन्यस्तत तव तनूनामन्त वेत्तुमर्हतीत्यभिप्राय ॥ एवमत्र 'जरायु' 'उल्ब'शब्देनोच्यते, आवेष्टनमस्यस्मादित्युपपद्यते ॥

"अबीसम् (१२२)"—इति अनवगतम्। "अपगतभासम्"—इत्येवमाद्या शब्दसमाधय। 'पृथिवी'—अभिधेया, सा हि छायच्छाया। तस्मादपगतभासमित्येवमाद्या. शब्दसमाधय उपपद्यन्ते ॥ ७ (३५) ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम्। ऋबीसे अग्निमश्विनावनीतमुन्निन्यथु: सर्वं गणं स्वस्ति॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु, तमुन्निन्यथु: सर्वगणं सर्वनामानं गणो गणनाद्गुणश्च यद्दृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ स्तौति स्तौति॥ ८ (३६) ॥

इति षष्ठाध्यायस्य षष्ठ: पाद:॥ ६, ६ ॥

"हिमेनाग्नि॰—॰सर्वंगणं स्वस्ति॥"—इति (ऋ॰ सं॰ १, ८